REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः
# ŚABDĀRTHACINTĀMAṆIH

## चतुर्थ खण्ड
## भाग - अ

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**

First Published 1860
Reprint - 1992

*Printed at*

**Efficient Offset Printers**
215, Shahzada Bagh Indl Complex
Phase-II, Phone 533736 533762
D lhi 110035

श्री.

# शब्दार्थचिंतामणि.

( —।*।— * )

श्रीमत्सज्जनसिंहवीर पतिभि समुद्रित मूर्तिभाक् श्रीमत्सूर्यसुधान्व

वाय फतह श्रीसज्जिदेशदयं कीर्ति गायतिगापयत्यखिलसत्कार्येषु

कर्तुं क्रियाशब्दाना निखिलवीविजयतेशब्दार्थचिन्तामणि

भवतु सुखार्थं सतत संस्कृत विद्यैक रसिकानाम् ।

श्रीश्री गीर्वाण गिरश्चिता मणि रिवसमस्तशब्दार्थं ।

श्री सुखानन्द नाथे न रचिता मुद्रित पुरे ॥

उदये कविराज श्री श्यामल प्रेरणावशात् ॥१॥

*—।*+—*

चतुर्थभागीयवर्गादि :

श्रीमन्महाराजाधिराज रविकुलावतंस महीमहेन्द्र यावदार्य कुलकमल

दिवाकरमेदपाटदेशेश श्री १०८ श्रीसज्जनभूपशिरोमण्याश्रयाकविराज

राजप्रेरणया मुद्रणारब्ध, श्रीमत्सज्जन सिंहासना धिरूढसर्वाधि

कार सम्पन्न श्री १०८ श्री फतहसिंह महीप मुकुटेन

द्विचतुर्नवचन्द्रमिते १९४२ वैक्रमेब्देराजधान्युदयपुरे

श्रीसज्जन यन्त्रालये वाजपेय यशोधरप्रबन्धत श्रीमे

दपाटेश्वरकोषव्ययत पूर्णतांनीत

—++—

श्रीमदेकलिङ्गो विजयते

य । पुं० वायौ ॥ यवने ॥ गन्तरि ॥ यशसि । योगे ॥ याने ॥ सर्वनाम यदर्थे ॥ यकारे ॥ आदिलघौ । ऽऽ ॥

यकृत् । न० कुक्षेर्दक्षिणभागस्थमांसखण्डे । कालखण्डे ॥ अधोदक्षिणतश्चापि हृदयाद्यकृतः स्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् ॥ रोगविशेषे ॥ यथा । प्लीहामयस्येत्यादि समस्तं यकृदामये । किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः ॥ यमनम् । यम उपरमे । सम्पदादित्वात् क्विप् । गमादीनामिति मलोपः । आगमानित्यत्वान्न तुक । य० संयम० कृन्तति । कृती । क्विप् । तुक् ॥

यकृदात्मिका । स्त्री० परोष्णाम् ॥ तैलपायिकायाम् ॥

यकृद्वैरी । पुं० प्लीहघ्ने । रोहितकवृक्षे ॥

कुबेरे ॥ यक्षसद्मनि ॥ त्रि० पूज्ये ॥ यक्ष्यते० पूज्यते । यक्षपूजायाम् । अकर्तरि च कारके संज्ञायामिति० कर्मणि घञ् । पुंसीति घो वा ॥ यद्वा । ईं लक्ष्मीमक्ष्णोति व्याप्नोति । अक्षू व्याप्तौ । कर्मण्यण् ॥ यद्वा । इः कामस्तस्येवाक्षिणी यस्य । इरक्षिणी यस्य वा । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ॥

यक्षकर्दमः । पुं० कर्पूराद्यैः समैः कृतेऽनुलेपनविशेषे ॥ यथा । कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च । एकीकृत्य मिदं सर्वं यक्षकर्दम उच्यते ॥ अपि च । कुङ्कुमागुरुकस्तूरीकर्पूरचन्दनं तथा महासुगन्धमित्युक्तं नामतो यक्षकर्दमः ॥ यक्षप्रियकर्दमः ॥

यक्षतरुः । पुं० वटवृक्षः ॥

यक्षधूपः । पुं० अराले । सर्जरसे । रालइति ख्याते ॥ यक्षान् धूपायति । धूपसन्तापे । आयादयआर्द्ध

रसे । श्रीवासे । सरलद्रवे । तारपिण तैल० इ० गो० दे० भाषा० ॥

यक्षरस: । पुं० मध्वासवे । पुष्पमद्ये यक्षप्रियोरसः ॥

यक्षराट् । पुं० गुह्यकेश्वरे । कुबेरे ॥ यक्षेषुराजते । राज्० । सत्सूद्विषेति क्विप् ॥ मत्तानांरक्षत्वरे ॥

यक्षराज: । पुं० कुबेरे ॥ यक्षाणां राजा । राजाहः सखिभ्यष्टच् ॥

यक्षराट्पुरी । स्त्री० अलकायाम् ॥

यक्षरात्रि । स्त्री० दीपान्वितायाम् । यक्षाणांरात्रिः ॥

यक्षाधिप. । पुं० कुबेरे ॥

यक्षसाधनम् न० यक्षोपासनायाम्

यक्षामलकम् । न० पिण्डखर्जूरफले ।

यक्षवास: । पुं० वटवृक्षे ॥

यक्षिणी । स्त्री० अलकायाम् ॥ यक्षा सन्त्यस्याम् । इनि. । ङीप् ॥ कुबेरपत्न्याम् ॥ यक्षभार्यायाम् ।

यक्षी । स्त्री० कुबेरपत्न्याम् ॥

यक्षोदुम्बरकम् । न० अश्वत्थफले ।

यक्ष्म । पुं० रोगराजे ॥ यक्षते यक्ष० । अर्त्तिस्तुसुहुसृधृक्षि... मन् ॥

यक्ष्मघ्नी । स्त्री० द्राक्षायाम् ॥

यक्ष्मा पुं० रोगराजि । राजयक्ष्मणि । क्षये । शोषे ॥ अस्यनिदानन्तु । वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् । त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात ॥ तेषोव्याधिम

ता यक्ष्माकृत्याधेयंश्च नयक्ष्यते । सच क्षयप्रोच्यते लोके यक्ष्माक्षविभार है ॥ यक्षते० यक्ष्यरोगा । यक्ष० मनिन् ॥

यक्ष्मी । त्रि० क्षयरोगिणि ॥

यक्ष्य । त्रि० पूज्ये ॥

यजन् । त्रि० यागकर्त्तरि । यजति । यज० । शतृ० ॥

यजत । पुं० ऋत्विजि ॥ यजति । यज० । भृमृदृशियजिपर्व्विपच्यमितमिनमिहर्येभ्योऽतच् ॥ यजत: यष्टव्य इति वेदभाष्यम् ॥

यजति । पुं० यागे ॥

यजथ । पुं० अग्निहोत्रे । यज्यतेऽस्मिन्देवा: । यज० । अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥ यजनीये ॥

यजनम् । न० समन्त्रकहवि:प्रक्षेपणादिक्रियायाम् । यागे ॥ अस्यलक्षणं यथा । पशुव्रीह्याज्यपुरोडाशसोमौषधिपयप्रभृतिभिर्हविर्भि: खदिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृतिभि: समिद्भि: स्रुक्स्रुवोदूखलमुसलकुठारखनित्रयूपदारुदर्भचर्मवारणप्रभाजनादिभिर्द्रव्यो पकरणैरुद्गातृहोत्रध्वर्युब्रह्मादिभिऋत्विग्भि: काम्यनैमित्तिकानां पक्षादिपूर्वकाणां यथोक्तदक्षिणानां समापनं यजनम् । इतिश्राद्धविवेक धृतहेमचन्द्रवचनम् ॥

विषयग्रहणस्पृहाशून्यत्वेनानन्य-
साधारणं कुर्वन्ति॰सएषदृषाहोम
॥ सर्ववैदिकश्रेय : साधनरूपे ॥
यज्ञ सात्त्विकादिभेदेनत्रिविध ।
यथा । अफलाकाङ्क्षिभिर्यज्ञोवि
धिदृष्टोयइज्यते । यष्टव्यमेवेति-
मन . समाधायससात्त्विक : ॥
अभिसन्धायतुफल दम्भार्थमपिचैव
यत् । इज्यतेभरतश्रेष्ठतंयज्ञविद्धि
राजसम् ॥ विधिहीनमसृष्टान्न
मन्त्रहीनमदक्षिणम् । श्रद्धाविरहि
तयज्ञंतामसपरिचक्षते ॥ सचा
नेकविधोयथा । द्रव्ययज्ञास्तपो
यज्ञायोगयज्ञास्तथापरे । स्वाध्याय
ज्ञानयज्ञाश्चयतय : संशितव्रता: ॥
यज्ञानांजपयज्ञोस्मीतिभगवतोविभू
तिस्वरूपेजपयज्ञे ॥ जप्येनैवतुस
सिद्ध्येद्ब्राह्मणोनात्रसंशय. । कुर्याद
न्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥
इज्यते॰ अनेनवा॰ अत्रवा । यज
याचेतिनङ् ॥ वर्णानांस्वधर्मयज्ञा
यथा । आरम्भयज्ञा : क्षत्रा : स्युर्ह
विर्यज्ञाविश स्मृता. । परिचार
यज्ञाश्शूद्रास्तुजपयज्ञास्तुब्राह्मणा-
इति ॥ यजनीये । पूज्ये ॥

यज्ञकृत् । पु॰ यागकर्त्तरि ॥ यज्ञ
करोति । क्विप् तुक् ॥

यज्ञपशु : । पुं॰ घोटके ॥ छागे ॥

यज्ञपुरुष : । पुं॰ विष्णौ ॥ यज्ञधारा

ष्टे ॥

यज्ञभाजनम् । । न॰ यागपात्रे ॥

यज्ञभूषण । पुं॰ श्वेतदर्भे

यज्ञयोग्य । पु॰ उदुम्बरवृक्षे ॥ त्रि॰
यागार्हे ॥

यज्ञवल्ली । स्त्री॰ सोमलतायाम् ॥

यज्ञवाट । पु॰ यागस्थाने ।

यज्ञवित् । पुं॰ यज्ञानाञ्ज्ञातरि ॥
यज्ञानाकर्त्तरि ॥ तेचवेदाध्ययनाद
य : । तेह्यग्निष्टोमादयोयज्ञाव
स्तुभूताभवन्तीतिमन्यते॰ तत्रतेषां
भ्रान्तिमात्रम् । यज्ञं व्याख्यास्यामो
द्रव्य देवतात्यागइति । अत्रैकैक
स्मिन्॰ यज्ञशब्दानाभावात्॰ स
मुदायरूपवस्तुत्वात् । यज्ञान्वे-
त्ति॰ जानाति॰ विन्दतिलभतेवा
। विद॰ । विदृलृ॰वा । क्विप् ॥

यज्ञवृक्ष । पुं॰ विकङ्कते । स्रुवावृ
क्षे ॥ वटीवृक्षे ॥

यज्ञशाला । स्त्री॰ देवयजने ॥

यज्ञशिष्टाशी । पु॰ वैश्वदेवादियज्ञा
वशिष्टामृतभोजिनि ।

यज्ञशेष : । पुं॰ होमावशिष्टाज्यपुरो
डाशादौ ॥

यज्ञश्रेष्ठा । स्त्री॰ सोमवल्ल्याम् ॥

यज्ञसार । पुं॰ यज्ञोदुम्बरे ॥

यज्ञसूत्रम् । न॰ उपवीते । यज्ञोप
वीते ॥ अस्यप्रमाणंयथा ॥ ऊर्ध्वन्तु
त्रिवृतंसूत्र सधवानिर्मितंशनै . ।

सन्तु नयममधोहरा यज्ञसूत्रविदुर्बुधा । त्रिगुणतद्ग्रन्थियुक्तं वेदप्रवरसम्मितम् ॥ शिरोधरान्नाभिमध्यात् पृष्ठार्द्धपरिमाणकम् ॥ यजुर्विदां नाभिमितसामगानामयं विधि । वामस्कन्धेन विधृतयज्ञसूत्रवलप्रदम् ॥ इति कालिकापुराणे ४ अध्याय यज्ञसूत्रम् । यज्ञार्थकृतसूत्रं वा । श्राकपार्थिवादि ॥

यज्ञसेन । पु० द्रुपदे ॥

यज्ञस्थानम् । न० यज्ञवाटे ॥

यज्ञाङ्ग । पु० हेमदुग्धके । उदुम्बरे ॥ यज्ञमङ्गति । अगिगतौ । कर्मण्यम् । खदिरवृक्षे ॥ ब्राह्मणयष्टिकायाम् ॥ वराहमूर्त्तौ । यज्ञाङ्गान्यस्य ॥ यज्ञवराहस्याङ्गान्युक्तानि हरिवंशे । वेदपादोयूपदंष्ट्र क्रतुहस्तश्चितीमुख । अग्निजिह्वो दर्भरोमा० ब्रह्मशीर्षो महातपा. ॥ अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषण । आज्यनास स्रुवतुण्ड: सामघोषस्वनो महान् ॥ धर्मसत्यमय श्रीमान्क्रमविक्रमसत्क्रिय प्रायश्चित्तनखो घोर, पशुजानुर्महाभुज उद्गात्रान्त्रो होमलिङ्ग फलबीजमहौषधि, । वाय्वन्तरात्मा मन्त्रस्फिग्विकृत. सोमशोणित ॥ वेदिस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् । प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चित दक्षिणाहृदयो योगीमहासत्रमयो महान् । उपाकर्मोष्ठरुचक प्रवर्ग्यावर्त्तभूषण ॥ नानाछन्दोगतिपथो गुह्योपनिषदासन. । छायापत्नीसहायो वैमेरुशृङ्गमिवोच्छ्रित इति ॥ न० प्रयाजादौ ॥ यज्ञे हि द्विविधमङ्गं जातं भवति । सिद्धरूप० साध्यरूपञ्च । तत्र सिद्धरूपं जातिद्रव्यसङ्ख्यादि० साध्यरूपन्तु क्रियैव । तच्च द्विविधम् । सन्निपत्योपकारकमाराडुपकारकञ्च । तत्र द्रव्यादिसंस्कारकत्वेन विधीयमानयागस्वरूपान्तर्भूतकर्म सन्निपत्योपकारकम्० व्रीहीनवहन्यात्० व्रीहीन्प्रोक्षतीत्येवं विहितावघातप्रोक्षणादि । तद्विपरीतञ्च फलजननसामर्थ्यजनकत्वादिना स्वातन्त्र्येण विहितकर्माराडुपकारकम् ॥

यज्ञाङ्गा । स्त्री० सोमवल्ल्याम् ॥

यज्ञान्त । पु० अवभृथे । यागशेषे ॥

यज्ञायज्ञीयम । न० सामविशेषे ॥ यज्ञायज्ञापदयुक्तं साम० यज्ञायज्ञीयम्० इति व्याख्यातार । यज्ञायज्ञाशब्दोऽस्मिन्नस्ति । मतौ छ: सूक्तसाम्नो रितिच्छ ॥

यज्ञायुधम् । न० स्फ्यकपालादिद्रव्येषु । तानियथा । स्फ्यश्च कपालानि चाग्निहोत्रहवणी च सूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च

यज्ञोपलाचेतानिवेद्ययज्ञायुधानी
तिदर्शपूर्णमासयो श्रुतानि ॥
यज्ञायुधी । पुं० यजमाने ॥
यज्ञारि । पुं० शिवे ॥ राक्षसे ॥
यज्ञिय । पुं० किंशुकद्रुमे । पलाशवृक्षे
द्वापरयुगे ॥ त्रि० यज्ञकर्मार्हे । य-
ज्ञानांपात्रे । क्रतुक्रियासम्पादनयो
ग्ये द्विजद्रव्यादौ ॥ यज्ञमर्हति ।
यज्ञर्त्विग्भ्यामित्यत्र० तत्कर्मार्हे-
त्युपसङ्ख्यानात्० घ ॥ यज-
नीये ॥
यज्ञियदेश । पुं० यागकरणोपयुक्त-
कुरुपञ्चालादौ ॥ कृष्णसारस्तुचर
तिमृगोयत्रस्वभावत । सज्ञेयोय-
ज्ञियोदेशोम्लेच्छदेशस्त्वत पर ॥
यज्ञियश्चासौदेशश्च ॥
यज्ञियशाला । स्त्री० यज्ञार्थशालाया-
म् ॥ यागमण्डपे ॥
यज्ञीय । पुं० उदुम्बरवृक्षे ॥ त्रि०
यागसम्बन्धिनि ॥
यज्ञीयब्रह्मपादप : । पुं० विकङ्कतवृ
क्षे ।
यज्ञेश्वर : । पुं० शिवे ॥ विष्णौ ॥
यज्ञेष्टम् । न० दीर्घरोहिषकतृणे ।
यज्ञोदुम्बर । पुं० उदुम्बरे । जन्तु
फले ॥
यज्ञोपवीतम् । न० यज्ञसूत्रे । यज्ञा
र्थंधृतमुपवीतम् । प्राक्पार्थिवा-
दि । [illegible]उपवीतमवा । यज्ञस्य

श्रौतस्यस्मार्तस्यचविविधस्यद्रव्यत
पोयोगस्वाध्यायज्ञानादिरूपसामी-
प्येनविशेषेणनित्यस योगेन० इतं
प्राशंवित्यर्थं । ॥ ब्राह्मणेनयदाद्रेवा
च्छिन्नयज्ञोपवीतकम् । मनस्ता
पेनशुद्धि स्यादापस्तम्बोऽब्रवीत्
मुनि ॥
यज्यु । पुं० यजुर्वेदविदि । अध्वर्यौ
॥ यजति । यज । यजिमनीति-
युच् ।
यज्वा । पुं० वेदविधानत । कृतया
गे । इष्टवान्० यजतेस्म वा । यज
देवपूजासङ्गतिकरणदानेषु । सुय-
जोङ्वनिप् ।
यज्वनाम्पति पुं० चन्द्रे ॥
यत् । अ० हेतौ । पश्चाद्यद्० अव्य
यम् ॥
यत् । त्रि० यदर्थे ॥ गच्छति । एति ।
इण् गतौ । शतृप्रत्यय । ॥ यच्छब्दे
नोच्यतेयोऽर्थस्तच्छब्दस्तस्यवाचक ॥
यतम् । न० हस्तिप्रेरणाय० पादाघा
ते ॥ पादकर्मयतप्रोक्तं यातमङ्कुशवार
णम् । त्रि० सयते । नियते ॥
यतचेता । त्रि० सयतचित्ते ॥ यतं
चेतोयस्य ॥
यतन् । त्रि० प्रयत्नवति ॥ यथा । ना
हंनमामिदेवान्देवानतीत्यनसेवते-
देव : । नतदनुकरोतिविधानतस्मै
यतनेनमोनमोमह्यम् ॥ इतिपूज्य

पादानामार्थ्या ।। अर्हंदेवान्नमामि॰ ननमस्करोमि॰योदेवानतीत्य॰ अतिक्रम्यस्थित . सदेवोदेवान्नसेवते॰तदनुतदनन्तर विधानंविध्युक्तं कर्मनकरोति॰ तस्मैसर्वात्मभूताय यततेप्रयत्नवतेमह्य नमोनमइत्यादरार्थेद्विरुक्ति ' ।।

यतम ' । त्रि॰ बहूनामध्येनिर्द्धारिते॰ एकस्मिन् ॥ वाबहूनाजातिपरिप्रश्नेडतमच् ॥

यतमान ' । त्रि॰ व्याप्रियमाणे । प्रयतमाने ॥ यतीप्रयत्ने । शानच । मुक् ॥ प्रार्थयमाने ॥

यतमानसञ्ज्ञा । स्त्री॰ वैराग्यविशेषे ॥ यथा । रागादय कषायाश्चित्तवर्त्तिन तैरिन्द्रियाणियथास्वविषयेषु प्रवर्त्त्यन्ते ॰तन्माप्रवर्त्तिषतविषयेष्विन्द्रियाणीति॰तत्परिपाचनाय आरम्भ प्रयत्नोयतमानसञ्ज्ञावैराग्यम् ॥ अत्रजगतिकिंसारकिमसारमितिगुरुशास्त्राभ्याञ्ज्ञास्यामीत्युद्योगे ॥

यतर : । त्रि॰ द्वयोर्मध्येनिर्द्धारिते॰एकस्मिन् ॥

यत ' । अ॰ यदर्थे ॥ हेतौ ॥ यस्मात् । पञ्चम्यास्तसिल् । त्यदाद्यत्वम् ॥

यतात्मा । त्रि॰ संयतचित्त ॥ संयतशरीरेन्द्रियादिसङ्घाते ॥ निदिध्यासनपरिपाकेणपरमात्मन्येवैकाग्रचित्ते ॥

यति . । पुं॰ यतिनि । निर्जितेन्द्रियव्यूहे ॥ कुटीचरबहूदकहंसपरमहंसेषु सन्यासिषु ॥ विदितात्मनि॰अवधूते ॥ यत्नशीले । मुनौ ॥ यतते । यतीप्रयत्ने । सर्वधातुभ्यइन ॥ नहुषस्यराज्ञोज्येष्ठापत्ये ॥ निकारे ॥

यति . । स्त्री॰ विरतौ । पाठविच्छेदे । द्रुतमध्यविलम्बितरूपायांपरिपाट्याम् ॥ विधवायाम ॥ यमेस्त्रियाक्तिन् । मलोप : ॥ रागे ॥ सख्यौ ॥ वाद्याङ्गप्रबन्धविशेषे ॥

यतिचान्द्रायणम् । न॰ व्रतविशेषे ॥ यथा । अष्टावष्टौसमश्नीयात्पिण्डान्मध्यन्दिनेस्थिते । नियत . पाविष्यश्नीयतिचान्द्रायणंचरन् ॥ इतिमनु . । यतिचान्द्रायणेपादोनधेनुचतुष्टयतद्दमनौसपादैकादशकार्षापणाइतिप्रायश्चित्तविवेक : ॥

यती । पु॰ यतौ । निर्जितेन्द्रियग्रामे ॥ यमनम् । यमउपरमे । भावेक्त ' । मलोप : । यतमुपरमणमस्त्यस्य वायस्य । अतइनिठनावितीनि । बशिष्ठादौ ।।

यतिनी । स्त्री॰ विधवायां ।।

यतिपाचम् । न॰ अलाब्वादिपात्रे ॥ अलाबुदारुपात्रञ्चमृन्मयवैदलतथा

। एतानियतिपात्राणिमनु स्वाय स्नुषोब्रवीत् ।

यतिमैथुनम् न॰ स्वच्छनरते यतिगोप्यरतौ ॥

यती । स्त्री॰ गच्छन्त्याम् ॥ कृत्य यतरि॰ङीप् ॥ विधवायाम् ॥

यतुका । स्त्री॰ }
यतूका । स्त्री॰ } वृक्षविशेषे ॥

यत्तः । त्रि॰ यत्नवति ॥

यत्न । पुं॰ प्रयत्ने ॥ उत्साहे । उद्योगे । यतनम्॰यत्यतेऽनेनात्र वा । यती॰ । यजयाचयतेतिनङ्॥ रूपादिचतुर्विंशतिगुणान्तर्गतगुणविशेषे ॥ सचत्रिविधः । प्रवृत्ति . निवृत्ति . जीवनयोनिस्वेति ॥

यत्नवान् । त्रि॰ प्रयत्नविशिष्टे । यत्नमन्तरेणनकिञ्चिल्लभ्यते॰एवज्ञात्वायत्नतत्परे ॥ यत्नोऽस्त्यस्य । मतुप् ॥

यत्र । अ॰ अनवकॢप्तौ ॥ अमर्षे ॥ गर्हायाम् ॥ आश्चर्ये यस्मिन् स-मस्यात्रल् ॥

यथा । अ॰ तुल्यार्थे माने । प्रशंसायाम् ॥ निदर्शने दृष्टान्ते ॥ निर्द्देशे ॥ हेतूपपत्तौ ॥ योग्यतायाम् ॥ वीप्सायाम ॥ पदार्थानतिवृत्तौ ॥ येनप्रकारेण प्रकारवचनेथाल् ॥ विभक्तित्वात्॰अदाद्यत्वम् ॥

यथाकथञ्चित् । अ॰ येनकेनप्रकारेणेत्यर्थे ॥ यथाच॰कथञ्चिच ॥

यथाकथाच । अ॰ अनादरे ॥

यथाकामी । त्रि॰ स्वेच्छाचारिणि । स्वतन्त्रे । स्वरुचौ । स्वच्छन्दे । स्वैरिणि । निर्यन्त्रणे ॥

यथाकालम । अ॰ विहितकाले ॥

यथाक्रमम् । अ॰ क्रमानुरूपे परिपाट्याम् । मूलावधिक्रमे ॥ क्रममनतिक्रम्यवर्ततइत्यर्थे पदार्थानतिवृत्तावव्ययीभावेव्ययम् ॥

यथाजात । त्रि॰ मूर्खे ॥ जातजन्मकालविशेषमनतिक्रम्यवर्तते । पदार्थानतिवृत्तावव्ययीभाव । तदस्यास्ति । अर्शआद्यच् ॥ नीचे ॥

यथाजातरूपधरः । त्रि॰ दिगम्बरे ॥ परमहंसे ॥ यथा । यादृशजातमात्रस्वरूपधारयतीतितथा ॥

यथातथम् । अ॰ न॰ यथावर्त्ततेतथेत्यर्थे ॥ यथार्थे । सत्यार्थे ॥ सत्यमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभाव. यथाशब्दस्तथाशब्दोवासत्यार्थे । यथार्थेव्ययीभावोवा । सनपुंसकमितिनपुंसकत्वम् । ह्रस्वोनपुंसकइतिह्रस्वत्वम् ॥

यथापूर्वम् । अ॰ पूर्वदिगदेशकालानुरूपे ॥ यथा । भक्ततायाप्रतिष्ठायांप्राणानाप्रतिमासुच यथापूर्वंतथाभाव स्वर्णादीनांनविष्णुता ॥

यथामुखम् । अ॰ प्रतिबिम्बे ॥ मुखस्य सदृशम्॰ यथामुखम् । निपातनादव्ययीभाव: । पदार्थानतिवृत्तौयथा शब्दोवा ॥

यथामुखीन । त्रि॰ मुखप्रतिबिम्बाश्रये । दर्पणे ॥ यथामुखंदर्शन . यथामुखसम्मुखस्यदर्शन : खसूतिख ' ॥

यथायथम् । अ॰ यथार्थे ॥ अनतिलङ्घनेनेत्यर्थे ॥

यथायथम् । न॰ यथास्वमित्यर्थे ॥ यथास्वेर्थे॰ यथाशब्दस्यद्वित्वं नपुंसकत्वञ्चनिपात्यते॰ यथास्वेयथायथमितिसूत्रेण ॥ योयमात्मा॰ यश्चात्मीय॰ तद्यथास्वम् । आत्मानिज्ञाता सर्वपदार्थाययायथम्॰ यथास्वभावमित्यर्थ ॥ आत्मीये । सर्वेषाम्यथायथम् । यदात्मीयमित्यर्थं . ॥

यथायोग्यम् । अ॰ यथोचिते ॥

यथार्थम् । अ॰ सत्यार्थे ॥ अर्थमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभाव ' ॥

यथार्थ । त्रि॰ युक्ते ॥

यथार्थानुभाव . । पुं॰ तद्वतितत्प्रकाराऽनुभवे ॥ सएवप्रमेत्युच्यते । यथार्थानुभवश्चतुर्विध । प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्कारणमपिचतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

यथार्हम् । अ॰ यथायोग्यं ॥

यथार्हवर्ण । पु॰ चरे । प्रणिधौ ॥ अर्हति । अर्ह॰ । अच् योग्योवर्णो यथार्हवर्णोरूपमस्य ॥

यथाविधि । अ॰ य सश्चयथोचितमित्यर्थे ॥ यथाविधानमित्यर्थे ॥

यथावृत्त । त्रि॰ यथाचारे ॥

यथाशक्ति । अ॰ साध्यानुसारे ॥ शक्तिमनतिक्रम्य । यथार्थेपदार्थानतिवृत्तावव्ययीभाव । अव्ययीभावश्चेत्यव्ययत्वम् ॥

यथाशास्त्रम् । अ॰ शास्त्रसम्मते ॥ शास्त्रमनतिक्रम्य । यथार्थेऽव्ययीभाव॰ ॥

यथास्थित : । त्रि॰ सत्ये ॥

यथास्वम् । अ॰ यथार्थे ॥ यथायथमित्यर्थे । स्वात्मीये ॥ यथास्वमिति वीप्सायामव्ययीभाव. । योयआत्मा यद्यच्चात्मीयतद्यथास्वमित्युच्यते ॥

यथेप्सितम् । अ॰ कामम् । प्रकाममित्यर्थे ॥ इष्टानतिक्रमे । निकामे ॥ आप्तुमिष्टम् । आप्नृव्याप्तौ । सन् । क्त । आप्ज्ञप्यृधामीत् । अव्ययविभक्तीत्यव्ययीभाव : ॥

यथेष्टम् । न॰ इष्टमनतिक्रम्यस्थिते ॥

यथेष्टचारी । पुं॰ पक्षिणि ॥

यथेष्टाचरण । त्रि॰ यथेष्टाचारिणि ॥ यथा । क्रियाहीनस्यमूर्खस्यमहारोगिणएवच । यथेष्टाचरणस्याहु-

मैरवान्तमधीचकम् ॥
यथेष्टाचारी । त्रि॰ स्वेच्छाचारिणि ॥ यथेष्टमाचरितुशीलमस्य । णिनि ॥
यथोक्तकारी । त्रि॰ काम्यनिषिद्धवर्ज नपुरस्सरनित्याद्यनुष्ठानतत्पर्ये श्वर-प्रीतौ ॥ यथाज्ञाकारिणि ॥
यथोचित॰ । त्रि॰ यथायोग्ये । यथा प्राप्ते ॥
यथोत्तरम् । अ॰ उत्तरमुत्तरप्रतीत्यर्थे ॥
यथोदितम् । न॰ यथोक्ते ॥
यथोपजोषम् । अ॰ यथासुखमित्यर्थे ॥
यद् । अ॰ हेतौ ॥ यच्छति । यम॰ । क्विप । अनुदात्तोपदेशे त्यनुनासिकलोप : ॥ यद्यर्थे ॥
यत्॰द् । त्रि॰ यदर्थे ॥ बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने । सो॰ श्रुतिभाषा ॥ यत्तदोर्नित्यसम्बन्ध॰ यच्छब्देनोच्यतेयोर्थस्तच्छब्दस्तस्य वाचक :॥ अपिच । तच्छब्देनतु यच्छब्दोबोद्धव्य॰ सततंबुधै : । उदाहृतेतुयच्छब्देतच्छब्द : स्यादुदाहृत ॥ यजेत्यजितनियजिभ्यो डिदित्यदि : ॥
यदा । अ॰ यस्मिन्काले ॥ यथा । यदायदासतांहानिर्वेदमार्गानुसारिणाम् । तदातदाकलिर्वृद्धिरनुमेयाविचक्षणै : ॥ सर्वेकार्ये ष्वादि-
ना॰ दा ॥
यदि । अ॰ पक्षान्तरे ॥ सम्भावनायाम् । चेदर्थे । असन्देहेसन्देहवचने ॥ यदिवेदा : प्रमाणस्यु : । वेदा : प्रमाणस्युश्चेदित्यादिर्यथा- ॥ यततनम् । यती॰ । डुन् । पृषोदरादित्वात्तलस्यद॰ ॥
यदीय॰ । त्रि॰ यत्सम्बन्धिनि ॥
यदु । पुं॰ देवयान्याययातेर्जातेज्येष्ठपुत्रे ॥ दशार्हदेशे ॥ तद्दे शवासिनि॰ यदव : ॥
यदुतुङ्गम् । न॰ तीर्थविशेषे ॥
यदुदेव । पुं॰ वसुदेवे ॥
यदुनाथ : । पुं॰ श्रीकृष्णे ॥
यदुपति : । पुं॰ श्रीकृष्णे ॥ यदूनांपति ॥
यदुवंश : । पुं॰ यदोसन्ताने ।
यदृच्छा । स्त्री॰ स्वातन्त्र्ये । स्वैरितायाम् ॥ स्वारसिक्यामिच्छायाम् । शास्त्रानुमतप्रयत्नव्यतिरेके । ऋच्छगमृच्छा । ऋच्छगत्यादौ । गुरोश्चल । यावृच्छा । विशेषणमिति समास : ॥ स्वरसार्थे । निर्निमित्ते ॥ यथायदृच्छाशब्द । अथमतप्रवृत्ति निमित्तमनपेक्ष्यय : शब्द : प्रयोक्त्रभिप्रायेणप्रवर्ततेसयदृच्छाशब्दोडित्यादिरिति ॥ दैवगतौ ॥
यदृच्छालाभ॰ । पुं॰ अप्रार्थितोपस्थितेलाभे ॥

यदृच्छालाभसन्तुष्ट । पुं॰ तत्त्वज्ञे ॥ शास्त्रानुमतप्रयत्नव्यतिरेकात्॰ यदृच्छा॰ तयैवयोलाभोऽन्नाच्छादनादे शास्त्रानुमतश्च॰ सयदृच्छालाभ. तेनसन्तुष्ट ' ॰ तदधिकतृष्णारहित ' ॥ यतयोभिक्षार्थं ग्रामप्रविशन्ती तिशास्त्रानुमतस्तु प्रयत्न कर्तव्य एव ॥

यद्भविष्य . । त्रि॰ मूर्खे ॥ दैष्टिके ॥ यद्भविष्योविनश्यति ॥

यद्यपि । अ॰ अवधारणे ॥ अप्यर्थे ॥

यद्वा । अ॰ यदि ॥

यद्वत् । अ॰ प्रश्ने ॥ वितर्के ॥

यद्वा । अ॰ पक्षान्तरे ॥

यन्ता । पुं॰ मेठे । हस्तिपके ॥ सूते ॥ सारथौ ॥ यच्छति । यम॰ । तृच् ॥

यन्त्रम् । न॰ देवाद्यधिष्ठाने ॥ पात्र भेदे ॥ नियन्त्रणे । जन्द्रा॰ ताला इ॰ भा॰ ॥ बन्धने ॥ मृगबन्धन विशेषे ॥ यच्छति । यम॰ । गुधृवीपचियमीतिष्च . । यन्त्र्यतेनियम्यते॰ निगृह्यन्ति॰ असाधून॰ वाध्यते॰ असाधून्॰ अनुगृह्णाति साधून् इतिचयन्त्रमितिपतुर्वेदी नीलकण्ठः ॥ तोप॰ अगमञ्चल्यादि भाषाप्रसिद्धेमहत्यन्त्रियन्त्रे ॥ बन्दूकइतिप्रथितेसीसगुलिकोत्क्षेपणार्थे लघ्वन्त्रियन्त्रे ॥ इतिमहाभारत टीकायानीलकण्ठ ॥ वाद्ये ॥ यथा । यन्त्रस्यगुणदोषौनविचार्यौ मधुसूदन । अहंयन्त्र भवान्यन्त्री ममदोषानमेगुणा ॥ दारुयन्त्रादौ ॥ बल॰ इ॰ भा॰ ॥ यथा । ईश्वर सर्वभूतानांहृद्देशेर्जुनतिष्ठति । भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया ॥ औषधस्यचपाकार्थं यानियन्त्राणिसन्तिहि । तानिभावप्रकाशादौद्रष्टव्यानिमनीषिभि ' ॥ तत्रकेषाश्चिन्नामानि लिख्यन्ते । जलकच्छपपाताल दोलाभूधरवालुका . । वकाद्यायन्त्रभेदा सर्वेच्या भाद्याश्चमूषिका इतिशब्दचन्द्रिका॥

यन्त्रकम् . । न॰ यन्त्रकाष्ठे । कुन्द॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ यस्मिन् काष्ठमनेन । यम॰ पूर्ववत्च । स्वार्थेक : ॥

यन्त्रगृहम् . । न॰ तैलशालायाम् ॥ यन्त्राणांस्थाने ॥

यन्त्रगोल . । पु॰ मटरइतिप्रसिद्धेकलाये ॥

यन्त्रणम् । न॰ रक्षणे ॥ बन्धने ॥ नियमने ॥

यन्त्रणा । स्त्री॰ पीडायाम् ॥

यन्त्रपेषणी । स्त्री॰ पेषणार्थं यन्त्रे । जाता॰ चाकी॰ इतिभाषाप्रसिद्धे ॥

यन्त्रिका । स्त्री॰ पत्न्या : कनिष्ठभ

यमयो. रश्म्यग्निप्रथमसुखम् ॥ जन्मा न . पितरश्चैवतस्मिन्ज्येष्ठ्यप्रतिष्ठितम् ॥ जन्मप्राथम्यात् ० ज्येष्ठायमयो: ० नतुनिषेकप्राथम्यात् ० जन्मप्राथम्यसन्दे हैसुखदर्शनप्राथम्यात्। सुखदाहतत्वम् ॥

यमक . । पु ० संयमे । व्रते ॥ न ० श ब्दालङ्कारे । तल्लक्षणंयथा । अर्थे स त्यर्थभिन्नानावर्णानांसापुन : श्रु ति । यमकपादतद्भागवृत्तितत्यात्य नेकताम् ॥ वर्णवृत्तविशेषे । यथा । नगणमनुविलघुकुरु । फणिभणित यमकमिति ॥ यथा । विषमतरविष मधर । प्रहरमपिनविरमपि ॥ त्रि ० यमजे ॥

यमकालिन्दी । स्त्री ० सञ्ज्ञायाम् । सूर्यपत्न्याम् ॥

यमकीट. । पुं ० कीटविशेषे । घुघुरे ॥

यमकोटि . । स्त्री ० पुरीविशेष ॥ सा चभद्राश्ववर्षस्थनिरक्षदेशेलङ्काया : पूर्वपृथिव्याश्चतुर्थभागेवर्त्तते ॥ य था । लङ्काकुमध्ये यमकोटिरस्या : प्राक् पश्चिमेरोमकपत्तनञ्च ० । अध स्तत : सिद्धपुरंसुमेरु : सौम्येऽथ याम्ये वडवानलश्च ॥ कुवृत्तपादा न्तरितानितानिस्थानानिषड्गोल- विदोवदन्ति इति ॥

यमघण्ट : । पुं ० अशुभयोगविशेषे ॥ यथा । रवौमघाचन्द्रदिनेविशाखा चार्द्राकुजेचन्द्रसुतेचमूला । जीवेऽ नलर्क्षंभृगुजेविधिश्चशस्ताद्विनौस्या- यमघण्टयोग : ॥

यमज : । त्रि ० समकालीनैकगर्भजा- तसन्तानद्वये ॥

यमदग्नि: पुं ० ऋचीकमुनिपुत्रे । प रशुरामपितरिमुनिविशेषे ॥

यमदूतक : । पुं ० कृतान्तचरे ॥ का के ॥

यमदूतक : । पुं ० वायसे ॥ यमच रे ॥

यमदूतिका । स्त्री ० अम्लिकायाम् । तिन्तिडीवृक्षे ॥ विशेषत . चारभू मौप्राप्यदायमदूतिका ॥

यमदेवता । स्त्री ० भरणीनक्षत्रे ॥

यमद्रुम : । पुं ० शाल्मलिवृक्षे ॥

यमद्वितीया। स्त्री ० कार्त्तिकशुक्लद्विती यायाम् ।

यमधार . । पुं ० पार्श्वद्वयधारयुक्तास्त्र- विशेषेद्विधाराखांडा ० इ ० भा ० ॥

यमन : । पुं ० यमे ॥ न ० बधने ॥ उपरतौ ॥

यमनिका । स्त्री ० जवनिकायाम् । व्यवधायकवाससि । तिरस्करिण्या म् ॥ यमयति । यम ० । ल्युट् । स्वार्थेकन् ॥

यमपत्नी । स्त्री ० धूमोर्णायाम् विज यायाम् ॥

यमप्रिय । पुं० वटवृक्षे ॥

यमभगिनी । स्त्री० यमुनायाम् ॥

यमभट । पुं० यमदूते ॥ परेयमभटाः शठाः । कपटविग्रहैषूहृटानिविद्यतवीवचसवनचाधिकारीमयि । अहन्तुशिवसुन्दरीचरणचारुपद्मेरुहसुखलमृमधुसुधासवसमपिवमृनजानीतरे ॥

यमराट् । पुं० यमभे । यमे ॥ यमेनसयमेनराजते । राजृ० । क्विप् ॥

यमराज : । पुं० यमे ॥

यमलम् । न० युग्मे । युगले ॥ द्विशृषिवे ॥

यमलपत्रक : । पुं० अश्मन्तकवृक्षे ॥ कोविदारवृक्षे ॥

यमलार्जुनका । पुं० श्रीकृष्णे ॥

यमली । स्त्री० चोटीद्वये । शाटीद्वये ।

यमलेखक : । पुं० चित्रगुप्ते ॥ यमस्यलेखक : ॥

यमवान् । त्रि० सयमिनि ॥

यमवाहन । पुं० महिषे ॥

यमव्रतम् । न० पृथ्वीपतेर्धर्मविशेषे ॥ यथा । यथायम, प्रियद्वेष्यौप्राप्तेकालेनियच्छति तथाराज्ञानियन्तव्या : प्रजास्तद्धियमव्रतम् ॥

यमस्वसा । स्त्री० यमुनायाम् । कालिन्द्याम् ॥ दुर्गायाम् ॥ यमस्यस्वसा ॥

यमानिका । स्त्री० अजमोदायाम् ॥

ब्रह्मदर्भायाम् ॥ यमेनयमिति । यम० ण्वुल् ॥

यमानी । स्त्री० यमानिकायाम ॥

यमान्तक : । पुं० शिवे ॥ यमस्यान्तक : ॥

यमी । त्रि० संयमविशिष्टे ॥ यमवति

यमी । स्त्री० यमुनायाम् ॥

यमुना । स्त्री० कालिन्द्याम् । सूर्यतनयायाम् । यमजस्वसरि ॥ यच्छति । यमउपरमे । अजियमिशीङ्भ्यश्चेत्युनन् ॥ दुर्गायाम् ॥ यथोक्तंदेवीपुराणे । सङ्गमाद्यमनाद्दालोकेदेवीविभाव्यते । यमस्यभगिनीयातायमुनातेनसामतेति ॥

यमुनाजनक : । पुं० सूर्ये ॥

यमुनाप्रभव । पुं० तीर्थविशेषे ॥

यमुनाभित्० द् । पुं० बलभद्रे ॥

यमुनाभ्राता । पुं० कृतान्ते । यमने । यमे । यमुनाया : भ्राता ॥

यमेरुका । स्त्री० दण्डढक्कायाम् ॥

ययाति : । पुं० नहुषात्मजे पुराणप्रसिद्धेनृपतिनाहुषे ॥ यस्यायश्लोक : । यत्पृथिव्यांव्रीहियवहिरण्यंपशव : स्त्रिय : । नदुह्यन्तिमन : प्रीतिं पुंस : कामहतस्यमे ॥

ययातिपतनम् । न० भौमतीर्थविशेषे ॥

ययो : । पुं० महादेवे । मोक्षमार्गे ॥ बाह्यनिमया० । याया : किपूर्वं च

यवओऽहवम् । न० तवचीरे ॥
यवतिक्ता । स्त्री० लताप्रभेदे । महा-
तिक्तायाम् । दृढपादविसर्पिण्या
म् । सूक्ष्मपुष्पायाम् ॥
यवतैलम् । न० यवचूर्णादियुक्तपक्वते
लविशेषे ॥ यथा । यवचूर्णार्द्धकुडव
मञ्जिष्ठार्द्धपलेनतु । तैलप्रस्थमतस्तु
र्घकाञ्जिकेसाधितोजयेत् ॥ ज्वरदा
हमहारोगमङ्गानास्वाप्रहर्षणम् ॥
यवद्वीप । पु० सप्तखण्डात्मके०उप
द्वीपविशेषे ॥
यवन । पुं० देशविशेषे ॥ वेगाधि
काश्वे ॥ गोधूमे ॥ गर्जरद्रव्ये ॥
तुरुष्के ॥ सुदाम्न . पितरिनृपान्त
रे ॥ जातिविशेषे । ययातेः पुत्रस्य
तुर्वसोर्वंशे ॥ यथोक्तं मात्स्ये । य-
दोस्तुजातायदवस्तुर्वसोर्यवना सु
ता । द्रुह्योस्तुतनयाभोजाअनो-
स्तुम्लेच्छजातय ॥ पुरोस्तुपौरवोव
शोयत्रजातोसिपार्थिवइति ॥ मु-
निविशेषे ॥ यथा । जातंदिनदूष
यतेवसिष्ठश्चाष्टौचगर्गोयवनोदशा-
हम् । जन्माख्यमासकिलभागुरिस्तु
चौरेविवाहेपिचकर्णवेधे ॥ त्रि०
वेगिनि ॥
यवनद्विष्टः । पुं० गुग्गुलौ ॥
यवनप्रियम् । न० मरिचे ॥
यवनाचार्य्यः । पुं० ज्योति · शास्त्र
कर्त्तरिमुनिविशेषे ॥
यवनानी । स्त्री० यवनानांलिप्याम् ॥
इन्द्रवरुणेत्यादिना० नुगागमोङीष्
च ॥
यवनारि · । पुं० श्रीकृष्णे ॥
यवनाल · । पुं० देवधान्ये । जूर्णाव्ह
ये । बीजपुष्पिकायाम् । जुवार०
बाजरा०इ०भा० ।
यवनालज । पुं० यवक्षारे ।
यवनिका । स्त्री० जवनिकायाम् ।
यवनी । स्त्री० यवनस्त्रियाम् ॥ यवन
स्यस्त्रीजातेरितिङीष् ।
यवनेष्ट । पुं० लशुने ॥ राजपला
ण्डौ ॥ निम्बे ॥ पलाण्डौ ॥ न०
सीसके ॥ मरीचे ॥ गृञ्जने । सल
गम०इ०भा०प्र० ॥
यवनेष्टा । स्त्री० खर्जूर्याम् ॥
यवफलः । पुं० वेणौत्वक्सारे ॥ यव
इवफलान्यस्य ॥ मांस्याम् ॥ कुट
जे ॥ प्लक्षवृक्षे ॥
यवमध्यम् । न० चान्द्रायणप्रभेदे ॥
यवमय । त्रि० यवस्यविकारे ॥ मर्य
च्चायामितिमयट ॥
यवलास · । पुं० यवक्षारे ॥
यवशाकम् । न० वास्तूकशाके । बथु
वा०इ०भा०प्र० ॥ प्रायशोयवमध्ये
स्याद्यवशाकमिदंततः ॥
यवशूकः । पुं० )
यवशूकजः । पुं० )यवक्षारे ॥
यवसम् । न० घासे . गवाद्यदनीयद्रव्ये

॥ येति० यूषतैवा । युक्मिश्र धे ऽ
मिश्रणेच । कर्त्र्युण्यादिदृश्यसच्
। संज्ञापूर्वकत्वान्नवृद्धिः ।

यवसुरम् । न० यवजातसुरायाम ॥

यवागूः । स्त्री० यवद्रव्यविशेषे ॥ ष
ड्गुणजलपक्वघनद्रवद्रव्यविशेषे ।
श्राणायाम् ॥ यथा । यवागू षड्
गुणे तोयेसंसिद्धाघनसिक्थिका ।
पृथग्द्रव्यैस्तुविरचैः संयुक्ताज्वरि-
णे हिता ॥ यवागूर्दीपनीलघ्वीलह्
ब्राहीबस्तिशोधनी ॥ श्रमग्लानिह
रीपथ्याज्वरेचैवातिसारकी ॥ यौ
ति० यूषतैवा यु० । स्युकंचिभ्यो
ऽन्युजागूजक्नु, वक्तव्यागूच् ॥

यवाग्रज । पुं० यवक्षारे । यवाग्रा
ज्जायतेस्म । जनी० । पञ्चम्यामि
तिड ॥

यवान । त्रि० वेगिनि ॥

यवानिका । स्त्री० क्षुद्रदर्भायाम् ।
अजवायन० इ० भा० । यवान्याम् ॥
दुष्टोयवः । इन्द्रवरुणेति० ङीषा
नुकौ । कुत्सार्थे० स्वार्थेवाकन् ॥

यवानी । स्त्री० यमान्यामोषधौ । य
वानिकायाम् ॥ अस्यानामानिगु
णाश्च । यवानिकोग्रगन्धाचब्रह्मदर्भा
जमोदिका । सैवोक्तादीप्यकोदीप्य
तथास्याद्यवसाह्वया ॥ यवानीपाच
नीरुच्यातीक्ष्णोष्णाकटुकालघुः ।
दीपनीचतथातिक्तापित्तलाशुक्रशूल
हृत् ॥ वातश्लेष्मोदरानाहगुल्मप्ली
हकृमिप्रणुत् ॥ दुष्टोयवइत्यर्थे० इ
न्द्रवरुणेतिसूत्रस्थयवाद्दोषइतिवा
र्त्तिकात्० यवशब्दस्यानुगागमस्त
तोङीप्च । अयमेवान्याद्दोषोयदुत
यवत्वजातिरभाविदितद्दाक्षारानुक्र-
तिरिति ॥

यवानीशाकम् । न० यवान्याः शाके
॥ यवानीशाकमाग्नेयंरुच्यंवातक
फप्रणुत् । उष्णंकटुचतिक्तंचपित्त
लंलघुशूलहृत् ॥

यवापत्यम् । न० यवक्षारे ॥

यवाम्लजम् । न० सौवीरके ॥

यवास । पुं० यासे । दुरालभायाम् ।
रोदन्याम् । दुरालभायाम् । जवा
सा० इ० भा० ॥ खदिरे ॥ यौति
। यु० घस्तान्यस्त्रीति० आस ॥

यवासक । पु० यवासे ॥ स्वार्थेक० ॥

यवासशर्करा । स्त्री० यवासरसघटित
शर्करायाम् । सुधामोदके । तव-
राजे ॥

यवासा । स्त्री० गुण्डासनीतृणे ॥

यवाह्व । पुं० यवक्षारे ॥

यविष्ठः । त्रि० कनिष्ठे ॥ अयमेषा
मतिशयेनयुवा । अतिशायनइत्ती-
ष्ठन् । स्थूलदूरेति० यणादिलोप
गुणौ ॥

यवीयान् । त्रि० अतितरुणे ॥ कनि
ष्ठे ॥ अयमनयोरतिशयेनयुवा ।

यातइतिक : ॥
यशोधन । त्रि० स्वयशोरक्षके य शोधनानांश्रियशोगरीय : ॥
यशोधरेय : । पुं० वाहुले । शाक्यमुने : पुत्रे ॥
यशोवती । स्त्री० मेरोश्चक्रपाटाख्यो-ध्वमेखलायामीशानदिशि•ईशानपुर्य्याम् ॥ यथोक्तं श्रीमृगेन्द्रसंहितायाम् । ज्वलज्ज्वालाटद्दृग्दग्धस्मरमृत्यु यशोभृत । पुरीयशोवतीसर्वरत्नशारुद्रसेविता ॥ ज्वलल्लाटतीयेनाक्ष्णादग्धौकामकालौयेन•अतएवतथाविधसकलजगद्दे रिविनाशाद्•-यशोभृतईशाननाथस्यसर्वरत्ननिर्मिताद्रै सेविताच•यशोवतीनामपुरीत्यर्थ : ॥ ( * )
यष्टव्य : । त्रि० यज्ञेषु यजनीये ॥
यष्टि : । पुं० ध्वजदण्डे ॥ पुं•स्त्री• हारलतायाम् ॥ भार्ग्याम् ॥ मधुयष्ट्याम् ॥ शस्त्रभेदे । दण्डे । लगुडे ॥ तन्तौ ॥ यजे : क्तिन्•-तिज्वा ॥
यष्टिक : । पुं० जलकुक्कुटे ॥ दण्डे ॥
यष्टिका । स्त्री० मौनगोधिकायाम् । वाप्याम् ॥ लगुडे । यष्ट्याम् । छ-डी•हि•भा• ॥ हारभेदे ॥ मधुयष्ट्याम् ॥ स्वार्थेक : । ह्रस्व : ॥
यष्टिपव : । पुं० लगुडयाहिणि । यष्टिधारके । छडीबरदार•हि•भा•

। लठैत•इतिच ॥
यष्टिमधु । न० यष्टिमधुकायाम् ॥
यष्टिमधुका । स्त्री० क्लीतके । मधुयष्टिकायाम् । मुलहठी•इतिख्यातौषधौ ॥ यष्टि : मधिवशाखा : । कप् ॥
यष्टीतिक । त्रि० याष्टीके । लठैत•हि•भा• ॥ यष्टिहैतिर्यस्य ॥
यष्टी । स्त्री० यष्टिमधुनि ॥ यष्टीहिमागुरु स्वादीचक्षुष्याबलवर्णकृत् । सुस्निग्धाशुक्रलाकेश्यास्वर्यापित्तानिलास्रजित् ॥ व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा ॥ वह्वादित्वात्पक्षे ङीष् ॥
यष्टीकम् । न० यष्टिमधुनि ॥
यष्टीपुष्प . । पुं० पुत्रजीववृक्षे ॥

यष्टीमधु । न० } यष्ट्याम् । मधु-
यष्टीमधुकम् । न० }
यष्टीमधूकम् । न० } यष्टिकायाम् ॥

यष्टा । पुं० यजमाने । यागकर्त्तरि ॥ यजति । यजदेवपूजासङ्गतिकरणदानेषु । तृच् ॥
यष्ट्याह्वयम् । न० मधुयष्ट्याम् ॥
यसदम् । न० रङ्गसदृशे । दीतिहेती जस्तइतिभाषा ॥ यसदतुवरतिक्तं शीतलंकफपित्तहृत् । चक्षुष्यपरममेहान्पाण्डुश्वासघ्ननाशयेत् ॥
यस्क : । पुं मुनिविशेषे ।
यह्व : । त्रि० महति ॥ वाक्येन ।

याग:

या० । शिवयज्ञजिह्वे लि० यन्‌० धा तोर्ड्ख्योड्डागमश्च॥ धन्वेतु०यअ शिर्जकारस्यश्चकारोनिपात्यतद्दुत्याडु ॥ यजमाने ॥

या । स्त्री० याचायाम् ॥ यामौ ॥ धू सिनि ॥ त्यागे ॥ वारणे ॥ वेगे ॥ स मञ्चायाम् ॥ याने । यानम् । यो० सम्पद्गादित्वात्क्विप ॥

याच: । पु० देवसर्गविशेषे ॥

याग । पु० देवतोद्देशेनद्रव्यत्यागे । यज्ञे॥ तत्रश्रौताग्निकृत्यश्चर्तुर्यज्ञा ' सप्त यथा । अन्वाधानम्० तदेशाग्निहो त्रम् । १ । दर्शपौर्णमासौ । २ । पिण्डपितृयज्ञ' । ३ । आग्रयणम् । ४ । चातुर्मास्य । ५ । निरूढ पशुबन्ध । ६ । सौत्रामणि । ७ । श्रार्त्ताग्निकृत्यपाकयज्ञा . सप्तय था । औपासनम । १ । वैश्वदेव । २ । स्थालीपाक । ३ आग्रयण म् । ४ । सर्पबलि । ५ । ईशान बलि । ६ । अष्टकान्वष्टका । ७ श्रौताग्निसप्तसंस्थायथा । सोमया ग ० सएवाग्निष्टोम : । १ । अत्य ग्निष्टोम : । २ । उक्थ्य । ३ । षोडशी । ४ । वाजपेय । ५ । स द्विविध ० सद्य्या० कुत्र च । अतिरा त्र । ६ । अप्तूर्याम । ७ उत्त रक्रमतोऽश्ववीयथा । महाव्रतम् । १ । सर्वतोमुखम् । २ । राजसूय ।

याचनक:

। ३ । पौण्डरीकम् । ४ । अभि जित् । ५ । विश्वजित् ६ । अश्व मेध । ७ । बृहस्पतिसव : । ८ । आङ्गिरस । ९ । इमनान्यष्टादश । २० । इत्यादिश्रौतसूत्रम ॥ गन्धादिनादेवपूजायाम् ॥ गन्ध पुष्पादिनादेवपूजायागोभिधीयते ॥ इज्यतेऽनेनावा । यजदेवपूजास ङ्गतिकरणदानेषु । घञ् ॥ यजनवा । भाववचनाश्चेतिभावेघञ ॥

यागमण्डप । पुं० म०यजनगृहे ॥ या गायमण्डप ' ॥

याचक । त्रि० वनीयकि । याचनकी । मार्गणे । अर्थिनि । याञ्चाकर्तरि ॥ याचति । टुयाचृयाञ्चायाम् । ण्वुल्तृचावितिण्वुल् ॥ तृणादपिल घुस्तूलस्तूलादपिचयाचक । वायु नाकिन्ननीतोऽसौकिस्मित्प्रार्थनश ङ्कया ॥ जगत्पतिर्हियाचित्वाविष्णु र्वामनतागत ' । कोन्योऽधिकतरस्त स्ययोर्थीयातिलघवम् ॥

याचन् । त्रि० याचकि ॥ याचति । टु याचृ० । वट यट ॥ मुखभङ्गस्वरोदी नोगात्रस्वेदोमहद्भयम् । मरणे यानि चिन्हानितानिचिह्नानियाचत. ॥

याचनम् । न० याञ्चायाम ॥ याचि भावेल्युट ॥

याचनक ' । त्रि० याचकी ॥ याचति टुयाचृ० । क्वुन् : । स्वार्थेकन ॥

याचना । स्त्री॰ याञ्चायाम् ॥ याचे
स्व्रादिण्यन्तात्॰ ण्यासश्रन्थोयुच।
टाप् ॥

याचमान : । त्रि॰ याचके ॥ यथा ।
मवीनदीनभावस्य याचमानस्यमा
निन । वचोजीवितयोरासीत्पुरो
नि. सरणेरण : ॥ इतिवररु
चि. ॥

याचित । त्रि॰ प्रार्थिते । टुयाचृ॰
। क्त : । न॰ याचनवृत्तौ । मृते
। मृतन्तुयाचित प्रोक्तमितिमनु :॥

याचितकम् । न॰ याञ्चालब्धे ॥ या
चितेननिर्वृत्तम् । अपमित्ययाचि
ताभ्याकक्कनाविति कन् ॥ प्रत्य
र्पणीयत्वेनयाञ्चयायत्प्राप्तमलङ्का
रादिवस्तुतत्याचितकम् । कार्या
नन्तर वस्तुस्वामीयत्पुनर्गृह्णाति॰
तदित्यर्थ : । मगनीकी॰ इ॰
भा॰ ॥

याचिष्णु : । त्रि॰ याचके ॥

याच्यम् । त्रि॰ याचितुंयोग्ये ॥ टुया
चृ॰ । ऋहलोर्ण्यत् । यजयाचेति
कुत्वनिषेध : ॥

याञ्चा । स्त्री॰ याचने , अभिशस्तौ ।
याचनायाम् । अर्थनायाम् । भि
क्षायाम् । अर्दनायाम् । मांगना
इ॰ भा॰ ॥ याचनम् । टुयाचृ॰ ।
यजयाचेतिनङ् ॥

याज : । पुं॰ वाजि । प्रसादने । अन्ने
। भक्ते ॥

याजक : । पुं॰ याज्ञिके ॥ राजकुञ्ज
रे ॥ ऋत्विजि ॥ यथा । आग्नीध्रा
द्याधनैर्वार्याऋत्विजोयाजकास्तते
इत्यमर । यजमानेनधनैर्वार्या :
धनानिदत्वा॰ इष्टसम्पादनायव्रिय
न्तेप्रार्थ्यन्ते येआग्नीध्रप्रभृतयस्ते ऋ
त्विजोयाजकाश्चकथ्यन्ते ॥ बहुया-
जकग्रामयाजकयोर्निन्दायथा । अ
ब्राह्मणास्तुषट्प्रोक्ताऋषिभिस्तत्त्व-
दर्शिभि : । आद्योराजभृतस्तेषां-
द्वितीय : क्रयविक्रयी ॥ तृतीयो-
बहुयाज्य : स्याच्चतुर्थोग्रामयाज-
क : । पञ्चमस्तुभृतस्तेषांग्रामस्यन
गरस्यच ॥ अनादित्याञ्च्य. पूर्वां-
सादित्याञ्चैवपश्चिमाम् । नोपा-
सीतद्विज: सन् ध्यांसषष्ठोऽब्राह्मण :
स्मृत : ॥ यजति । यज॰ । ण्वु
ल् । पुरोहिते ॥

याजनम् । न॰ ब्राह्मणस्यकर्मविशेषे ।
यागक्रियाकारणायाम् । यागकरा
वणा इ॰ भा॰ ॥ अविदित्वातुय :
कुर्याद्याजनाध्यापनंजपम् । होम-
मन्तर्जलादीनितस्यनाल्पफलंभवे-
दितियाज्ञवल्क्य : ।

याजमानम् । न॰ यजमानस्यभावक-
र्मणो : । युवादित्वादण् ॥

याजि : । पुं॰ यष्टरि ॥ यागकर्त-
रि ॥ यागे । यजति । यज॰ । ब-

सिवपियजिराजीत्यादिना • इञ् ॥
प्रार्थनायाम् ॥
याजुष . । त्रि॰ यजुर्वेदसम्बन्धिनि ॥
याज्ञवल्क्य । पुं॰ यजुश्शाखावि
शेषस्य प्रवर्त्तके • मुनिविशेषे । ब्र-
ह्मराशौ । योगेशे । योगीश्वरे ॥
यज्ञस्य वल्का ' वक्ता • यज्ञवल्का . ।
यज्ञवल्कस्यगोत्रापत्यम् । गर्गादि-
भ्योयञ् ॥
याज्ञसेनी । स्त्री॰ द्रौपद्याम् ॥ यज्ञ-
सेनस्यापत्यं स्त्री । अण् । ङीप् ॥
याज्ञिक : । पुं॰ याजके । आध्वर्य्यवा
दियज्ञकर्मकुशले ॥ यज्ञकाण्डद्रष्ट
रिऋषौ यज्ञमधीते • वेत्तिवा । क्र-
तूक्थादीतिठक् ॥ कुशे । रक्तखदि-
रे । पलाशे अश्वत्थे ॥
याज्ञिक्यम् । न॰ याज्ञिकानां • धर्मे •
आम्नायेच । छन्दोगौक्थिकेति • -
ञ्य : ॥
याज्य: । त्रि॰ याजनीये । यजमाने ।
यष्टुंयोग्य : । यज॰ । ऋहलोर्ण्य
त् । यजयाचेतिकुत्वनिषेध . ।
याजयितुंयोग्योवा ॥ न॰ यागल-
ब्धधनादौ ।
याज्या । स्त्री॰ यज्ञाङ्गसाधने । होतृ-
पाठ्यायामृचि ॥ इज्यतेऽनया । य-
ज॰ । ऋहलोर्ण्यत् । यजयाचरुच
प्रवचर्चश्चेतिकुत्वाभाव ' ॥
यात : । त्रि॰ गते ॥ याप्रापणे ।

क्त : ॥ न॰ अङ्कुशवारणे ॥ पादे-
नकर्मयत प्रोतयातमङ्कुशवारणमि
तिहलायुध ' ॥
यातना । स्त्री॰ प्रगाढायावेदनाया-
म् । कारणायाम् । तीव्रवेदनाया
म ॥ यतनिकारोपस्कारयो ' । अ
स्माण्णिजन्तात् • ण्यासश्रन्थो तियुच् ।
यातयाम । त्रि॰ जीर्णे । पक्वे स-
तिप्रहरादिव्यवहिते • ओदनादौ •
शैत्य प्राप्ते ॥ यथा । 'यातयामं-
गतरसंपूतिपर्य्युषितञ्चयदिति ॥
यातोगतोयामउपभोगकालोयस्य ।
परिभुक्तोज्झिते । भुक्तापुज्झिते ॥
यथा । दर्भा : कृष्णाजिन मन्त्रा-
ब्राह्मणाहविरग्नय : । अयातया-
मान्येतानिनियोज्यानिपुन . पु-
न ' ॥
यातायातम् । न॰ गमनागमने ॥
यातु । न॰ राक्षसे ॥ पुं॰ काले ।
याति । या॰ । कमिमनिजनिगा-
भायाहिभ्यश्चेतितु ' । अर्द्धर्चादि ।
त्रि॰गन्तरि । पथिके ॥
यातुघ्न . । पुं॰ गुग्गुलौ ॥
यातुधान : । पुं॰ राक्षसे ॥ यातूनिर
क्षांसिदधाति • पुष्णाति • खनाति
पोषकत्वात् । डुधाञ्॰ । बहुल-
मन्यत्रापीतियुच् । ल्युट्वाल्युडिति
ल्युड्वा ।
याता । पुं॰ सारथ्यादौ ॥ स्त्री॰ प

शास्यांपञ्चकदास्त्रभं शुरुदिन प चच शैदश्यपि । पुष्यारोहिणिकारवि- भं गुरुजीषष्ठीमनु : पश्चिमे॰सौम्ये विल्कुजभानवीयमकरीदिग्वैहितौ यातिथि॰रितिकश्चित् ॥

याथातथ्यम् । न॰ यथातथभावे ॥ ब्रा ह्मणादित्वात्ष्यञ् ॥ यथातथा ॥ स्वार्थे ष्यञ् ॥

याथार्थ्यम् । न॰ सत्यार्थतायाम् । वास्तवार्थे ॥ यथा भजरुगट्ट्य- तोजन्मनिरीह्स्यवतहिष . । स्वप- तोजागरूकस्ययाथार्थ्यं वेदकस्तवे- तिमुरे॰ कृताविष्णो : स्तुति : । कोविदकोवेत्ति । विदोलटोवेतिण- लादेश : ॥

याद पति : । पुं॰ समुद्रे ॥ वरु णे ॥ यादसांपति : ॥

यादईश : । पुं॰ समुद्रे ॥

यादव. । पुं॰ केशवे । श्रीकृष्णे ह- र्षौ ॥ न॰ गोमहिष्यादौ । याद बन्धने ॥ यदोरपत्यम् । अण् ॥ यदूनामिदम् । तस्येदमित्यण् ॥

यादवी । स्त्री॰ दुर्गायाम् ॥ यदूना मियम् । अण् ॥

याद : । न॰ जलजन्तौ ॥ यातिवेगेन । या॰ । असुन् बाहुलकात्॰ दुक् ॥ यद्वा॰ याति । क्विप् । या मतिचद॰ । असुन् । यादस्रतिवा । दसुच्प्रत्यये । क्विप

यादसांनाथ : । पुं॰ वरुणे ॥

यादसांपति : । पुं॰ समुद्रे ॥ वरुणे ॥ तत्पुरुषेकृतीत्यलुक् ॥

यादृश : । त्रि॰ यादृशि । जैसा॰ इ॰ भा॰ ॥ यद्रूवदृश्यते॰ यमिवपश्य तिवा । दृशिर॰ । त्यदादिष्वित्यच् क्सोपिवाच्यइतिक्स: । आसर्वनाम्न । इत्यत्वे तिदीर्घ : ॥

यादृच्छिक : । त्रि॰ यदृच्छयाप्राप्ते । स्वप्रयोजनसङ्कल्पशून्ये ॥

यादृक् । त्रि॰ यथाविधे । यादृशि ॥ यमिवपश्यति॰ यद्वायदृश्यते । दृशिर्॰ । त्यदादिषुदृशइतिक्विन् । आसर्वनाम्नइत्यात्वम् ॥

यादृश : । त्रि॰ यादृशि ॥ त्यदादिषु दृशोनालोचनेकञ्चेतिकञ् । पू र्ववद्विग्रहादिकम् ॥

यादोनाथ : । पुं॰ समुद्रे ॥

यादोनिवास : । न॰ जले ॥

यानम् । न॰ युग्ये । पत्रे । रथादिवाह ने ॥ गतौ ॥ शत्रोरास्कन्दने । वि- जिगीषोररिप्रति यात्रायाम् ॥ यथा । परस्यव्यसनन्दीत्वास्वबलंहि निरीक्ष्य च । राज्ञायामनुकार्यत्व मित्याहुर्नयकोविदा : ॥ याधातु । या॰ ल्युट् ॥ यात्यनेनवा । करणेतिल्युट् ॥

यानपात्रम् । न॰ निष्पद्यानविशे षे । वहित्रके । वोहित्थे । वहने ।

पोते । अष्टाजङ्गतिसागान्यजगमा यामसिद्धे । समुद्रयाने ॥

यानपात्रकम् । न० यानपात्रे ॥

यानमुखम् । न० रथादे पुरोभागे । धुरि । वोढृवस्तमस्थाने ॥ यानस्य मुखम् । पुरोभाग ॥

यापकम् । त्रि० प्रापके ॥

यापनम् । न० वर्त्तने ॥ कालक्षेपे ॥ निरसने । निरासे ॥ यातेर्ण्यन्ताल्ल्युट् । अर्त्तिह्रीत्यादिनापुगागम . ॥

यापित । त्रि० अपसारिते ॥ प्रस्थापिते ॥

याप्ता । स्त्री० जटायाम ॥

याप्य : । त्रि० यापनीये ॥ क्षेपणीय कालादौ ॥ निन्दिते । गर्हिते ॥ याप्यतेस्म । या० । ण्यन्तात् । अचोयत् ॥ क्वाचित्के ॥ व्याधिविशेषे ॥ यथा । साध्यायाप्यास्साध्यास्व्याधयस्त्रिविधा . स्मृता । सुखसाध्य कष्टसाध्यो द्विविध साध्यउच्यते ॥ यापनीयन्तुतविद्यात् क्रियाधारयतेहिताम् । क्रियायान्तु निवृत्तायासद्योयस्तुविनश्यति ॥ प्राप्ताक्रियाधारयतिसुखिनयाप्यमातुरम् । प्रपतिष्यदिवागारस्तम्भोयष्टेनयोजित . ॥ साध्यायाप्यत्वमायान्तियाप्याश्चासाध्यतांतथा । घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम ॥ अक्रियावतांचिकित्सारहित.नाम् ॥

याप्ययानम् । न० शिबिकायाम् । पालकी० हि० भा० । मञ्जापाया० बं० गी० दे० भा० ॥ याप्यैरधमैर्यानम् । याप्यस्याधमस्यवायानम् ॥

याभ . । पुं० न० मैथुने ॥

याम । पुं० दिवसस्य० रात्रेश्च० चतुर्थभागैकभागे । प्रहरे ॥ याति । या० । अर्त्तिस्तुसुहुहृलिमन् ॥ संयमे ॥ उपरतिमात्रे । यमे ॥ यमनम् । यम . समुपनिविषुचेतिपक्षेघञ्

यामकौ । पुं० २ पुनर्वसौ . ॥

यामघोषा । पुं० कुक्कुटे ॥ यामेघोषोस्य ॥

यामघोषा । स्त्री० यन्त्रविशेषे । यामनाल्याम् । घट्याम् । घडी० हि० भा० ॥

यामतूर्य्य । प्रहरावसानसूचकेवाद्नीययन्त्रे ॥ यामस्यतूर्य्यं ॥

यामदग्न्य । पुं० परशुरामे ॥

यामनादी । पुं० कुक्कुटे ॥

यामनाली । स्त्री० नाल्याम् । यामघोषायाम् ॥

यामनेमि . । पुं० शचीपतौ । इन्द्रे ॥

यामलम् । न० युगले ॥ तन्त्रशास्त्रविशेषे ॥ तल्लक्षणंयथा । सृष्टिश्चज्योतिषाख्याननित्यकृत्य प्रदीपनम् । क्रमसूत्रंवर्णभेदोजातिभेदस्तथैवच

। युगधर्मंचसङ्ख्यातो यामलस्था ष्टलक्षणम् ॥ ततषड्विधम् यथा आदिब्रह्मविष्णुरुद्रगणेशादित्यभे दतः । षड्विध यामलप्रोक्तशास्त्रा श्रोमक्कमम्मतम् ॥ तथाहि ॥ याम ला षट्चसङ्ख्याता स्वाद्यावादि यामले । द्वाविंशच्चसहस्राणिचयस्मिं श्छन्दानिच ॥ द्वितीयेत्रस्य सन्ति तुत्रिंशतिसङ्ख्यया । सहस्राणिश तान्यशतान्येवकथितानिच ॥ २ ॥ तावत्सङ्ख्यासहस्राणिशतानिपरि सङ्ख्यया । विंशतिश्चतथासंख्याश्लो कानिविष्णुयामले ॥ ३ ॥ कालस ङ्ख्यासहस्राणिवेदसङ्ख्याशतानिच । पञ्चषष्टिस्तथाश्लोका कनिष्टे रुद्र यामले ॥ ४ ॥ नवश्लोकसहस्राणि त्रयोदशशतानिच । द्वाविंशतिस्त- थाश्लोका गणेशयामलेशुभे ॥ ५ ॥ रविसङ्ख्यासहस्राणि आदित्याख्येतु- यामले ॥ ६ ॥

यामती । स्त्री॰ रात्रौ ॥

यामाता । पुं॰ जामातरि ॥

यामार्धम् । न॰ प्रहरार्धे ।

यामि॰ । स्त्री॰ स्वसरि । भगिन्याम् ॥ कुलस्त्रियाम् ॥ याति । या॰ । बाहुलकान्मिः ॥ आस्याम ॥ रात्रौ ॥

यामिकभटः । पुं॰ प्रहरिके । चौकी दार॰ इतिभाषा ॥

यामित्रम् । न॰ लग्नात्सप्तमेभवने ॥

यामित्रवेध । पुं॰ विवाहादौवर्ज्जनी येवेधविशेषे ॥ यथा । लग्नाच्छ्भा च्छुत . क्रूरा सौम्याश्चसप्तमेयदि । तदायामित्रवेधः स्याद्विवाहतत्र वर्जयेत् ॥ मुहूर्तचिन्तामणौतु । लग्नाच्चन्द्राम्मदनभवनगेखेटेनस्या द्विहपरिणयनम् । किंवावाणाशुग ५५ मितलवगेयामित्रस्यादशुभकर मिदम् ॥ किवेति । यद्वाधिष्ठित राशेर्नवमांशमारभ्य॰ वाणाशुग५५ मितलवगे॰ पञ्चपञ्चाशन्मितनवां- शगे चन्द्रे लग्नेवायामित्र सूक्ष्म स्या त् । यथा । मेषे पञ्चमनवांशेभौमो स्ति॰ तस्मात्तुलायापञ्चमनवमांश स्थचन्द्रोनिषिद्ध । अन्येष्टौनवांशा स्तुलायांशुभाः एवंविधसूक्ष्मया मित्रमशुभकरस्यादिति । विशेषमा ह गुरुः । चन्द्रात्सप्तमराशिस्था स्थाख्या ' सूर्यादयोग्रहाः । दानि द्रावलवन्तश्चेद्वलहोनानताहशाः ॥

यामिनी । स्त्री॰ रात्रौ ॥ भीतिहेतु त्वात्क्लिन्दितायामायस्याः । समृदो पतापन्नादितिनिर्देशाद्यामिनिः । ङीप् ॥ हरिद्रायाम् ॥

यामिनीपतिः पुं॰ चन्द्रमसि ॥ या मिन्याः ' पति ' ॥ कर्पूरे ॥

यामी । स्त्री॰ कास्याम् ॥ यमसम्ब न्धिन्याम् ॥ दक्षिणदिशि ॥

यामुनम् । न॰ चक्षुष्ये । सौवीराञ्जने ॥ यमुनायाभवम् । अण् ॥ यद्वा । यमुनायाइदम्॰तदच्छ्रामत्वात् ॥ देशविशेषे ॥ कुत्स्याकारप्रस्तरे ॥ यमुनाजले ॥ यथा । त्रिभि सारस्वतोयमप्तभिस्त्वथयामुनम् । नार्म्मदन्त्वशभिर्मासैर्गाङ्गंवर्षेणजीर्यति ॥ त्रि॰ यमुनातीरवासिनि ॥ यमुना सम्बन्धिनि ॥

यामुनेष्टकम् । न॰ सीसके ॥

यामेय । पु॰ भागिनेये ॥

याम्य । पुं॰ अगस्त्यमुनौ ॥ चन्दने ॥ यमस्यायम् । यमाच्चेतियत् ॥ न॰ भरणीनक्षत्रे ॥

याम्या । स्त्री॰ अवाच्याम् । दक्षिण स्यादिशि ॥ भरणीनक्षत्रे ॥

याम्यायनम् । न॰ दक्षिणायने । याम्यायनेहरौसुप्ते सर्वकर्माणिवर्जयेत् ॥ याम्येअयनम् ॥

याम्योद्भूत । पु॰ श्रीतालवृक्षे ॥

यायजूक । पुं॰ इज्याशीले । भूयोभूयोयागकर्त्तरि ॥ पुन पुन र्भृशंवायजते । यजदेवपूजादौ । क्रियासमभिहारे॰इतियङ् । यजजपदशायङ्कइत्यूक ॥

यायावर । पु॰ अश्वमेधीयाश्वे ॥ जरत्कारुमुनौ त्रि॰ भ्रमणशीले ॥ पुन पुनरतिशयेनयाति॰तच्छील । या॰ । यङ्यङइतियाते यङ्लुगन्ताद्वरच् ॥

याथी । पु॰ वैरिणमुद्दिश्यजिगमिषौ राज्ञि ॥ याति । या॰ । यश्चादिभ्यो णिनि । आतोयुक्॥विनप्रवरे ॥

याव । पु॰ अलक्ते । लाक्षारसे ॥ यौति॰यूयतेवा । यु॰ । अच्॰ इदोरन्वा । यद्वत । प्रज्ञाद्यण् ॥ पाकप्रभेदे ॥

यावक । पु॰ कुल्माषे अलक्तके । यौति । यु॰ । कृञादिभ्योवुन् । तत . प्रज्ञाद्यण् ॥ यद्वा । यवस्यविकार । अण् । यवादिभ्यइतिस्वार्थेकन् ॥ यावान्ने ॥

यावज्जीवम् । न॰ यावदायुषि । जीवनपर्यन्ते ॥

यावत् । अ॰ कार्त्स्न्ये ॥ अवधारणे ॥ प्रशसायाम् । परिच्छेदे ॥ माने ॥ अधिकारे ॥ सम्भ्रमे ॥ पक्षान्तरे ॥ अवधौ ॥ यत्परिमाणमस्य । तदिताइति ःडुअचनेनान्त्योऽनुनासिकपितद्वितास्थापिता । तेन॰डावतु ॥

यावान् । त्रि॰ परिमाणविशेषे । जितना॰इतिभा॰ ॥ यत्परिमाणमस्य । यत्तदेतेभ्य परिमाणेवतुप । आसर्वनाम्नइत्यात्वम् ॥

यावतिथ । त्रि॰ यावतापूरणे ॥ तस्यपूरणेडट् । वतोरिथुक् ॥

यावदर्थ । त्रि॰ देयनिर्द्दाराधिकसख्याशून्ये ॥ यावदर्थस्तेयार्थीयस्य । स

ध्यमपदलोपीसमास । यावताम धीदिङ्निर्वाहोयेन॰दस्युवा ॥

यावन । सिल्हके । नागोरीगंदइति प्रसिद्धेधूपे ॥ यवनदेशेभव । तत्र भवइत्यण् ॥ याव्यलेवा । येतेर्ख्वं मलाद्युच्चा । जुबार॰योनाहरोइति ख्यातेधान्यप्रभेदे ॥ यावनोलोहि त : खादुर्लोहित ' श्लेष्मपित्तजि त् । अवृष्यस्तुवरोरूच क्लेदकृत्क थितोलघु ' ॥

यावनाल । पुं॰ धान्यभेदे । वस्तत ण्डुले । दीर्घनाले । दीर्घशरे । चेचे च्चो । इत्तुप्रचके । यावने । जुबार॰ इ॰भा॰ ॥

यावनालशर : । पुं॰ शरविशेषे । न दीजे । दृढत्वचि । वारिसम्भवे । ख रपत्रे । जोन्हरली॰इतिभाषा ॥

यावनाली । स्त्री॰ यावनालशर्करायाा म् । हिमोत्पन्नायाम् । हिमशर्क रायाम् ॥

यावशूक । पुं॰ यवचारे ॥ इतिरत्न माला ॥

यावस । पु॰ न॰घासे ॥ तृणसङ्घा ते ॥ यूयते । यु॰ । वहियुभ्याणि दित्यासच् ॥

याव्य । त्रि॰ मिश्रणीये ॥

याशोधरेय . । शाक्यमुनिपुत्रे ॥

याष्टीक : । त्रि॰ यष्ट्यायोधिनि । य- ष्टिहेतिकि ॥ यष्टि ' प्रहरणमस्य । शक्तियष्ट्योरीकक् । स्त्रियांङीपि॰ याष्टीकी ॥

यास : । पुं॰ दुरालभायाम् । यवासे ॥ यास खादु सरस्तिक्तस्तुवर ' शी तलोलघु ' । कफमेदोमदभ्रान्ति पित्तास्रकुष्ठकासनुत् ॥ तृष्णाविसर्प वातास्रवमिज्वरहर स्मृत : । य वासस्यगुणैस्तुल्या बुधैरुक्तादुराल भा ॥ यसनम् । यसुप्रयत्ने । भावे घञ् ॥ यासोस्त्यस्य । अर्श आद्यच् ॥ याति । बाहुलकादसच्

यासा । स्त्री॰ मदनशलाकापक्षिणि

यासापद्मम् । न॰ विकसितोत्पले ॥ सद्योविकसितपद्म यासापद्म प्रचक्ष ते ॥

यास्क ' । पुं॰ मुनिविशेषे ॥ यस्क- स्यापत्यम् । शिवादिभ्योण् । बहु त्वे॰ यस्का : ॥

यियक्षमाण : । त्रि॰ यष्टुमिच्छति ॥ यजते सन्नन्ताच्छट शानच् ॥

यियक्षु : । त्रि॰ यष्टुमिच्छौ ॥ यजे . सन्नन्तादुप्रत्यय . ॥

यियासन् । त्रि॰ यातुमिच्छति ॥ या तेसन्नन्ताच्छट : शत्रादेश : ॥

यियासित . । त्रि॰ जिगमिषिते । या तुमिष्टे ॥ याते : सन्नन्तात्कर्मणि क्त ' ॥

यियासु : । त्रि॰ यातुमिच्छौ ॥ या- ते : सन्नन्तादुप्रत्यय : ॥

युक्तम् । न० हस्तचतुष्टये ॥ त्रि० युक्ते । अपृथग्भूते । मिलिते ॥ औपयिके । न्याय्यगतद्रव्ये ॥ युक्तिसिद्धे । यथार्थे ॥ स्थिते ॥ नियुक्ते ॥ अवहिते । अप्रमत्ते । निगृहीतमनसि । समाहितचित्ते । ईश्वरार्थेवैतानिककर्माणिनममफलायेत्येवमभिप्रायवति ॥ परिमिते ॥ पुं० अभ्यस्तयोगे ॥ यथा । योगीतुद्विविध प्रोक्तोयुक्तयुञ्जानभेदतः । युक्तस्यसर्वदाभानचिन्तासहकृतोपर ॥ युज्यतेस्म । युजिर् योगे क्त ॥

युक्तदण्ड । पु० यथापराधदण्डे ० नृपे ॥ उद्वेजयतितीक्ष्णेनमृदुनापरिभूयते । दण्डेनन्टपतिस्तस्माद्युक्तदण्ड प्रशस्यते ॥

युक्तरसा । स्त्री० रास्नायाम् । काटाआमरुली० इ० गौ० दे० भा० । एलापर्ण्याम् ॥ युक्तोरसोयस्याः ॥

युक्ता । स्त्री० एलानी० इ० गौ० दे० भा० ० प्र० वृत्तविशेषे ॥

युक्ति । स्त्री० न्याये ॥ कार्यकारणयोरभेदसाधने० न्यायोयथा । मृदिसदात्मनाघटे प्रागसति० मृदियतोनस्यात्० तस्मात्० कार्यकारणयोरभेदएव । कार्यकारणयोरनन्यत्वे ० एककारणज्ञानात्० सर्वकार्यज्ञानमस्तीत्यादिः ॥ योगे । योजनायाम् ॥ रौप्यव्यवहारे ॥ धर्मशास्त्रविरोधेतुयुक्तियुक्तोविधिः स्मृतः ॥ अनुमाने ॥ अपूर्वार्थप्राप्तौ ॥ सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्येषुषड्गुणेषु ॥ शास्त्रदीपिकायायुक्तिशब्दस्य० प्रमाणपरतयाव्याख्यानात्० प्रत्यक्षादिषट्सुप्रमाणेषु ॥ योजनम् । युजी स्त्रियांक्तिन् । नाट्यालङ्कारविशेषे ॥ तल्लक्षणंयथा । युक्तिरर्थावधारणमिति ॥ उदाहरणं यथा । यदिसमरमपास्यनास्तिमृत्योर्भयमितियुक्तमितीन्यतः प्रयातुम् । अथमरणमवश्यमेवजन्तोः किमितिमुधामलिनयश कुरुध्वमिति ॥

युग । पुं० रथहलाद्यङ्गे । जूआ० इतिभाषा ॥

युगम् । न० युग्मे ॥ हस्तचतुष्के ॥ वृद्धिनामौषधे ॥ कृतादिषुचतुर्षु ॥ देवानांद्वादशसहस्रवत्सरेण० चतुर्युगंभवति । मनुष्यमानेनचतुर्युगपरिमाण विंशतिसहस्राधिकचित्वारिंशल्लक्षम् । ४३२०००० ॥ तत्रसत्ययुगस्यमानम् १७२८००० वर्षा । त्रेतायुगस्यमानम् । १२९६००० वर्षाः । द्वापरयुगस्यमानम् । ८६४००० वर्षाः । कलियुगस्यमानम् । ४३२००० वर्षा ॥ तेषांभारतवर्षेस्थितिः स्व यथा । चतुर्षि

भारतेवर्षेयुगानिमुनयोऽन्वुवन् । कृतञ्चेतादापरञ्चकलिश्चेतिचतुर्युगम् ॥ चत्वार्याहुः सहस्राणिवर्षाणान्तुकृत युगम् । तस्यतावतच्छ- तीसन्ध्यासन्ध्यांशश्चतथाविध ॥ इतरेषुससन्ध्येषुससन्ध्यांशेषुच त्रिषु । एकापायेनवर्त्तन्ते सहस्राणिशतानिच ॥ यदेतत्परिसङ्ख्यातमादावेवचतुर्युगम् । एतद्द्वाद- शसहस्रं देवानायुगमुच्यते ॥ इ- तिमनु । तथाविष्णुपुराणे । चत्वारित्रीणिद्वे चैकंकृतादिषुयथा क्रमम् । दिव्याब्दानांसहस्राणि- युगमाहुः पुराविदः ॥ तत्प्रमाणैः शतैः सन्ध्यापूर्वातत्राभिधीयते । सन्ध्यांशकस्तुतत्तुल्योयुग- स्यानन्तरोदितः ॥ सन्ध्यासन्- ध्यांशयोरन्तर्यः कालोमुनिसत्तम । युगाख्यः सतुविज्ञेय कृतत्रेतादिसञ्ज्ञितः ॥ इति ॥ योजनम्० युज्यतेवा । युजिर्योगे । घञ् । कुत्वम् । संज्ञापूर्वकत्वान्नगुणः । रथयुगेतिनिपातनाद्वा ॥

युगकील : । पुं० युगकीलके ॥

युगकीलक । पुं० युगकाष्ठस्यकील- के । शम्यायाम् । जुएकीकील० इ० भाषा । स्वार्थेकन् ॥

युगक्षय । पुं० महाप्रलये ॥ युगानां क्षयोयस्मिन् ॥

युगन्धर । पुं० यत्ररथयुगकाष्ठमास ज्यतेतस्मिन्काष्ठे ॥ कूबरे ॥ युगवोढृबन्धनकाष्ठम्धारयति । सञ्ज्ञायांभृतृवृजिधारीतिखच् । अरुर्द्विषदजन्तस्येतिमुम् ॥ पर्वतविशेषे ॥

युगपत् । अ० एकदा । एकस्मिन्न व काले । युवन्यस्मिन्काले । यु० ॥ गपतकप्रत्यय ॥ यद्वा । युगमव तेस्मिन् । पयगतौ । क्तप्रत्ययः ॥

युगपत्र । पु० कोविदारे । रक्तका ञ्चनारवृक्षे ॥ युगपत्रमस्य ॥ युग्म पर्णवृक्षमात्रे ॥

युगपत्रक । पु० कोविदार । रक्त काञ्चनद्रुमे । युगयुग्मपत्रमस्य ॥

युगपत्रिका । स्त्री० शिंशपावृक्षे ॥

युगपार्श्वग । पु० दमनकालिकाष्ठा दिपितकाष्ठवाहे । प्रष्ठौहि ॥ यु- गस्यस्कन्धकाष्ठस्यपार्श्वंगच्छति । अ न्येष्वपीतिडः ॥

युगलम् । न० युगे । युग्मे ॥ युज्यते । युजिर्योगे । वृषादिभ्य कश्चित् । न्यङ्क्वादित्वात्कुत्वम् ॥ युगंलातिवा । आतइतिकः ॥ युगं युग्ममस्यास्त्यस्य । सिध्मादित्वा लच् ।

युगलाख्य : । पुं० बर्बुरवृक्षे । त्रि० युग्मनामके ॥

युगांशक : । पुं० वत्सरे ॥ युगवि भाजके ॥

युगादिः । स्त्री॰ तिथिविशेषेषु ॥ यथा । वैशाखमासस्यसितातृतीया॰ नवम्यसौकार्त्तिकशुक्लपक्षे । नभस्यमासस्यचकृष्णपक्षे त्रयोदशीपञ्चदशीचमाघे ॥ एतायुगाद्य प्रोक्ता । स्वाध्यायवर्ज्यं वेदुध । महापुण्यप्रदाश्चैताटत्तस्याक्षयकारिका ॥ विशेषमाहनारद । कार्त्तिकेशुक्लनवमीचादि कृतयुगस्यच । त्रेतादिर्माधवेशुक्लतृतीयापुण्यसम्मिता- ॥ कृष्णापञ्चदशीमाघेद्वापरादिरुदीरिता । कल्पादि स्यात्कृष्णपक्षे नभस्येचत्रयोदशीति ॥ कालविशेषे ।। युगस्यआदि ॥

युगान्त । पुं॰ प्रलये ॥ युगशेषे ॥

युग्मम । न॰ द्वन्द्वे । युगले । युगे । जोडा॰ जोडी॰ इ॰ भा॰ ॥ युज्यते । युजिर्योगे । युजिरुजितिजांकुश्चे तिमक् ।। द्वयो स्तोकयो रन्वये ।।

युग्मपत्र । पुं॰ रक्तकाञ्चने कोविदारे ॥ न॰ युगलपर्णे ॥ युग्मपत्रमस्य ।

युग्मपत्रिका । स्त्री॰ शिशपावृक्षे ।।

युग्मपर्ण । पुं॰ कोविदारे ।। सप्तपर्णश्च ॥

युग्मफला स्त्री॰ इन्द्रवल्भिंयाम् ॥ वृश्चिकाल्याम् ॥ गन्धिकायाम् ॥

युग्मादरयम् । न॰ युग्मतिथिपूज्यता। याम् ॥ द्वयोर्मान्यत्वे ॥

युग्य । पु॰ प्रासङ्ग्ये । शाकटे । युगादीनावोढरि ॥ युग्यं रथाद्यङ्ग वहतितद्वहतिरथयुगप्रासङ्गमितियत् ॥ न॰ याने ॥ हस्त्यश्वादिवाहने ॥ युज्यते । युजिर ॰ । युग्यञ्चपत्रइति क्यबन्तोनिपातित ॥ युगायहितो वा । उगादिभ्योयत् युगमर्हति वा । दण्डादित्वाद्यत् ॥

युङ्गी । पु॰ वर्णसङ्करजातिविशेषे । यथा । गङ्गापुत्रस्यकन्यायावीर्येणवेशधारिण । बभूववेशधारोचयुङ्गीयुङ्गीप्रकीर्तित । ह॰ ब्र॰ वै॰पु॰ ॥

युक्॰ग्॰ । त्रि॰ समाधिमति । युग्मे ॥ युज्यतेसमाधत्ते । युजसमाधौदेवादिक । क्विप्चेतिक्विन् ॥

युङ् । पु॰ योगकर्तरि । मेलनकर्तरि ॥ युनक्ति । युजिर् योगे । ऋत्विगादिनाक्विन् । युजेरसमासे॰ इ॰ नुम् । क्विन्प्रत्ययस्यकु । इतिनस्यकुत्वे न॰ सानुनासिकोङकार ॥

युजौ । पु॰ नित्यद्विवचनान्त । अश्विनीकुमारयो ॥

युजान । पु॰ सारथौ ॥

युञ्जानः । पुं॰ सारथौ ॥ विप्रे ॥ भावनासहकारेयसर्वज्ञेयोगिविशेषे ॥ यथा । योगीतुद्विविध प्रोक्तोयुक्तयुञ्जानभेदत । युक्तस्यसर्वदाभानचिन्तासहकृतोऽपर । ॥ इ॰

भा० प० ॥ युक्तश्चेति योगाभ्यासा ङ्गत्वायनीकृत समाधिसमासादि तोविशेषसिद्धियुक्त इत्युच्यते । च यमेनविशिष्टयोगवत्वात्युक्त इत्युच्यते । सर्वदेतिचिन्तासहकारविनेत्य र्थ । भासनसर्वविषयासाप्रत्यक्षम् अपरोयुञ्जान । विषयव्यावृत्त्यासा म्ससमाधिरुद्ध । अयस्तु युञ्जान उच्यते । चिन्ताध्यानम्० तदेवका रणम्० तत्सहकारात्स्थूलसूक्ष्म- व्यवहितविप्रकृष्टानर्थानिमन प्रत्य क्षीकरोतीत्यर्थं । इतिसिद्धान्तमु- क्तावली ॥

युत् । च० कुत्सायाम् ॥

युतम् । न० हस्तचतुष्टये ॥ त्रि० यु क्ते । अपृथग्भूते ॥ पृथग्योगे ॥

युतकम् । न० संशये ॥ युगे । युग्मे ॥ नारीवस्त्राञ्चले । पटाञ्चले ॥ चलनार्थे । पादार्थे ॥ युक्ते ॥ यौतके ॥ स्त्रीवस्त्रप्रभेदे ॥ सूर्याये ॥ मैत्रीकरणे ॥ योनिसम्बन्धे ॥

युतयामित्रवेध । पुं० वेधविशेषे ॥ सयथा । पापात्सप्तमगः शशीयदि भवेत्पापेनयुक्तोथवायत्नेनाशुविव र्जयेन्मुनिमितैर्दोषोप्ययंकथ्यते । या त्रायाविपदोत्सवेसुतवधश्चौरेचरो- गागमोवैधव्यंविवहेव्रतेचमरणंशूल स्यपुंस्कर्मणि । अस्यापवादोयथा । तुङ्गस्थितोवानिजमन्दिरगोथपूर्णो मित्रर्क्षसौम्यग्रहगोथतद्वीक्षितोवा- यामित्रवेधविहितानपहृत्यदोषान् दोषाकरःसुखमनेकविधंविधत्ते वृषकर्कटसिंहकन्यामिथुनधनुर्मी- नतुलास्थेचन्द्रेशुभग्रहवीक्षितोवा । युतयामित्रदोषोनास्ति ॥

युतवेध । पुं० वेधविशेषे । सयथा । चन्द्रः करोतिरविणासहितोर्थ नाशंभौमान्वित पतिविनाशकर सुचन्द्र । स्वर्भानुकेतुशनिभिर्मृ- तिमादधातिनानासुखानिकविना- गुरुणाबुधेन ॥

युद्धम् । न० आयोधने । जन्ये प्रधने मृधे । रणे युद्ध० लड़ाई० इ० भा० ॥ योधनम् । युसम्प्रहारे । भावेक्त ॥

युद्धरङ्ग । पुं० कार्त्तिकेये ॥

युद्धसार । पुं० घोटके ॥

युद्धाचार्य । पुं० युद्धार्थमायुधविद्या- पदेशके ॥

युत् । स्त्री० समिति । आजौ । सङ्ग्रामे । युद्धे ॥ योधनम् युध० । स म्पदादित्वात्क्विप् ॥

युधाजित । पुं० कैकय्याभ्रातरि । भरतमातुले ॥

युधान । पुं० क्षत्रिये ॥ युध्यते । युध० । युधिबुधिदृशः किच्चेत्या नच् ॥

युधामन्यु । पुं० नृपतिविशेषे ॥

युधिष्ठिर । धर्मात्मजे । कुन्त्यां गर्भे-
धर्मादुत्पन्ने • अर्जुनाग्रजे • प्रथमपाण्ड
वे । अजातशत्रौ । ग्रस्थारी । अ-
जमीढे ॥ युधि रणे अवभागिस्थेन
स्थिर । युष्मदस्मदादित्यलुक् । ग
विष्ठिरत्वात्स्थिरत्वं लिपत्वम् ॥

युध । पु० धनुषि ॥ सयुगे ॥ यु
ध्यते । युध० । कृषियुधीत्यादि-
नाक्ल ॥ वार्त्ता ॥

युधाजित् । पुं० कुद्रव्याघ्रे ॥

युयुत्सु । त्रि० युद्धेच्छौ ॥ युध
सन्नन्तादुप्रत्यय ॥ धृतराष्ट्रवैश्या
यांजाते ॥

युयुधान । पु० सात्यकौ । शिने-
र्नप्तरि ॥ इन्द्रे ॥ क्षत्रिये ॥ योद्ध-
रि ॥

युवगण्ड । पुं० यूनांगण्डस्थव्रण-
विशेषे । यवगण्डे । वयस्फोटे ॥

युवति । स्त्री० प्राप्तयौवनायांस्त्रि-
याम् । तरुण्याम् ॥ यौति • मिश्र
मेमिश्रकाम्येषु सर्वं सुकामं सुमि-
श्रीभवतियामित्यर्थं मसत्राधिका-
रात् । यु मिश्रणे । कनिन् युव-
षितक्षीतिकनिन् । यूनस्ति ॥
हरिद्रायाम् ॥ स्त्रीसामान्ये ॥

युवती । स्त्री० तरुण्याम् । स्त्रियां-
म् । वर्यायाम् । युवती • तथा
वयस्यादिर्यथा । षाषोडशाद्भवेद्बा-
लातरुणीभिः प्रमामता । पञ्चपञ्चा-
शतः प्रौढावृद्धाभवतितत्परम् ॥
बालातुप्राणदाप्रोक्ता युवतीप्राणहा
रिणी । प्रौढाकरोतिवृद्धत्वं वृद्धाम-
रणमादिशेत् ॥ निदाघशरदोर्बा-
लाप्रौढावर्षावसन्तयोः । हेमन्त-
शिशिरेयोग्याप्रशस्तायुवती ॥
योग्या • युवती ॥ हरिद्रायाम् ॥
यौति • आत्मविश्लिष्टसर्वंकर्मसुमिश्री
भवति • इत्यर्थो सत्राधिकारात् ।
यु मिश्रणे । शट . शतृ । उगितश्चे
तिङीप् ॥ यद्वा । युवतिशब्दात् •
सर्वतोक्तिन्नर्थादितिङीष् ॥ स्त्री-
सामान्ये ॥

युवतीष्टा । स्त्री० स्वर्णयूथिकायाम् ॥

युवा । पु • वयस्थे । तरुणे । षोडश
वर्षमारभ्यत्रिंशद्वर्षपर्यन्तावस्थाव
ति । मतान्तरेणषोडशवर्षादारभ्यप
ञ्चाशद्वर्षपर्यन्तवयस्के ॥ यथा । षाषो
डशाद्भवेद्बालस्तरुणस्ततउच्यते । वृद्ध
स्यात्सप्ततेरूर्ध्वं वर्षीयान्नवते पर
मितिस्मृतेः . यौति । यु० । कनिन् यु
वृषीतिकनिन् । त्रि • अल्पवयसि ॥
श्रेष्ठे ॥ निसर्गबलशालिनि ॥ षष्टिव
त्सरान्तर्गतनवमवत्सरे ॥ तत्फल
यथा । महार्घं जायतेसर्वं घृततैलर
सादिकम् । प्रजानाशभवेद्दुःखं
निसवत्सरे शुभे ॥

युवनाश्व । पुं० सूर्यवंशीयराजवि
शेषे ॥ मान्धातृपितरि ॥

न्द्रियार्थेषु नकर्मस्वनुषज्जते । सर्वसङ्कल्पसन्यासीयोगारूढस्तदो च्यते ॥

योगासनम् । न० ब्रह्मासने । ध्यानासने ॥

योगिद्राज ' । पुं० वैद्ये ॥

योगी । त्रि० वसुरुद्रादित्यादिदेवताभक्ते ॥ हरिद्राकल्पे । ध्याननिष्ठे ।। निरतिशयज्ञानेश्वर्यादिशालिनि ॥ समाधिनिष्ठेऽन्तर्दृष्टौ ॥ परमहंसपरिव्राजके ॥ परवैराग्ययुक्ते ॥ योगयुक्ते ॥ योगेननित्यसम्बन्धिनि ॥ योगारूढे ॥ सच्चिविधोऽपरम : परमश्च । तत्रोत्पन्नतत्त्वज्ञानोऽनुत्पन्नजीवन्मुक्तिरपरम . । उत्पन्नतत्त्वज्ञानउत्पन्नजीवन्मुक्तिस्तुपरमोयोगीति ॥ सर्वेषीर्ष्ट शरीरस्थे सुन्निग्धे चन्दनेतथा । समताभावनायस्यसयोगीपरिकीर्त्तित . ॥ आत्मौपम्येनसर्व्वंत्र सम पश्यतियोऽर्जुन । सुखवायदिवा दु ' खसयोगीपरमोमत : ॥ योगोऽस्यास्ति । अतइनिठनावितीनि : कर्मयोगिणि ॥ यथा । योगिन कर्म कुर्वन्तिसङ्ग त्यक्त्वात्म शुद्धय इति ॥

योगिनी । स्त्री० योगयुक्तायानार्याम् ।। भगवत्या. सखीरूपासावरणदेवतासु ॥ ता. कोटिविधा । तासांच तु षष्टि : प्रधाना . । तास्वष्टयोगिन्यो यथा । ततोष्टपत्रेष्वब्जस्य पूजयेदष्टयोगिनी । शैलपुत्रींचण्ड घण्टांस्कन्दमातरमेवच । कालरात्रिञ्चपूर्वादिचतुर्दिक्षुप्रपूजयेत् ॥ चण्डिकामथकूष्माण्डींतथाकात्यायनींशुभाम् । महागौरींचाग्निकोणे नैर्ऋत्यादिषुपूजयेत् ॥ कुत्रन्तादयोगिन ' स्त्रीत्वविवक्षायामन्नेन्योङ्गी वितिमात्वलक्षणोङीप् ॥ पश्चाच योगिनीचक्रम् ॥ मङ्गलादिषु । यथा मङ्गलापिङ्गलाधन्याभ्रामरीभद्रिकातथा । उल्कासिद्धि सङ्कटाचयोगिन्यो ष्टौप्रकीर्तिता : ॥

योगिनीचक्रम् । न० तिथिविशेषे दिग्विशेषा वस्थिति योगिनीषु ॥ यथा । ब्रह्माणीसंस्थितापूर्वे प्रतिपन्नवमीतिथौ । माहेश्वरीचोत्तरेच वितीयादशमीतिथौ । स्थितान्ने ये चकौमारीतृतीयैकादशीतिथौ । नारायणीचनैर्ऋत्येचतुर्थींद्वादशीतिथौ ॥ पञ्चम्याञ्चत्रयोदश्यावाराही दक्षिणे तथा । षष्ठ्याञ्चैवत्रयोदश्या मिन्द्राणीपश्चिमे [illegible] ॥ सप्तम्यापौर्णमास्याचचामुण्डा वायुगोचरे । अष्टम्यमावास्ययोश्चमहालक्ष्मीशगोचरे ॥ योगिनीगमनं त्वेवं गमनादि प्रकारयेत् ॥ अपिच । नवमीप्रतिपत्पूर्वे० वह्निरुद्रे ग्निकोणके ।

चयोदशशरेशाख्ये॰ वेदादित्ये चमे च्छंते । चतुर्दशरसेपश्चात्॰प्रणि मासुनिमाकृते । एापश्चोत्तरे दर्शा ष्टमीशानेचयोगिनी ॥ वामेशुभप्र दापृष्ठेवांछितार्थप्रदायिनी ॥ द क्षिणे धनहन्त्रीचसम्मुखेमृत्युदायि नी ॥

योगीन्द्र । पुं॰ शिवे ॥ योग पर मात्मचिन्तनम्॰ तदृत्सुश्रेष्ठ ॥

योगीश । पुं॰ शिवे ॥ विष्णौ ॥ च न्ये योगिनोयोगान्तरायैर्हन्यन्ते॰स्व स्वरूपात्प्रमाद्यन्ति॰ श्चयन्तुतद्रहि तत्वात्तेषामीश ॥ याज्ञवल्क्य मुनौ ॥

योगीश्वर . । पुं॰ शिवे ॥ योगिनामी श्वरः ॥ याज्ञवल्क्यमुनौ ॥

योगीश्वरी । स्त्री॰ दुर्गायाम् ।' यथा । योगिशक्तःद्योदेला ' समकान्ता स्तपोवला' । तेषास्वामीतथायोगी श्वरीप्रभुपालना ॥ चात्मेन्द्रियम नादीनांसंयोगीयोगउच्यते । तेषां चायोजनाद्योगी योगैश्वर्यंविवोधने तिदेवीपुराणम्

योगेश । पुं॰ याज्ञवल्क्ये ॥

योगेश्वर . । पुं॰ सदाशिवे ॥ सर्वज्ञे सर्वज्ञशक्तौभगवति । श्रीकृष्णे ॥ सर्वेषामणिमादिसिद्धिशालिना योगिनामीश्वर । सर्वयोगसिद्धौ नामीश्वर ॥

योगेश्वरी । स्त्री॰ वराटदेशस्थितायां महदुर्गायाम् ॥ वन्ध्याकर्कोटक्याम् ॥

योगेष्टम् । न॰ सीसके । नागे । सी- साङ्गत्तिप्रसिद्धेधातौ ॥ योगेधातु- सम्बन्धे इष्टम् । सप्तमीतिसमास ॥

योग्यम् । न॰ ऋद्धिनामौषधौ ॥ वृद्धि नामौषधौ ॥ पुं॰ पुष्यनक्षत्रे ॥ त्रि॰ प्रवीणे ॥ योगार्हे ॥ उपाये योग्येनार्थं कस्यमध्याञ्जनस्य ॥ शक्ते ॥ युज्यते । युजिर॰ । ऋह लोर्ण्यत् ॥ यद्वा । योगायप्रभवति । योगाद्यश्च ॥ अभ्यासे ॥ यथा । अपर ' प्राणधानयोग्यशामकृत प ञ्चशरीरगोचरानितिरघु ' । प्रणि- धानयोग्ययासमाध्यभ्यासेनवशमन यद्दितिसम्बन्ध .॥

योग्यता । स्त्री॰ वाक्यार्थज्ञानहेतौ । अर्थावाधे ॥ अग्निनासिञ्चेदिति नप्रमाणम्॰ योग्यताविरहात् ॥ भावेतल् ॥ शाब्दवोधकारणविशे षे ॥ सतुपदार्थानांपरस्परसम्बधे वाधाभाव ' । इतिसाहित्यदर्पण ॥ न्यायमते॰ तत्पदार्थेतत्पदार्थ वत्ता । यथा । पदार्थेतत्रतद्वत्ता योग्यतापरिकीर्तिता । एकपदार्थे ऽपरपदार्थस स्वन्धेयाेग्यतात्वर्थ । तज्ज्ञानाभावाच्चवह्निनासिञ्चती त्यादौनशाब्दवोध ॥ चमतायामि तिलोकप्रसिद्धि ' ।

योनाल . । पु० यवनाले । जूर्णाह्वये । देवधान्ये । जुन्हरी० जुवार० इ० प्र० धान्ये ॥

योनि: । पुं० स्त्री० आकारे ॥ कारणे ॥ तोये ॥ स्मरमन्दिरे । भगे । वराङ्गे । उपस्थे । रतिगृहे । जन्मवर्त्मनि । गर्भाधानस्थाने . तस्यलक्षणयथा । शुभ कमठपृष्ठा भोगजस्कन्धोपमोभग । वामोन्नतश्चेत्कन्याज . पुत्रजोदक्षिणोन्नत ॥ आखुरोमागूढमणि सुश्लिष्ट स हत . पृथु । तुङ्ग: कमलवर्णाभ शुभो ऽश्वत्थदलाकृति ॥ कुरङ्गखुररूपोयस्तु चुल्लिकोदरसन्निभ । रोमशोविवृतास्यश्च दृश्यनाशोतिदुर्भग . ॥ शङ्खावर्त्ता भगोयस्या : सागर्भ' मिहनेच्छति । चिपिट कर्परा कार किङ्करीप्रदोभग ॥ वंशवेतसपत्राभोग जरोमोच्चनासिक . । विकट . कुटिलाकारोलम्बगल्लस्तयाशुभ . ॥ अपिच । शङ्खनाभ्याकृतिर्योनि स्त्र्यावर्त्तासाप्रकोर्तिता । तस्यास्तृतोयेत्वावर्तेगर्भंशय्या प्रतिष्ठिता ॥ यौति । युमिश्रणे । वह्निश्रीतिनि ॥ प्रकृतौ ॥

योनिकन्द : । पु० योनिरोगविशेषे ।

योनिकूट । पु० वैवाहिकविचारोपयोगिनि० योटकविशेषे । सयथा । तोयेशाश्विभयोस्तुरङ्ग उदितोवातार्कयो कासर : पूर्वाभाद्रधनिष्ठयोस्तु गपतिर्यामान्त्ययो कुक्कुर' । मैषोग्नोभ्र्यभयोर्जलश्रवणयो' कौशोऽभिजिद्दैश्वयोर्दिभ ब्राह्मशभा ह्वयोरहिरपिज्येष्ठानुराधर्क्षयो ॥ बाताद्यु शिवमूलयोस्तुसरमागौरर्य मोयान्त्ययोर्व्याघ्रश्चित्रविशाखयो फणिपुनर्वस्वोस्तुमार्जारक । आखु पितृभगर्क्षयोस्तु कथितायोनिस्तुभानामियवैरञ्चापितयोर्द्वयोरपि महत्पाणिग्रहवर्जयेत् ॥ गोव्याघ्र गजसिहमश्वमहिष श्वैणचबभ्रूरगं वैरवानरमेषकञ्चसुमहत्तद्विडालोन्दुरम् । लोकानां व्यवहारतो न्यदपिचज्ञात्वाप्रयत्नादिदंदम्पत्यो र्नृपभृत्ययोरपिसदावर्ज्यंशुभस्यार्थिभि . ॥ एकयोनिषुसम्पत्तिर्दम्पत्यो सङ्गम ' सदा । भिन्नयोनिषुमध्या स्यादरिभावोमचेत्तयो . ॥ अपवादश्च । योनेरभावेनोद्वाह कार्यं सतु वियोगद । राशिवश्यस्ययद्यस्ति- कारयेन्नतुदोषभाग् इति ॥

योनिज । त्रि० योनिनि सृतशरीरे ॥

योनिदेवता । स्त्री० पूर्वफल्गुनी- नक्षत्रे ॥

योनिमुद्रा । स्त्री० देवतापूजायांप्रदर्श नीयाङ्गुलीरचितयोन्या कारमुद्रा

कारविशेषे ॥

योनिरोग । पु॰ भगगदे ॥

योन्यर्श । न॰ भगजातरोगविशेषे । कन्दसञ्ज्ञे ॥

योषा । स्त्री॰ अबलायाम् । नार्याम् ॥ योषति॰ योषयतिवा । युषसौत्र सेवायाम् । पचाद्यच् ॥ युष्यते॰ योष्यतेवा । घञ् ॥

योषित् । स्त्री॰ स्त्रीमात्रे । योषायाम् ॥ सात्रिविधा । यथा । योषितस्त्रिविधाब्रह्मन्पृथिव्या मूढचेतसाम् । साध्वीभोग्याच कुलटाता . सर्वाः स्वार्थतत्परा . ॥ परलोकभयात्साध्वीतथेहयशसात्मन । कामक्षेत्रा स्वकुरुतेभर्त्तुर्भक्त्येहसन्ततम् १ ॥ भोग्याभोग्यार्थिनीशश्वत्कामक्षेत्रे ऽप्यकेवलम् । कुरुतेप्रतिसेवाञ्चनच भोग्यादृढंचयम् ॥ वस्त्रालङ्कारसम्भोगसुस्निग्धाहारमुत्तमम् । यावत् प्राप्नोतिसाभोग्यातावच्चवशगाप्रिया ॥ २ ॥ कुलाङ्गारसमानारीकुलटा कुलनाशिनी । कपटात्कुरुतेसेवा स्वामिनोनचभक्तित. ॥ सदापुंयोग मांशसुमनसामदनातुरा । आहारा दधिकजारप्रार्थयन्तीनवनवम् ॥ जारार्थेस्वपतितातहन्तुमिच्छतिपुंश्च ली । तस्यांयो विश्वसेन्मूढोजीवन तस्यनिष्फलम् ॥ कथितायोषित · सर्वाउत्तमाधममध्यमा · । स्वात्मा रामाविज्ञानन्तिमनसातानपण्डिता ॥ योषते युष्यतेवा । युष॰ । हसृ रुहियुषिभ्यइति ॥ अवध्या सर्वभूतानायोषित · चम्यतामिति ॥

योषिता । स्त्री॰ योषिति ॥ युषेर्णिज न्तात्कर्मणिक्त · ॥

योषित्प्रिया । स्त्री॰ हरिद्रायाम् ॥

यौक्तिक । पु॰ नर्मसचिवे । त्रि॰ युक्तियोग्ये ॥

यौगपद्यम् । न॰ एकतायाम् ॥

यौगिक : । त्रि॰ योग्ये ॥ योगनित्यमर्हति । छेदादित्वाट्ठञ् ॥ प्रकृतिप्रत्ययोगलभ्यार्थशाचके । योगायप्रभवति । योगाच्चेति॰ ठञ् ॥ योगरूढाश्चरूढाश्चयौगिकाश्चेतित्रिधा आदितियादिशब्दायौगिका : । अदित्याअपत्यमिति॰ ह्लादिकारादक्ति नश्रुतिङीषन्तात्स्त्रीभ्योढगितिढक् प्रत्ययेनबोधलयोगार्थएव ॥

यौजनशतिक । त्रि॰ शतयोजनयायिनि ॥ योजनानांशतम्॰ योजनशतम् । योजनशतगच्छति । ठञ् ॥ पु॰ आचार्य । योजनशताद्भिगमनमर्हति । ततोभिगमनमर्हतीति चवक्तव्यमितिठञ् ॥

यौजनिक । त्रि॰ योजनमात्रयायिनि ॥ योजनगच्छति । योजनंगच्छतीतिठञ् ॥

यौतकम् । न॰ यौतुके । परिणयनल

र्थे योधने ॥ युतकयोनिसम्बन्ध । तत्रभवम् । तत्रभवइत्यण् ॥ युत योर्वधूवरयोर्वा॰ इदम् । तस्येदमि त्यण् ॥

यौतवम् । न॰ द्रवये , परिमाणे । यौतेर्बाहुलकाद्भावे॰ कर्तरिवातुन् । योतु योधनम्॰ योधकोवा । तस्येदम । अण् ॥

यौतुकम् न॰ यौतके ॥

यौध । पु॰ योध । योधएव । स्वा- र्थिक प्रज्ञाद्यण् ॥

यौधिष्ठिर । त्रि॰ युधिष्ठिरसम्बन्धि नि ॥ सायौधिष्ठिरीसेनागाङ्गेयश रताडिता । प्रतिनत्पाठशीलाना विद्येवतनुतांगता ॥ युधिष्ठिरस्या यम् । तस्य इमित्यण् ॥

यौधिष्ठिरि । पुं॰ युधिष्ठिरात्मजे ॥ कुर्वादिभ्य वाधित्वा॰ वाह्वादित्वा दिञ् । बहुत्वे॰ युधिष्ठिरा: । यञञइतिलुक् ॥

यौन । पुं॰ कन्यादानादिसम्बन्धे ॥ न॰ योनिसवन्धाधीनपापे ॥

यौवतम् । न॰ युवतीनांवृन्दे ॥ परि माणे॰ । युवतीनांसमूह । यौते शवन्तादुगितश्चेतिङीपि॰ यनद्दात्तादेरञित्यञ् ॥ लास्यभे दे ॥

यौवनम् । न॰ वयस्थाविशेषे । तारु ण्ये ॥ यूनोभाव: । हायनांतेत्यण् ।

न्नितिप्रकृतिभाव ॥ कौमारप श्चमाब्दान्तपौगण्डदशमावधि । कै शोरमापञ्चदशाद्यौवनन्तुतत: पर म् ॥ नवयौवनलक्षणयथा । दृशोर्हि न्नसनकिंचिच्चलाक्षमे दरस्मितम् । मनागभिस्फुरद्भावनव्य यौवनमुच्य ते ॥ नव्ययौवनकारकमौषध यथा अश्वगन्धानागवल गुडमांसविधिवि धाम् । रूपभवेद्यथातद्वन्नवयौवनधा रिणाम् ॥ इति वशतिवृन्दे । युवतीनांसमूह । अचहियूनस्त्रि रिति॰ स्त्रीयुवतिश इ । तस्मा च्छिवादित्वादणिविधल्लिते॰ पुवद्भा वेऽन्नितिप्रकृतिभाव ॥

यौवनकण्टक । पु॰ न॰ मुखगण्ड । वयस्फोटे ॥

यौवनलक्षणम् । न॰ लावण्ये । कुच ॥

यौवनाश्व । पुं॰ मान्धातरिनृपे ॥ यौवनाश्वोथमांधाताचक्रवर्त्यवनी प्रभु । सप्तद्वीपवतोमेक शशासा च्युततेजसा ॥ यावत्सूर्यउदेतिस्म यावच्चप्रतितिष्ठति । सर्वंतद्यौवना श्वस्यमांधातु क्षेत्रमुच्यते ॥ इति वह्निपुराणम् ॥

यौवनाश्वक । पुं॰ माधातृनृपे ॥

यौष्माक । त्रि॰ युष्मदीये ॥ युवयो र्युष्माकंवाऽयम् । युष्मदस्मदोरन्य तरस्याखञ्चेत्युक्ते: पक्षेऽण् । प्रज्ञतियुष्माकादेश ॥

यौष्माकीण । त्रि॰ युष्मत्सम्बन्धिनि । युष्मदीये । यौष्माके ॥ युवयोर्युष्माकंवाऽयम् । युष्मदस्मदोरितिखञ् तस्मिन्नणिचयुष्माकास्माकौ ॥

॰ ✻ ॰

---

र । पुं॰ पावके । दहने ॥ तीक्ष्णे ॥ कामाग्नौ । रेफे ॥ लघुमध्ये ऽ।ऽ पु॰ न॰ ॥

रमन् । त्रि॰ रममाणे ॥

रह. । न॰ वेगे ॥ रमतेऽनेन । रमक्रीडायाम् । रमेर्हुक्चेत्यसुन् । हुगागमश्च ॥ रहत्यनेनवा । रहगत्यां । रंहिगतौ । असुन् अचैवंवदन्ति रहेरसुनासिद्धे॰ रङ्हेरसुनि॰ रङ्हतिमाभूदिति॰रमेरितिसूत्रम् । तथाच । स्यान्मध्योष्मचतुष्कत्वमहसोरहसस्तथेतिद्विरूपकोश । एवञ्च॰ रङ्ह ' सङ्घोऽसुराणां जगदुपकृतये नित्ययुक्तस्ययस्यस्तौतिप्रीतिप्रसन्नोन्वहमहिमरुचेः सोऽवतात्स्यन्दनोवइतिपाठोऽनुप्रासरसिकानांप्रामादिकइति ॥ सवेगगतिवचनोस्य प्रयोग ॥ वेगाख्यगुणे ॥

रकार । पु॰ रेफाख्यवर्णे ॥ वासरूपविधिना॰ रात्कारप्रत्ययोपिभवति । रकारादीनिनामानिशृण्वतो

मयपार्वतीतिलिङ्गात् ॥

रक्त । पुं॰ बन्धूके ॥ लोहितवर्णे यथा । पाणिपादतलौरक्तौनेत्रान्तनिनखानिच । जिह्वाताल्वधरोष्ठौचसप्तरक्तोधनीभवेदितिसामुद्रिकाम् ॥ कुसुम्भे । हिङ्गुले ॥ न॰ कुङ्कुमे ॥ ताम्रे ॥ प्राचीनामलके ॥ पद्मके ॥ सिन्दूरे ॥ हिङ्गुले ॥ रक्तचन्दने ॥ शरीरस्थसप्तधात्वन्तर्गतधातुविशेषे ॥ रुधिरे ॥ असृजि लोहिते । अस्रे । क्षतजे । शोणिते । कीलाले । लगजे । रकात्॰ द्व॰ भा॰ प्र॰ ॥ रक्तस्यस्वरूपमाह । यत्तारसोयकृद्यातितत्ररजकपित्तत ॥ । रागपाकस्वसम्प्राप्यसभवेद्रक्तसंज्ञक ॥ रक्तसर्वशरीरस्थ जीवस्याधारउत्तम . ॥ स्निग्ध गुरुचलस्वादुविदग्ध पित्तवद्भवेत् ॥ जीवस्याधारउत्तमद्वति । यतआह । जीवोवसति सर्वस्मिन्देहेतत्रविशेषत । वीर्येरक्तेमलेयस्मिन्क्षीणेयातिक्षयञ्च यात् इति ॥ वीर्येरक्तेमलेचशरीरारम्भके । वाग्भटोक्तपरिमाणमिते शुद्धे जीवोवसति॰ नतुदुष्टे प्रवृद्धे रक्तस्यावष्टोपदेशस्यवैयर्थ्यंप्रसङ्गात् । पित्तवद्भवेत्॰ अम्ल भवेदित्यर्थ ॥ रक्तस्यस्थानमाह । । यकृत्प्लीहानौरक्तस्यमुख्य स्थानंतयो , स्थितम् । अन्यत्रापिस्थितमतांरक्तानांपोष

र्भवेत् ॥ इति ॥ रक्तदोषनाशक मौषध यथा । व्रह्मयष्टिफलं पिष्टं-वारिणानुलेपत. । तेनघृष्ट रक्त दोष प्रणश्यतिनसंशय · ॥ रज्जतिस्म॰ रज्यतेवा । रञ्जरागे । गत्यर्थेतिक्त · । कर्मणिक्तोवा ॥ त्रि॰ अनुरक्ते ॥ नील्यादिरञ्जिते ॥ लोहिते ॥ क्रीडारते ॥

रक्तक । पुं॰ अम्लाने ॥ बन्धूके ॥ रक्तवस्त्रे ॥ रक्तशिग्रौ ॥ रक्तैरण्डे ॥ न॰ हिङ्गुले ॥ त्रि॰ अनुरागिणि ॥ विनोदिनि ॥ रक्तपुष्पत्वात्॰रक्त । स्वार्थेकन् ।

रक्तकन्द । पुं॰ विद्रुमे ॥ राजपलाण्डौ ॥ रक्तालौ ।

रक्तकन्दल · । पुं॰ प्रवाले ॥

रक्तकमलम् । न॰ रक्तोत्पले ॥ कोकनदे ॥

रक्तकम्बलम् । न॰ रक्तोत्पले ॥ यथा पाद्मे । रक्तकमले कुमुदे पुष्पे कल्हारेरक्तक वर्जेरिति ॥

रक्तकरवीरक । पुं॰ रक्तप्रसवे । गणेशकुसुमे । चण्डीकुसुमे । भूतद्राविणि । रविप्रिये । लालकनेर॰ इतिभाषाप्रसिद्धे ॥

रक्तकाञ्चन । पुं॰ रक्तकोविदारद्रुमे । चमरिके ॥

रक्तकाण्डा । स्त्री॰ रक्तपुनर्नवायाम् ॥

रक्तकाष्ठम् । न॰ पतङ्गे ॥

रक्तकुमुदम् । न॰ रक्तकैरवे ॥

रक्तकुसुम · पुं॰ पारिभद्रे ॥ धन्वनवृक्षे ॥

रक्तकेशर: । पुं॰ पारिभद्रे ॥ पुन्नागवृक्षे ॥

रक्तकैरवम् । न॰ रक्तकुमुदे ॥

रक्तकोकनदम् । न॰ रक्तोत्पले ॥

रक्तखदिर · । पुं॰ रक्तसारे । बहुशल्ये । याज्ञिके ॥

रक्तगन्धकम् । न॰ वोले ॥

रक्तगुल्म । स्त्रीणांरक्तजगुल्मरोगे ॥ तस्यौषध यथा । द्विजयष्टीचिकटुक चूर्णंपीत हरेच्चिरं । तिलक्वाथेनसंयुक्त रक्तगुल्म स्त्रियाहर ॥

रक्तघ्न । पुं॰ रोहितकवृक्षे ॥

रक्तघ्नी । स्त्री॰ दूर्वाविशेषे । गांठियादूर्वाइ॰गौ॰दे॰भा॰प्र॰ ॥

रक्तचन्दनम् । न॰ स्वनामाप्रसिद्धेचन्दने । पत्राङ्गे । कुचन्दने । ताम्रसारे ॥ रक्तशीत गुरुस्वादुर्छर्दिदृष्णासपित्तहृत् । पित्तनेत्रहित वृष्य ज्वरव्रणविषापहम् ॥ रक्तश्चतत्चन्दनञ्च ॥ रक्तसारे ॥ रक्तचन्दनमिव । रक्तसारत्वात् ॥

रक्तत्चित्रक · । पुं॰ क्षुपविशेषे । काले । कालमूले । दाहके । चित्राङ्गे । राङ्गचिता॰इ॰गौ॰दे॰भाषाप्र॰ ॥

रक्तचूर्णम् । न० सिन्दूरे ॥ रक्तवर्णचूर्णमात्रे ॥

रक्तजन्तुक । पु० भूनागे ॥ रक्तवर्णजन्तुमात्रे ॥

रक्तजिह्व । पु० सिंहे ॥ त्रि० रक्तवर्णजिह्वायुक्ते ॥

रक्तझिण्टी । स्त्री० कुरुवकी ॥

रक्ततुण्ड । पु० शुकपक्षिणि ॥ त्रि० लोहितमुखयुक्ते ॥

रक्ततुण्डक । पु० भूनागे ॥

रक्तत्वचा । स्त्री० गोधूम्रिकायाम् ॥

रक्तत्रिवृत् । स्त्री० रक्तवर्णत्रिवृतायाम् त्रिपुटायाम् । ताम्रपुष्पिकायाम् ॥

रक्तदन्तिका । स्त्री० चण्डिकायाम् ॥ तत्स्थाने ॥

रक्तदला । स्त्री० नलिकायाम् ॥ चिविल्लिकायाम ॥

रक्तधातु । पु० गैरिके ॥ ताम्रे ॥

रक्तनाल । पु० जीवशाके ॥

रक्तनासिक । पु० पेचके ॥ त्रि० लोहितनासिकाविशिष्टे ॥

रक्तप । पु० यातुधाने । राक्षसे ॥ रक्तपिबति । पा० । आतोऽनुपेतिक. त्रि० रक्तपानकर्त्तरि ।

रक्तपट । पु० वैनाशिकविशेषे ॥ साङ्ख्यभिक्षौ ॥

रक्तपत्रिका । स्त्री० नाकुल्याम् ॥ रक्तपुनर्नवायाम् ॥

रक्तपट्टी । स्त्री० समङ्गायाम् । क्षुद्रक्षुपविशेषे ॥

रक्तपद्म । पु० न० रक्तोत्पले । कोकनदे ।

रक्तपल्लव । पु० अशोकवृक्षे ॥ लोहितपत्रे ।

रक्तपा । स्त्री० जलौकायाम् ॥ डाकिन्याम् ॥ रक्तपिबति । पा० आतोऽनुपसर्गेक ॥

रक्तपाक्षी स्त्री० वृहत्याम् ॥

रक्तपाता । स्त्री० जलौकायाम् ॥

रक्तपाद । पु० शुकपक्षिणि ॥

रक्तपादी । स्त्री० लज्जालौ ॥ हस्तपद्याम् ॥

रक्तपायी । स्त्री० रक्तपाजशोले ॥

रक्तपायिनी । स्त्री० जलौकायाम् ॥

रक्तपारद । पु० न० हिङ्गुले ॥

रक्तपिण्डम् न० जवापुष्पे ॥ द्र० शब्दरत्नावली ॥

रक्तपिण्डक: । पु० रक्तालौ । रतालू० द्र० भा० ।

रक्तपित्तम् । न० रोगविशेषे ॥

रक्तपित्तहा पु० रक्तवल्याम् ॥

रक्तपुच्छिका । स्त्री० ब्राह्मण्याम् । बाह्मनीतिप्रसिद्धजन्तुविशेषे ॥

रक्तपुनर्नवा । स्त्री० रक्तपुनर्नवाशाके । मण्डलपत्रिकायाम् । रक्तकाण्डायाम् । रक्तपुष्पिकाया

कान्दे । यवनेष्टे ॥ रसुनस्यमधुर
कटुकन्दनालमध्युपदिशन्तिकषा
यम् । पनसस्ययमुशन्तिसतिक्तमूर
शीलवणमस्थिवदन्तीतिराजनिर्घ-
ण्ट ॥

रक्तला । स्त्री० काकतुण्ड्याम् ॥

रक्तलोचन । पुं० कपोते ॥ त्रि०
लोहितलोचनयुक्ते ॥ रक्तलोच
नेश्वरः ॥

रक्तवटी । स्त्री० मसूरिकायाम् ॥

रक्तवर्ण । पु० किंशुके ॥ दाडिमे
बन्धूके ॥ लाक्षायाम् ॥ निशादये
कुरुबकपुष्पे ॥ मञ्जिष्ठायाम् ।

रक्तवर्म्म । पु० इन्द्रगोपे ॥

रक्तवृन्त । पु० वार्त्ताकौ ॥

रक्तवर्षाभू । स्त्री० रक्तपुनर्नवा
याम् ॥

रक्तवसन । पुं० सन्न्यासिनि ॥
त्रि० लोहितवस्त्रवति ॥ न० रक्त
तवर्णवस्त्रे ॥

रक्तवात । पु० रोगविशेषे ॥ नारि
केलस्यवैमूलञ्चगोक्षीरेणसंयुतम्
। पिबेच्चविविधस्तस्यरक्तवातोवि
नश्यति ॥

रक्तवालुका । स्त्री० सिन्दूरे ॥

रक्तविन्दु । पु० रुधिरस्यकणे ॥

रक्तवीज । पु० दाडिमे । शुम्भ
निशुम्भयोः सेनापतावसुरविशेषे ॥

रक्तवीजका । स्त्री० तरटीवृक्षे ॥

रक्तवृन्ता । स्त्री० शेफालिकाया
म् ॥

रक्तवृष्टि । स्त्री० रुधिरवर्षणरूपे०
उत्पातविशेषे ॥ तत्फलमस्योद्यो
गेयथा रक्तेशस्त्रोद्योगोमांसास्थि
वसादिभिर्मरकं । धान्यहिरण्य-
त्वक्फलकुसुमाद्यैर्वर्षितेभयंवि-
विद्यात् ॥

रक्तशालि । पुं रक्तवर्णधान्यवि-
शेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न० सिन्दूरे ॥

रक्तशिग्रु । पुं० रक्तशोभाञ्जनवृ
क्षे । रक्ते । मधुरे ॥ रक्तोमधुरः
० रक्तकण्ठानामितिदर्शनात् ।
सचासौशिग्रुः । रक्तोवर्णेनपुष्पे
ष्वेवा ॥

रक्तशीर्षक । पु० सरलद्रवे ।

रक्तशृङ्गिकम् न० विषे ॥

रक्तसञ्ज्ञ । पु० कुङ्कुमे ॥

रक्तसन्दंशिका । स्त्री० जलौका-
याम् ॥

रक्तसन्ध्यकम । न० रक्तकह्लारे ।
उत्पले ॥ रक्तसन्ध्येव । इवार्थे
कन् । केश ॥ रक्तासन्ध्यौन-
कति । वक्रकुटिलायागतौ । मूल
विभुजादित्वात्कोवा ॥

रक्तसरोरुहम् । न० रक्तपद्मे ॥
रक्तञ्चतत्सरोरुहञ्च ॥

रक्तसर्षप । पुं० राजिकायाम् ॥

रक्तसंज्ञा । स्त्री० रक्तताम्लाने ॥
रक्तसार । पुं० रक्तखदिरे ॥ अ
म्लवेतसे ॥ न० रक्तचन्दने ॥ पतङ्ग
र्क्के । बक्कम० इतिख्याते ॥
रक्तसौगन्धिकम् । न० रक्तकह्ला
रे । रक्तसौधी० इ०भा०प्र० ॥ र-
क्तवर्णचिकालविकाशिपुष्पवृक्षे ॥
रक्तोत्पलतत्सौगन्धिकञ्च ॥
रक्तस्राव । पुं० रक्तपतने ॥
रक्तहंसा । स्त्री० रागिणीविशेषे ॥
रक्ता । स्त्री० गुञ्जायाम ॥ लाक्षाया
म् ॥ मञ्जिष्ठायाम् ॥ उष्ट्रकाण्डया-
म् ॥
रक्ताकार । पुं० प्रवाले ॥
रक्ताक्तम् । न० रक्तचन्दने ॥
त्रि० शोणितमिश्रिते ॥
रक्ताक्ष । पुं० कासरे । महिषे ॥
क्रूरे ॥ पारावते ॥ चकोरे ॥ सा-
रसे ॥ षष्टिवत्सरान्तर्गतवत्सरवि
शेषे । दुर्भिक्षमरणरोगोधान्यौष-
धिप्रपीडनम् । मादरोगोभवेद्देवि-
रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥ त्रि०
रक्तनेत्रवति ॥ रक्ताक्षिणीवत्स-
स । अक्ष्णोदर्शनादिस्यच् ॥
रक्ताङ्ग । पुं० भौमग्रहे ॥ कम्पि
ल्ले ॥ प्रवाले ॥ मत्कुणे ॥ मण्ड-
ले ॥ कुकलासे ॥ न० विद्रुमे ॥ धी
रे । रक्तचन्दने ॥ कुङ्कुमे ॥
रक्ताङ्गा । स्त्री० जीवन्तिकायाम् ॥
रक्ताङ्गी । स्त्री० मञ्जिष्ठायाम् ॥
रक्तातिसार । पुं० रोगविशेषे ॥ पित्त
कृद्युयदात्यर्थंद्रव्यमश्नातिपैत्तिके ।
तद्दोषाज्जायतेशीघ्र रक्तातीसार
उल्वण ॥ वत्सकातकत्त्वगार्द्रादा-
डिमफलसम्भवास्त्वक्च । त्वग्युग
लपलमानविपचेद्दष्टाङ्गसम्मितेतो-
ये ॥ अष्टमभाग शेष क्वाथ मधुना-
पिबेत्पुरुष । रक्तातिसारमुल्व
णमतिशयित नाशयेत्शीघ्रतम् ॥ कु
टजदाडिमक्वाथ ॥ गोदुग्धनव-
नीतन्तुमधुनासितयासह । लीढ
रक्तातिसारेतुग्राहक परम मह-
त् ॥ नवनीतावलेह ॥ पीत मधु-
सितायुक्त चन्दनतण्डुलाम्बुना
। रक्तातिसारजिद्रक्तपित्ततृड्दाह
मेहनुत् ॥ चन्दनमचर्चितम । च-
न्दनकल्क ॥
रक्ताधार । पुं० चर्मणि ॥
रक्तापद्म । न० कोले ॥
रक्तापामार्ग । पुं० क्षुद्रापामार्गे ।
आघट्टके ॥
रक्ताम्बरम । न० वह्निशिखाख्यकुसु
म्भरञ्जितवस्त्रे ॥ काषायवस्त्रे ॥
त्रि० तद्वति ॥
रक्ताम्र । पुं० कोशाम्रे ॥
रक्ताम्लान । पुं० कुरबके ॥
रक्तार्क । पुं० अर्कपर्णे । विकीर-
णे ॥ रक्तार्कपुष्पं मधुरं सतिक्तं कु

छक्लमिघ्न कफनाशनश्च । आखोर्विषहन्तिचरक्तपित्त सङ ग्राहिगुल्मश्वयथौहित तत् ॥

रक्तार्म्मम् । न॰ नेत्ररोगविशेषे ॥ तल्लक्षण यथा । पद्माभ मृदुरक्तार्मेय न्मासचीयतेसिते ॥

रक्तार्बुद.।पु॰ उपपापोद्भवेरोगविशेषे॥

रक्तार्श । न॰ अर्शोरोगविशेषे ॥

रक्तालु । पुं॰ रक्तपिण्डालौ । रक्तकन्दे । लोहितालौ । रतालु॰रतगडा॰इ॰भा॰प्र॰कान्दे ॥

रक्ताशोक . । पुं॰ वृक्षविशेषे ॥

रक्तिका । स्त्री॰ गुञ्जायाम । रत्ती॰घुघची॰चिरमिठी॰इ॰भा॰प्र॰ भिन्नभूषणायाम् ॥ रक्तिकायाम ॥ रक्तिकापरिमाणे ॥

रक्तिमा ॥ पु॰ लोहितत्वे ॥

रक्तेक्षु ।पु॰रक्तवर्णेक्षौ।सूक्ष्मपत्रे॥

रक्तैरण्ड '। पु॰ व्याघ्रे । हस्तिकर्णे । रुबौ ॥

रक्तैर्वारु '। पुं॰ इन्द्रवारुण्याम ॥

रक्तोत्पल : । पुं॰ शाल्मलिवृक्षे ॥ न॰कोकनदे । रक्तसरोरुहे ॥

रक्तोत्पलाभ । पुं॰ शोणवर्णे । त्रि॰ तद्वति ॥

रक्तोत्पलम् । न॰ गैरिके ॥

रक्ष : । पु॰ म क्षणुप्रसमर्थे ॥ रक्षति । रक्षपालने । पचाद्यच् ॥

रक्ष : सभम् । न॰ रक्ष : समूहे ॥

रक्षक । त्रि॰ रक्षितरि ॥ अनाथमाता ह्यनाथानारक्षका ' सर्वदेवता : ॥ रक्षति । रक्ष॰ । ण्वुल् ॥

रक्षणम् । न॰ पालने ॥ रक्षल्युट् ॥ आपदर्थे धनरक्षेद्दारान्रक्षेद्धनैरपि । आत्मानसततरक्षेद्दारैरपिधनैरपि ॥ त्रि॰ रक्षके । पालके ॥ रक्षति॰ पालयति । रक्ष॰ । नन्द्यादित्वाल्ल्यु ' ॥

रक्षणि '। स्त्री॰ त्रायमाणायालतायाम् ॥

रक्षणीय । त्रि॰ रक्ष्ये । रक्ष॰ । अनीयर ॥

रक्षन् त्रि॰ रक्षितरि । रक्षति । रक्ष॰ । शतृ ॥

रक्ष '। न॰ राक्षसे । निर्ऋतिप्रभृतौ । रावणादौ । रक्षन्त्यस्मात् । रक्ष॰ । सर्वधातुभ्यश्चत्यसुन ॥ निर्दये ॥ यथा । दृष्ट्वातुविकलान्व्यङ्गानन्धान्रोगिणस्तथा । दयानजायतेयस्यसरक्षइतिमेमति ॥

रक्षा । स्त्री॰ जतुनि । रक्षणे । बाधानिवृत्तौ ॥ योगयुक्तोजनार्दनचिन्तयेदितियत्साध्यचिन्तकस्यपरारक्षेत्यहमन्ये । यथोक्त सहस्रनामभाष्ये । निश्च स चिन्तयेदेवयोगयुक्तोजनार्दनम् । साध्यरक्षापरामन्येकोहिनस्यच्युताश्रयमिति ॥ रक्षणम् । रक्ष॰ । गुरोश्चहल

क्षत्य । टाप ॥ भक्ष्यति ॥ श्राव ण्यापौर्णमायान्तुरक्षाबन्धनमिष्यते । यथा । पौर्णमास्यांहरेरक्षाबन्धनं विधिपूर्वकम् । अजराकुमारत्वा त्वंकिंचिद्दिच्छन्तिसाधव । ॥ तत्रभ द्रासङ्गावितामतिक्रम्यैवकुर्य्यात् । तथाचस्मृति । भद्रायांद्वेनकर्त्तव्येश्रावणीफाल्गुनीतथा । श्राव णीन्तृपति हन्तियामान्दहतिफाल्गुनीति ॥ विधिश्चभविष्योत्तरे । उपाकर्मदिनेप्रोक्तामृषीणांचैवतर्पणम् । ततोऽपराह्णसमयेरक्षापोट लिकाशुभाम् ॥ कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषिताम् । व स्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्ज्जितैः ॥ विचित्रग्रथितं सूत्रं स्थापयेद्भाजनोपरि । उपलिप्ते लाग्रहमध्ये दत्त्वचतुष्कं न्यसेच्छुभ पीठम् । तत्रोपविशेद्राजासामात्य सपुरोहितं समुद्रत् ॥ तद नुपुरोधान्नपतेरक्षाबधोतमन्त्रेण । येनबद्धोबलीराजादानवेन्द्रोमहाब ल । तेनत्वांप्रतिबध्नामिरक्षे मा चलमाचल ॥ यद्वाबध्न दाक्षायणा इत्यादिवैदिकोप्ययमन्त्रः पठनीय । ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्चमानवैः । कर्त्तव्यो रक्षाचारोविप्रान्सम्पूज्यशक्तितः । अनेनविधिनायस्तुरक्षिका बन्धमाचरेत् । ससर्वदोषरहितः सुखसम्वत्सरं वसेत् । इति ॥

रक्षापत्र । पुं० भूर्जवृक्षे ॥ न० भूर्जत्वचि ॥

रक्षिका । स्त्री० रक्षायाम् । रखडी० इ० भा० ॥

रक्षित । त्रि० त्राते । गोपायिते । गुप्ते ॥ रक्ष्यतेस्म । रक्ष० । क्त० ॥

रक्षिता । त्रि० रक्षाकर्त्तरि । रक्षके ॥ यथा । आयव्ययज्ञोलोकज्ञोदेशोत्पत्तिविशारद । कृताकृतज्ञोभृत्यानांज्ञेय । स्यादेषरक्षिता ॥

रक्षी । त्रि० रक्षके ॥ अवश्य रक्षति । रक्ष० । णिनि ॥

रक्षिवर्ग । पुं० अनीकस्थे । राजरक्षकगणे । अवश्यं रक्षन्ति । रक्ष पालने । आवश्यकेतिणिनि । रक्षिणांवर्ग ॥

रक्षोघ्न । पुं० सिद्धार्थे । सितसर्षपे ॥ भल्लातकवृक्षे ॥ न० काञ्जिके ॥ हिङ्गुनि ॥

रक्षोघ्नधूप । पुं० गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णलवणनिम्बपत्रव्यामिश्र घृतसंयुक्ते ॥

रक्षोघ्नी । स्त्री० वचायाम् ॥ दुर्गायाम् ॥

रक्षोजननी । स्त्री० रात्र्याम् ॥ राक्षसमातरि ॥

रक्षोहा । त्रि० रक्षसांहन्तरि ॥ पुं०

गुग्गुलौ ॥

रक्ष्ण । पु० भार्या ॥ रक्ष० । यजयाचेतिनङ् ॥

रघु । पु० सूर्यवंशीयदिलीपराजपुत्रे । श्रीरामचन्द्रस्यप्रपितामहे । लङ्घते, लघिगतौ । लघिवंहोर्नलोपश्चेतिकुर्नलोपश्च । बाहुमूलल घुच्च लीनाबालीरत्वमापद्यते० इतिरत्वम् ॥ रङ्घतेनाश गच्छतीतिव्युत्पत्त्या० व्यष्टिसमष्टिरूपेऽन्नमयकोषे ॥

रघुकार । पु० कालिदासकवौ ॥ रघुकाव्यविशेषं करोति । डुकृञ्० । कर्मण्यण् ॥

रघुनन्दन ।<br>रघुनाथ । } रामचन्द्रे ॥

रघुपति । पु० श्रीरामे ॥ यथा । यदुपते क्वगतामथुरापुरीरघुपते क्वगतोत्तरकोशला । इतिविचिन्त्य कुरुष्वमनः स्थिरनसदिदंजगदित्यवधारयेतिरूपगोस्वामी ॥

रघुवंश । पु० रघोः सन्ततौ ॥ रघोर्वंशः । कालिदासकृते काव्यविशेषे ॥

रघुवंशकेतु ।<br>रघुवंशतिलक । पु० } श्रीरामे ॥<br>रघुवर ।

रघूद्वह । पु० श्रीरामे ॥ उद्वहति । वह० । पचाद्यच् । रघूनामुद्वहोनायकः ॥

रङ्क । त्रि० कृपणे ॥ मन्दे ॥ रमते । रमेर्बाहुलकात्कः ॥

रङ्कु । पुं० शबलपृष्ठे । मृगविशेषे । रमते० रङ्क्यतेवा । मृगय्वादित्वात् साधु ॥ जनपदविशेषे ॥

रङ्ग । पु० रागे ॥ नृत्ये ॥ नृत्यस्थाने ॥ रणक्षितौ ॥ टङ्कणे ॥ खादिरसारे ॥ पु० न० त्रपुणि । त्रापुषे । वङ्गे । कुरूप्ये । पिच्चटे । पूतिगन्धे । रांग० इ० भा० ॥ तद्विशेषो यथा । खुरकं मृदुलघुस्वच्छं स्निग्धमुष्णासहंहिमम् । मूत्रपत्रहरकाख्यंच पुंश्रेष्ठमुदाहृतम् ॥ खुरकंमिश्रकञ्चापि द्विविधंरङ्गमुच्यते । उत्तमंखुरकंतत्र मिश्रकंत्वहितंमतम् ॥ तस्याशुद्धस्य दोषोयथा । रङ्गोविधत्ते खलुशुद्धिहीनस्तथाप्यपक्वश्चकिलासगुल्मौ । कुष्ठानिशूलं किलवातशोथं पाण्डुप्रमेहस्तुभगन्दरञ्च ॥ विषोपमं रङ्गविकारवृन्दं क्षयञ्चकृच्छ्राधिकमज्वरञ्च । मेहाश्मरीविद्रधिरक्तरोगान्नागोपिकुर्यात् कथितान्विकारान् ॥ तस्यशोधनं यथा । वङ्गनागौप्रतप्तौ चगालितौतौनिषेचयेत् । त्रिधा त्रिधाविशुद्धिः स्याद्रविदुग्धेपिच त्रिधा ॥ तैलतक्रकाञ्जिकगोमूत्रकुलत्थक्वाथेषुप्रत्येकंत्रिधात्रिधा । ततोऽर्कदुग्धेत्रिधा ॥ अथमारणविधिः । मृत्पात्रे द्राविते रङ्गे

चिह्नाम्लत्वचोरज । क्षिपत्वाव
ज्ज चतुर्थांशमयोदर्व्याप्रचालयेत् ॥
चिह्नाचमिलो । रज . चूर्णम् । च-
योदर्वीलोहकी०करच्छुलो ॥ ततो
ह्रियाममात्रेणवज्ज्रभस्मप्रजायते । अ
थभस्मसमतालंक्षिप्त्वाम्लेनविमर्द्द
येत् ॥ ततोगजपुटेपक्त्वापुनरम्लेन
मर्द्दयेत् । तालेनदशमाशेनयाममे
कातत पुटेत् ॥ एवंदशपुटे पक्क
वज्ज भवतिमारितम् ॥ अस्यगुणायथा
। रज्ज लघु सररूक्षकुष्ठमेहकफक्रमो
न् । निहन्तिपाण्डुमश्वासचक्षुष्य पि
त्तलमनाक ॥ सिद्धेगजोयन्तुयथा
निहन्तितथैवरज्जोखिलमेहवर्गम् ।
देहस्यसौख्य प्रबलेन्द्रियत्त्व नरस्यपु
ष्टि विदधातिनूनम् ॥ रज्जति । रगि
गतौ । पचाद्यच् ॥ रज्यत्यस्मिन्०
रज्यतेऽनेनवा । रज्जरागे । अकर्त्त
रिचेतिघञ् । कुत्वम् ॥
रङ्गकार । त्रि० वस्त्रादौनारङ्गकर्त्तरि
। रंगरेज०इ०भा० ॥
रङ्गकाष्ठम् । न० पतङ्ग ॥
रङ्गजम् । न० सिन्दूरे ॥
रङ्गजीवक । पु० चित्रकरे ॥
रङ्गद । पु०टङ्कणे ॥ खादिरसा
रे ॥
रङ्गदा । स्त्री० स्फटिकायाम् ॥
रङ्गदायकम् । न० कङ्कुष्ठ ॥
रङ्गहट्ठा । स्त्री० स्फटिकायाम् ॥

रङ्गपत्री । स्त्री० )
रङ्गपुष्पी । स्त्री० ) नीलीवृक्षे ॥
रङ्गभूति । स्त्री० कोजागरपूर्णि
मायाम् ॥
रङ्गभूमि . । स्त्री० मल्लभूमौ । ना
ट्यभूमौ ॥
रङ्गमण्डी । स्त्री० वीणायाम् ॥
रङ्गमाणिक्यम् । न० माणिक्यरत्ने ॥
रङ्गमाता । स्त्री० कुट्टन्याम् ॥ अतु
नि । लाक्षायाम ॥ चुक्याम् ॥
रङ्गमातृका । स्त्री० लाक्षायाम् ॥
रङ्गलासिनी । स्त्री० शेफालिका-
याम् ॥
रङ्गवीजम् । न० रूप्ये ॥
रङ्गशाला । स्त्री० नाट्यगृहे । नाच
घर० इतिभाषाप्र० ॥
रङ्गसद्मम् । न० यसदे । जस्त०
इ० भा० ॥
रङ्गाङ्गा । स्त्री० स्फटिकायाम् ॥
रङ्गाजीव । पुं० चित्रकारे ॥ रङ्गे
णाजीवति । जीव० । इगुपधेतिकः
॥ रङ्ग. आजीवोस्येतिवा ॥
रङ्गारि . । पु० करवीरे ॥
रङ्गावतारकः । पु० रङ्गावतारि
णि । शैलूषे । भरते । नटे ॥ नृत्य
गीतस्यानेगीतवाद्यादिनातदनुगु-
णतयाप्रसङ्गिनि ॥ इ० प्रायश्चि
त्तविवेक . । नटगायनव्यतिरिक्तोर
ङ्गावतरणजीविनिश्चितकुशूक-

भट्ट : ॥
रङ्गावतारी । पुं॰ नटे ॥
रङ्गिणी । स्त्री॰ कैवर्त्तिकायाम् ॥ शतमूल्यां ॥
रङ्गोपजीवी । पुं॰ नटमल्लादिवर्त्ती ॥ रङ्गोपजीविप्रभृतीनामन्नादानान्नरकप्राप्तिरुक्ता विष्णुपुराणे २ अंशे ॥ यथा । रङ्गोपजीवी कैवर्त्त-कुण्डाशी गरदस्तथा । सूचीमाहिषिकश्चैव पर्वकारी च यो द्विजः ॥ आगारदाही मित्रघ्नः शाकुनिर्ग्रामयाजकः । रुधिरान्धे पतन्त्येते सोमविक्रीणतिश्चये इति ॥
रङ्घ : न॰ रहसि ॥ इतिभरतद्विरूपकोष ॥
रचनम् । न॰ ग्रन्थने । निर्माणे ॥
रचना । स्त्री॰ कुसुमप्रकारादे पत्रावल्यादेश्च रचने । परिस्पन्दे ॥ रचप्रतियत्ने । चुरादिरदन्तः । ण्यासश्रन्थोयुच् ॥ रच्यते॰ इतिवा ॥ यथाक्रमेणस्थापने । निवेशे । स्थितौ ॥ निर्मितौ ॥ यथा । असाधारणचमत्कारकारिणी रचनाहि निर्मितिः तत्पर्याया सन्दर्भः । गुम्फः । सन्थनम् ॥ ग्रन्थनम् ॥
रचितः । त्रि॰ कल्पिते । कृते ॥ स्थापिते ॥ रच॰ । कर्मणिक्तः ॥
रजः । पुं॰ रेणौ । धूलौ ॥ परागे ॥ आर्त्तवे ॥ गुणान्तरे । रञ्जयति । रञ्जरागे । घञर्थेकप्रत्ययः ॥ न॰ स्त्रीकुसुमे ॥
रजःशयः । पुं॰ शुनि । रजसिशेते । शीङ्॰ । अधिकरणेशेतेरित्यच् ॥
रज सारथिः । पुं॰ वायौ ॥
रजकः । पुं॰ निर्णेजके । वस्त्रधावके ॥ अयस्मतीवरपत्न्यां धीवराज्जात सङ्करजाति वासांसिफलजकः ॥ अन्त्योनिंगिव्याद्रजकः शनैः । अतोन्यथाहिकुर्वीत दण्डः स्यादुक्रमाषकम् ॥ रज्यति । रञ्ज॰ । नृतिखनिरञ्जिभ्य इति॰ ष्वुन् । असि॰ अकि॰ अनेयरञ्जेर्नलोप । षित्वान्ङीषि॰ रजकी । भाष्यमते॰ क्वुन् । टाप् रजिका ॥ शुक्रे ॥ रजकी धातकशुक्राविति हैम. ॥
रजतम् । न॰ दुर्वर्णे । रूप्ये ॥ अस्योत्पत्तिर्यथा । त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनैः । निरीक्षयामासशिवः क्रोधेनपरिपूरितः ॥ ततस्तूल्कासमपतत्तस्मै कस्माद्धिलोचनात् । ततोरुद्रः समभवद्रुद्राक्षरमिवज्वलन् ॥ द्वितीयादपतन्नेत्राद्बिन्दुस्तु वामकात् ॥ तस्माद्रजतमुत्पन्नमुक्तकर्मसुयोजयेत् । कृत्रिमञ्चभवेत्तद्धिवङ्गादिरसयोगतः । अस्यास्य गुणान्रूप्ये ॥ कारे दन्तिदन्तयोः ॥ शौक्तिते ॥ रुदे

। शैले ॥ स्वर्णे । रजतिरज्यतेऽनेनवा । रञ्ज० । पृषिरञ्जिभ्याकिदिश्यतच् ॥ त्रि० शुक्ले ॥
रजतद्युति । पुं० हनुमति ॥
रजतप्रस्थ । पुं० कैलासाचले ॥
रजताचल । पु० रौप्यपर्वते ॥
रजताद्रि : । पुं० कैलासपर्वते ॥
रजनम् । न० स्वर्णे । सुवर्णे ॥ कुसुमादिरागे ॥ रज्यतेनेन । रञ्ज । ल्युन् ॥
रजनि । स्त्री० निशि । रात्रौ ॥ रजन्ति० अनुरक्ताभवन्ति० रागिणोऽस्याम् बाहुलकाद्रञ्जेरनिनलोपश्च ॥
रजनिकर । पुं० चंद्रे ॥
रजनी । स्त्री० नीलिन्याम्॥ रात्रौ ॥ हरिद्रायाम् ॥ जतुकायाम् । लाक्षायाम् ॥ रजन्त्यनुरक्ताभवन्त्यस्यां रागिण । रञ्ज० । किपे : किच्चेतिचकाराद्दनि । किच्चान्नलोप : । बाहुलकाद्वा० रजनि । गौरादित्वान्ङीष् ॥
रजनीकर : । पु० हिमांशौ ॥
रजनीगन्धा । स्त्री० पुष्पविशेषे ॥
रजनीचर । पुं० राक्षसे । रात्रिचरे ॥ रजन्यांचरति । चरेष्ट : ॥ चौरे ॥ यामिकभटे ॥
रजनीजलम् । न० नीहारे । ओस० इ०भा० । रजन्याजलम् ॥
रजनीपुष्प । पुं० पूतिकरञ्जे ॥
रजनीमुखम् । न० प्रदोषे ॥ रजन्यामुखमिव ॥
रजनीहासा । स्त्री० शेफालिकापुष्पे हारसृङ्गार० पारिजात० इ० लोक प्रसिद्धे ॥ रजन्याहासोयस्या : ॥
रज । न० गुणान्तरे । प्रकृतिगुणविशेषे । रागद्वेषात्मकेदुःखहेतौ ॥ रजोरागात्मकंविद्धितृष्णासङ्गसमुद्भवम् । तन्निबध्नातिकौन्तेयकर्मसङ्गेनदेहिनम् । आर्त्तवे । स्त्रीपुष्पे ॥ परागे । सुमनोरजसि ॥ रेणुमात्रे । धूलिमात्रे ॥ निषिद्धाऽनिषिद्धरजोयथा । आयुष्कामीनसेवेततथासम्मार्जनीरज । तथाप्लवरथधान्यानागवाश्वैवरज शुभम् ॥ अशुभञ्चविजानीयात्खरउष्ट्राजाविकेषु च । गवारजोधान्यरज : पुत्रस्याङ्गभवंरज : ॥ एतद्रजो महाशस्त महापातकनाशनम् ॥ अजारज खररजस्तथासम्मार्जनीरज । स्त्रिय : पादरजोराजन् शक्रादपिहरेच्छ्रियम् इ०ल०चं० ॥ रञ्जयति० रजनम् ० रज्यतेऽनेनवा । रञ्जरागे । भूरञ्जिभ्याकिदित्यसुन् । नलोप : ॥ अहनि ॥ दिवसे ॥ अहगहनीरजसीउच्येते० इतिनिरुक्तोक्ते ॥ सन्धिहीनंरजोहीनमपि

रःमाम्यवर्जितम् । मुद्राहीनहस्त
शल्यन्न सिंखिकरनहीतिलच्चम् ॥

रजस्वान् । पु० मेघे ॥ चित्ते ॥

रजस्वल । पु० महिषे । सैरिभे । त्रि०
सरजस्के ॥ रजोऽस्त्यस्य । रज
कृषीतिवलच् ॥

रजस्वला । स्त्री० स्त्रीधर्मिण्याम् । अ
व्याम् । आत्रेय्याम् । पुष्पवत्या
स्त्रियाम् । उदक्यायाम् ॥ द्वादशा
द्वत्सरादूर्ध्वं आपञ्चाशत्समाः स्त्रि
य । मासिमासिभगद्वाराप्रकृत्यै
वार्त्तवस्रवेत् ॥ तत्र । प्रथमेऽहनि
चण्डालीद्वितीयेब्रह्मघातिनी । तृ-
तीयेरजकीप्रोक्तायथावर्ज्यातथाङ्ग-
ना ॥ शुद्धाभर्त्तुश्चतुर्थेन्हिस्नानात्दै
वपैत्रयो । दैवेकर्मणिपैत्रेचप-
ञ्चमेहनिशुद्ध्यति ॥ रजोस्त्यस्या ।
रज कृष्यासुतिपरिषदोवलच् ।
तसौमत्वर्थइतिभत्वम् ॥ सिंहक-
र्कटस्थेर्कोनद्याम् ॥ यथा । सिंहक-
र्कटयोर्मध्ये सर्वानद्योरजस्वलाः ।
तासुस्नान नकुर्वीतवर्जयित्वासमु-
द्रगा ॥ उपाकर्मणिचोत्सर्गेप्रेत-
स्नानेतथैवच । चन्द्रसूर्योपरागेचर
जोदोषोनविद्यते ॥ दशवर्षाधिका
यानार्याम् ॥

रजिः । पु० चन्द्रवंशीयराजविशे-
षे ॥

रजित । त्रि० आकृष्टे ॥ रञ्जेर्ण्य-
न्तात्कर्मणिक्त । रञ्जेर्णौमृगरम-
णइत्युपधानकारलोप ॥

रजोगुण । पुं० अप्रीत्यात्मकेप्रकृते-
र्गुणे ॥ अप्रीतिरात्मभावोयस्य । उ
पष्टम्भकचलञ्चरज । सत्त्वतमसी
स्वयमक्रियत्वात्स्वकार्यप्रवृत्ति प्रत्य
वसीदतीरजसोपष्टभ्येते०उत्साहप्र
यत्न कार्येते । तदिदमुक्तमुपष्टम्भक
रजइति । कस्मादित्यतउक्त०चलमि
ति । तदनेन०रजस . प्रवृत्त्यर्थत्व
दर्शितम् । यद्दु खहेतुस्तद्दु खा
त्मकरज ॥ रजःकार्यैहास्यहर्षादौ ॥

रजोनिमीलित । त्रि० रजोगुणाकृ
त्ते ॥ अपथ्येप्यदूरपर्यन्तहितमुतव-
न्तोपिरजोनिमीलिता ॥

रजोबलम् । )
रजोरसम् । ) न० अन्धकारे ॥

रजोविशाल । पुं० भूर्लोके ॥ मध्ये
रजोविशाल सत्यधर्माधर्मानुष्ठा-
नपरत्वात्०दुःखबहुलत्वाच्च०रजो
विशालइतिसाङ्ख्याचार्याः ॥

रजोहर । पुं० रजके ॥

रज्जु । स्त्री० वेण्याम् ॥ बन्धनसाध
नवस्तुनि । शुल्वे । वराटके । गुणे
। डोरी०रस्सी०इ०भा० । सृज्यते ।
सृजविसर्गे । सृजेरसुमच । चात्
सलोपउप्रत्ययश्च । सस्यसुत्वेनशः०
शश्चत्वेनज०॥ मध्यगुरौ० ।ऽ। ॥

रज्यमानः त्रि० लोहितायमाने ॥

रञ्ज दैवादिकात्कर्त्तरिशानच् । च
निदितामितिनलोपः ॥
रञ्जक । पुं० कुसुम्भादिना वस्त्रादि
रागकर्त्तरि ॥ कम्पिल्लके ॥ प्रीति
जनके ॥ न० हिङ्गुले ॥
रञ्जन : । पुं० रागजनने ॥ मुञ्जतृ
णे ॥ न० रक्तचन्दने ॥ हिङ्गुले ॥ प
तङ्गे । वक्रम् ० ङ्० भा० ॥ वर्णान्त
रापादने ॥ रञ्जयति । रञ्जरागे । ण्य
न्त । युच् ० ल्युड्वा ॥
रञ्जनक : । पु० कट्फले ॥
रञ्जनी । स्त्री० गुण्डारोचनिकायाम्
॥ नील्याम् ॥ मञ्जिष्ठायाम् ॥ शे-
फालिकायाम् ॥ हरिद्रायाम् ॥ प
र्प्याम् ॥ रञ्जयति । रञ्ज० । ल्यु
ट् । णिलोपश्चस्यानिवत्त्वाद्दशन
ये । स्त्रेतिनानलोपोन ॥ रज्यतेऽनये
तिविग्रहेतु० करणे तिल्युटिभवत्ये
व । रञ्ज क्युन्निति वा ॥
रञ्जनीय । त्रि० रागोत्पादनयोग्ये ॥
रटित । त्रि० कथिते ॥ रटे कर्म
णिक्तः ॥ न० कथनमात्रे ॥
रण । पु० कोणे । वीणादिवादने ॥
क्वणे । पु० न० युधि । समरे । यु
द्धे ॥ रणनम् ० रणन्ति० शब्दायन्तेऽ
स्मिन्निति वा । रणशब्दे । वशिरण्यो
रित्यप् ॥ रणति । रणे । पचाद्यज्वा ॥
रणत् । पु० ध्वनति ॥
रणतूर्य्यम् । न० सङ्ग्रामपटहे । च
भयडिण्डिमे । युद्धवाद्ये ॥
रणप्रिय : । पु० श्येनविहगे ॥ न० उ
शीरे । वीरणमूले ॥
रणमत्त । पुं० हस्तिनि । द्विपे ॥
रणमुष्टि : । पु० विषमुष्टिवृक्षे ॥
रणरङ्ग : । पु० रणकातरहस्तिनि । प्र
तिमे ॥
रणरण : । पु० मशके ॥ न० उद्दाहने
रणरणक : । पुं० उत्कण्ठायाम् ॥ का
मे ॥
रणसङ्कुलम् न० तुमुले । व्याकुले र
णे ॥ रणस्यसङ्कुलम् ॥
रणसमुद्यम । पु० युद्धोद्योगे ॥
रणाङ्गनम् । न० युद्धस्थले ॥
रणालङ्कार : । पुं० कङ्कपक्षिणि ॥
रण्ड । त्रि० अङ्गचर्मावच्छिन्नावयवे
॥ धूर्त्ते ॥
रण्डक : । पुं० अफलद्रुमे ॥
रण्डा । स्त्री० मूषिकपर्ण्याम ॥ विध
वायाम् ॥ रमन्तेऽत्र । रमक्रीडा
याम् । अमन्ताड्ड । टाप् ॥
रण्डाश्रमी । पु० अष्टचत्वारिंशद्वत्स
रोपरिभार्याविहीने ॥ यथा । च
त्वारिंशद्वत्सराणासाष्टानाचपरेय
दि । स्त्रियाविमुच्यतेकश्चित्सतुर
ण्डाश्रमीमत ॥
रतम् । न० मैथुने । सुरते ॥ तद्द्वि
विधम् । यथाहवात्स्यायनः ।
बाह्यमाभ्यन्तरञ्चेतिद्विविधं रतमु

च्यते । तत्राद्यं चुम्बनाश्लेषनखद न्तक्षतादिकम् । द्वितीयं सुरत साक्षान्नानाकारेण कल्पितमिति ॥ त्रि० गुह्ये ॥ अभिरते । अनुरक्ते रमणम् । रम० । नपुंसके भावे क्त । अनुदात्तोपदेशेति नलोप : ॥

रतकील : । पुं० कुक्कुरे ॥

रतकूजितम् । न० रतिकालकथायाम् । मणिते ॥

रतगुरु : । पुं० भर्त्तरि हृदयेशे ॥

रतज्वर : । पुं० काके ॥

रतताली । पुं० विड्गे ॥

रतताली । स्त्री० कुट्टन्याम् ॥

रतनाराच : । पुं० नारीणां सीत्कारे ॥ स्मरे ॥ शुनि ॥ विड्गे ॥

रतनिधि : । पुं० खञ्जने ॥

रतराग : । पुं० सुरताभिलाषे ॥

रतर्द्धिकम् । न० दिवसे ॥ सुखस्नाने ॥ अष्टमङ्गले ॥

रतव्रण : । )
रतशायी । ) पुं० कुक्कुरे । शुनि ॥

रतहिण्डक : । पुं० स्त्रीचौरे ॥ लम्पटे ॥

रतान्दुक : । पुं० कुक्कुरे ॥

रताम्ली । स्त्री० कुम्भकर्ण्यां ॥

रतामर्द : । पुं० कुक्कुरे ॥

रतायनी । स्त्री० वेश्यायाम् ॥

रतार्थिनी । स्त्री० मैथुनाभिलाषिण्याम् ॥ कामुक्याम् ॥

रति : । स्त्री० स्मरदारेषु । कामदेवपत्न्याम् ॥ स्वाधिष्ठानस्थायादेव्याम् ॥ सुरते ॥ गुह्ये ॥ रागे ॥ अनुरागे ॥ यथा । भगवान् । ब्रह्म० । कात्स्न्येनचिरन्वीक्ष्यमनीषया । तदध्यवस्यत्कूटस्थोरतिरात्मन्यतोभवेत्इति ॥ रम्यतेऽनया रम० । क्तिन् । अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपोझलिक्ङिति० इतिमलोप:॥ चेत: परितोषे ॥ इष्टार्थसंयोगजनितायां क्रीडायाम् ॥ इच्छाविशेषे ॥ यथा । यूनोरन्योन्यविषयस्थायिनीच्छारति : स्मृतेतिरसार्णवसुधाकर : ॥

रतिकुहरम् । न० भगे । योनौ ॥

रतिकूजितम् । न० मणिते । मैथुनशब्दे ॥ रते कूजितम् ॥

रतिक्रिया । स्त्री० संवेशने । मैथुने ॥

रतिगृहम् । न० योनौ ॥ रमणमन्दिरे ॥

रतिचक्रम् । न० कामिन्यासहक्रीडने ॥ यथा । शास्त्रस्यविषयस्तावद्यावन्मन्दरसोनर : । रतिचक्रेप्रवृत्तेतुनशास्त्रं नापिचक्रम : ॥

रतिनाग : । पुं० षोडशबन्धान्तर्गतपञ्चदशबन्धे । तल्लक्षणं यथा ॥ पीडयेदूरुयुग्मं नकामुकः कामिनीयदि । रतिनाग : समाख्यात : कामिनी

नामनोरम ॥

रतिपति । पु० कामदेवे ॥ रतेः पति ॥ देशविशेषस्थस्त्रीणास्थानविशेषितस्याविर्भावोयथा । वाचि श्रीमाथुरीणाजनकजनगदस्थायिनीनाकटाक्षे ० इस्तेगौडाङ्गनाना ० सुललितजघनेचोत्कलप्रेयसीनाम् । तैलङ्गीनानितम्बे ० सजलघनरुचौकेरलीकेशपाशे ० कार्णाटीनाकटीच-स्फुरतिरतिपतिर्गुर्ज्जरीणास्तनेषु ॥

रतिपाशक । पु० रतिबन्धविशेषे ॥ यथा । पीडयेदूरुयुग्मेनकामुकोयदिसुन्दरीम् । रतिपाशस्तथाख्यातः कामिनीनासुखावहः ॥

रतिप्रिय । पु० कामदेवे ॥ रतिप्रियायस्य । सुरतप्रिये ॥

रतिबन्ध । पु० पद्मासनादिषोडशसु ॥ तेयथा । पद्मासनोनागपाशोलतावेष्टोऽर्द्धसम्पुटम् । कुलिशसुन्दरश्चैवतथाकेशरएवच ॥ हिल्लोलोनरसिंहोपिविपरीतस्तथापर । क्षुब्धोवैधेनुकश्चैवमुत्कठस्तुततःपरम् ॥ सिंहासनोरतिर्नागोविद्याधरस्तुषोडश ॥

रतिमदा । स्त्री० अप्सरसि । स्वर्वेश्यायाम् ॥

रतिमन्दिरम् । न० योनौ ॥ मैथुनगृहे ॥

रतिमित्र । पु० रतिबन्धविशेषे ॥ यथा । पातयेदूरुयुग्मेचकामुकश्चेद्दिकामुकी । रतिमित्रस्तथाख्यातः कामिनीनासुखावहः ॥

रतिरमण । पु० कामदेवे ॥

रतिलक्षम । न० निधुवने ॥

रतिलाभ । पु० सुरतसुखप्राप्तौ ॥ यथोक्तं रतिरहस्ये । सस्तताबपुषिमीलनदृशोर्मूर्च्छनाचरतिलाभलक्षणम् । श्लेषयेत्स्वजघनं मुहुर्मुहुः सीत्करोतिगलगद्गदाकुलेति ॥

रतिसत्वरा । स्त्री० चिरञ्जीवायाम् । पिडिङ्गशाक० इ०गौ०दे० भा० ॥

रतिसुन्दर । पु० रतिबन्धविशेषे ॥ यथा । नारीपदद्वयंकामीधारयेद्धृदयेयदि । धृतकण्ठोरमेत्कामीबन्धःस्याद्रतिसुन्दरः ॥

रतू । स्त्री० देवनद्याम् सत्यवाचि ॥ ऋदितिसौत्रोधातुः । तस्मऋतेरम्चेतिकू चमागमश्च ॥

रतोद्वह । पु० कोकिले ॥

रत्यङ्गम् । न० भगे । योनौ ॥ रतेः सुरतस्यअङ्गम् ॥

रत्नम् । न० स्वजातिश्रेष्ठे ॥ जातौजातौयदुत्कृष्टं तद्रत्नमभिधीयते ॥ मणौ ॥ धनार्थिनोजनाः सर्वेरमन्तेस्मिन्नतीवयत् । ततोरत्नमितिप्रोक्तं शब्दशास्त्रविशारदैः ॥ तच्चपाषाणभेदोस्तिमुक्तादिचतदुच्यते तानिनवधानिरूपितानियथा । ब

च गारुत्मतपुष्परागौमाणिक्यमेव च । इन्द्रनीलश्चगोमेदस्तथावैदूर्यमित्यपि ॥ मौक्तिकविद्रुमश्चेतिर त्नान्युक्तानिवैनव। रत्नानिभक्षितानि सुमधुराणिसराणिच। चक्षुष्याणि चशीतानिविषघ्नानिधृतानितु ॥मङ्गल्यानिमनोज्ञानिग्रहदोषहराणिच॥ माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोर्माहेयस्यतुविद्रुमो निगदितः सौम्यस्यगारुत्मतम् । देवेज्यस्यचपुष्परागमसुराचार्यस्यव ज्रंशनेर्नीलं निर्मलमन्ययोर्निगदितेगोमेदवैदूर्यके ॥ रत्नानांशोधन मारणविधिर्वक्ष्यतेऽध्या। रमयति । रमक्रीडायाम् । रमतेऽस्मिन्वा । रमेस्तचेतिन । नेट् । माणिक्ये ॥ वज्रे ॥ सगर्णे ॥ ऽ ॥

रत्नकन्दल । पुं॰ प्रवाले ॥

रत्नकूटः । पुं॰ पर्वतविशेषे ॥

रत्नगर्भः । पुं॰ समुद्रे ॥ रत्नानिगर्भेऽस्य ॥ कुबेरे ॥

रत्नगर्भा । स्त्री॰ भूमौ ॥ रत्नानिगर्भेऽस्याः ॥ उपचाराद्गुणवत्पुत्रायाम् ॥

रत्नचषकः । पुं॰ न॰ स्फटिकादि मणिपात्रे ॥

रत्नदीपः । पुं॰ न॰ रत्नप्रचुरेद्वीपविशेषे ॥

रत्नधेनुः । स्त्री॰ महादानविशेषे ॥

रत्ननिधिः । पुं॰ खञ्जनपक्षिणि ॥

रत्नपञ्चकम् । न॰ सुवर्णादिपञ्चसु । यथा । सुवर्णरजतमुक्ताराजावर्त्तप्रवालकम् । रत्नपञ्चकमाख्यातं मुनिभिः कर्मवेदिभिः ॥

रत्नपरीक्षा । स्त्री॰ मणिविचारे ॥ तत्र मणीनांतावद्बहुप्रधानार्थमाह । रत्नेनशुभेनशुभं भवतिनृपाणामनिष्टमशुभेन । यस्मादतः परीक्ष्यं दैवरत्नाश्रितं तज्ज्ञैः ॥ द्विपहयवनितादीनांस्वगुणविशेषेणरत्नशब्दोस्ति । इहतूपलरत्नानामधिकारोवज्रपूर्वाणाम् ॥ रत्नानामुत्पत्तिप्रदर्शनार्थम्मतभेदमाचार्याणामाह । रत्नानिबलाद्दैत्याद्दधीचितोन्येवदन्तिजातानि । केचिद्भुवः स्वभावाद्वैचित्र्यंप्राहुरुपलानाम् ॥ वज्रेन्द्रनीलमरकतकर्केतनपद्मरागरुधिराख्याः । वैदूर्यपुलकविमलकराजमणिस्फटिकशशिकान्ताः ॥ सौगन्धिकगोमेदकशङ्खमहानीलपुष्परागाख्याः । ब्रह्ममणिज्योतीरससस्यकमुक्ताप्रवालानि । वेणातटेविशुद्धं शिरीषकुसुमोपमञ्चकौशलकम् । सौराष्ट्रकमाताम्रं कृष्णंशूर्पारकंभूतम् ॥ ईषत्ताम्रं हिमवतिमतङ्गजं वल्लपुष्पसङ्काशम् । आपीतञ्चकलिङ्गे श्यावंपौण्ड्रेषुसम्भूतम् ॥ ऐन्द्रं षडश्रियुक्तं याम्यसर्पास्यरूपमसितञ्च । कदलीकाण्डनिकाशं वैष्णवमितिसर्वसंस्थानम् ॥ वारुणमव-

लागुच्छोपमभवेत्कर्णिकारपुष्पनि-
भम् । शृङ्गाटकस स्थान व्याघ्राक्षि
निभस्त्वक्षीतभुजम् ॥ वायव्यस्त्वयवी
पममशोककुसुमप्रभं समुद्दिष्टम् ।
स्रोत : खनिप्रकीर्णकमित्याकरस
म्भवस्त्रिविध ' ॥ १० ॥ रक्तपीत्व
शुभं राजन्यानासित द्विजातीनाम्
। शैरीष वैश्यानांशूद्राणांशस्त्र.तेऽ
सिनिभम् ॥ ११ ॥ वज्रमणिर्म्
ल्यपरिज्ञानार्थमाह । सितसर्ष
पाष्टकंतण्डुलोभवेत् तण्डुलैस्तुविं
शत्या । तुलितस्यद्विलक्षेद्रूनं द्वि
द्रूनितिचैतत् ॥ पादत्र्यंशार्द्धोन
त्रिभागपञ्चांशषोडशांशश्च । भाग
श्चपञ्चविंशतिक : स्यात्साष्टिक
श्चैव ॥ १३ ॥ शुभवज्रलक्षणान्या
ह । सर्वद्रव्याभेद्य लघ्वम्भसितरति
रश्मिवत्स्निग्धम् । तडिदनलश
क्रचापोपमस्त्ववज्र हितायोक्तम् ॥
अथाशुभलक्षणम् । काकपदमक्षि
काकेशधातुयुक्तानिशार्कर विद्धम् ।
द्विगुणाश्रिदग्धकलुषत्रस्तविशीर्णा
निनशुभानि ॥ यानिचबुद्बुददलि
ताग्रचिपिटवाशीफलप्रदीपानि ।
सर्वेषाम्तेषांमूल्याच्चामोष्टमोक्षा
नि ' ॥ १६ ॥ वज्र नकिंचिदपि
धारयितव्यमेकेपुत्रार्थिनीभिरबला
भिरद्य तितजज्ञा . । शृङ्गाटकत्रि
पुटधान्यकवत्स्थितं यच्छ्रोणीनिभ



स्त्वशुभद् तनयार्थिनीनाम् ॥ स्वज
नविभवजीवितक्षय जनयतिवज्रम
निष्टलक्षणम् । अशनिभयविषारि
नाशनशुभमुपभोगकरञ्चभूभृताम्
॥ द्विितारास्वांसप्तसप्ततितम : ॥
रत्नपारायणम् । न० सर्वरत्नस्थाने
॥ यथा । समुद्रोपत्यकाहैमीपर्वता
धित्यकापुरी । रत्नपारायणनाम्ना
लङ्केतिममैथिली ॥
रत्नप्रभा । स्त्री० जिनानांनरकविशे
षे ॥
रत्नभू : । स्त्री० मणिप्रधानभूमौ ॥
रत्नमुख्यम् । न० हीरके ।
रत्नमुट् । त्रि० मणिचौरे ॥ रत्नं
मुष्णाति । मुषस्तेये । क्विप् ॥
रत्नराट् । पुं० माणिक्ये ॥ रत्न
श्रेष्ठे ॥
रत्नवती । स्त्री० भूमौ ॥ रत्नानि
विद्यन्ते यस्याम् । मतुप् । उगि
त्वात् ङीप् ।
रत्नवर्षुकम् । न० पुष्पकरथे ॥ त्रि०
रत्नवर्षणशीले ॥
रत्नसानु : । पुं० सुरालये । सुमेरु
पर्वते ॥ रत्नानिसानौशिखरे
ऽस्य ॥
रत्नसू : । स्त्री० भूमौ ॥
रत्नाकर : । पुं० जलनिधौ ॥ रत्ना
नामाणिक्यमुक्तादीनामाकर ' ॥
रत्नाङ्क : । पुं० विष्णुरथे ॥ रत्नचि

ङ्गे ॥
रत्नाचल । पु॰ दानार्थमणिमय पर्वते ॥
रत्नाभरणम् । न॰ मणिमयालङ्करणे । जडाजगहना॰ इ॰भा॰ ॥ तस्य धारणगुणा । धन्य यशस्यमायुष्य श्रीमद्व्यसनसूदनम् । हर्षणकाम्यमोजस्य रत्नाभरणधारणम् ॥
रत्नि । पुं॰ बद्धमुष्टिकरे ॥ ऋच्छति॰ अर्यतेऽनेनवा । ऋगतौ । ऋतन्यञ्जीत्यर्त्ते, कत्निच् । य ण् ॥
रथ । पुं॰ शताङ्गे । स्यन्दने ॥ पादे । चरणे ॥ वेतसे ॥ देहे । शरीरे ॥ रथवद्वयस्थानीयैरिन्द्रियैराक्रष्यमाणत्वाच्छरीरस्य ॥ रम्यतेऽत्र॰रमन्तेऽनेनवा । रम॰ । हनिकुषीतिक्थन् । अनुनासिकलोप ॥ एनेनसहयोहरि ॥ सगणे ॰ ॥ ऽ॰ ॥ पौरुषे ॥
रथकन्या । स्त्री॰ रथवृन्दे ॥ रथानांसमूह । खलगअकन्यचश्चे तिकन्यच् ॥
रथकार: । पु॰ रथकार । रथस्य कार: ॥
रथकार: । पुं॰ तक्षणि । वर्द्धकौ । रथनिर्माणकर्त्तरि । माहिष्यात् करण्यामुत्पन्नेजातिविशेषे । वढ ई॰ तखाण॰ इतिभाषाप्रसिद्धे ॥ माहिष्येणकरण्यान्तुरथकार प्र

जायते॰ इ॰ याज्ञवल्क्य ॥ रथ करोति । डुकृञ॰ । कर्मण्यण् ॥
रथकुटुम्बी । पु॰ सारथौ ॥ रथकुटुम्बयितुशीलमस्य । कुटुम्बधारणे । सुपीतिणिनि ॥ यद्वा । रथएवकुटुम्बम् । रथकुटुम्बमस्यास्ति । इनि ॥
रथगर्भक ' । पुं॰ स्कन्धवाह्ययाने । नररथे । कर्णीरथे । प्रवहणे । डयने ॥
रथगुप्ति । स्त्री॰ वरूथे । परप्रहरणाभिघातरक्षार्थरथस्यसन्नाहवदावरणे ॥ रथस्यगुप्तिरावरणम् ॥
रथगोपनम् । न॰ रथगुप्तौ ॥
रथचरण ' । पु॰ कोकपक्षिणि । चक्रवाके ॥ रथचक्रे । पैप्या॰इ॰भाषा ॥
रथद्रु । पु॰ तिनिशवृक्षे ॥ रथस्य द्रु: । तत्रोपयुक्तत्वात् ॥
रथद्वितीया । स्त्री॰ आषाढशुक्लद्वितीयायाम् ॥ यथा । आषाढस्यसितेपक्षेद्वितीयापुष्यसयुता । तस्यांरथेसमारोप्यराममाभद्रया नह ॥ यात्रोत्सवप्रवृत्यार्थप्रीणयेच्चद्विजान्बहून् । ऋक्षाभावेतिथौकार्यासदासाप्रीतयेममेतिस्कन्दपुराणम् । सायात्रा । भाजगन्नाथम् ॥
रथन्तरम् । न॰ सामविशेषे ॥ रथेन तरति । तृप्लवनसन्तरणयो ' ।

संज्ञायांभृतृवृजीतिखच् । व्युत्पत्तिमात्र नस्त्ववयवार्थानुगम ॥

रथपर्य्याय । पु॰ वेतसवृक्षे ॥ रथः पर्यायोऽस्य ॥

रथपाद । पु॰ चक्रे ॥

रथव्रज । पु॰ रथकड्यायाम् ॥ रथानांव्रज ॥

रथपुष्पा । स्त्री॰ नदीविशेषे ॥ रथपिनष्टि । पा॰ । क । पारस्करादित्वात्सुट् षत्वेनिपातसिद्धे ॥

रथसाधक । पुं॰ तिनिशे ॥ रथस्य साधक ॥

रथाङ्ग । पु॰ कोकपक्षिणि ॥ अपस्करे । चक्रभिन्नेरथारम्भके ॥ न॰ चक्रे ॥ रथस्यअङ्गम् ॥

रथाङ्गपाणि । पु॰ विष्णौ ॥ रथाङ्ग पाणौयस्य । प्रहरणार्थेभ्य परे निष्ठासप्तम्यौभवत ॥

रथाङ्गाह्वय । पुं॰ चक्रवाके ॥ रथाङ्गस्याह्वयोनामयस्य ॥

रथाङ्गी । पुं॰ श्रीहरौ ॥ रथाङ्गचक्रमस्यास्ति । इनि ॥

रथाङ्गी । स्त्री॰ ऋद्धिनामौषधौ ॥

रथान्तर । पुं॰ कल्पभेदे ॥

रथाभ्र । पुं॰ वेतसवृक्षे ॥

रथारोही । पुं॰ रथस्थयुद्धकर्त्तरि । रथिनि ॥

रथावर्त्त । पु॰ धूमावतीदक्षिणार्द्धे तीर्थविशेषे ॥

रथिकः । त्रि॰ रथिनि । रथस्वामिनि ॥ रथोस्यास्ति । अतइनिठनाविति ठन् ॥ रथेनचरतित्रा । पर्पादिभ्यष्ठन् ॥ षिद्गौरादिभ्यश्चेतिङीषि॰ रथिकी ॥

रथिका । स्त्री॰ क्षुद्ररथे । स्वार्थेकन् ॥

रथी । पु॰ स्यन्दनारोहे । रथारोहिणि । रथस्वामिनि । रथिके ॥ रथोऽस्यास्ति । इनि ॥

रथिन । पु॰ रथिनि । रथस्यइन । शकन्ध्वादि ॥

रथिनी । स्त्री॰ रथकड्यायाम् ॥ रथानासमूह । खलादिभ्यइनिर्वक्तव्य ॥

रथिर । पुं॰ रथिके । स्यास्ति । मेधारथाभ्यामिरन्निरचौ वक्तव्याविति इरच् ॥

रथ्यी । स्त्री॰ शकट्याम् । मजभोली॰ इ॰ भा॰ ॥ बह्वादिभ्यश्चेतिङीष् ।

रथोद्धता । स्त्री॰ त्रिष्टुप् ११ प्रभेदे ॥ रात्परैर्नरलगै रथोद्धता । यथा । राधिकादधिविलोडनस्थिताकृष्णवेणुनिनदैरथोद्धता । यामुनतटनिकुञ्जमञ्जसासाजगामसलिलाहृतिच्छलात् ॥ रथवद्धता ॥

रथ्यः । पुं॰ रथवाहकाश्वे । रथवोढरि ॥ रथं वहति । तद्वहतिरथयुगप्रासङ्गमितियत् ॥ रथांशे । चक्रे

॥ रथस्याङ्गम् । रथाद्यत् ॥

रथ्या । स्त्री० रथौघे ॥ रथानांसमूह । खलगोरथादितियत् ॥ प्रतोल्याम् । विशिखायाम् । राजमार्गेत रमार्गे । जनमस्थारिणिमार्गे । वर्त्मन्याम् । पथि ॥ चत्वरे ॥ रथाश्रिता । यत्प्रकरणे रथाच्चेति यत् ॥ रथवहतिवा । तद्वहतीति यत् ॥

रद । पु० विलेखने ॥ दन्ते ॥ पुरुषदन्तलक्षण यथा । विवर्णैर्धनहीना सदन्ता स्निग्धघना शुभा । तीक्ष्णादंष्ट्रा समा . श्रेष्ठाजिह्वारक्तासमाशुभा ॥ अपिच । कुन्दकुड्मलसङ्काशैः प्रकारैर्दशनैर्नृप. । भवन्त्यवानरदन्ताश्चनित्य सुपरिपीडिता . ॥ हस्तिदन्ता ' खररदा : स्निग्धदन्तागुणान्विता । करालैर्विषमैर्दीर्घैर्दशनैर्दु . खजीविन . ॥ द्वात्रिंशद्द तारःजानएकोनोत्तमभोगवान् । त्रिंशद्दंतानरायेतेसुखदु ' खस्यभागिन ' ॥ एकोनत्रिंशद्दशना . पुरुषादु ' खजीविन . । अष्टाविंशद्दायेषातेतिदु ' खस्यभाजना ॥ स्त्रीदन्तलक्षण यथा । कुन्दपुष्पसमादन्ताभाषितकोकिलासमम् । दाक्षिण्ययुक्तमशठ हसशब्द सुखावहम् ॥ नासासमासमपुटाल्लोणाल्पकचिराशुभा । करालविष

मादन्ता क्लेशायचभयायच ॥ चौर्यापकृष्टमासाश्चदीर्घाभर्तुसमृत्यवे । इति ॥ दन्तस्थलग्नशुचित्व यथा । दन्तवद्दन्तलग्नेषुजिह्वास्पर्शेशुचिर्भवेत् ॥ अपिच । दन्तलग्न समहार्यलेप मन्येतदन्तवत् । नतत्रबहुश . कुर्याद्यत्नमुद्धरणेपुन : ॥ भवेदशौचमत्यर्थंतृणवेधाद्व्रणेकृते ॥ रदति । रदविलेखने । पचाद्यच् ॥

रदच्छद : । पुं० ओष्ठे ॥

रदन : । पु० रदे । दन्ते ॥ रद्यतेनेन । रद० । करणेतिल्युट् ॥ न० उत्खनने ॥

रदनच्छद ' । पुं० ओष्ठे ॥ अधरे ॥ रदनाश्छाद्यन्तेऽनेन । छदस वरणे० चुरादि . । पुंसीतिघ : । छादेर्घेद्व्युतिह्रस्व ॥ अस्यशुभाशुभलक्षणंयथा । मांसलैस्सधनोपेताश्चवक्रैरधरैर्नृपा: । बिम्बोपमैस्सस्फुटितैरोष्ठैरूक्षैस्सखण्डितै । विवर्णैर्धनहीना सदन्ता : स्निग्धाघना शुभा : ॥

रदनी । ) पुं० हस्तिनि ॥
रदी । )

रन्तव्य ' । त्रि० रन्तुंयोग्ये ॥ रम० । तव्य ' ॥

रन्तिदेव : । पुं० साङ्कृतिपुत्रेभरतान्वयोत्पन्ने ० चन्द्रवंशीयनृपतिश्रेष्ठे ॥ यस्ययश : पुराणेप्रसिद्धम् । यस्यकथावतोयश्लोक : । नकामयेऽहंग

तिमीश्वरात्परामष्टर्द्धियुक्तामपुन-
र्भवस्य । व्याप्ति प्रपद्यखिलदेहभा-
जामन्त स्थितोयेनभवन्यदु खा ॥
गरुडध्वजे । विष्णौ ॥ कुक्कुरे ॥
रन्तु । पु० वर्त्मनि ॥ स्त्री०नद्याम् ॥
रधनम् । न० पाके ॥छदने ॥
रन्ध्रम् । न० दूषणे ॥ छिद्रे ॥ रमण-
म् । सम्पदादित्वात्क्किप् । स चा
पूर्वकत्वान्नदीर्घं । रमक्रीडाधर
ति । मूलविभुजादित्वात्क . ॥ य
द्वा । रधयति । रधिहिंसासंराध्यो ।
बाहुलकाद्रक् ॥ अष्टमभवने ॥ अ
श्वस्यकुक्षिनाभिमध्यभागे ॥ यथो-
क्तम् । कुक्षिनाभ्यन्तरेरन्ध्रमुपरन्ध्र
तथोपरीति ॥
रन्ध्रकण्ट । पु० जालबर्बुरके ॥
रन्ध्रकार : । त्रि० छिद्रस्यकारके । र
न्ध्र इतीविधेरा०द्र०भाषा०प्र० ॥
रन्ध्रं करोति । कृञोहेतुताच्छील्या
नुलोम्येष्वितिकृञ ट प्रत्यय: ॥
रन्ध्रबभ्रु । पुं० उन्दुरौ ॥
रन्ध्रवंश । पु० सच्छिद्रवंशे । कीच
काख्ये । मस्करे । सुषिरास्ये ॥
अस्यगुणायथा । वंशोत्वम्लोकषायो
चकिञ्चित्तिक्तोबशीतलो । मूत्रकृ
च्छ्रप्रमेहार्शं पित्तदाहास्रनाशनौ ।
विशेषोरन्ध्रवंशस्तुदीपनोजीर्णनाश
क ॥रुचिकृत्पाचनोहृद्य : शूल
घ्नोगुल्मनाशग ॥

रप । न० पापे ॥
रभस । पुं० हर्षे ॥ यथा । शुचापा
चधात्रीपरिणतिरमेध्यप्रचयभूरयंभू
तावासोविस्मयकियतीयातिनदशा
म् । तदस्मिन्धीराणांत्क्षणमपिकिमा
स्थातुमुचितफलीकार कोयदह
मह्मेवेतिरभसइतिशिल्हणमिश्रा. ॥
पुं०अभिधानविशेषे ॥ पौर्वापर्यवि
चारे ॥ त्रि०तद्वति ॥ रभते । रभ
राभस्ये । अत्यविचमीत्यादिनाऽस
च् ॥ तदस्त्यर्थेआद्यच् ॥
रम । पुं० कान्ते ॥ रक्ताशोकद्रुमे ॥
स्मरे ॥ रमते । रम० । पचाद्यच् ॥
रमणे ॥
रमक । पुं० विलासिनि । कान्ते ॥
रमते । रम० । रमेरस्यलोवेतिक्वु
न ॥ केनापिकर्मणाधररञ्जके ॥ र
मयति । क्वुन् ॥
रमठम् । न० ) हिङ्गुनि ॥
रमठध्वनि. । पुं० )
रमण । पुं० धवे । प्रिये । पत्यौ ॥
स्मरे । कामदेवे ॥ रमयति । र-
म० । नन्द्यादित्वाल्ल्यु ॥ व-
र्णवृत्तान्तरे ॥ सगणोरमण । क
विनाकथित ॥ यथा । धनदोधन
द । भवताभवतात् ॥ रासभे ॥
वृषणे ॥ महारिष्टे ॥ न०पटोल-
मूले ॥ जघने ॥ जघने । ग्राम्यधर्मे ।
सुरते । मैथुने । क्रीडारले ॥ मदा

मृग ॥ क्रीडने ॥

रमणकम् । न० जम्बुद्वीपस्योपद्वीप विशेषे । रम्यकवर्षे ॥ यथा । एवमेवो त्तरेणैवश्चर्षाणिचतपोधन । कुरु वर्षं सिन्धुकूलाद्भवानवधि स्मृ त ॥ हिरण्मयततोवर्षं श्वेताव धिनिगद्यते । रम्यकञ्चततोवर्षं नी लस्तस्यावधि . स्मृत ॥ अपिच । दक्षिणे नतुश्वेतस्यनिषधस्योत्तरेण तु । वर्षं रमणकनामजायन्ते तत्र मानवा ॥ शुक्लाभिजनसम्पन्ना . सर्वेसुप्रियदर्शना । दशवर्ष सहस्राणिशतानिदशपञ्चच ॥ जीवन्ति तेमहाभागनित्यं मुदितमानसा ॥ इतिपाद्मे भूखण्ड ॥

रमणा । स्त्री० रमण्याम् ॥

रमणी । स्त्री० विशेषाङ्गनायाम् । नार्याम् ॥ रमयति०रम्यत्वाद्वाम् । रम० । ल्युट् ॥ बालाख्यतरौ ॥ वेदिकायाम् ॥ • (*) •

रमणीय . । त्रि० सुन्दरे । शोभने । रम० । अनीयर् ॥

रमणीयकम् । न० छन्दोविशेषे । राद्यभवितयरैरुदितरमणीयकम् । इतिलक्षिते ॥

रमणीयचरण . । त्रि० सुकृतिनि । पुण्यकर्मणि ॥ रमणीयशोभनचरणशीलयस्य ॥

रमण्य : । त्रि० रमणीये ॥ रमतेऽस्मिन् । रम० । यत्स्योष्ठ्यन्य : ॥

रमति । पु० नायके ॥ नाके ॥ कामदेवे ॥ काले ॥ रमतेऽस्मिन् । रम० । रमेर्नित्स्यति ॥

रमा । स्त्री० लक्ष्म्याम् । पद्मालयायाम् । सर्वत्ररमसे यस्माद्रमातस्माद्भविष्यसीतिविष्णुशापोक्ते इतुक्तं श्रीदेवीभागवते ॥ हालाहलोनैवविषं विषं रमापर जनाव्ययमेवमन्वते । योगिनजागर्त्ति निपीयत शिव ' स्मरन्रमामुह्यतिनिद्रयाहरि ॥ रमयति ।रमक्रीडायाम् । पचाद्यचि०टाप् ॥ शशिध्वजराजकन्यायाम् । कल्किदेवपत्न्याम् ॥ शोभायाम् ॥

रमाधव : । पु० )

रमानाथ । पु० )

रमापति : । पुं० ) विष्णौ ॥ रमाया धव: ॥ नाथ : पतिर्वा ॥ *

रमाप्रियम् । न० पद्मे ॥

रमावेष्ट । पुं० श्रीवासे ॥

रमित । त्रि० रतिप्रापिते ॥

रमेश्वर : । पुं० विष्णौ ॥

रम्भ . । पुं० वेणौ ॥ वैष्णवदण्डे ॥ वानरविशेषे ॥ महिषासुरस्यपितरि रभते । रभराभस्ये । पचाद्यच् । रभेरशब्लिटोरितिनुम् ॥

रम्भा । स्त्री० कदल्याम् ॥ अपसरोभेदे ॥ दुर्गायाम् ॥ गोध्वनौ ॥ वे

श्यायाम् ॥ रमते । रम० घञ् ।
टाप ॥ रम्यतेवा । घञ् ॥
रम्भातृतीया । स्त्री० व्रतविशेषकाले॥
रम्भोरू . । स्त्री० स्त्रीविशेषे ॥ रम्भे ·
कदलीस्तम्भाविवऊरूयस्याः . सा ।
ऊरूत्तरपदादौपम्यऊङ् ॥
रम्य . । पु० चम्पके ॥ चम्पकवृक्षे ॥
न० पटोलमूले ॥ प्रधानधातौ ॥
त्रि० मनोज्ञे । हृद्ये । स्वभाव
सुन्दरे ॥ रम्यायाविकृतिरपिश्रिय
तनोति ॥ रम्यतेक्रीडतेयच । रम
० । पोरदुपधादितियत् ॥ बलकरे॥
रम्यकम् । न० पटोलमूले । नील
गिरेरदर्द्दिशिवर्त्तमाने० वर्षवि
शेषे ॥ नीलनीरजरम्यस्यरम्यकेहा
दृशस्थिति : । जनस्याव्दसहस्राणि
न्यग्रोधफलमश्नत : ॥
रम्यपदपाठ . । पु० देवतापदस्तोभे .
कालपूरणे ॥
रम्यपुष्प . । पुं० शाल्मलिपादपे ॥
रम्यफल . । पु० कारस्करवृक्षे ॥
रम्या । स्त्री० रात्रौ ॥ स्थलपद्मिन्याम् ॥
रल्ल . । पुं० अरुणवर्णे ॥ शोभायाम्॥
रय : । पुं० वेगे । वेगाख्यगुणे ॥ स
वेगगतिःचने स्वप्रयोगः ॥ प्रवाहे
॥ रयत्यनेन । रयणं वा । रयगतौ
। पुंसौतिघः । रीणाच्यनेना ।
रीगतिरेषणयो : । पुंसीतिघः ॥
इलक्षेतिघञितु० संज्ञापूर्वकत्वा

हृद्धभाव ।
रयि . । पुं० धने । जले ।
रराटी । स्त्री० ललाटे ॥
रल्लक : । पुं० कम्बले ॥ कम्बलमृगे
॥ पक्ष्मणि ॥ रमते । रम० । क्वि
प् । गमादीनांक्वावितिमलोपे
। तुक् । लाति । ला० । क्विप ।
रञ्चासौलाश्च । स्वार्थेकन । कांस्य
इतिहस्व · ॥ यद्वा । रमणम ।
रमि सम्पदादिक्विप । रतक्रीडा
लक्यतेऽनेन । लकआस्वादने ।
घ : ॥ रत वातिवाक्कुन ॥ स्त्रीणां
सि टूरसरल्लाम् ॥
रल्लकभल्लकम् । न० सिन्दूरसरणौ ।
मागध० भा० ॥ शिर : सिन्दूरस
रणि · स्त्रीणारल्लकभल्लकमित्युक्ते
॥ सीतारल्लकभल्लभग्नहृदय स्वस्यो
नलङ्कश्वरइतिलच्यम् ॥ रल्लकोभ
ल्लकमिव ॥
रव . । पु० ध्वाने । स्वने । शब्दे ॥
रवणम । रुशब्दे । ऋदोरप् ॥ ल
घुवर्णः ॥
रवण . । पु० उष्ट्रे ॥ कोकिले ॥ स्वरे
॥ न० कांस्ये ॥ रवौ ॥ त्रि० शब्द-
ने । तीक्ष्णे ॥ भण्डके ॥ चञ्चले ॥
रौति० तच्छील : । रु० । चलन
शब्दार्थादकर्मकाद्युच् । सुयुरुवञो
युजितियुज्वा ॥
रवथ । पुं० कोकिले ॥ रौति ।

रु० शीङ्शपिरुगमीत्यादिनाऽथप्रत्यय ॥

रवि । पु० सूर्ये । आदित्ये । दिवाकरे ॥ रसान्आदत्ते० इतिरवि । अत्ररसशब्दसलोप कोत्वस्यादानमर्थं । वीगत्यादाविति धातोर्नीतिरूपम० पृषोदरादित्वात्साधुत्वम् । पृषोदरादित्वकल्पनामूलन्तुविष्णुधर्मोत्तरवचनम् । तद्यथा । रसानाश्नतथादानाद्रविरित्यभिधीयतेइति ॥ प्रकाशानामध्येरविर्विष्णोर्विभूति ॥ रूयते० स्तूयते । रुशब्दे । अचइ. ॥

रविकान्त । पुं० सूर्यकान्तमणौ ॥

रविचक्रम् । न० नराकारसूर्यचक्रविशेषे ॥

रविज : । पुं० शनैश्चरे ॥

रवितनय । पुं० सावर्णिकेमनौ ॥ शनौ ॥ यमे ॥

रविनन्दन । पु० सुग्रीवाख्यवानरे ॥ वैवस्वतमनौ ॥ सावर्णिमनौ ॥ शनौ ॥ यमे ॥

रविनामम् । न० बन्धुजीवके ॥ पद्मे ॥

रविपत्र । पुं० आदित्यपत्रक्षुपे ॥

रविपार्श्वग : । पुं० चण्डांशी पारिपार्श्वकेषु ॥ तेयथा । माठर . पिङ्गोदण्डश्चण्डांशी . पारिपार्श्वकाः । चपिच । बाहु : शीघ . स्वरपक्षीदाररकोजानुकारक । पिगोग्रजश्चपुरुष प्राग्नयातप्रतापकौ ॥ आश्विनेयौतथादण्डीकुल्माष पार्श्वगारवे : ॥

रविप्रिय । पुं० आदित्यपत्रे ॥ रक्तकरवीरे ॥ लकुचे ॥ न० ताम्रे ॥ रक्तकमले ॥

रविप्रीता । स्त्री० सुवर्चलायाम ॥

रविरत्नकम् । न० माणिक्ये ॥

रविलोचन । पुं० विष्णौ ॥ रविर्लोचनमस्यविराडात्मनइतिरविलोचन ॥

रविलोहम् । न० ताम्रे ॥

रविसञ्ज्ञकम् । न० ताम्रे ॥

रविसुत । पु० सुग्रीवे ॥

रविसूनु । पुं० शनौ ।

रवीन्दम् । न० पद्मे ।।

रवीषु । पुं० कामे ॥

रशना । स्त्री० काञ्च्याम् । कटिभूषणे ॥ अश्नुते । अशूङ्व्याप्तौसङ्घातेच । अशभोजनेवा । अशिरशश्चेति युन्० धातोरशादेश : । यद्वा । रशति । रशशब्दे सौत्र: । बहुलमन्यत्रापीतियुच् ॥ जिह्वायाम् ।

रश्मि । पुं । दीधितौ ॥ पक्ष्मणि । नेत्रपत्रे ॥ अश्वरज्जौ । प्रग्रहे । रश्यतेइयुक्ता । अश्वादीनांसंयमनरज्जौ । अश्नुतेनेनवा । अशू० । अश्नोति रश्मेतिमि . ॥ सूर्यस्यरश्मिना

॥ रोदनाश्रुपतनेनमृतानानरक यथा ॥ ज्ञानिनोमारुदन्त्येवमारोदी ' पुत्रसाम्प्रतम् ॥ रोदनाश्रुप्रपतनान्मृतानानरकध्रुवम् ।' मृतम् हिश्यरोदननिषेधोयथा ॥ श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतोभुङ्क्तेयतोऽवश' । अतोनरोदितव्यं हिक्रियाकार्याविधानतः इति ॥

रोदनिका । स्त्री॰ यवासे ॥

रोदनी । स्त्री॰ कच्छुरायाम् । दुरालभायाम । यवासे ॥ रोदयति । रुदिर्॰ । ल्युट् । ङीप् ॥

रोदः न॰ दिवि ॥ भूमौ ॥ द्यावापृथिव्यो ॥ रोदितिसर्वमस्मिन् । रुदिर्॰ । असुन् ॥

रोदसी । अ॰ द्यावापृथिव्यो । ॥ दिवि ॥ भूमौ ॥

रोदसी । स्त्री॰ स्वर्गे ॥ भूमौ ॥ द्यावाभूम्योः ॥ गौरादित्वात्पचेङीष् ॥

रोदस्यौ । स्त्री॰ द्विवचनान्त । भूमिस्वर्गयो ' ॥

रोधः । पुं॰ नदीतीरे । कूले । रुणद्धि । रुधिरावरणे । पचाद्यच् ॥ प्रतिबन्धे ॥

रोधकः । त्रि॰ रोधिनि ॥ रुधिर्॰ । ण्वुल् ॥

रोधनः । त्रि॰ रोधकर्त्तरि ॥ न॰ रोधे ॥

रोधवक्रा । स्त्री॰ सरिति ॥ रोधेनवक्रा ॥

रोध । न॰ तीरे ॥ रुणद्धि । रुधिर्॰ । सर्वधातुभ्योसुन्निति॰ असुन् ॥

रोधोवक्रा । स्त्री॰ नद्याम् ॥ रोधसावक्रा ॥

रोधोवती । स्त्री॰ नद्याम् ॥

रोध्र ' । पुं॰ गालवे । लोध्रे न॰ अपराधे ॥ किल्बिषे ॥ रुणद्धि ' रुधिर्॰ । बाहुलकाद्रन् ॥

रोध्रपुष्पः । पुं॰ मधूकवृक्षे ॥

रोध्रपुष्पिणी । स्त्री॰ धातकीवृक्षे ॥

रोपः । पुं॰ रोपणे ॥ इषौ । बाणे ॥ न॰ लोध्रे ॥ रोप्यतेऽनेनवा रुपविमोहने । ण्यन्त ' । घञ् ॥ यद्वा । रूप्यतेऽनेन । हलश्चेतिघञ् ॥

रोपकः । पुं॰ सुवर्णसप्ततितमेभागे ॥ यथाहविष्णुगुप्त । स्त्रीनाराचेपकैरष्टाभि श्चत्वापरिकीर्त्तित । सुवर्णसप्ततितमोभागोरोपकउच्यतइति ॥

रोपणम् । न॰ विमोहने ॥ जनने ॥ प्रादुर्भावे '। रुपेर्भावेल्युट् ॥ अञ्जनविशेषे ॥ यथा । रोपण रसकपिष्टासम्यक्सम ज्ञाव्य ारिणा । रहणीयात्तज्जलसर्वत्यजेच्चूर्णमधोगतम् ॥ शुष्कस्तत्ज्जल सर्वपर्पटोसन्निभभवेत् । विचूर्ण्यभावयेत्सम्यक्त्रिवेलत्रिफलारसे ।, कर्पूरस्वरसतद्दशमांशेमनि ' क्षिपेत् ।

अञ्जयेन्नयनेतेननेत्राखिलगदच्छि
दः ॥
रोपणचूर्णम् । न० नयनाञ्जनविशे-
षे ॥ यथा । शिलायारसकपिष्टास्त
थ्यगात्राण्यवारिणा । ग्रहणीयास्त
ज्जलसर्वंत्यजेच्चूर्णमधोगतम् । शु
ष्कं तच्चजलसर्वं पर्पटीसन्निभंभवेत्
। विचूर्ण्यभावयेत्सम्यक्त्रिवेल-
त्रिफलारसै ॥ कर्पूररजसस्तद्व
शमांशेननि क्षिपेत् । अञ्जयेन्नय
नतेनसर्वदोषोपशान्तये ॥ समस्त
नेत्ररोगघ्नचूर्णमेतन्नसंशय ॥
रोपणवर्त्ति । स्त्री० नेत्राञ्जनप्रभेदे ॥
यथा । अशीतिस्तिलपुष्पाणिषष्टि
पिप्पलतण्डुला । जातीपुष्पाणि
पञ्चाशन्मरिचानिचषोडश ॥ सू-
क्ष्म पिष्ठाम्बुनावर्त्ति . कृताकुसु-
मिकाभिधा । तिमिरार्जुनशुक्रा
णानाशिनीमांसवृद्धिनुत् ॥ एतस्या
अञ्जनेप्रोक्तामात्रासार्द्धहरेणुका ।
कुसुमिकावटी० रोपणी ॥
रोप्यातिरोप्य । पु० धान्यविशेषे ॥ य
था । रोप्यातिरोप्यालघव शीघ्रपा
काणुणोत्तरा । अदाहिनोदोषह-
रावल्यामूत्रविवर्द्धना ॥
रोमम् । न० जले ।
रोमकम् । न० पांशुलवणे । अयस्का
न्तप्रभेदे । पु० रूमाभिधेनगरे ॥
रोमकन्द . । पुं० पिण्डालौ ॥

रोमकपत्तनम् । न० पश्चिमेकेतुमाल-
वर्षस्थनिरक्षदेशेविद्यमानेपत्तने ॥
रूमे ॥ तच्चाधुनारूमश्याम० इति
नाम्नाप्रसिद्धम् ॥
रोमकूप । पु० रोममूले ॥
रोमकेशरम् ।
रोमगुच्छम् ।
रोमगुच्छकम् ।
रोमगुल्मम् । } न० चामरे । अत्र चलके ॥
रोम । न० लोम्नि । अङ्गजे । तनूरु
हे ॥ तस्यफलंयथा । अल्परोमयुता
श्रेष्ठाजङ्घाहस्तिकरोपमा । रोमै
कैककूपकेस्यात्नृपाणान्तुमहात्म-
नाम् ॥ द्वे द्वे रोमेपण्डितानाश्रोत्रि
याणांतथैवच । रोमत्रयदरिद्राणा
रोगीनिर्मांसजानुक . ॥ अपिच ।
रोमैकैककूपकेपार्थिवानांद्वे द्वे ये
पण्डितश्रोत्रियाणाम् । त्र्याद्यैर्नि
स्वामानवाद्दुःखभाजःकेशाश्चैव
निन्दिताः पूजिताश्च ति ॥ रोह
ति । रुह० । नामन्सीमन्व्योम
न्रोमन्निन्स्यादिनासाधु । यद्वा ।
रूयते । रुगब्दे० रुङ्गतौ० भा
षणे वा मनिन् ॥
रोमन्थ पु० उद्गीर्य्यचर्वणे । पशूनाव
र्त्तितस्याकृष्यपुनश्चर्वणे । कुमार०
टी० भा० ॥
रोमभूमि स्त्री० चर्म्मणि ॥
रोमलता । स्त्री० रोमावल्याम् ॥

रोमवान् । त्रि॰ रोमशे । लोमविशिष्टे ॥

रोमविकार । ) पुं॰ रोमाञ्चे ।
रोमविक्रिया । ) स्त्री॰ रोमहर्षणे ।

रोमश । पुं॰ पिण्डालौ ॥ मेषे ॥ कुम्भिनि ॥ शूकरे ॥ त्रि॰ अतिशय लोमविशिष्टे ॥ रोमाण्यसन्त्यस्य । लोमादित्वात् श । । रलयोरभेद ॥

रोमशफल । पुं॰ डिण्डिशे । मुनिनिर्म्मिते । डिण्डसी॰ टिण्डा॰ हि॰ भा॰

रोमशा । स्त्री॰ दग्धावृक्षे ॥

रोमगुच्छम् । न॰ स्त्रीणां यके ॥

रोमहर्ष । पुं॰ पुलकितत्वे । रोमाञ्चे ॥

रोमहर्षण । पुं॰ सूते । इतिहासपुराणानाधारकेव्यासशिष्ये ॥ अस्य तैसर्जरोमाणिवचसाह्लादिता जिवत् । द्वैपायनस्य भगवतस्ततो वै रोमहर्षणः ॥ भवन्तमेव भगवान्व्याजहारस्वयंप्रभु ॥ विभीतकवृक्षे ॥ न॰ रोमाञ्चे ॥ रोम्णाहर्षणम् ॥

रोमाञ्च । पुं॰ रोमहर्षणे । रोमोद्गमे ॥ रोम्णामञ्चनं पूजनम् । भावेघञ् ॥

रोमाञ्चिका । स्त्री॰ रुदन्तीवृक्षे ॥

रोमाञ्चित । त्रि॰ जातपुलके । हृष्टरोमणि ॥ रोमाञ्च सञ्जातोस्य । तारकादित्वादितच् ॥

रोमाली । स्त्री॰ वय सन्धौ ॥ रोमावल्याम् ॥

रोमालु । पुं॰ पिण्डालौ ॥

रोमालुविटपी । पुं॰ कुम्भीवृक्षे ॥

रोमावली । स्त्री॰ नाभेरुपरिलोमश्रेण्याम् ॥

रोमाश्रयफला । स्त्री॰ भिञ्झिरिष्टाक्षुपे ॥

रोमोद्गम । ) पुं॰ रोमहर्षणे ।
रोमोद्भेद । ) पुं॰ रोमाञ्चे ॥

रोल । पुं॰ पानीयामलके ॥

रोलम्ब । पुं॰ भ्रमरे ॥

रोला । स्त्री॰ मात्रावृत्तान्तरे ॥ यथा । रोलावृत्तमवेहिनागपतिपिङ्गलभणितप्रतिपदमिहचतुरधिककला विंशतिपरिगणितम् । एकादशमधिविरतिरखिलजनचित्ताहरणा सुललितपदमदकारिविमलकविकण्ठाभरणम् ॥ यथा । तरतिपयोनिधिसलिलमयतिगिरिशिखरशिखोपरि॰ विशतिरसातलमटतियशस्तवसकलदिशोपरि । गगनगमनमभिनयतिसमंशशिनाश्रियमश्नुतिचित्रमिदनतथापिभवन्तभूपविसुश्रुति ॥

रोट । त्रि॰ वधके । हिंस्रे ॥ रोषति । रुष॰ । णिच् ॥

रोष । पुं॰ कोपे । क्रोधे ॥ अपमे

यमुदेतुमिच्छतातिमिररोषमयंधि
यापुर । अविभिद्यनिशाकृतत
म प्रभयानांशुमताप्युदीयते ॥
रोषणम् । रुषहिं सायाम् । भावे
घञ् ॥

रोषण । पु॰ पारदे ॥ हेमघर्षणे ॥
उषरे ॥ ऊषरे ॥ त्रि॰ क्रोधने ।
अमर्षणे ॥ रोषतितच्छील ।
रुष॰ । क्रुधमण्डार्थेभ्यश्चेतियु
च् ॥

रोषमय । त्रि॰ रोषादागते । मयड्वै
तिमयट् ॥

रोषित । त्रि॰ रोषंप्रापिते । रुष्टे ॥

रोह । पु॰ अङ्कुरे ॥ सादिनि ॥

रोहक । पु॰ प्रेतविशेषे ॥ त्रि॰
रोढरि । रोहकारे ॥ रुहबीजजन्म
निप्रादुर्भावे । ण्वुल् ॥

रोहण । पुं॰ गिरिप्रभेदे । विदूराद्रौ
॥ न॰ शुक्रे ॥ जन्मनि ॥ प्रादुर्भा
वे ॥

रोहन्त । पुं॰ द्रुमविशेषे । वृक्षात्
। रुह॰ । रुहिनन्दिजीविप्राणि
भ्यः षिदाशिषीतिझच् ॥ हलमा
र्गे ॥

रोहन्ती । स्त्री॰ लतान्तरे ॥ षित्वात्
ङीष् ॥

रोहि । पुं॰ बीजे ॥ वृक्षे ॥ धार्मि
के ॥ व्रतस्थाम् ॥ रोहति । रुह॰ ।
इगुपधात्कित्तिविदिच्छिदिकीर्ति

भ्यश्चेतीन् ॥ गन्धमृगे ॥

रोहिण । पुं॰ भूतृणे ॥ वटवृक्षे ॥
रोहितकवृक्षे ॥ न॰ कालभेदे ।
रौहिणे । दिनस्यनवमेमुहूर्त्ते ॥
सचपूर्वाह्णश्राद्धस्यगौणकालत्वे
नोत्तरावधि । अपराह्णश्राद्ध
स्यपूर्वावधि । एकोद्दिष्टश्राद्धस्य
समानकाल ॥ रोहति । रुह॰ ।
रुहेश्चेति॰ इनन् ॥ त्रि॰ रोहिण्यां
जाते । नक्षत्रेभ्योबहुलमितिलुक्
। लुक्तद्धितलुकि ॥

रोहिणि । स्त्री॰ रोहिणीनक्षत्रे ॥

रोहिणिका । स्त्री॰ रागादिनारक्तव
र्णायांस्त्रियाम् ॥

रोहिणी । स्त्री॰ अश्विन्यादिषुचतुर्थ
नक्षत्रे । ब्राह्म्याम् ॥ तत्रजातस्य
फलं यथा । स्याद्धर्मकार्येकुशलः
कुलीनः सुचारुदेहोविलसत्कले
वरः । स्मराग्निनाचाकुलिताखि
लाशयेयोरोहिणीज सधनीसमा
नी ॥ इति ॥ रोहिणीनक्षत्रे इति
गौरादिषुपाठान्ङीष् ॥ कण्ठ
रोगविशेषे ॥ अस्यनामानिसङ्
ख्याचयथा । रोहिणीपञ्चधाप्रोक्ता
कण्ठशालूकएवच । अधिजिह्वस्य
बलयोऽलासनामैकवृन्दकः ॥
ततोवृन्दं शतघ्नीचगिलायु कण्
ठविद्रधिः । गलौघ स्वरघ्नस्य
मांसतालस्थएवच ॥ विदारीकण्ठ

देशेतुरोगाश्चष्टादशस्मृता । इति ॥ धंनौ । सोरभेय्याम् ॥ रोहित वर्णयोगात्० ङीष् नौ ॥ लोहितायाम् ॥ रोहितशब्दात्स्त्रीत्वविवक्षायां० वर्णादनुदात्तात्तोपधात्तोनेतिङीप् तकारस्यनकारादेशश्च ॥ तडिति ॥ कटम्भरायाम् । कटुरोहिण्याम् ॥ सोमवल्के ॥ जिनानाविद्यादेवीविशेषे ॥ बलदेवस्य मातरि ॥ सुरभिकन्यायाम् ॥ नववर्षीयायाकन्यायाम् ॥ हरीतक्याम् ॥ वृत्तासारोहिणीस्मृतेति लक्षणात्। कपिलवर्णावर्त्तुलाकाराविरेचनेप्रशस्ता ॥ काश्मर्याम् ॥ रागाद्यैरञ्जितस्त्रियाम् ॥ रोहिण्याजातायाम् ॥ चित्रारेवतीरोहिणीभ्य स्त्रियामितिनक्षत्राणोलुक् । गौरादित्वान्ङीष् ॥

रोहिणीपतिः । पुं० इन्द्रौ ॥ रोहिण्या पति ॥ इन्दुभे ॥

रोहिणीरमण । पुं० वृषभे ॥ वसुदेवे ॥ चन्द्रे ॥

रोहिणीवल्लभः । ) पुं० चन्द्रमसि वसुदेवे ॥
रोहिणीश । )

रोहिण्यष्टमी । स्त्री० रोहिणीयुक्तभाद्रकृष्णाष्टम्याम्

रोहित् । पुं० चर्मे । ... । स्त्री०-मृग्याम् ॥ लताप्रभेदे रोहति ।

कम० । इरुकरोहिषुषिभ्यइति ॥

रोहित । पुं० मीनविशेषे । रोहू० इतिभाषाप्रसिद्धे ॥ अस्यलक्षणगुणाश्चयथा । कृष्णाः शल्कोश्चेतकुक्षिस्तुमत्स्योयं श्रेष्ठोसौरोहितोवृत्तवक्त्रः । कोष्णा बल्यरोहितस्यापिमांसंवातघ्नंस्निग्धमप्यातिवीर्यम् ॥ अपिच । रक्तोदरोरक्तमुखोरक्ताक्षोरक्तपक्षतिः । कृष्णपक्षोभषश्रेष्ठोरोहितः कथितोबुधैः ॥ रोहितः सर्वमत्स्यानांवरोवृष्योर्दितार्त्तिजित् । कषायानुरसः स्वादुर्वातघ्नोनातिपित्तकृत् ॥ ऊर्द्ध्वजत्रुगतान्रोगान्हन्याद्रोहितमुण्डकम् ॥ अस्यपाकप्रकारोयथा । रोहितोदरखण्डाश्चकासमर्दैनमर्दिता । कटुतैलपरिभ्रष्टाहिङ्गुमेथ्यवसयुता ॥ शकलपृष्ठसम्भृत-रोहितदधिमर्दितम् । वेसवारान्वितपाच्य प्रलेहविधिनाभृशम् ॥ तन्मुण्डस्यतु । रोहितस्योत्तमदेहप्रलेहेनावलेपितम् । योश्नातीहनर पूर्वभवेत्सस्मररूपभृत् ॥ रोहित. प्रवरोमत्स्यानातिपित्तकरोगुरु । वातहापुष्टिदोहृद्य. स्निग्धपथ्य समीरितः ॥ इति ॥ मृगविशेषे ॥ रोहितकद्रुमे ॥ हारभेदे ॥ रक्तवर्णे ॥ ऋषभाद्रिवासिगन्धर्वविशेषाणा.सञ्ज्ञायाम् ॥ न० कु

द्रुमे ॥ रक्तो ॥ स्वर्गशक्रशरासने । दण्ड आरे नाराचे दिविदश्यमा नेज्योतिर्विशेषे ॥ इन्द्रधनुरेवो- ल्यातादिनाऽज्ज्वलक्त सद्रोहितत्वा त् ॥ त्रि० रक्तवर्णविशिष्टे ॥ रोह ति । रुह० । रुहेरश्चलोवेतीतन् ॥ यद्वा । रोहणं रोह । सजातोऽ- स्य । तारकादित्वादितच् ॥

रोहितक । पुं० वृक्षविशेषे । रोहि णि । ख्रीहशत्रौ । दाडिमपुष्पके । सदाप्रसूने । रोहिडा० इ० भा०- प्र० ॥ रोहितोवर्णोस्यास्ति । अ- च । स्वार्थेकन् ॥

रोहितगिरि । पु० पर्वतान्तरे । रो हितास इ० भा० प्र० ॥

रोहितगिरीय । पु० आयुधजीविवि शेषे ॥ रोहितगिरिरभिजनो - स्यायुधजीविनः । छः ॥

रोहिता । स्त्री० रागादिनारक्तवर्णा- यांस्त्रियाम् ॥ वर्णादनुदात्तादिति पाक्षिकोङोप् तकारस्यनकारादेश स्तन ॥

रोहिताश्व । पुं० अग्नौ । वैश्वानरे ॥ लोहिताअश्वायस्य । वरुणस्त्व सितानश्वान्० कुबेर कुमुदोप मान् । हुताशन किंशुकाभान्० वायुर्धूम्रस्तथावर्णोदितिशालिहो- त्रात् ॥ रलयो सावर्ण्यात्रोहि ताश्व ॥ रोहितोसूगोवाहनमस्ये तिवा ॥ हरिश्चन्द्रनृपात्मजे ॥

रोहितिका । स्त्री० कोपादिनारक्तव र्णायामस्त्रियाम् ॥

रोहितेय । पु० रोहितके ॥ मोहा रौरोहितेय । स्याद्रक्तपुष्परोहित इतिरत्नकोष ॥

रोही । पु० रोहितके ॥ अश्वत्थे ॥ वटद्रुमे ॥ अवश्य रोहति । रुह० आवश्यकेणिनि ॥

रोहिष : । पु० रौहिषे ॥ न० तृणा न्तरे ॥

रोहीतक । पु० रोहितकद्रुमे ॥ रो हीतक प्लीहघातीरुग्ज्वारक्तप्रसा- दन रोहीतकोयकृत्प्लीहगुल्मो दर हर स्मृत ॥

रौक्ष्यम् । न० रूक्षतायाम् ॥ पारुष्ये ॥ रूक्षस्वभाव । ष्यञ् ॥

रौच्य । पुं० मनुविशेषे ॥ ॥ रुचे प्रजापते । पुत्रोरौच्योनामभविष्य ति ॥ बिल्वकाष्ठदण्डे । वैल्व ॥

रौद्र । पु० घर्मे । सूर्यतेजसि । आ तपे ॥ अस्यगुणायथा । आतप कटुकोरूक्ष स्वेदमूर्च्छातृषावह दाहवैवर्ण्यजननोनेत्ररोगप्रकोपण ॥ रसविशेषे ॥ षष्टिवत्सरान्तर्गतच त्वारिंशे ॥ तत्फलयथा । अल्प तोयाघनाश्चैवकीटका । प्रबला राजा ... पार्थिवादेविरौद्रे स ... । ५४ ॥ शृङ्गाराद्यष्ट

सान्तर्गतविशेषरसे । उग्रे ॥ त्रि॰ तीव्रे ॥ भीषणे ॥ रुद्रसम्बन्धिनि ॥ रुद्रदैवत्ये ॥ रुद्रस्येदम् । अण् ॥

रौद्री । स्त्री॰ चण्डयाम् ॥ ङीप् ॥ रुद्रजटायाम् ॥

रौप्यम् । न॰ रूप्ये ॥

रौप्यमाक्षिकम् न॰ तारमाक्षिके ॥

रौमम् । न॰ रौमके ॥ रुमायाभव म् । अण् ॥

रौमकम् । न॰ साभरि॰ डु॰ भा॰ प्र॰ लवणे । रौमे । वसुके ॥ रुमा याभवम् । तत्रभवइत्यण् । सञ्ज्ञा-याकन् त्रि॰ रोमकीभवस्तत्रा गतोवा । मलयादित्वाद्वण् ॥

रौमहर्षणि । पु॰ उग्रश्रवसि । सूते ॥ रोमहर्षणस्यापत्यम् । अत इञ् ॥

रौरव । पु॰ नरकविशेषे ॥ घोरे ॥ त्रि॰ चञ्चले ॥ घोरे ॥ धूर्त्ते ॥ रुरु सम्बन्धिनि ॥ रुरुर्भीरश्रृङ्गाख्य प्राणिविशेषः । तस्यायम् । तस्ये दमित्यण् ॥

रौहिण । पु॰ चन्दनवृक्षे ॥ न॰ दिनस्यनवमेमुहूर्त्ते । यथा । अत्र पूर्वाह्णे श्राद्धमभिधायरौहिणन्तु-नलङ्घयेदित्यभिधानेनपूर्वाह्ण श्राद्धस्यसङ्गवात्परोरौहिणपर्यन्तगौ णपूर्वाह्णकाल प्रतीयते । तेन

रौहिणं पूर्वाह्ण श्राद्धस्यगौणका-लस्तेनोत्तरावधि . अपराह्णश्राद्धस्यपूर्वावधिरित्यवगम्यते॰ ततश्च पूर्वदिनेसङ्गवात्पर रौहिणपर्यन्त तिथेर्लाभेपरदिनेमुहूर्त्तत्रयमात्रे-तत्तिथिलाभेपूर्वदिनेश्राद्धम् । रौहिणान्तरूपगौणपूर्वाह्णलाभात् नपरदिनेतथात्वभावात् । उभयदिने सङ्गवलाभेपरदिने॰ शुक्लपक्षे तिथि र्ग्राह्या तिवचनात् । रौहिनस्तुदिव-सस्यनवममुहूर्त्तस्तस्यज्योतिषोक्त-रोहिणीदैवतत्त्वात्रौहिणत्वमिति हरिश्राद्धतत्वम् ॥ त्रि॰ रोहि ण्याजाते ॥ सन्धिवेलादीत्यनेना ण् ॥

रौहिणेयः । पुं॰ बुधग्रहे ॥ हलायु धे । बलदेवे ॥ न॰ मरकतमणौ त्रि॰ गोवत्से ॥ रोहिण्याअपत्य म् । शुभ्रादित्वाट्ढक् ॥

रौहिष पुं॰ मृगविशेषे ॥ रोहिषत थाभेदमस्ति । शेषइत्यण् ॥ रोहित मत्स्ये ॥ न॰ कत्तृणे । रोहितइति॰ रोहिसइतिचख्यातेतृणे ॥ रोहिषतुव रतिक्तं कटुपाकव्यपोहति । हृत्क ण्ठव्याधिपित्तास्रशूलकासकफज्व-रान् ॥ रोहति । रुह॰ । रुहेवृद्धि श्चेतिटिषच् ॥

रौहिषी . स्त्री॰ मृग्याम् ॥ दूर्वायाम् ॥

॥ रकारसमाप्तः ॥

## लकारस्यप्रारम्भः





ल । पुं॰ इन्द्रे । शक्रे ॥ लकारे ॥ लघुस्वरे ॰ । ॰ ॥ न॰पृथ्वीबीजे ॥ लीयते । लीङ्॰ । अन्येष्वपिदृश्यतइतिडः ॥

लकच । पुं॰ डहौ । लकुचे । इतिशब्दरत्नावली ॥

लकुच । पुं॰ लिकुचे । डहौ । दृढवल्कले । स्थूलस्कन्धे । क्षुद्रपनसे । वड्हल॰ इ॰ गा॰ प्र॰ ॥ अस्यगुणाः । आमलकुचमुष्णञ्चगुरुविष्टम्भकृत्तथा । मधुराम्लतथात्यर्थदोषत्रितयरक्तकृत् ॥ शुक्राग्निनाशनञ्चापिनेत्रयोरहितस्मृतम् । सुपक्वंतत्तुमधुरमम्लंचानिलपित्तकृत् ॥ कफवह्निकररुच्यं वृष्यंविष्टम्भकञ्चतत् ॥ लक्यते । लकआस्वादने । बाहुलकादुचः ॥

लक्तक । पुं॰ जीर्णवस्त्रखण्डे । कर्पटे । लत्ता॰ इ॰ भ॰ प्र॰ ॥ इवद्रव्य येनपूयतेतत्क्ष्वेडोयमितिस्वामी ॥ तत्तुल्यंवस्त्रेपिवर्त्तते । मलिनत्वादिदुष्टजीर्णवस्त्रखण्डे॰ इतिमुकुटः ॥ प्रस्वेदादिमार्जनार्थंहस्तस्थवस्त्रखण्डस्यसञ्ज्ञेयमितिनव्याश्चाहुः ॥ लक्तते । चोलजीर्णीर्षे । बाहुलकात्तन् । स्वार्थेकन् । यद्वा । लक्यतेस्म । लक॰ । क्तः । स्वार्थेकन् ॥

लक्तकर्म्मा । पुं॰ पट्टिकाख्ये । रक्तवर्णलोध्रे ॥

लक्षम् । न॰ व्याजे । अपदेशे । परद्रोहफलकातिरिक्तव्याजे ॥ शरव्ये ॥ न॰ स्त्री॰ दशायुतसङ्ख्यायाम् १००००० लाख इ॰ भा॰ ॥ लक्षणम् । लक्षआलोचने । घञ् ॥ लक्ष्यतेवा ॥

लक्षक । त्रि॰ लक्षयितरि । लक्षयतियस्तस्मिन् ॥ यथा ॥ लक्षकंनाम लक्षयति । यादृशार्थस्यसम्बन्धवतिशक्तान्तुयद्भवेत् । तत्तल्लक्षक नामतच्छक्तिविधुरंयदि ॥ यादृशार्थसम्बन्धवतियन्नामसङ्केतिततदेवतादृशार्थेलक्षकम् । यदितादृशार्थेशक्तिशून्यंभवेत् । सैन्धवादयस्तुशब्दास्तुरगादिसम्बन्धिनि॰ लवणादाविवतुरगादावपिशक्ताएव । गङ्गादयस्तुतीरादावसङ्केतिता । तत्सम्बन्धिनीरादिशक्तास्तेनगृहीताएवतीरादान्वयबोधयन्तितत्रलक्षकाएव ॥

लक्षणम् । न॰ नाम्नि ॥ चिह्ने ॥ स्वरूपे ॥ फले ॥ लक्ष्यतेज्ञायतेपदार्थोनेन । लक्षदर्शनाङ्कनयोः । करणेल्युट् ॥ तद्द्विविधम् । इतरभेदानुमापकम् । व्यवहारप्रयोजकञ्चेतिन्यायमतम् ॥ व्याकरणमतन्तु । कृत्तद्धितसमासानामभिधानंनियामकम् । लक्षणन्त्वत्रभिज्ञाना तदभिज्ञानसूचकमिति ॥ सजाती

थविजातीयव्यावर्त्तकोलक्ष्यगत ' कश्चिल्लोकप्रसिद्धआकारोलक्षणमिति मीमांसका ' ॥ अथयोपिपदार्थानानान्तर्यातिपृथक्त्वश . । लक्षणेनतुसिद्धानामन्त्यान्तिविपश्चित इतिपूर्वाचार्या . ॥ स्वरूप तटस्थ द्विधालक्षणंस्यात्स्वरूपस्यबोधोयतोलक्षणाभ्याम् । स्वरूपेप्रविष्टात् स्वरूपेऽप्रविष्टाद्यथाकाकवन्तोगृहा . खविलक्ष ॥ शास्त्रे ॥ इतिवैयाकरणा : ॥ पुं॰ रामभ्रातरि । सौमित्रौ ॥ सारसखगे ॥ लक्षेश्चरादित्वान्ताच्चेरट् चेतिनप्रत्ययस्तस्याडागमश्च ॥

लक्षणा । पु॰ वृत्तिविशेषे ॥ यथा । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ॥ साचत्रिविधा । जहल्लक्षणा ॰ अजहल्लक्षणा ॰ जहदजहल्लक्षणेति । यथास्थानमासांलक्षणमनुसन्धेयम् ॥ शक्यसम्बन्धे ॥ यथा । लक्षणाशक्यसम्बन्धस्तात्पर्यानुपपत्तित : ॥ अस्यार्थ : । गङ्गायांघोषइत्यादौ ॰ गङ्गापदस्यशक्यार्थेप्रवाहरूपे ॰ घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वायत्र प्रतिसन्धीयते तत्रलक्षणयातीरस्यबोध ' । साच शक्यसम्बन्धरूपा । तथाहि प्रवाहरूपशक्यार्थसम्बन्धस्यतीरेगृहीतत्वात्तीरस्यस्मरणंतत : शाब्दबो

धइतिसिद्धान्तमुक्तावली ॥ शब्दानामौपचारिकेषुप्रवृत्तिषु ॥ यथा । आधारे कारणे कार्ये समीपे चोपकारके । धर्माद्यनुक्तौचेति लक्षणासूरयोजगु ॥ मुख्यार्थानुगमानुपपत्तेर्गुणार्थप्रतिप्रतीतिकारिणीलक्षणासूरयस्तद्विदोजगु . ऊचु । कुत्रकुत्रेत्याह । आधारइत्यादि । तत्रतावदाधारे यथा । मञ्चा क्रोशन्तीति । अत्रहिमञ्चानामधिकरण भूतानामार्थेतन्यात् ॰ रोदनलक्षणेनक्रोशनार्थेनाननुगमादानर्थक्यात् ॰ तत्स्थानांबालानांसम्बन्धियत्क्रोशनतत्त्वेषुतात् सख्यात्मलक्षणयोक्तम् ॥ कारणे तुलक्षणायथा । शालीन्वृष्टोदेव इति । अत्रहिमुख्ययावृत्याशालिवर्षणस्यार्थोनन्वितइतिलक्षणया ॰ कालोचितायांवृष्टौशालिकारणभूतायाप्रतिबन्धवैकल्पयोरसम्भावनात् ॰ सम्पन्नमेवशालिलक्षणंकार्यमुपचर्यते । अथवा आयुर्घृतमिति । आयुष्कारणेघृते ॰ आयुषस्तत्कार्यस्योपचार . ॥ एव कार्येपि लक्षणासम्भवति ॰ यथा । ऊर्णा : प्रावरणा : केचिदपरे तूलावास इति । अत्रकिलसूत्रभाव विना भाविना कम्बलपटादि भावेना परिणतयो रूर्णातूलयोर्मुख्ययावृ

त्याप्रावरणत्वमसम्भावितम् । तत्
कार्य्यस्य कम्बलपटात्मन एव तदुपपत्ते.
। ततश्च कम्बलपटादौ धवलयोः कार
णभूतयोरूर्णाकार्पासयोरूपचार ।
कृत ॥ समीपार्थ लक्षणा यथा ।
गङ्गायां घोष इति । अत्र हि मुख्यया
वृत्त्या प्रवहज्जलरूप स्रोत गुणवृ
त्त्या वात हि शेष यदि किञ्चित् गङ्गाश
ब्द कथयेत् तदाऽस्या सम्भाव्येव ग्रा
माधिकरणतेति सामर्थ्यात्तत्सा
मीप्यलक्षणत्वेन तद्व्यवतिष्ठते ॥
उपकारकेऽपि लक्षणा दृश्यते यथा ।
भिक्षा वासयन्ति कारीषोऽध्यापयती
ति । अत्र हि किल न भिक्षास्तत्प्राव
रणाचलकरेणगृहीत्वागमननिषेध-
कुर्व्वन्ति । नापि सर्व्वथाऽस्मात्स्था
नान्न गन्तव्यमिति प्रणयवचनैरवस्था-
पयन्ति । अपितु प्रचुरा नव्यञ्जनत्व
स्वस्थिति हेतुत्वान्निरसनक्रियासुपका
रकत्वेन सम्भाव्यमाना प्रयोजक-
त्वेनोपचर्य्यन्ते । एव वनकारीषोऽङ्ग
प्रत्याधीर्ष्विति ब्रुवन् माणवकमध्याप
यति । नापितच्छरीरमनुप्रविश्य भू
तवेतालादिभिरिवैन पाठयति ।
किन्तर्हि शीतापनुत्तिहेतुतयाध्यय-
नविघ्नप्रकारकत्वेनानुकूल्य भज
स्तत्प्रयोजकत्वेनोपचरित ॥ कि
चधर्म्माद्यनुकृताविति आदिग्रह
णादाकारानुकृतौ या । तत्र धर्म्मानु
कृतौ यथा । सिंहो माणवक इति
वाहीको गौरिति । अत्र हि नञ्चयथा
सिंहधर्म्माणां शौर्य्यादीनामनुकृत्यर्थं
माणवकेसामानाधिकरण्येन सिंह
शब्द प्रवृत्त । मुख्यया वृत्त्या तस्य-
सिंहत्वस्यासम्भवात् । वाहीकेति
पृष्ठवहनत्वासम्भवात् तिष्ठक्षगाग
च्छन्त्वत्वादिबलीवर्द्दगतधर्म्मानुका
रणाय गोशब्द. सामानाधिकरण्ये-
नोपचरितवृत्तिरेव प्रवृत्त । मुख्यया-
वृत्त्या तथाऽनन्वयात् ॥ एवमाकारा
नुकृतौ यथा । सूचिभेद्यैस्तमोभिरि
ति । अत्र हि तमसोऽमूर्त्तत्वात्सूचि
भेद्यत्व मुख्यया वृत्त्यानसङ्गतमतोल
क्षणयातिनिविडत्वस्तुमाकृति सू
चिभेद्यत्वेनानुकृता । एव नामघ
नानि तमांसि यद्वद्वा दिवत्सूच्यादि-
ना भेदमप्येषां शक्य शक्यमित्यर्थ. ॥
मानान्तरोपरोधमुख्यार्थस्यापरिग्रहे
जाते मुख्याविनाकृतेर्येयावृत्ति
सैवलक्षणा प्रोक्ता तिपूज्यपादाचा-
र्य्या इत्येषायाम् ॥ प्रमाणे ॥
लक्ष्यतेऽनयेति लक्षणा । टाप् ॥
सारस्या लक्षणा कश्चिदिति मेदिनि
कर ॥

लक्षणार्थ । पुं० लक्षणस्य प्रयोजने ॥
समानासमानजातीयव्यवच्छेदे ॥
लक्षणस्य अर्थ ॥

लक्षणीय । त्रि० लक्ष्ये ॥ भाव

मीर्ये ॥
लचतम् । न० लचणाव्त्याप्यत्वे ॥
लचा । स्त्री० दशायुतसङ्ख्यायाम् ॥
लक्षित . । त्रि० ज्ञापिते ॥ आलोचिते ॥ दृष्टे ॥ अङ्किते ॥ लचे . कर्मणिक्त ॥ लक्षणाश्रये ॥
लक्षितलक्षणा । स्त्री० लक्षितेलक्षणायाम् ॥
लक्षिता । स्त्री० परकीयान्तर्गतनायिकाभेदे ॥
लक्ष्मणः । पुं० सौमित्रौ । श्रीरामभ्रातरि ॥ सारसे ॥ श्वर्थे ॥ न० चिन्हे ॥ नामनि ॥ लचयति । लच० । चुरादिग्यताचर्च रट्चतिनप्रत्ययस्तस्यमुडागमोपीर्च्ये क्ते ॥ त्रि० श्रीयुक्तसश्रीके ॥ लक्ष्मीरस्त्यस्य । यामादित्वान्न । लक्ष्मणाधर्मेतिगणसूत्रेणात्वंबोध्यं ॥
लक्ष्मणप्रसूः । स्त्री० सुमित्रायाम् ॥
लक्ष्मणा । स्त्री० सारसस्त्रियाम् ॥ श्वेतकण्टकार्याम् । क्षुद्रश्वेतकन्त्याम् । काटुवीर्त्ताख्याम् नि ' वेङ्फलायाम् । चन्द्रपुष्पायाम् ॥ औषधीभेदे । पुत्रकन्दायाम् । पुत्रदायाम् । नागपत्राम् । श्वेतबिन्दुच्छदायाम् । लक्ष्मणाकन्दइतिनाम । गौडदेशेप्रसिद्धे ॥ गुणास्तुयथा । पुत्रकाकारकालस्विन्दुभिर्लाञ्छितासदा । लक्ष्मणापुत्रजननी वस्तगन्धाकृतिर्भवेत् ॥ कथितापुत्रदावश्यं लक्ष्मणामुनिपुङ्गवै ॥ श्रदन्तत्वाट्टाप ॥ दुर्योधनकन्यायाम । साम्बपत्न्यां ॥
लक्ष्म न० चिह्ने ॥ प्रधाने ॥ लचयति० लच्यतेवा । लच० । मनिन् ।
लक्ष्मीः । स्त्री० विष्णुपत्न्याम् । पद्मालयायाम् ॥ पद्मायाम् । लोकमातरि । मायाम् ॥ सम्पत्तौ ॥ शोभायाम् ॥ ऋद्ध्यौषधे ॥ वृद्धिनामौषधे ॥ फलनीवृचे ॥ सीतायाम् ॥ वीरभार्यायाम् ॥ स्थलपद्मिन्याम् ॥ हरिद्रायाम् ॥ शम्याम् द्रव्ये ॥ मुक्तायाम् ॥ मोक्षप्राप्तौ ॥ लक्षयति० पश्यतिनीतिश्रम् । लच० । लच्चेर्मुट्चेति० ईप्रत्ययस्तस्यमुट् ॥ लचते० लच्यतेवा दुर्गायाम् ॥
लक्ष्मी । स्त्री० लक्ष्म्यर्थेषु ॥ कृदिति ङीष् ॥ लक्ष्मीर्लक्ष्मीहरिप्रियामितिद्विरूपाभिधानम् ॥
लक्ष्मीकान्तः । पुं० नारायणे ॥
लक्ष्मीगृहम् । न० रक्तोत्पले ॥ लक्ष्म्यागृहमिवगृहम् ॥ लक्ष्म्यावेश्मनि ॥
लक्ष्मीजनार्द्दनः । पुं० शालग्रामविशेषे ॥ तल्लक्षणयथा । एकद्वारेचतुश्चक्रं नवीननीरदोपमम् । लक्ष्मी

जनार्द्दनश्च यद्वत् वनमालया ॥ इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

लक्ष्मीताल । पुं॰ श्रीतालवृक्षे ॥ तीर्थविकाशपरिच्छेदविशेषे ॥

लक्ष्मीनारायण । पुं॰ शालिग्रामविशेषे ॥ तल्लक्षणं यथा । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥

लक्ष्मीनृसिंह । पुं॰ शालिग्रामविशेषे ॥ तल्लक्षणन्तु । द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् । लक्ष्मीनृसिंहं विज्ञेयं गृहिणाञ्च सुखप्रदम् ॥

लक्ष्मीपति । पुं॰ वासुदेवे । नारायणे ॥ लक्ष्म्याः पतिः नरपतौ ॥ पूगे ॥ लवङ्गवृक्षे ॥ सम्पत्तियुक्ते ॥

लक्ष्मीपुत्र । पुं॰ कामदेवे तुरङ्गमे ॥ लवे ॥ कुशे ॥

लक्ष्मीपुष्प । पुं॰ पद्मरागमणौ ॥

लक्ष्मीफल । पुं॰ विल्ववृक्षे ॥ लक्ष्मीप्रदं प्रियं वा फलमस्य । शाकपार्थिवादि ॥

लक्ष्मीवान् । पुं॰ पनसवृक्षे ॥ क्षीरोहितवृक्षे ॥ त्रि॰ श्रीले । श्रीमति । श्रीसमन्विते ॥ लक्ष्मीरस्यास्ति । मतुप् । मादुपधायाश्चेति वत्वं ॥

लक्ष्मीवेष्ट । पुं॰ श्रीवेष्टे ॥

लक्ष्मीश । पुं॰ श्रीशे । विष्णौ ॥

लक्ष्मीसमाह्वया । स्त्री॰ रामपत्न्याम् । सीतायाम् ॥ लक्ष्मीसमम् आह्वयो यस्याः ॥

लक्ष्मीसहज । पुं॰ चन्द्रे ॥

लक्ष्म्याराम । पुं॰ वनविशेषे ॥ लक्ष्म्याः आरामः ॥

लक्ष्यम् न॰ शरवेध्ये । शरव्ये ॥ व्याजे । अपदेशे ॥ त्रि॰ अनुमेये ॥ लक्षणयावोध्ये ॥ दर्शनीये ॥ लक्षणम्॰ लक्ष्यते वा । लक्षआलोचने । ण्यत् ॥

लक्षीकृत । त्रि॰ वेहुमिष्ठे ॥

लगडम् । त्रि॰ चारुणि । बन्धुरे । मनोज्ञे ॥

लगित । त्रि॰ सङ्गयुक्ते । लगाङ्॰ भा॰ ॥ लगेसङ्गे । क्तः ॥

लगुड । पुं॰ दण्डे । दण्डकाष्ठे । लाठी॰ इ॰ भा॰ ॥

लग्न । पुं॰ स्तुतिपाठके । प्रातर्गेये ॥ न॰ मेषादिराशीनामुदये । त्रि॰ शङ्कागात्मके ॥ त्रि॰ लज्जितेसक्ते ॥ लगतिफले । लगे॰ । क्षुब्धस्वान्तेति क्तस्येडभावो निष्ठानत्वमपि निपात्यते ॥

लग्नक । पुं॰ प्रतिभुवि यो हि दायं विनाऽन्यकृतऋणस्य परिशोधं कर्त्तुमात्मानं स्वीकरोति॰ यथा । यद्य

यत्तृषापनयनं नकरिष्यति० तच्च इह करिष्यामीतितस्मिन्। जामन० द्रु० भा० ॥ लजतेस्म । ओलजी ब्रीडने। गत्यर्थेतिक्त । स्वार्थे क. ॥

लघट्। पुं० पवने। वायौ ॥ लङ्घते। लघिगतौ। लङ्घेर्नलोपश्चेत्यटि ॥

लघटिः। पुं० वायौ ॥

लघिमा। पुं० शिवैश्वर्यप्रभेदे ॥ येनलघुर्भवति० यत सूर्यरश्मीनालम्ब्यादित्यलोक याति ॥ लघुतायाम् ॥ लघोर्भाव.। इमनिच् ॥

लघिष्ठः। त्रि० अत्यल्पके। अयमेषामतिशयेनलघुः। अतिशायने० इष्ठन्। भेले ॥

लघीयान्। त्रि० अतिशयेनलघौ। लघुतरे ॥ यथालघीयान्शब्दोपदेशोगरीयानपशब्दोपदेश इति ॥ अयमनयोरतिशयेनलघुः। ईयसुन् ॥

लघुः। पुं० एकमात्रेवर्णे। यथा। गुरोर्विभिन्नोलघुरेकमात्रोह्रस्वादिपूर्वोपिलघुर्विकल्पात्। क्वचित् सबिन्दुः क्वचिद्द्विबिन्दुरोकारयुक्तोपिलघुः क्वचित्स्यात्। उच्चार्यमाणात्स्वरितप्रयत्नाद्द्विमात्रवर्णाः क्वचिदेकभावम्। भजन्ति भाषास्वथसंस्कृतेषु विनाशमित्थं वदधानयोज्यम् ॥ स्त्री० पृक्कानामौषधौ ॥ न० शीघ्रे ॥ कृष्णागुरुणि ॥ लामज्जके ॥ सत्वगुणे ॥ विशेषनचशाद्वी। यथा। पुष्याश्विन्यभिजिद्धस्तालघुक्षिप्र गुरुस्तथा। अत्रपण्यरतिज्ञानभूषाशिल्पकलादिकम् ॥ त्रि० अगुरौ। मनोज्ञे। निःसारे। ह्रस्वे। लङ्घते। लघि० लघिबंहोर्नलोपश्चेति कुनलोपश्च। लङ्घतेवा ॥

लघुकाम। त्रि० अल्पयाचके ॥

लघुकाय। पु० अल्पायुषि। छागे। वर्करे। त्रि० क्षुद्रशरीरे ॥

लघुकाश्मर्य.। पुं० कट्फलवृक्षे ॥

लघुक्रिय.। त्रि० क्षिप्रव्यापारे ॥

लघुखट्विका। स्त्री० आसन्द्याम्। क्षुद्रखट्वायाम् ॥

लघुगर्ग.। पुं० चिकटकमत्स्ये ॥

लघुचर्भिटा। स्त्री० मृगेर्वारौ ॥

लघुजङ्गलः। पुं० लावकपक्षिणि ॥

लघुतमः। त्रि० लघिष्ठे ॥ अतिशायनेतमप् ॥

लघुदन्ती। स्त्री० क्षुद्रदन्तीवृक्षे ॥

लघुदुन्दुभिः। पु० ढगडवाद्ये ॥

लघुद्राक्षा। स्त्री० काकलीद्राक्षायाम्। निर्बीजायाम् ॥

लघुनाम। न० अगुरुणि ॥

लघुपञ्चमूलम्। न० क्षुद्रपञ्चमूल

पाचने ॥ तद्यथा । शालपर्णीपृश्निपर्णीवार्ताकीकण्टकारिका । गोक्षुर पञ्चभिश्चैतै' कनिष्ठपञ्चमूलकम् ॥ अस्यगुणा : । पञ्चमूलं लघु स्वादुवल्यंपित्तानिलापहम् । नात्युष्णं ह ङ्य ग्राह्विज्वरश्वासाश्मरीप्रणुत् ॥

लघुपञ्चमूली । स्त्री० लघुपञ्चमूले । शालपर्ण्यादौ ॥ पञ्चानांमूलानांसमाहार . पञ्चमूली । लघ्वीचासौपञ्चमूलीचेतिविग्रह' ॥

लघुपत्रिका । स्त्री० रोचन्याम् ॥ गुड़ारोचन्याम् ॥

लघुपत्री । स्त्री० अश्वत्थीवृत्ते ॥

लघुपिच्छिल .। पु० भूकर्बुदारके।

लघुपुष्प : । पु० भूमिकदम्बे ॥

लघुवदर । पु० क्षुद्रकोली । सूक्ष्मफले ॥

लघुवदरी । स्त्री० भूवदर्याम् ॥

लघुब्राह्मी।स्त्री० क्षुद्रब्राह्म्याम्।जलोद्भवायाम् । सूक्ष्मपत्रायाम् ॥

लघुमन्थ' । पु० क्षुद्राग्निमन्थे ॥

लघुमास । पु० तित्तिरिपक्षिणि ॥

लघुमासी । स्त्री० गन्धमांस्याम् । भूतकेश्याम् ॥

लघुराजमृगाङ्क .। पु० औषधविशेषे ॥ यथा । घृततीक्ष्णायुत सुरसास्वरसोलघुराजमृगाङ्कइतिप्रथित: । अपहन्त्यनिलान्सबलान्बहु

लाग्निजभक्तरिपून्निवक्त्रधरइति लोलिम्बराज ॥ *

लघुलयम् । न० वीरणमूले । नलदे ॥ लङ्घतेरोगान्० लङ्घ्यतेवाभूम्नात् । लघि० । ल घिः ङ्घोरिति कु' । लीयते । लीङ्श्लेषणे । अच् । लघुचतत्लयश्च ॥

लघुसदाफला । स्त्री० क्षुद्रोदुम्बरे ॥

लघुहस्त' । पु० शीघ्रवेधिनि ॥

लघुहसक । पु० क्षतहंसे ॥

लघुहेमदुग्धा । स्त्री० लघूदुम्बरिकायाम् ॥

लघूदुम्बरिका । स्त्री० क्षुद्रोदुम्बरिकायाम् ॥ लघुसदाफलायाम् ॥

लघूत्तरम् । न० मात्राकाले ॥ निमेषोन्मेषणे मात्राकालोलघ्वत्तरन्तथेतिपुराणम् ॥

लघ्वाशी । त्रि० परिमितमेध्याशिनि लघुपरिमित मेध्यञ्चाशितु शील यस्य ॥ निद्रालस्यादिचित्तलयकारिरहिते ॥

लघ्वी । स्त्री० लाघवयुक्तायाम् ॥ स्यन्दनस्यप्रभेदे ॥ पृक्कायाम् ॥ दन्त्याम् ॥ लघुस्त्रियाम् ॥

लङ्का । स्त्री० दक्षिणभारतवर्षस्य निरक्षदेशेविद्यमानायारक्ष' पुर्याम् । अधुनाशैलन्०इतिख्यातायाम् ॥ जम्बूद्वीपस्योपद्वीपविशेषे शाखायाम् ॥ शाकिन्याम् ॥

कुलटायाम् ॥ धान्यविशेषे । करालत्रिपुटायाम् ॥ लक्यतेसुख मस्याम् । लकआस्वादने । चुरादि । एरच् । घञ्वा । पृषोदरादित्वान्नुम् । नुम्यनुपधत्वान्नलि . ॥ यद्वा । रमन्ते स्याम् । वा कुलकात्कोलत्वम् ॥

लङ्कादाही । पु० हनूमति ॥

लङ्काधिपतिः । लङ्कापतिः । पुं० रावणे ॥

लङ्कापिका । स्त्री० पृक्कायाम् । पिण्डिङ्गाक० इ० गौ० दे० भा० प्र० ॥

लङ्कामलय । पु० लङ्काद्वीपस्थमलय शैले ॥

लङ्कायिका । स्त्री० ) लङ्कारिका । स्त्री० लङ्कायिकायाम् ॥

लङ्कास्थायी । पुं० वृक्षविशेषे । लङ्कास्थ्याम् । लङ्कासिज० इ० गौ० दे० भा० प्र० ॥

लङ्केश । पुं० रावणे ॥

लङ्कोपिका । स्त्री० पृक्कौषधौ ॥ लङ्कायामुप्यते । टुवप्बीजसन्ताने । क्वुन् । कंचिस्पीतिवश्च . ॥

लङ्कोयिका । स्त्री० पृक्कायाम् ॥ लङ्कायामूयते । जयीतन्तुसन्ताने । क्वुन् ॥

लङ्ग । पुं० लङ्गे ॥ खिङ्गी । लाङ्

इ० गौ० भा० प्र० विटे ॥

लङ्गूलम् । न० लाङ्गूले । पुच्छे ॥

लङ्घनम् । न० उपवासे ॥ कर्षणे ॥ चतुष्प्रकारासंशुद्धि पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेतिलङ्घनमितिचरकोक्तौ यथानिर्णीतत्वात् ॥ अनशने ॥ लङ्घनेनक्षयं नीतेदोषेसन्धुक्षितेऽनले । विज्वरत्वलघुत्वञ्चक्षुच्चैवास्योपजायते ॥ इत्यनशनरूपस्य लङ्घनस्यफलकथनात् ॥ त्रिरात्र पञ्चरात्र वाद्दशरात्रमथापिवा । लङ्घन सन्निपातेषु कुर्यादारोग्यदर्शनादितिचक्रपाणिदत्तः ॥ क्रमणे ॥ प्लवने ॥ अश्वतृतीयगतौ ॥ प्लुतन्तुलङ्घन पक्षिमृगगत्यनुकारकमितिहेमचन्द्रोक्ते ॥ क्रमणे । यथा । नचाग्निं लङ्घयेद्धीमान् नोपदध्यादध . क्वचित् । नचैन पादत. कुर्यान्मुखे ननधमेद्बुधः ॥

लजकारिका । स्त्री० लज्जालौ । वराहक्रान्तायाम् । समङ्गायाम् । तिलगर्भायाम् । नमस्कार्याम् ॥

लज्जा । स्त्री० मन्दाक्षे । त्रपायाम् सुशीलस्यभार्येयम् । पश्यशान्तिम ॥ क्वतेऽकरणीयेपरज्ञानसम्भाव्याद . खे ॥ अकरणीयाप्रवृत्ति जनकोऽन्त:करणस्यवृत्तिविशेषे ॥ लज्जनम । ओलस्जीव्रीडने ।

गुरीश्च्छलद्रुथ । भल्लजम्भ-
ग्नि । टाप् । लज्जालौ ॥
लज्जालु । पु॰ स्त्री॰ वराहक्रान्तायाम् । नमस्कार्याम् । खदिरपत्रिकायाम् । सङ्कोचिन्याम् ॥ लज्जालु शीतलातिक्ताकषायाकफपित्तनुत् । रक्तपित्तमतीसारयोनिरोगान्विनाशयेत् ॥
लज्जाशील । त्रि॰ अपत्रपिष्णौ । लज्जिते ॥
लज्जित : । त्रि॰ लज्जायुक्ते । सलज्जे । ह्रीणे । ह्रीते ॥ लज्जासञ्जातास्य । तारकादित्वादितच् ॥
लज्जिरी । स्त्री॰ लज्जालौ ॥
लज्या । स्त्री॰ लज्जायाम् ॥ इतिशब्दरत्नावली ॥
लञ्ज । पु॰ पदे ॥ कच्छे ॥ पुच्छे ॥
लञ्जिका । स्त्री॰ वेश्यायाम् ॥
लट । पु॰ प्रमादवचने । दोषे । लटति । लटवाल्ये । अच् ॥
लटक । पु॰ दुर्जने ॥ संज्ञायांकन् ॥
लटपर्णम् । न॰ त्वचे ॥
लट । पुं॰ दुर्ज्जने ॥
लट्व : । जातिविशेषे । नट॰इ॰भा॰ ॥ रागभेदे ॥ तुरङ्गमे ॥ इत्युणादिकोष ॥
लट्वा । स्त्री॰ करञ्जप्रभेदे । फले । चवर्ये ॥ पक्षिविशेषे ॥ कुसुम्भे ॥ लटति । लट॰ । अशूप्रुषिलटीति क्वन् । टाप् ॥
लडह । त्रि॰ मनोज्ञे ॥ इतित्रिकाण्डशेष ॥
लड्डु । त्रि॰ दुर्जने ॥ इतिशब्दरत्नावली ॥
लड्डुक । पुं॰ मोदके । लड्डू॰लाडू॰ इ॰भा ॥ लड्डुकोदुर्ज्जरोगुरुरितिराजवल्लभ ॥ दधिशाल्यस्तथादुग्धकानिक्यामाषपर्पटा । शूरणार्द्रककूष्माण्डशालूकामिषमत्स्यजा : ॥ नालिकेरप्रियालश्चमज्जाकूष्माण्डकादय । एतेषांलड्डुका : प्रोक्ता सम्भवन्त्यन्यतोपिच ॥
लण्ड्र । पु॰ लण्डनइतिख्यातेइङ्गलपुरे ॥
लण्ड्ज । पु॰ लेण्ड्ज । इङ्गरेजे ॥
लता । स्त्री॰ प्रियङ्गौ ॥ शाखायाम् ॥ पृक्कायाम् । ज्योतिष्मत्याम् ॥ लताकस्तूरिकायाम् ॥ माधव्याम् ॥ दूर्वायाम् ॥ शाखिशाखायाम् ॥ अशनपर्ण्याम् ॥ कैवर्त्तिकायाम् । सारिवायाम् ॥ वल्ल्याम । व्रतती ॥ लतति । लति । सौत्रोवेष्टनार्थे । लतयाघातेवा । पचाद्यच्टाप् ॥
लताकस्तूरिका । स्त्री॰ लताकस्तूर्याम् । दक्षिणदेशजायाम् । मुष्कदाना॰इतिख्यातायाम् ॥ लताकस्तूरिकातिक्तास्वाद्वीवृष्याहिमालघु : ।

चक्षुष्याऽङ्गनीस्त्रीष्टाभ्यास्याश्च ।गच्छत् ॥

लताजिह्व । पुं० सर्पे ॥ लतेवजिह्वाऽस्य ॥

लतातरु पुं० तालवृक्षे ॥ नारङ्गवृक्ष ॥ शालवृक्षे ॥

लताद्रुम । पुं० लताशाले । अश्वकर्णाख्ये । तार्क्षे ॥

लतापनसः । पुं० चलाले । चित्रफले । सुखाशे । नाटाम्रे । तरमुर्ज्जे ति० तरबूज्ज० चख्याते ॥

लतापृक्का । स्त्री० समुद्राम्लायाम् । पिण्डङ्गशाक० बू० गौ० दे० भा० प्र० ॥

लताफलम् । न० पटोले । लतायाः फले ॥

लताभद्रा । स्त्री० भद्रालीवृक्षे ॥

लतामणिः । पुं० विद्रुमे । प्रवाले ॥

लतामरुत् । स्त्री० पृक्कायाम् ॥

लतायष्टि । स्त्री० भण्डीर्याम् । मञ्जिष्ठायाम् ॥

लतायावकम् । न० प्रवाले ॥

लतारसन । पुं० सर्पे ॥

लतार्क । पुं० दुद्रुमे । हरिद्वर्णपलाण्डौ ॥ लतासुश्वर्क्यतेचच्यतेवावि रुवलच्चणयानिन्युते । चर्कस्तवने० अर्चपूजायांवाघञ् ॥

लतार्ककः । पुं० दुद्रुमे ॥ स्वार्थेकन् ॥

लतालक । पुं० गजे । हस्तिनि ॥

लतावेष्ट । पु० देशविशेषे ॥ रतिबन्धप्रभेदे ॥ यथा ॥ बाहुभ्यांपादयुग्माभ्यांवेष्टयित्वाप्रियभवेत् । लघुलिङ्गताडनयोर्नीलता वेष्टोयमुच्यते ॥

लतावेष्टितकम । पुं० आलिङ्गनभेदे॥

लताशङ्कुः । पु० शालवृक्षे ॥

लताश्रम । पु० लतामण्डपे ॥ लताविशिष्ट आश्रम ॥

लतिका । स्त्री० लतायाम् । स्वार्थेकन् । प्रत्ययस्थादितीत्वम् ॥

लत्ता । स्त्री० योगविशेषे ॥ यथा । चराहुपूर्णेन्दु सिता । स्वपृष्टे० भसमगोजातिशरे ७ । ८ । २२ । ५ मितद्धि । सलत्तयन्तेऽर्कशनीज्य भौमा सूर्याष्टतर्काग्निजित १२ ८। ६ ३ पुरस्तात् ॥ अस्याः फलंयथा । रवेर्लत्ताविसहरीनिस्य कोजीविनिर्द्दिशेन्मरणम् । चान्द्रीनाशकुर्यादृमौमीनाशंवदत्थेवरं । सौरीमरणकरोतिबधूविनाशश्चहस्य तेर्लत्ता । मरणलत्ताराहोः कार्यविनाश भृगोर्वदति ॥

लत्तिका । स्त्री० गोधायाम् । लतिसौत्र । क्वदिभिद्लतिभ्यः कित्दितितिकन् ॥ लत्तायाम् ॥

लपनम् । न० आनने । मुखे ॥ लप्यतेनेन । लपव्यक्तायांवाचि । करणेल्युट् ॥ भाषणे ॥

लपितम । न० वचने ॥ लप० । भावेक्त । त्रि० उक्ते । कथिते ॥ लप्यतेस्म । लप० । क्त ॥

लप्सिका । स्त्री० सर्पिः पयोऽभ्यापक्व खाद्यवस्तुनि । लपसी० लापसी तिच० ख्यातायाम् ॥ सायथा । समितासर्पिषाभृष्टाशर्करापयसि- क्षिपेत् । तस्मिन्घनीकृतेन्यस्येल्लवङ्गमरिचादिकम् ॥ सिद्धैषालप्सिका ख्यातागुणानस्यावदाम्यहम् ॥ ल- प्सिकाद्व ष्यौवृष्यावल्यापित्तानि- लापहा । स्निग्धाश्लेष्मकरीगुर्वीरोचनीतर्पणीपरम् ॥

लब्ध । त्रि० प्राप्ते ॥ सातेभवतुसुप्रीतादेवीशिखरवासिनी । उग्रेणतपसालब्धोययापशुपति पतिरिति लभ्यतेस्म । डुलभष्प्राप्तौ ॥ क्त ॥

लब्धप्रशमनम । न० न्यायलब्धधनस्य सत्पात्रेप्रतिपादने ॥ राज्यप्यचिरलब्धस्यशमनंपरिपन्थिनाम् । रक्षन प्रतिकाराभ्यालब्धप्रशमनविदुः ॥

लब्धलक्ष . । त्रि० आयुधविदि । लक्षादप्रच्युतशरे ॥ लब्धलक्षयेन ॥

लब्धवर्णः . । पु० विचक्षणे ॥ विदुषि । पण्डिते ॥ लब्धोवर्णः स्तुतिर्येन ।

लब्धव्य : । त्रि० प्राप्तव्ये । लभ्ये ॥

लब्धशर्मा । त्रि० प्राप्तप्रवेशे ॥

लब्धा । स्त्री० नायिकाभेदे ॥

लब्धि । स्त्री० प्राप्तौ ॥ डुलभष् ० । स्त्रियांक्तिन्नावादिभ्यः ॥

लभस । पु० धने ॥ याचके ॥ वाजिदन्धनरज्जौ ॥ राभले । डुलभष् ० । अत्यविचमितमीत्यादिना० असच् ।

लभ्य । त्रि० युक्ते ॥ लब्धव्ये ॥ लभ्यते । डुलभष० । पोरदुपधादितियत् ॥ लाभे ॥

लमक । पु० ऋषिविशेषे ॥ रमते । रम० । रमेरश्चलोवेतिकन् ।

लम्पट । पुं० षिड्गे ॥ मूर्खे ॥ यथा श्रीभागवते । यथैहिकामुष्मिककामलम्पटः सुतेषुदारेषुधनेषुचिन्तयन् । शङ्कतेविद्वान्कुकलेवरात्ययात् ० यस्तस्ययत्नश्रमएवकेवलमिति ॥ ऐहिकामुष्मिककामेषु ० लम्पटोमूर्खः सुतादिषुयोगक्षेमंचिन्तयन्० कुत्सितस्यकलेवरस्य० अत्ययात् मृत्योः शङ्कते । तथाविद्वानपि समृथ शङ्कते० तस्ययत्न श्रमएवे त्यर्थः ॥ लोलुपे ॥

लम्पाकाः । पु० लम्पटे । देशविशेषे॥

लम्पापटह । पुं० वाद्यप्रभेदे । पटहे ॥

लफ । पु० प्लुतगतौ । लाफ० इ० भा०॥

लम्ब । पु० नर्त्तके ॥ अङ्गे । कान्ते उत्कोच ॥ अंशभेदे ॥ त्र्यंशादौ लम्बमानरेखासूत्रे ॥ त्रि० दीर्घे ॥ लम्बते । लम्बिअवस्रंसने । अच् ॥

लम्बकर्णः । पुं० अङ्कोठपादपे ॥

कृगन्ने । राक्षसि ।। हस्तिनि ।। श्ये नपक्षिणि ।। दीर्घग्रीवे ।। त्रि० दीर्घग्रीववति ।।

लम्बकर्णी । स्त्री० गोविशेषे ।।

लम्बकेश । पुं० विष्टरे ।। सतुविवाह कालेवरोपवेशनार्थसार्द्धद्वितयवा-मावर्त्तवलिताधोमुखाग्रसङ्ख्याताद्भ र्भा । यथा । ऊर्द्ध्वकेशोभवेद्ब्रह्मा लम्बकेशस्तुविष्टर । दक्षिणावर्त्त कोब्रह्मावामावर्त्तस्तुविष्टर' ।।केशो ऽत्रायम् । त्रि० दीर्घकेशयुक्ते ।।

लम्बदन्ता । स्त्री० सैंहलीपिप्पल्या म । त्रि० बृहद्दशनविशिष्टे ।।

लम्बन: । पुं० कफे ।। लम्बते । लवि० । नन्द्यादित्वाल्ल्यु' ।। न० नाभिलम्बितकण्ठिकादौ । लम्ब नक्रायाम् ।।

लम्बमान: । त्रि० लम्बायमानेवस्तु नि ।।

लम्बबीजा । स्त्री० सैंहल्यांपिप्पल्या म् ।।

लम्बा । स्त्री० पद्मालयायाम् ।। गौ र्याम् ।। तिक्ततुम्ब्याम् ।। दक्षदुहि तृविशेषे ।। हिमालयकन्याविशे षे ।

लम्बिका । स्त्री० घण्टिकायाम् । उपजिह्वायाम् । तालूर्द्ध्वसूक्ष्मजिह्वा याम् ।।

लम्बित: । त्रि० लम्बमानेमाल्यादौ

।। शब्दिते ।। स्रसिते ।। लम्बते । लवि० । क्त' । इट् ।।

लम्बोदर: । पुं० श्रीगणेशे । गजान ने ।। उद्दामे ।। त्रि० भाद्यूने । औदरिके ।। लम्बमुदरंयस्यस: ।।

लम्बोष्ठ । पुं० )

लम्बौष्ठ । पुं० )उष्ट्रे त्रि० लम्बितौ ष्ठे ।। लम्बावोष्ठौयस्यस' । ओत्वो ष्ठयो समासे वा ।।

लम्भनम् । न० प्राप्तलम्भे । लाभे ।। ध्वनौ ।।

लम्भनीय । त्रि० प्रापणीये ।।

लम्भा । स्त्री० वाटशृङ्खलायाम् ।।

लम्भित । त्रि० प्रयुक्ते ।। प्रापिते याचिते ।। लभेर्ण्यन्तात्कर्मणि क्त' । रभेरशब्लिटोरितिनुमाग म' ।।

लम्भुक । त्रि० लम्भनशीले । लब्ध रि ।।

लय' । पुं० विनाशे ।। संश्लेषे ।। तौर्यत्रिकसाम्ये । गीतवा द्यपादादिन्यासानांक्रियाकालयो: साम्ये ।। लयनम् । लीङ्श्लेषणे । एरच् ।। लीयन्तेस्मिन्प्रतेषनेन वा ।। प्रलये ।। मोक्षे ।। लीयतेस्या महद्यमस्मिन्निति० सुषुप्तौ ।। अख ण्डवस्त्वनवलम्बनेनचित्तवृत्ते र्नि द्रायाम् ।। न० उशीरे । लीयते ।। लीङ् । पचाद्यच्

लयनम् । न॰ गृहे । वेश्मनि ॥ लीयतेऽस्मिन् । लीङ् ल्युट् ॥

लयपुत्री । स्त्री॰ नर्त्तक्याम

लयारम्भ । ) पुं॰ सर्ववेशिनि नटे ॥
लयालम्ब । )

लल । पुं॰ विलासे ॥ लडति । लड विलासे । ललतीवा । ललईप्सायाम । पचाद्यच् । पूर्ववडलयोरैक्यम् ॥ ईप्सायाम ॥

ललज्जिह्व । पुं॰ क्रमेलके । उष्ट्रे ॥ शुनि ॥ त्रि॰ हिंस्रे ॥

ललत् । त्रि॰ विलासयुक्ते ॥ उन्मन्यनविशिष्टे ॥ जिह्वाक्रियाविशिष्टे ॥ सत्तेपे ॥ ललतै ' कर्त्तरिशतृ ॥ ईप्साविशिष्टे ॥ उपसेवायुक्ते ॥ भाषणविशिष्टे ॥

ललदम्बु । पुं॰ लिम्पाके ॥

ललन । पुं॰ वाले ॥ साले ॥ प्रियासे ॥ न॰ केलौ ॥ चालने ॥ अति विस्तारवदनाजिह्वाललनभीषणा ॥

ललना । स्त्री॰ विशेषाङ्गनायाम् । कामिन्याम् । नारीभेदे ॥ जिह्वायाम् ॥ ललति । लल॰ चुरादीनां णिजिनित्यपक्षे ॰ल्युट् युज्वा ॥ लडति । लड विलासे । बहुलमन्यत्रापीतियुच् । डलयोरैक्यम् । टाप् ॥

ललनाप्रिय । पुं॰ कदम्बे । कामिनीवल्लभे ॥ न॰ ह्रीवेरे ॥

ललन्तिका । स्त्री॰ लम्बने । आनाभिलम्बिकण्ठिकायाम् ॥ किञ्चिदवलम्बमानकण्ठभूषणे ॥ लडति । लड॰ । लट शतृ । उगितश्चेति ङीप् । डलयोरैकत्वम् । ललन्त्येव । स्वार्थेकन् ॥ गोधायाम् ॥

ललाकः । पुं॰ मेहने ॥

ललाटम् । न॰ अलिके । गोधौ ॥ भाले ॥ ललं भ्रुवोरुपरिस्थाने । विलासमीप्सावा॰ अटति॰ । अटगतौ । कर्मण्यण ॥ लडतिललतिवा । लडललधातुभ्यांबाहुलकादाटच् ॥ अस्य शुभाशुभलक्षणमुक्तं गारुडे यथा । उन्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा । निःस्वाधनवन्तः स्युरर्द्धेन्दुसदृशैर्नराः ॥ आचार्यं शुक्तिविशालैः शिरालैः पापकारिणः । उन्नताभिः शिराभिस्तु स्वस्तिकाभिश्चेश्वराः ॥ निम्नैर्ललाटैर्वधार्हा क्रूरकर्मरतास्तथा । संवृत्तैश्च ललाटैश्च कृपणाउन्नतैर्नृपा. ललाटोपस्थितास्तिस्रोरेखास्युः शतवर्षिणाम् । नृपत्वंस्याच्चतसृभिरायुः पञ्चनवत्यथ ॥ अरेखेणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलाः । केशान्तोपगताभिश्चाशीत्यायुर्नरोभवेत् ॥ पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्दृभिस्तथा । चत्वारिंशच्चलग्नाभिस्त्रिंशदभ्रूलग्न

गामिभि ॥ विंशतिर्वामनक्राभि रायु चुद्राभिरल्पकम् । नपृथू वालेन्दुनिर्भभ्रुवौचायललाटकम् ॥ शुभमर्द्धेन्दुसस्थानमतुङ्ग स्यात् सौमशम् । इति ६५ अध्याय ॥

ललाटकम् । न० प्रशस्तललाटे ॥ ललाटमात्रे ॥

ललाटन्तप । पुं० सूर्ये ॥ ललाट तपति । तपसन्तापे । असूर्यलला टयोरितिखश् । मुम् ॥

ललाटिका । स्त्री० स्वर्णादिकृतेभाल भूषणे । पत्रपाश्यायाम् । पानेपा टी० विन्दीवेना० टीकाटीकी० इ तिख्याते ॥ ललाटस्यालङ्कार । ललटेभवोऽलङ्कारोवा । कर्णल लाटात्कनलङ्कारे ।

ललामम् । न० पु० लाञ्छने । ध्वजे ॥ शृङ्गे ॥ प्रधाने ॥ भूषाया म् ॥ रम्ये ॥ वालधौ ॥ पुण्ड्रे । अश्वादीनाभालेऽन्यवर्णचिह्ने ॥ तुरङ्गे ॥ प्रभावे । अश्वस्यभूषाया म् ॥ लडनम् । लडवाल्ये० ल डविलासेवा । सम्पदादित्वात्क्विप् । डलयोरेकता । ललमतिअमग त्यादौ । कर्मण्यण् ॥

ललामकम् । न० पुरोभागेन्यस्ते ललाटपर्यन्तमागतेशिखालविमा- ल्ये ॥ ललाममिव । इवार्थेकन् ॥ मुण्डमालायाम् ॥

ललाम । न० अश्वे ॥ चिह्ने ॥ शृ- ङ्गे ॥ पताकायाम् ॥ रम्ये ॥ प्रधा ने ॥ भूषायाम् ॥ पुण्ड्रे ॥ पुच्छे ॥ प्रभावे लडनम्० लल् । लल माअमति । अम० । वाहुलकात् कनिन् ॥

ललामी । स्त्री० उत्क्षिप्तिकायाम् । कर्णाभरणविशेषे ॥

ललित । पु० प्रातर्गेयेरागविशेषे ॥ यथा । प्रातर्गेयास्तुदेशागीललि त . पठमञ्जरी । विभाषाभैरवीचै वकामोदीगे।गुडकीर्यपि ॥ अस्यस्व रूपयथा । प्रफुल्लसप्तच्छदमाल्यधा रीयुवातिगौरोऽलसलोचनश्री । त्रिनि सरन्वासगृहात्प्रभातेवि लासिवेशोललित प्रदिष्ट ॥ न० स्त्रीणांशृङ्गारभावजक्रियाविशेषरू- पेहावविशेषे॥ सुकुमारविधानेनभू नेत्रादिक्रियासचिवकरचरणाङ्गवि न्यासोललितम् । तथाच । सुकु माराङ्गविन्यासेमसृणाललितभवेत् । यथा । सभ्रूभङ्गकरकिशलयाव- र्त्तनैरापतन्तीसाक्षिप्यन्तीललित- ललितालोचनस्याञ्जनेन । विन्य स्यन्तीचरणकमलेलीलयास्वैरयाते- नि:शङ्काचप्रथमवयसानर्त्तिताप ङ्कजाक्षी ॥ भ्रूनेत्रादिक्रियाशालि सुकुमारविधानत. । करपादाङ्ग विन्यासस्तथाललितंविदुरित्यन्ये

पि ॥ अनाचार्योपदिष्ट स्याल्ललित रतिचेष्टितमित्यन्ये । अपिच । विन्यासभङ्गिरङ्गानाम्भ्रूविलासमनोहरा । सुकुमाराभवेद्यत्रललितं तदुदीरितम् ॥ विषमवृत्तप्रभेदे । यथा । नयुगसकारयुगलञ्चभवतियदिचेत्तृतीयके । तदुदितमुरुमतिभिर्ललितयदिशेषमस्तसकलयथोक्तता । यथा । ब्रजसुन्दरीसमुदयेनमुदितमनसास्मपीयते । हिमकरगलितमिवामृतकललितमुरारिमुखचन्द्रविच्युतम् ॥ त्रि० ईप्सिते ॥ कोमले ॥ ललिते । मधुरे ॥ लडेर्लसेर्वाभावेक्तः । डलयोरभेदः ॥ सुन्दरे ॥

ललितकान्ता । स्त्री० मङ्गलचण्डिकायाम् ॥

ललिता । स्त्री० देवीविशेषे ॥ गोपीविशेषे ॥ नदीविशेषे ॥ सागराहृचिणात्पूर्वमहादेवावतारिता । वैशाखशुक्लपक्षस्यतृतीयायांनरस्तु य. । कुर्य्याद्वै ललितास्नानसशम्भुसदनव्रजेत् ॥ कस्तूर्याम् ॥ लघ्सिकाभेदे ॥ मेघरागस्यरागिण्याम् ॥

ललितासप्तमी । स्त्री० भाद्रशुक्लसप्तम्याम् ॥

ललितिका । स्त्री० शान्तनुतीर्थे ॥

लल्ल : । पुं० आचार्यविशेषे । वराहमिहिरसुते ॥

लवः । पुं० लेशे ॥ विनाशे ॥ छेदने कालभेदे । अष्टादशनिमेषास्तुकाष्ठाद्वयंलवइतिहेमचन्द्रोक्तो ॥ पक्षिविशेषे । लवा० हू० भा० प्र० गोपुच्छलोमसु ॥ रामनन्दने ॥ लवोन्मृष्टोलवः । वाल्मीकिना० लवैर्गोपुच्छलोमभिरुन्मृष्टोगर्भक्लेदोयस्य ॥ नाशे ॥ लवनम्० लूयतेवा । लूञ् छेदने । ऋदोरप् ॥ विलासे । इतिविनाशस्थानेपाठो विश्वहेमचन्द्रयो ' सम्मतः ॥ न० लामज्जके ॥ जातीफले ॥ लवङ्गे ॥

लवङ्गम् । न० देवकुसुमे । श्रीसंज्ञे । श्रीपुष्पे । वारिसम्भवे । भृङ्गारे । लौंग० हू० भा० प्र० ॥ गुणास्तु । लवङ्गं कटु तिक्तं लघुनेत्रहितंमतम् । दीपनपाचनंरुच्यं कफपित्तास्रनाशकृत् ॥ तृष्णाञ्छर्दिं तथाध्मानंशूलमाशुविनाशयेत् । कासं श्वासञ्चहिक्काञ्चक्षयञ्चक्षपयति ध्रुवम् ॥ लुनाति० लूयतेवा । लूञ्० । तरत्यादिभ्यश्चेत्यङ्गच् ॥

लवङ्गकम् । न० ) लवङ्गे
लवङ्गकलिका । स्त्री० )

लवंगलता । स्त्री० पुष्पविशेषे । गन्धराजइतिकश्चित् ॥

लवण । पुं० समुद्रविशेषे ॥ राक्षसभेदे । लवणासुरे ॥ रसविशेषे । पटौ ॥ पृथ्व्यग्निगुणबाहुल्याल्लव

गन्धचसन्नत्र । अस्यगुणायथा । लवण . शोधनोरुच्य: पाचन. कफपित्तद' । पुस्त्ववातहर: कायशैथिल्यमृदुताकर' ॥ सोति युक्तोऽतिपाकाखपित्तकोष्ठचयाप-क्षत् ॥ अपिच । लवणोरुचिकृद्र सोग्निदायीपचन स्वादुकरश्च 'र सितोनितराजराश्चपित्त शिरिमा नश्चदद्दातिकुष्ठकारी ॥ पुनश्च । लवण . क्लेदनस्तीक्ष्ण पाचनोदी पन ' सर ' स्निग्धोरुचिकर : स्य-न्दोहृष्टिशुक्रश्चरोलघु रिति ॥ पुनश्च। अस्थिभेदं॥ न॰ सैन्धवादौ॥ तथाहि । सामुद्रयत्तु लवणमक्षीव यशिरस्तत् । सैन्धवोस्त्रीशीतशि व माणिमन्थश्चसिन्धुर्ले ॥ रोमक वसुका पाक्य बिडश्चक्षतकैद्रूयम् । सौवर्चलोऽक्षरुचकं॰तिलक तत्रमे चकौ स्त्वमर : । लवण भेदयोर्हि त्रिप्रायश . सैन्धवमितिविशेष : पूर्वाह्णका लेचाप्ताना प्रायशोलव ण हितम् । शूलानाशविवन्धश्र लवण सैन्धवं वरमितिसिद्धयोगोक्षर सङ्ग्रह . । त्रि॰ लवणरसयुक्त । सलवणं । सलूण॰ इ॰ भा॰ ॥ लुनातिजाड्यम् । लूञ्॰ । नन्द्यादित्वाल्ल्यु: । लवणाङ्गिति लिंगात्मत्वम् ॥ लवणेनसंसृष्ट : । लवण : सूप॰ लवणायवागू॰

लवण शाकम् । संसृष्टेर्थेजातस्य ठञोलवणाल्लुगितिलुक् ॥ लवणो सत्यस्यास्मिन्तुवा । अर्श आद्यच् ॥

लवणाब्धि शुका । स्त्री॰ महाज्योतिष्म त्याम् ॥

लवणक्षार: । पुं॰ क्षारविशेषे । लो णारे ॥

लवणखानि . । स्त्री॰ रुमायाम । सांभ रलवणोत्पत्तिस्थाने ॥ लवणाकर माचे ॥

लवणतृणम् । न॰ लोणतृणे । तृणा न्तं । पट्तृणके । अम्लकाण्डे ॥

लवणत्रयम् । न॰ बिडरुचकसैन्धवे षु ॥

लवणधेनु । स्त्री॰ दानार्थलवणा दिनिर्मितधेनौ ॥

लवणपञ्चकम् । न॰ सैन्धवादिषु ॥ सैन्धव रुचकाश्चैवविड सामुद्रका गडम् ॥

लवणमद: । पुं॰ लोणारे । लवण क्षारे ॥

लवणा । स्त्री॰ नदीविशेषे । त्विषि महाज्योतिष्मत्याम् ॥ लोनास्यात् र्या॰ कृतिकाचित् ॥

लवणाकर: । पुं॰ लवणोत्पत्तिस्थले ॥ रुमायाम् ॥

लवणाकरजम् । न॰ लोणारे ॥

लवणाचल '। पुं॰ दानार्थलवणादि कृतपर्वते ॥

लवणाब्धि । पुं॰ लवणोदे । क्षारा ब्धौ ॥

लवणाब्धिजम् । न॰ सामुद्रलवणे ॥

लवणाम्भाः । पुं॰ लवणाब्धौ ॥ लवणं क्षारमम्भोयस्य ॥

लवणारजम् । न॰ लोणारक्षारे ॥

लवणाष्टकम् । न॰ सैन्धवादिषु ॥ तेयथा । लवणाष्टकमेतत्तु सैन्धवञ्चसुवर्चलम् । बिड समुद्रसञ्जातमुद्भिद रोमक गडम ॥

लवणोत्तमम् । न॰ सैंधवे ॥

लवणोत्थम् । न॰ लोणारक्षारे ॥

लवणोद । पुं॰ लवणार्णवे ॥ लवणमुदकं यस्य । उत्तरपदस्यचेत्युद कस्योदादेश ॥

लवनम् । न॰ छेदने । अभिलावे । लूयनादिति भाषाप्रसिद्धे ॥ लूञ्॰ ल्युट् ॥

लवनी । स्त्री॰ फलवृक्षविशेषे । यौ प्रजायाम् । अधिमायाम । लोना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

लवपति । पु॰ नर्वाशिशे ॥

लवली । स्त्री॰ सुगन्धमूलायाम् । कोमलवल्कलायाम् । नोयाडि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ फलवृक्षे ॥ अस्याफलगुणायथा । लवलीफल मस्राशं कफपित्तहरं गुरु । विश द रोचन रूक्ष स्वादम्लं तुवर रसे ॥

लवाक : । पुं॰ छेदनद्रव्ये ॥

लवाणक : । पुं॰ दात्रादौ ॥ लूयतेऽनेन । लूञ्॰ । आणकोलूधूशि ङ्घिधाञ्भ्यइत्याणक . ॥

लवि । त्रि॰ छिदुरे ॥

लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन । अर्त्तिलूध्वित्यादिना॰ इत्र . ॥

लशुन । पुं॰ न॰ रसोने ॥ अस्यप र्य्यायादयोयथा । रसोनोलशुनोरि ष्टोम्लेच्छकन्दोमहौषधम् । महाक न्दोरसोनोन्योगृञ्जनोदीर्घपत्रक : ॥ गन्धाकृतिरसैस्तुल्योगृञ्जनस्तुप लाण्डुना । दीर्घनालाग्रपत्रत्वाद् भिद्यतेसौपलाण्डुत . ॥ अश्नाति ॰ अश्नुतेवा । अशभोजने॰ अशू व्याप्तौवा । अशेर्लश्चेत्युनन् ॥

लष्व. । पु॰ नर्त्तके ॥ लष्यते । लष कान्तौ । सर्वनिघृष्वेतिसाधु : ॥

लसत् । त्रि॰ उल्लसति ॥ प्रकाशमाने ॥

लसमान । त्रि॰ दीप्यमाने ॥

लसा । स्त्री॰ हरिद्रायाम् ॥

लसिका । स्त्री॰ लालायाम् ॥

लसितम् । न॰ चेष्टिते ॥

लसीका । स्त्री॰ इक्षुरसे ॥ त्वङ्मास मध्यगेरसे ॥

लस्त । त्रि॰ श्लिष्टे ॥ क्रीडिते ॥ शि ल्पयुक्ते ॥ लस्यतेस्म । लसश्लेष णक्रीडनयोः । क्त ॥

लस्तक : । पुं॰ धनुर्मध्यभागे ॥

स्वार्थे कन् ॥

लक्तकः । पुं॰ क्तम्भकि । धनुषि ॥

लहरिः । स्त्री॰ )
लहरी । स्त्री॰ ) तरङ्गे ॥ महातरङ्गे । उल्लोले ॥ कल्लोले ॥

ला । स्त्री॰ दाने ग्रहणे ॥ लाति क्विप ॥

लाक्षकी । स्त्री॰ सीतायाम् ॥

लाक्षणिक । त्रि॰ लक्षणाभिज्ञे ॥ लक्षणामधीते॰ वेद वा । क्रत्वथादिसूत्रान्ताट्ठक् ॥ लक्षणायां तत्परत्वे ॥ लक्षणागम्यार्थे ॥

लाक्षा स्त्री॰ राक्षायाम् । जतुनि । यावे । अलक्ते । द्रुमामये ॥ लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः । अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् । व्रणोरःक्षतवीसर्पक्रिमिकुष्ठगदापहा । अलक्तको गुणैस्तद्वद्विशेषाद्व्यङ्गनाशनः ॥ लक्ष्यते । लक्षमित्यपयोगेषु रादिः । बाहुलकात् सः । यद्वा लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वात्॰ लाक्षा रोचनेति निर्देशाद्दीर्घः ॥ लक्ष्यतेऽनया वा । गुरोश्च हलः । प्रत्ययः । अजादित्वाट्टाप् ॥

लाक्षातरुः । पुं॰ पलाशवृक्षे ॥

लाक्षातैलम् । न॰ लाक्षादितैलमिति प्रसिद्धे पक्वतैलविशेषे ॥ तद्विविधं स्वल्पं बृहच्चेति ॥

लाक्षापुष्पा । स्त्री॰ गुलाबाख्यशतपत्र्याम् ॥

लाक्षाप्रसाद । पुं॰ पट्टिकालोध्रे ॥

लाक्षाप्रसादन । पुं॰ रक्तलोध्रे । क्रमुके । पट्टिकायाम् ॥ लाक्षाप्रसीदत्यनेन । षद्लृ॰ । करणे तिल्युट् ॥

लाक्षावृक्ष । पुं॰ कोशाम्रे ॥ पलाशवृक्षे ॥

लाक्षिक । पुं॰ लक्षाभिज्ञे ॥

लाक्षिक । पुं॰ लक्ष्याभिज्ञे ॥ अध्येतरि वेदितरि च॰ क्रतूक्थादिसूत्रान्ताल्लक्षणा॰ द्वितीयार्थे काट्ठक् ॥

लाघवम् । न॰ आरोग्ये ॥ अप्रभुत्वे अनादरविषये । लघिमनि ॥ कार्यक्षमत्वे तुच्छत्वे ॥ लाघवम्॰ गौरवप्रतिद्वन्द्वि यदर्थे सति लघुत्वं भवति । तदेव लघवकारि चित् तिर्यग्गमनहेतु यथा वायौ । यथा कारणान्तरेण हस्तिपटत्वहेतुलाघवम्॰ गुरुत्वं मन्दानिलवृत्ति ॥ लघुत्वे ॥ लघोर्भावः । इगन्ताच्च लघुपूर्वादित्यण् ॥

लाङ्गलम् । न॰ कुसुमविशेषे ॥ भूमिकर्षणयन्त्रविशेषे । गोदारणे

। सीरे । हले ॥ हलराजे । ताले ॥ गृहदारुविशेषे ॥ लिङ्गे ॥ लङ्ग ति । लगिगतौ । बाहुलकात्काल च॰ दीर्घश्च ॥

लाङ्गलग्रह : । पु॰ कृषकै ॥

लाङ्गलचक्रम् । न॰ कृषिकर्मणिह लाकारेचक्रविशेषे ॥

लाङ्गलदण्ड पु॰ ईषायाम् । हल युगयोर्मध्यकाष्ठ ॥ लाङ्गलस्य दण्ड ॥

लाङ्गलपद्धति । स्त्री॰ सीतायाम् । हल रेखायाम् ॥ लाङ्गलस्य पद्धति ॥

लाङ्गलिक पु॰ स्थावरविषभेदे ॥

लाङ्गलिका । स्त्री॰ लाङ्गलीवृक्षे ॥

लाङ्गलिकी । स्त्री॰ अग्निशिखौष धौ ॥ लाङ्गलपुष्पविशेषोऽस्त्य स्या । अतइनिठनाविति ठन् । आतेरितिगौरादित्वाद्ङीष् ॥

लाङ्गली । पु॰ बलदेवे ॥ हलिनि ॥ नारिकेले ॥ सर्पे ॥ लाङ्गलमस्त्य स्य । इनि : ॥

लाङ्गली । स्त्री॰ लाङ्गलाकारपुष्पज लशाकविशेषे । शारदाम । तोय पिप्पल्याम् ॥ कांचडा॰ इ॰ गौ॰ दे॰ भा॰ लाङ्गलाकारोऽस्यस्या । अच् । गौरादि ।

लाङ्गुलम् । न॰ पुच्छे ॥

लाङ्गुली । पुं॰ कपिकच्छ्वाम् ॥

लाङ्गूलम् । न॰ पुच्छे । लूमे । वालहस्ते । वालधौ ॥ लङ्गति । लगि॰ । खर्जपिञ्जादिभ्यऊरोल चावित्यूलच्॰ लङ्गेर्वृद्धिश्च ॥ शेफसि । शिश्ने ॥ कुसूले ॥

लाङ्गूलिका । स्त्री॰ पृश्निपर्ण्याम् ॥

लाङ्गूली । पु॰ वानरे ॥ ऋषभना मौषधौ ॥

लाज : । पु॰ आर्द्रतण्डुले ॥

लाजा । पु॰ भूम्निचवते । भृष्टधान्ये ॥ एतेचव्रीहयोभृष्टालेलाजाइतिसंज्ञि ता ॥ यवादयश्चयेभृष्टास्ते धाना परिकीर्त्तिता ॥ लाजास्स्युर्मधु रास्तर्पा पित्तनाशना । गैधमूत्रयावनाशिन्यः किंचिदुष्णा स्तर्पणा । दृष्णातीसारप्रमनेः- धातुसाम्यकर पर मन्दाग्निवि षमाग्नोनावालस्यविरयोपिताम ॥ देयश्चसुकुमाराणालाजमण्ड सुस स्कृत ॥ अपिच । येधान्यस्तण्ड लास्तानिधान्यानिसतुषाणिच । भृ ष्टानिस्फुटितान्याहुर्लाजाइतिम- नीषिण . लाजा . स्युर्मधुरा शी तालघवोदीपनाश्चते । स्वल्पमूत्रमला रूक्षावल्या . पित्तकफच्छिद ॥ छ र्द्यतीसारदाहास्रमेहमेदस्तृषापहा ॥ न॰ उशीरे ॥ लज्यते । लज भर्जने ॥ घञ् ॥

लाजा । स्त्री॰ अक्षते ॥

लाञ्छन : । पुं॰ रागीधान्ये ॥ न॰

नामनि ॥ चिह्ने ॥ लाञ्छ्यते । लाञ्छिलक्षणे ल्युट् ॥

लाट । पुं॰ देशविशेषे ॥ यथा । अवन्तीत पश्चिमेतुवैदर्भी दक्षिणोत्तरे । लाटदेश समाख्यातस्तत्रेशौशक्तिसङ्गमे ॥ अंशुके । वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रास । पुं॰ शब्दालङ्कारे शुब्दत्तिप्रभेदे ॥ यथा शाब्दस्तु लाटानुप्रासोभेदेतात्पर्यमात्रत ॥ शब्दगतोनुप्रासः । शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च लाटानुप्रास ॥ एषपदानुप्रासश्चत्यन्ये । पदानांसः । सइति लाटानुप्रास . उदाहरणम् । यस्य नसविधे दयितादवदहनस्तुहिनदीधितिस्तस्य । यस्यचसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ अपिशब्देनसइतिसमुञ्चीयते । उदाहरणम् । वदनवरवर्णिन्यास्तस्या . सत्यसुधाकरः । सुधाकर: क्वनुपुन: कलङ्कविकलोभवेत् ॥

लाप . । पुं॰ कथने ॥ लपनम् । लप॰ । घञ् ॥

लाभ : । पुं॰ मूलधनादधिकार्जिते । विक्रेयपटादीनां मूल्यादधिकयाप्ते द्रव्ये ॥ फले । इष्टप्राप्तौ ॥ आत्मलाभात्परोलाभो नास्तीति विदुषांमतम् ॥ प्राप्तौ ॥ लग्नादेकादशेस्थाने ॥ लभ्यते । डुलभष्प्राप्तौ । अकर्तरीतिघञ् । सञ्ज्ञायामित्यस्यप्रायिकत्वात् ॥ उत्कृष्टपुरुषार्थलाभेसम्भवत्यधमं कामयमानोमूर्खः ॥

लामज्जकम् । न॰ वीरणमूले । नलदे । उशीरवत्पीतच्छविद्रव्यविशेषे ॥ लामज्जकं हिमं तिक्तं लघुदोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

लालनम् । न॰ अत्यन्तस्नेहकरणे । प्रेमपूर्वकबालकादरणे ॥ यथा । लालनेबहवोदोषास्ताडनेबहवोगुणा । तस्मात्पुत्रञ्चशिष्यञ्चताडयेन्नतुलालयेत् ॥ चतुर्वर्षावधिसुतान्लालयेत्पालयेत्पिता । ततः षोडशपर्यन्तं गुणान्विद्याश्चशिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहंप्रदर्शयेत् ॥

लालस । पुं॰ लालसायामर्थेषु ॥ त्रि॰ उत्सुके ॥ भृशलसनमित्यर्थेयङन्तादच . ॥

लालसा । स्त्री॰ औत्सुक्ये ॥ तृष्णातिरेके ॥ महाभिलाषे ॥ याच्ञायाम । लीले ॥ दोहदे ॥ लक्षिप्सायाम् । औणादिकोपसख ॥ स्पृहा । लसकान्तौ । भृशलसन

मित्यर्थे यङन्तात् ‘ । टाप् ॥ यद्वा । ललसनम् । लसदीप्तौ । यगन्त. । अप्रत्ययात् । टाप् ॥

लालसीकम् । न० पिच्छिले ॥ विजिले ॥

लाला । स्त्री० सृणिकायाम् । स्यन्दिन्याम् । मुखस्रावे । लाल० इ० भा० ॥ लालयते । लल० । चुरादिः । पचाद्यच् ॥

लालाटिक . । पुं० भाग्यपत्रविशेषे ॥ मौहूर्त्तिकानायोगविशेषे ॥ यथा । लग्ने १ र्के व्ययलाभयो १२ । ११ भृगुसुतेकर्मस्थिते १० भूमिजे० राहौधर्मविनाशयो ९ । ८ रविसुते । द्यूने ७ ऽ रिसूर्न्वो ६ । ५ विधौ । बन्धौ ४ ज्ञे० सहजार्थयो ३ । २ सुरगुरावेव ललाटोद्भवेयोगेनाशमुपैतिमानवपति : पूर्वादिकाष्ठागत ॥ यात्रालग्ने सूर्ये स्थितेसतिपूर्वस्यालालाटिकोयोग : स्यात् । एव द्वादशैकादशस्थानस्थितेशुक्रे० आग्नेय्याम् । दशमस्थिते कुजे दक्षिणस्याम् । नवमाष्टमस्थानस्थे राहौनैरृत्याम् । सप्तमस्थे शनौपश्चिमायाम् । षष्ठपञ्चमस्थानस्थितेविधौवायव्याम् । चतुर्थस्थानस्थितेबुधे उत्तरस्याम् । तृतीयद्वितीयस्थानस्थितेगुरावैशान्यांलालाटिकोयोग ‘ इति । एव ललाटोद्भवेयोगेपूर्वादिदिशाङ्गतोनृपो नाशमुपैतीत्यर्थ ‘ ॥ प्रकारान्तरञ्च यथा । दिनेशाधिष्ठितोराशिर्यदा लग्नगतस्तदा । यातुर्मृत्युप्रद ‘ प्राच्यादिशिसूर्योललाटग ॥ सूर्यस्यराशितस्तस्माद्द्वादशेलग्नगेगृहे । एकादशेवाग्नेय्यादिशिशुक्रो ललाटग ‘ ॥ ललाटग कुजोयाम्ये दशमेलग्नगेगृहे ॥ लग्नगेनवमे राशावष्टमेवापिनैरृते । ललाटग ‘ सैंहिकेयोयातुर्द्राक्निधनप्रद ‘ ॥ लग्नगेसप्तमेराशौशनि . प्रत्यग्ललाटग । षष्ठराशौलग्नगतेपञ्चमे वापिचन्द्रमा : । ललाटगोवायुदिशियातुर्मृत्युप्रदस्तदा ॥ चतुर्थराशौलग्नस्थेबुध . सौम्येललाटग. राशौतृतीयेलग्नस्थेद्वितीयेचेन्द्रपूजित ‘ । ललाटगश्चन्द्रमौलेर्दिशियातुर्विनाशद : ॥ लालाटिनिर्दिगधीशेर्दिग्वलिविहगेललाटगेवापि । प्रतिभृगुजे प्रतिशशिजे कालाशुहोचसन्त्यजेद्यात्राम् ॥ स्पष्टमाह मार्कण्डे । लग्नेऽर्केन्दुअशुक्रसौरिगुरव ‘ प्राप्तिव्ययेविद्भृगूखे शुक्रार्ककुजेन्दुजा अथतपो मृत्यो : सितज्ञासुरा ‘ । द्यूनेशुक्रकुजार्कजारिपुसुतेचन्द्रज्ञशुक्रा ‘ सुखे चेतेखचिकयो ‘ सितज्ञगुरव प्राच्यादिलालाटिन : ॥ चि० प्रभोभी

नदर्शिनि सेवके । प्रभुभावनिद
र्शिनि ॥ ललाट कोपप्रसादचिह्नं
ललाटमेवबापश्यति । संज्ञायाल
लाटकुक्कुट्यौपश्यतीतिठक् ॥ का
र्याक्षमेसेवके ॥ दूरेस्थित्वाप्रभोर्ल
लाट पश्यतिनतुकार्येषूपतिष्ठत इ
त्यर्थः ॥ त्रि॰ ललाटसम्बन्धि
नि ॥
लालाभक्षः । पुं॰ नरकविशेषे ॥
लालामिकः । त्रि॰ ललामग्राहिणि
॥ ललामंगृह्णाति । प्रतिकण्ठार्थं
ललामंचेतिठक् ॥
लालामेहः । पुं॰ प्रमेहविशेषे ॥ य
था । लालातन्तुयुतमूत्र लालामे
हीनपिच्छिलम् । प्रमेहतीतिशेषः ।
औषधन्तु । गुडूच्याः स्वरसं पि
बेन्मधुनासवमेहजित् । हरिद्रा
चूर्णयुक्तोवारसोधात्र्याः समाक्षि
कः ॥
लालाविषः । पुं॰ लूतादौ ॥
लालास्रावः । पुं॰ ऊर्णनाभे ॥
लालिकः । पुं॰ महिषे ॥
लालित । त्रि॰ पालिते ॥ उपस्कृते ॥
लालित्यम् । न॰ ललितस्यभावे ॥
ष्यञ् ॥
लाव । पुं॰ पक्षिविशेषे । लवा॰
इ॰ भा॰ प्र॰ ॥ अस्यप्रभेदामांस
गुणाश्चयथा । लावाविष्किरवर्गस्यु
स्तेचतुर्धासतायुधे । पांशुलोगौ
रकोन्योक्षिपौण्ड्रकोदर्भकस्तथा ॥
लवाविष्किरा । स्निग्धाज्वरघ्नाश्चा
हिमोहिमा । पांशुल । श्लेष्मल
स्तेषुवीर्योष्णो निलनाशनः ॥
गौरोलघुतरोरूक्षोवह्निकारीत्रिदो
षजित् । पौण्ड्रक पित्तकृत्कि
ञ्चिल्लघुर्वातकफापहः ॥ दर्भको
रक्तपित्तघ्नोहृद्रामयहरोहिम । पौ
ण्ड्रक त्रिदोषहृत् ॥ लावयति ।
लूञ् ॰ । स्वार्थेण्यन्तः । अच् ॥
छेदे ॥
लावकः । पुं॰ लावपक्षिणि । लघु
जङ्गले ॥
लावणम् । न॰ लवणे ॥ नस्ये ॥
इतिरत्नमाला ॥ त्रि॰ लवणेनसं
स्कृते ॥ इतिहेमचन्द्रः ॥ लवण
सम्बन्धिनि ॥
लावणिकः । पुं॰ लवणवणिजि ॥
लवणपण्यमस्य । लवणाट्ठञ् ॥
त्रि॰ लावण्यवति ॥ लावण्यंका
न्तिविशेषोऽस्यास्ति । अतइनिठना
विति ठन् । ठस्येकः । यस्येतिचे
त्यकोपिइलस्तद्धितइतियलोपः ॥
लवणेनसंस्कृते ॥
लावण्यम् । न॰ कान्तिविशेषे ॥
तस्यलक्षणंयथा । मुक्ताफलेषुच्छा
यायास्तरलत्वमिवान्तरा । प्रतिभा
तियदङ्गेषुलावण्यंतदिहोच्यते ॥
लवणात्विट्विद्यतेयस्यतल्लावणम्

। चर्मादिभ्योऽच् । लवणस्यभाव । दृढादित्वात्ष्यञ् ॥ यद्वा । लवणाल्लिट् ० स एव । चतुर्वर्णादित्वात्स्वार्थेष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न० विवाहकाले श्वश्रुश्वशुराभ्यांदत्तेधने ॥ यथा । प्रीत्यादत्तंतुयत्किञ्चित् ० श्वश्र्वावाश्वसुरेणवा । पादवन्दनिकंयत् तत्लावण्यार्जितमुच्यते ॥ लावण्य मौलनेपुण्यादि० तथाचपाद प्रणतायेस्त्रीलादिमत्येवास्त्रियैश्वशुरादिनादत्तंतृतीय स्त्रीधनमित्यर्थ . ॥

लावा । स्त्री० लावपक्षिणि ॥

लाबु : । ) स्त्री० तुम्ब्याम् ।
लाबुकम् । ) न०

लाबुका । स्त्री० तुम्बिकाभेदे ॥

लाबुकी० सूक्ष्मवीणायाम् ॥ इ० डा० ली० ॥

लाबू । स्त्री० तुम्ब्याम् ॥

लाबुक : । त्रि० लषनशीले ॥ लष्यति० लषतिवातच्छील' । लषका मौ ॥ लषपतपदेत्युकञ् ॥

लास । पुं० नृत्यमात्रे ॥ स्त्रीणांनृत्ये । यूषे ॥ लसनम् । लसश्लेषणक्रीडनयो । घञ् ॥

लासक . । पुं० लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे ॥ वेष्टके ॥ लसति । लस० ण्वुल् ॥

लासिका । स्त्री० नृत्यकारिण्याम् ॥ नर्त्तक्याम् । लसति । लस० ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री० आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न० नृत्ये । सुकुमारनृत्ये । तालतयाश्रये ॥ पुंनृत्य ताण्डवंप्राहु : स्त्रीनृत्य लास्यमुच्यते ॥ अपिच । छुरित यौवतञ्चे तिलास्यंद्विविधमुच्यते । यत्राभिनयाद्यैर्भावैरसैराश्लेषचुम्बनैः ॥ नायिकानायकौरङ्गे नृत्यतश्छुरित हि तम् । मधुरवल्लीलाभिर्नटीभिर्यन्नृत्यते ॥ वशीकरणविद्याभ तल्लास्य यौवतंमतमिति ॥ लस० । ऋहलोर्ण्यत् ॥ तौर्यत्रिके ॥ पुं० नर्त्तके ॥

लास्यकम् । न० नृत्ये ॥

लास्या । स्त्री० नर्त्तक्याम ॥

लिकुच : । पु० लकुचे । डहौ । वडहलइ० भा० प्र० ॥ लक्यते । लक आस्वादने । बाहुलकादुचप्रत्यय . । पृषोदरादि : ॥ न० चुक्रे ॥

लिक्षा । स्त्री० लिक्षायाम् ॥

लिक्षा । स्त्री० यूकाण्डे । लिक्षिकायाम् । लीक० लीख० इ० भा० प्र० केशकीटे । यूकाभेदे ॥ लक्ष्यते । लक्षआलोचने । घञ् । पृषोदरादित्वादस्येत्वम् ॥ परि

माणविशेषे । कचायाष्टके ॥ यथा । त्रसरेणवोऽष्टौविज्ञेयालिक्षैकापरिमाणत । इतिमनु ॥ अपिच । जालान्तरगतेभानौयत्ताणुदृश्यतेरज: । तैश्चतुर्भिर्भवेल्लिक्षालिक्षाषड्भिस्सर्षपइति ॥

लिक्षिका । स्त्री॰ लिक्षायाम् ॥

लिखनम् । न॰ लेखने ॥ अखण्डनीयायांविधिलिपौ ॥ यथा । यस्ययल्लिखनं पूर्वं यत्रकालेनिरूपितम् । तदेवखण्डितुंराधेत्वम्येनाहस्त्वकोविधि ॥ विधातुश्चविधाताहंयेषांयल्लिखनं कृतम् । ब्रह्मादीनाञ्चक्षुद्राणानतत्खण्ड्यं कदाचन ॥ इ॰ ब्र॰ वै॰ पु॰ ॥

लिखित पु॰ धर्मशास्त्रप्रवर्त्तके मुनिविशेषे ॥ न॰ वर्णसंस्थाने । लिपौ ॥ लिख्यतेस्म । लिखअक्षरविन्यासे । क्त ॥ त्रि॰ लिखितपत्रादौ । यथा । प्रमाणंलिखितंभुक्तिसाक्षिणश्चेतिकीर्त्तितम् ॥ इतिमिताक्षरायायाज्ञवल्क्य: ॥

लिखिताक्षरविन्यास: । पुं॰ लिपौ ॥

लिगु: । पुं॰ मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न॰ चित्ते ॥ लिगति । लगेसङ्गे । खरुशङ्कितिकुप्रत्ययान्त: साधु: ॥

लिङ्गम् । न॰ चिह्ने ॥ शिवमूर्त्तिविशेषे ॥ यथा । नेहलिङ्गार्चनात्किञ्चित्पुण्यमभ्यधिकं क्वचित् । इतिविज्ञाययत्नेनपूजनीय सदाशिव ॥ तथा । दुर्गार्चनरतोनित्यंमहापातकसम्भवै । दोषैर्नलिप्यतेवीरपद्मपत्र मिवाम्भसीत्याचारादर्शेभविष्यपुराणम् ॥ साङ्ख्योक्तप्रकृतौ ॥ शेफे ॥ धर्म्मे ॥ व्याप्ये । व्यापकस्यस्मारके ॥ व्यक्ते ॥ तस्यलिङ्गंप्रधानस्य । महदादिसूक्ष्मपर्य्यन्तं ॥ लिङ्गनाज्ज्ञापनाद्बुधाद्दिषु ॥ लयङ्गच्छतीति॰ सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि॰ पञ्चकर्मेन्द्रियाणि॰ पञ्चप्राणा मनोबुद्धिश्चेतिसप्तदशात्मके ॥ यथा । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसाधिया । शरीरं सप्तदशभि: सूक्ष्मं तल्लिङ्गमुच्यते ॥ लिङ्गातेगम्यतेयेनेति॰बुधादौ ॥ अनुमाने ॥ तत्त्रिविधम् । अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिचेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीचलिङ्गं तात्पर्यनिर्णये ॥ प्रमाणविशेषे ॥ शब्दसामर्थ्यं लिङ्गम् । यथाहु: । सामर्थ्यं सर्वभावानांलिङ्गमित्यभिधीयते॰ इति॰ । सामर्थ्यंरूढिरेव॰समाख्यातीभेद: । तेनवर्हिर्देवसदनन्दा

सूक्ष्मशरीरे । सप्तदशावयवास्तु । ज्ञानेन्द्रियपञ्चकम् कर्मेन्द्रियपञ्चक प्राणादिवायुपञ्चक बुद्धिमनसी चेति ॥ लिङ्ग्यते ज्ञायते प्रत्यगात्मसद्भावो येन । तल्लिङ्गम् । लिगि । हलश्चेति घञ् । लिङ्गस्य तत्शरीरञ्चेति विग्रहः ॥

लिङ्गस्थ । पुं० ब्रह्मचारिणि । वर्णिनि ॥

लिङ्गानुशासनम् । न० वररुच्यादिकृतिनाम्नालिङ्गबोधकेग्रन्थे ॥ तच्च शासनानर्हम् । लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येति समासान्ताद्गति सूत्रभाष्योक्तेलिङ्गानुवदन लोकादेवसिद्धमितिनिर्णयात् ॥

लिङ्गालिका । स्त्री० दीनायाम् । क्षुद्रमूषिके ॥

लिङ्गी । पुं० प्रव्रजितादिषु । ब्रह्मचार्यादिषु ॥ धर्मध्वजिनि ॥ वेशधरे ॥ गजे ॥ आत्मनि ॥ लिङ्गमस्यास्ति । इनि । ॥ न० व्यापके ॥

लिङ्गिनी । स्त्री० लताविशेषे । बहुपत्न्याम् । शिवमल्लिकायाम् । चित्रफलायाम् । चाण्डाल्याम् । आपस्तम्भिन्याम् । पचगुरिया० इ० भाषाप्रसिद्धे ॥

लिप्त । त्रि० पिच्छिले पशुके ॥ वैदिकोयम् ॥

लिपि । स्त्री० लिखिताक्षरे । लिवौ ॥ सापञ्चविधा यथा । मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूता लिपयःपञ्चधास्मृता ॥ एताभिर्लिपिभिर्व्याप्ताधरि श्रीशुभद्रादरेति वाराहीतन्त्रोक्तेः ॥ लेखन्यालिखितविप्रे मुद्राभिरङ्कितञ्चयत् । शिल्यादिनिर्मितयच्चपाठ्यधार्यंञ्चसर्वदेतिमुण्डमालातन्त्रोक्तेश्च ॥ लिप्यते । लिप उपलेपे । इगुपधात्किदितीन् ॥ लिपि । प्रमाणसर्वासर्वैवप्रशस्यते । विशेषाद्व्यवहारेषुनविनश्येच्चिरमतद्दतिश्रीमहानिर्वाणतन्त्रम् ॥

लिपिकर । पुं० लेखके ॥ लिपिंकरोति । डुकृञ् । दिवाविभेतिट ॥

लिपिका । स्त्री० लिपौ ॥

लिपिकार । पुं० लेखके ॥ लिपिंकरोति । कर्मण्यण् ॥

लिपी । स्त्री० लिपौ ॥ लिप्यते लिपेरिन्नन्तात्कृदिकारादतिङीष् ॥

लिप्त । त्रि० कृतलेपने । विलिप्ते ॥ विषदिग्धे विषाक्ते ॥ भुक्ते । भक्षिते ॥ दिग्धे ॥ लिप्यतेस्म । लिप० । क्तः ॥ यद्वा । लिनाति । लीश्लेषणे । लीयते वा । लङ्श्लेषणे । लीरीङोर्ह्रस्व । पुट्चतरौश्लेषणकुत्सनयोरितितप्र-

श्ययोधातोर्ङ्ख प्रत्ययश्चपुट् ॥ मिलिते ॥

लिप्तक । त्रि० विषाक्तबाणे । दिग्धे ॥ स्वार्थे कन् ॥

लिप्ता । स्त्री० घटिकायाम् । दण्डे ॥

लिप्तिका । स्त्री० दण्ड ॥ लिप्तैव । स्वार्थे कन् ॥

लिप्सा । स्त्री० इच्छायाम् । वाञ्छायाम् ॥ लभे सन्नन्तादप्रत्ययादिति०च ॥ लाभेच्छायाम् ॥ यथा । अर्थिनिखिलरतिलिप्सादातरिदिल्लातुदूरतोपास्ता । आस्ताकृपणकथेयरमापतेनोचिताभवतीति ॥

लिप्सु । त्रि० लब्धुमिच्छौ । गृध्नौ ॥ लुब्धे । अभिलाषुके ॥ लभे सन्नन्तादु ॥

लिवि । स्त्री० लिपौ । लिखितवर्णे ॥ लिप्यते । लिप० । इगुपधात्लिदितीन् । बाहुलकात्पस्यवत्वम् ॥ लिवि सौत्रोधातुर्वा ॥

लिविकर । पुं० लिपिकरे ॥ लिविं करोति । डुकृञ० । दिवाविभेतिट ॥

लिम्प । पु० लेपनकर्त्तरि ॥

लिम्पट । पु० विङ्गे ॥ द्धतिहारावली ।

लिम्पाक । पु० जम्बीरे ॥ खरे ॥ न० निम्बूकी । पातनीवू० इ०

भा० ॥

लिष्व । पुं० नर्त्तके ॥ लष्यते । लषकान्तो । सर्वनिघृष्वेतिसाधुरुपधेरित्वम् ॥

ली । पुं० श्लेषणे ॥ चपले ॥ लीङ् क्विप् ॥

लीका ।
लीचा । ) स्त्री० लिक्षायाम् । द्धतिश्वद्रत्नावली ॥

लीढ । त्रि० आस्वादिते । भक्षिते ॥ लिह्यतेस्म । लिहआस्वादने । क्त । ढत्वधत्वष्टुत्वलोपदीर्घाः ॥

लीन । त्रि० प्राप्तलये । विलीने ॥ छन्ने ॥ लीयतेस्म । लीङ्श्लेषणे । क्त । स्वादयञ्चदितद्धतिनत्वम् ॥

लीला । स्त्री० केलौ ॥ विलासे ॥ शृङ्गारभावचेष्टायाम् । गतिहास्यवचनादिभिः शृङ्गारभावतोजातक्रियानुकरणे ॥ प्रियस्यानुकृतिर्लीलाश्लिष्टाभावैर्वचेष्टितैः । अलब्धप्रियसमागमयास्वचित्तविनोदार्थंप्रियस्ययावेशगतिहष्टिहसितभणितैरनुकृतिः क्रियतेसालीलेत्यर्थः तथाहि । अप्राप्तवल्लभसमागमनायिकाया . सख्याः पुरोचनिजचित्तविनोदबुद्ध्या । आलापवेशगतिहास्यविलोकनाद्यैः प्राणेश्वरानुकृतिमाकथयन्तिलीलामितिभरत ॥ शोभायाम् ॥ लयनली ।

लीड् ० । सम्पदादित्वात् क्विप् । नियलाति । ला० । आतोऽनुपेति क । यद्वा । लेलायनम् । लेला दीप्तौ० कण्ड्वादि । भिदादयङ् । अप्रत्ययादित्विवा । पृषोदरादि ॥ यद्वा । लयनम् । लीडोवाहुल कात्गुणाभावश्च ॥

लीलाखेल । पु० अतिशर्करीछन्द १५ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा एकन्यूनौविद्युन्मालापादौचेल्लीलो खेल । यथा । पायाद्गोविन्द कालिन्दीकूलचोरौचक्रे० रासी ल्लास क्रीडद्गोपीभि सार्द्धंली लाखेल. । मन्दाकिन्यास्तीरेपा न्तेखेचरक्रीडाभिर्लीलो० यद्दैवा नभीग स्वर्गश्रीभि खेलन्तोभि ॥ त्रि० विलाससुभगे ॥

लीलावती । स्त्री० केलियुक्तायाम् ॥ विलासवत्याम् ॥ शृङ्गारभावचेष्टा ऽन्वितायाम् । खेलाविशिष्टाया म् ॥ भास्कराचार्यस्यपत्न्याम् ॥ भास्कराचार्यकृतेपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाह रणे यथा । लघुगुरुवर्णनियमविर हितमिहद्विसुकलयचतुष्कलमष्टग णम् । द्वात्रिंशत्कलविरचितमिद मतिशयसहृदयहृदयदु . खहरण- म् । लीलावतिकाभवतिचकारकर्ण द्विजगणजगणभगणकलिता० फ णिनायकपिङ्गलविरचितमङ्गलवृत्त ममलगुम्फनललिता ॥ यथा । गो कोटिप्रतिदिनमिहवितरन्द्विजवर- निवहेसुदमातनुषेरिपुतिमिरदलन करहस्तकुशेशयमपिलक्ष्मीवसतिंत नुषे । । दुरितविलयमिलितखल कोदयनृपराजवलयमवलयसिरणे- त्वयिचलतिचलतिवसुधावसुधाधि पकीर्त्तिसिहवरणीरमणे ॥ लीला शोभाऽस्त्यस्याम् । मतुप् । ङीप् ॥

लीलोद्यानम् । न० देववने ॥

लुक्कायित : । त्रि० अन्तर्हिते ॥

लुङ्ग । पुं० मातुलुङ्गे । बीज पूरे ॥ लुञ्ज्यते । लुजिभाषार्थ । घञ् । चजोरितिकुत्वम् । न्यङ्क्वा दित्वाद्वा ॥

लुङ्गुष : । पुं० क्रोलङ्गे ॥

लुठनम् । न० वेल्लने । अश्वस्यभूमौ पुन : पुन : श्रमोपहनने । लोट न० द्व० भा० प्र० ॥

लुठित . । त्रि० श्रमशान्त्यर्थंमुहुर्मुहु : पराव्रर्त्तवृत्ते । उपावृत्ते ॥ वेल्लिते । अपावृत्ते । परावृत्ते ॥ लुठति स्म । लुठप्रतिघाते । अकर्मकत्वा त्क्त . ॥

लुण्टक । पुं० शाकविशेषे । नव्या० द्व० गौ० भा० प्रसिद्धे ॥

लुण्टाक । पु० चौरे ॥

लुण्टाकी । स्त्री० चौरायास्त्रिया म् ॥

लुण्ठक । त्रि० स्तेयकारके ॥

लुण्ठनम् । न० हयलुठिते ॥ लूटइति प्रसिद्धे साहसे ॥ लुठिस्तेये । ल्युट् ॥

लुण्ठाक । पुं० परभृत्यौ । हिके । काके ॥

लुण्डिका । स्त्री० ) न्यायसारिण्याम् ।
लुण्डी । स्त्री० )

लोंडी० इ० भा० प्र० ॥

लुप्तम् । न० चौर्यधने ॥ त्रि० विलुप्ते । लोपवति ॥

लुप्तवर्णपदम् । न० ग्रस्ते ॥ लुप्तोव र्णः पद यायत्रवाक्ये पदेवातत् ॥

लुप्तसंवत्सर । पुं० विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्तं राशि नैतिचेत्पुन । लुप्तसंवत्सरोज्ञे योगर्हित सर्वकर्मसु ॥ अस्या पवादस्तु प्रथमेविभागेकुम्भे यद्यतीचा रगोगुरु । नतत्रकाललोप स्या दित्याहभगवान्यम ॥ अन्यञ्च । मासान्दशकादशवाप्रभुज्यराशेर्य द्वाराशिमुपैतिजीव , भुङ्क्तेनपूर्वं चपुनस्तथापिन लुप्तसंवत्सरमा हुरार्याः ॥ लुप्ताब्ददोषोऽपिमते नमध्येसोमोद्भवाया सुरनिम्नगा या ॥

लुप्ताब्द । पु० लुप्तसम्वत्सरे ॥

लुब्ध । पुं० व्याधे ॥ लम्पटे ॥ त्रि० आकाङ्क्षिणि । गृध्नौ । परधना भिलाषुके ॥ धर्मार्थस्वद्रव्यत्यागा समर्थे ॥ मातरं पितरं भ्रातॄन्सर्वा ञ्श्रसुहृदस्तथा । घ्नन्तिह्यसुतृपोलुब्धा राजानं प्रायशोभुवि ॥ लुभ्यति स्म । लुभगार्ध्ये । गत्यर्थेतिक्त ॥

लुब्धक । पु० व्याधे ॥ स्वार्थे० स ञ्ज्ञायांवाकन् ॥ आर्द्रायाम् ॥

लुलाय । पुं० महिषे ॥ लुडति । लुडस श्लेषणे । इगुपधेतिक । डलयो रेकत्वम् । अ.प्रोति । आप्लृ० । अच् । लुलश्चासावायश्च । यद्वा । लुडति । लुडलोडने । भिदाद्यङ् । लुलाविलोडिताआपोयेन । लुल विमर्दनेसौत्रोधातुर्वा ॥

लुलायकन्द । पुं० महिषकन्दे ॥

लुलायकान्ता । स्त्री० महिष्याम् ॥

लुलाय । पु० महिषे ॥ लुडति । लुड० । क । डलयोरभेद ॥ यद्वा । लुडते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसौत्रो धातुर्वा । बाहुलकादायप्रत्यय ॥ यद्वा । अयते । अय० । अच् । लुलश्चासौअयश्च ॥

लुलित । त्रि० आन्दोलिते । तरलि ते ॥ उत्सृष्टे ॥ लिप्ते । यथा । बा ल्येदु स्वातिरेकोमललुलितवपुरि ति ॥

लुभम । पुं॰ मत्तमातङ्गे । मत्तग जे ॥ रोषति । रुषहिंसायाम् । रुषेर्नित्लुष्चेत्यभच्॰ इतिरुषि रभच्नित्किद्वातोलुंषादेशस्र ॥

लू । स्त्री॰ लवने । लवनम् । लूञ् भावेक्किप् ॥ लुनातिवा । अत्रवा च्यलिङ्गः ॥

लूता । स्त्री॰ ऊर्णनाभे । मर्कटके ॥ पिपीलिकायाम् ॥ रोगविशेषे । म र्म्मव्रणे ॥ लुनाति । लूञ्॰ । ह सिमृग्रिण्वामीतितन् । संज्ञापू र्वकत्वाद्गुणाभाव ॥

लूतातन्तु । पुं॰ मर्कटकजाले । मर्क डीकाजाला॰ इ॰ भा॰ लूताया न्तु ॥

लूतामर्कटक । पुं॰ लूतामर्कटक पुष्पी॰नवमालिकयो . कपाविति- हेमचन्द्र ॥

लूतारिः । पुं॰ दुग्धफेनीक्षुपे ॥

लूतिका । स्त्री॰ ऊर्णनाभौ । मर्कट- की । मकडी॰इ॰भा॰ ॥ लूतैव । स्वार्थेकः ॥

लून । त्रि॰ छिन्ने ॥ लूयतेस्म । लूञ्॰ । क्तः । ल्वादिभ्यश्चेतिनत्वम् ॥

लूनक । पुं॰ भिन्ने । भेदिते ॥ प- शौ ॥ याथादिषु॰पशौलूनविपात- इतिस्वार्थेकन् ॥

लूनि । स्त्री॰ छेदे ॥

लूमम् । न॰ पुच्छे । लाङ्गूले ॥ लूय- ते । लूञ्॰ । बाहुलकान्मक् ॥

लेख । पुं॰ अदितिनन्दने । देवे सुरे ॥ ध्यानार्थंचिचादौलिख्यते । लिखअक्षरविन्यासे । अकर्त्तरिच कारकेसंज्ञायामितिकर्म्मणिघञ् । ग्रीवाहस्तपादेषुतिस्रोलेखा सन्ति यस्येतिवा । अर्शआद्यच् ॥ ले- ख्ये ॥

लेखक । पुं॰ लिपिकरे । अक्षरचु- ञ्चौ । लेखनकर्त्तरि । लिखारी॰ इ॰भा॰ ॥ लिखति । लिख॰ । शि ल्पिनिष्वुन् । ण्वुल्वा ॥ अस्यल- क्षणानियथा । सर्वदेशाक्षराभिज्ञ सर्वशास्त्रविशारद . । लेखक . क थितोराज्ञ सर्वाधिकरणेषुवै ॥ शी र्षोपेतान्सुसम्पूर्णान्समश्रेणिग- तान्समान् । अक्षरान्वैलिखेद्यस्तुले खक . सवर . स्मृत ॥ उपायवा क्यकुशल सर्वशास्त्रविशारद । बह्वर्थवक्ताचाल्पेनलेखक . स्यान्नृ गूत्तम ॥ वाक्याभिप्रायतत्त्वज्ञोदेश कालविभागवित् । अनाहार्योनृपे भक्तोलेखकः स्यान्नृगूत्तम ॥ इति मात्स्ये १८९ अध्याय ॥ अपि- च । सकृदुक्तगृहीतार्थोलघुहस्तो जिताक्षरः । सर्वशास्त्रसमालोकी प्रकृष्टोनामलेखकः ॥ राजलेखक लक्षणंयथा । ब्राह्मणोमन्त्रणाभिज्ञो राजनीतिविशारद . । नानालिपि

ज्ञोमेधावीनानाभाषासमन्वित ॥ मन्त्रणाचतुरोधीमान्नीतिशास्त्रार्थकोविद. । सन्धिविग्रहभेदज्ञोराजकार्य्येविचक्षण ॥ सदाराजहितान्वेषीराजसन्निधिसस्थित '। कार्य्याकार्यविचारज्ञ. सत्यवादीजितेन्द्रिय ॥ स्वरूपवादीशुद्धात्माधर्मज्ञोराजधर्मवित् । एवमादिगुणैर्युक्त' सएवराजलेखक ॥ नृपानुवर्त्तीसततन्नृपविश्वासरक्षक: । नृपतेर्हितकान्वेषीसएवराजलेखक: ॥ इतिपत्रकौमुदी ॥

लेखन । पु॰ काशे । न॰च्छर्द्दने ॥ भूर्जे । लिपिन्यासे ॥ लिख॰ । ल्युट् ॥

लेखनाञ्जन । न॰ अञ्जनविशेषे ॥ यथा । दधाण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवै । चूर्णितैरञ्जनप्रोक्तापुष्पार्मादिनिकृन्तनम् ॥ कुक्कुटाण्डस्यत्वक् । शिलामन. शिला ॥

लेखनिक । पु॰ लेखहारे ॥ लेखेषु परहस्तेनस्वहस्तस्यचलेखके । यस्वहस्त परहस्ते नलिखितेषुविलेखयेत्॰तत्र ॥

लेखनी । स्त्री॰ कलमे । वर्णतूलिकायाम् ॥

लेखनीय '। त्रि॰ लेख्ये

लेखर्षभ । पु॰ जिष्णौ । शक्रे । इन्द्रे ॥ लेखेषुऋषभ । सप्तमीतिर्य्यागविभागात्समास ॥ लेखऋषभइवेतित्रा । उपमितसमास ॥

लेखहार ' ) पु॰ पत्रवाहके । लेख
लेखहारक ) हरति । हृञ्॰ । कर्म्मण्यण् ॥

लेखा । स्त्री॰ लिपौ ॥ राजिकायाम् । रेखायाम्॥लिख्यते । लिख॰ । भिदादिपाठादङ्गुणौ ॥ न्यायाम् ॥

लेखार्ह । पु॰ श्रीतालवृक्षे । मृदुच्छदे ॥

लेख्यम् । न॰ भागदानादिव्यवहारकरणे । पत्रे ॥ त्रि॰ लेखितव्य । लेखनीये ॥ व्यवहाराङ्कक्रियापादाङ्गे ॥ यथा । यन्मासिकेपिसमयेभ्रान्ति सञ्जायतेयत । धात्राक्षराणिसृष्टानिपत्रारूढन्यत पुरा ॥ लेख्यन्तुद्विविधप्रोक्त स्वहस्तान्यकृततथाचसाक्षिकसाक्षिमच्चसिद्धिर्देशस्थितेस्तयो ॥ मृतास्तुसाक्षिणोयत्रधनिकर्णिकलेखका. तदप्यपार्थकारणमृतेत्वाधे स्थिराश्रयात् ॥ दर्शितप्रतिकालञ्चपठितश्रावितञ्चयत् । लेख्यसिद्ध यतिसर्वं चमृतेष्वपिचसाक्षिषु ॥

लेख्यचूर्णिका । स्त्री॰ तूलिकायाम् ॥

लेख्यपत्र । पुं॰ तालद्रुमे ॥ न॰ लेखनीयपत्रे ॥

लेख्यस्थानम् । न॰ ग्रन्थकुड्याम् ।

ट्फ्तरङ्गतीतरजनभा० प्र०

लेण्डम् । न० गूथे । शकृति । लैण्ड इ० भा० प्र० ॥

लेण्डूज. । पु० डुण्डुभे ॥ डुण्डुभे जानवषट् पश्चलेण्डूजाश्चापिभावि नङ्कष्यागमात् ॥

लेप । पु० लेपने ॥ जग्धौ । अशने ॥ अनुशये । अनुबन्धे ॥ सच० इदमहमकार्षमेतत्फलभोक्ष्ये० इत्यनुसन्धानकर्तृत्ववासनानिमित्त । सचपुण्ये कर्मणिपुण्यरूप० पापेचपश्चात्तापरूपोभवति ॥ लेपनम् । लिप० घञ् ॥ सुधायाम् । चूना० इ० भा० प्र० ॥

लेपक । पुं० पलगण्डे । राज इ० प्र० ज लो ॥ त्रि० लेपकर्त्तरि ॥ लिपति । लिप० ण्वुल् ॥

लेपनम् । न० लेपे । चन्दनागुर्वादिनाङ्गविलेपने ॥ देवगृहादिलेपने । लीपना० इ० भा० लिपेर्ल्युट् ॥ पु० तुरुष्कनामगन्धद्रव्ये ॥

लेपभुक् । पुं० पितामहपित्रादिषु ॥

लेपी । पुं० लेपके । पलगण्डे । थेकार० इ० गौ० दे० भा० । राज० इ० दे० भा० ॥

लेप्य । त्रि० लेपनीये ॥

लेप्यकृत् । पुं० लेपके ॥

लेप्यमयी । स्त्री० काष्ठादिघटितपुत्तलिकायाम् । पञ्चलिकारिकायाम् ॥

लेभिरम् । न० उलूखले ॥

लेय । पु० सिंहराशौ ॥

लेलायनम् । न० चलने ॥

लेलायमान । त्रि० अतिशयचलनविशिष्टे ॥ यथाग्निर्वेविर्ग्रहणायलेलायमानोभवति ॥

लेलिह । पु० सर्पे ॥

लेलिहा । स्त्री० जीवन्यासमुद्रायाम् ॥ यथा । तर्जनीमध्यमानामा समा कुर्यादधो मुखा । अनामायाश्चिपेद्वामज्ञीं कृत्वाकनिष्ठिकाम् । लेलिहानामभुद्रेयजीवन्यासेप्रकीर्त्तिता ॥

लेलिहान. । पु० शिवे ॥ सर्पे ॥ त्रि० ललज्जिह्वे ॥ लेहातिशयकारके । पुन. पुनर्लेहनकर्त्तरि ॥ लिहेर्यङ्लुगन्तात्ताच्छील्ये चानश्प्रत्यये० गुणोयङ्लुकोरित्यभ्यासस्यगुण ॥

लेलिहाना । स्त्री० लेलिहायामुद्रायाम् ॥

लेश । पुं० अल्पे कणे ॥ लिशति । लिशगतौ । पचाद्यच् ॥ लिश्यतेवा । घञ् ॥

लेशेज. । त्रि० अतिकम्पने ॥ लेशेनाल्पेनापिएजति । एजृ० । पचाद्यच् ॥

लेष्टु. । पुं० दृढमृत्पिण्डे । लोष्टे । ढीम०ढेला०डलाइ० भा०प्र० ॥

लिश्यते०लिशतिवा । लिश० । बाहुलकात्तुन् ॥
लेष्टुघ्न । पुं० लोष्टभेदने ॥
लेष्टुभेदन । पु० कोटिशे । लोष्टभेदनमुद्गरे ॥
लेसिक । पु० कटिरोहके । हस्त्यारोहके ॥
लेह । पुं० आहारे । भोजने । स्वादने ॥ लेहने ॥ लेहनम् लिहआस्वादने । घञ् ॥ लेढि । शाद्याघेतिणोवा ॥
लेहनम । न० जिह्वास्वादे । जिह्वया रसग्रहणे । चाटना०हृ०भा० ॥ लिहेर्ल्युट् ॥
लेह्यम् । न० अमृते । सुधायाम् ॥ त्रि०लेहयोग्ये । आस्वाद्ये । यज्जिह्वायानि क्षिप्यरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादितच ॥
लैङ्ग । पु० वैयाकरणे ॥ वैयाकरणाहिस्त्रीपुनपुंसकशब्दजाततत्त्वमितिवर्णयतितदयुक्तम् । स्वरादेशब्दस्वभावत्वे सर्वादीनांत्रिलिङ्गत्वायोगादेकस्यानेकभावत्वायोगात् । औपाधिकधर्मत्वे चतस्यावस्तुत्वात् ॥ न०लिङ्गपुराणे ॥ त्रि०-लिङ्गसम्बन्धिनि ॥ लिङ्गस्येदम तस्येदमित्यण् ॥
लैङ्गी । स्त्री० लिङ्गिन्यामोषधौ ॥
लोक । पुं० जने आत्मनि ॥ लोक्यतेअनुभूयतेशास्त्रोपदेशशीलित-बुद्ध्यायमितिव्युत्पादनात् ॥ दर्शने ॥ लोक्यमानेविषये ॥ प्राणिनिकाये । भुवने ॥ त्रयोलोका स्वर्गमर्त्यपातालानि ॥ अत्रसप्तलोकनामानियथा । भूर्भुव स्वर्महश्चैव जनस्तपएवच । सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिता ॥ दृश्यवर्गे ॥ ग्राह्यग्राहणत्रिषयेस्मिन्शरीरे ॥ लोकोहिद्विविध प्रोक्तआत्मानात्मविभेदत । मनुष्यपितृदेवाख्योऽनात्मलोकस्त्रिधामत ॥ आत्मलोकस्तस्वरूपमित्याहु शास्त्रदर्शिन ॥ मनुष्यलोक पुत्रेणपितृलोकस्तुकर्मणा । विद्ययादेवलोकश्चेत्यब्रवीत्सङ्गृहश्रुति ॥ लोक्यतेऽनुभूयते०दृश्यते०भुज्यते-वा । लोकृदर्शने । घञ् ॥ कर्मफले ॥ प्रसिद्धिमागम प्राप्तोलोकइ-त्यभिधीयते । चतुर्दशविद्यास्थानानिलोकाइतिव्याख्यातार । लोक्यतेत्रास्तेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्ते ॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद्देहस्यापिलोकान्तर्गतत्वम् ॥
लोककान्ता । स्त्री० ऋद्धिनामौषधौ ॥
लोकचक्षु । पु० सूर्ये । जनलोचने

लोकजित् । पुं॰ जिने ॥ लोकंजयति । जि॰ । सत्सूद्विषेत्यादिनाक्विप् । तुक् ॥ लोकान्‌जयत्युपरमयतीति वा ॥ त्रि॰ लोकजेतरि ॥

लोकतुषार । पु॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्‌जगति ॥ लोकानांत्रयम् ॥

लोकदम्भक । पुं॰ नि॰ क्षेपापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ । पुं॰ शिवे ॥ ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ ॥ लोकैर्नाथ्यतेयाच्यतेवाकर्म्मणिघञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रोवह्निः पितृपतिर्नैर्ऋतिर्वरुणोऽनिल : । धनद : शङ्करश्चैव लोकपाला : पुरातना : ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्य्ये ॥

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे ॥ येनोपायेनमर्त्यानां लोकयात्राप्रसिध्यति । तदेवकार्य्यं ब्रह्मज्ञैरिदंधर्मसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पुं॰ सूर्य्ये ॥

लोकवाह्य । त्रि॰ सर्वाचारविवर्ज्जिते ॥ लोकाद्वाह्य ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव : स्वरितित्रयोलोका वस्तुभूता : सन्तीतिसङ्कल्पयति ॥

लोकविनायक । पु॰ ग्रहविशेषे ॥

लोकविश्रुति । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ विचित्रपरिहासकथादिके॰ असत्प्रियाख्याने ॥ न लोकवृत्तंवर्त्तेतवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानाम्‌वृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वेस्वेधर्मेप्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्ग्रहणंसङ्ग्रह : । लोकानासङ्ग्रहोग्रहणम् ॥

लोकसार । पु॰ प्रणवे ॥

लोकाकाशास्तिकाय । पु॰ लोकानामन्तराकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्द्धाखंनाभिश्चरणौक्षिति : । सूर्य्यश्चक्षुर्दिश : श्रोत्रेतस्मैलोकात्मनेनम : ॥

लोकादि । पु॰ ब्रह्मणि ॥ लोकानामादि : प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकंदृश्यवर्गंस्वाभाविकेनबोधेनसाक्षात्पश्यतीति॰लोकाध्यक्ष: ॥ लोका

नामध्यच . । लोकाध्यच्चायच्च तिवा, लोकान्यध्यच्चयतीतिकर्म्म ण्यथिउपपद्समासोवा ॥

लोकापवाद । पु॰ लोककर्तृकाया निन्दायाम् ॥ लोकापवादाद्भयम् ॥

लोकायतम् । न॰ तर्कभेदे । चार्वाकदर्शने ॥ लोकायतम् ॥

लोकायतिक । पु॰ चार्वाके ॥

लोकालोक । पु॰ परमेश्वरे ॥ लोकआन्नह्मस्तम्बपर्यन्त . आलोक्यते प्रकाश्यतेयेनस ॥ चक्रवालेऽद्रिविशेषे ॥ लोकालोकोवहिस्तस्या लोकालोकनियामक . । योजनायुतविष्कम्भस्तुङ्गश्रृङ्गपरिच्छद . ॥ अन्त . स्थित लोक वहि ' स्थितस्त्वालोकनियमयतीति॰ लोकालोकनियामक । तद्वाह्येलोकाभावादित्यर्थ ' ॥ लोकदर्शने । भावेघञ् । नलोक ' अलोक । लोकश्चालोकश्च॰लोकालोकौ॰ प्रकाशान्धकारावचस्त अन्तर्वहि सूर्यकिरणानास्पर्शास्पर्शाभ्याम् ॥

लोकालोकी । चि॰ चैलोक्यदर्शिनि ॥ लोकानालोकते॰तच्छील ' । णिनि ॥

लोकेश ' । पुं॰ हिरण्यगर्भे । ब्रह्मणि ॥ लोकानामीश ॥ बुद्धभेदे ॥ पारदे ॥

लोकेशाधिष्ठित । पुं॰ राजनि ॥

लोकेश्वर । पुं॰ शिवे ॥ लोकानाञ्नानाश्चईश्वर प्रभु ॥ बुद्ध भेदे ॥

लोकेश्वरात्मजा । स्त्री॰ बुद्धशक्तिविशेषे । तारायाम । श्रियि । मनोरमायाम् ॥

लोकेषणा । स्त्री॰ देवलोकादिकामनायाम् ॥ लोकैषणेतिदेवादिलोकार्थोपासनार्थिता ॥

लोकोत्तर ' । त्रि॰ लोकातीते ॥

लोकोद्धार ' । पुं॰ तीर्थविशेषे ॥

लोक्य । त्रि॰ परलोकादिसाधने । लोकायहिते ॥

लोचनम । न॰ अश्रुणि । वास्पे ॥

लोचक । पुं॰ मासपिण्डे ॥ अक्षितारकायाम् ॥ कज्जले ॥ स्त्रीभालभूषणे ॥ कदल्याम् ॥ नीलवस्त्रे ॥ कर्णपूरे । कर्णिकायाम् । कर्णाभरणे ॥ ज्यायाम् । मौर्व्याम् ॥ भूलग्नचर्म्मणि ॥ निर्म्मोके ॥ त्रि॰ निर्बुद्धौ ॥

लोचनम् । न॰ चक्षुषिचक्षुषि ॥ अक्षशुभाशुभलक्षण यथा । कर्णान्तेपद्मपत्राभैर्लोचनै ' सुखभागिन. । मार्जारलोचनै . पापीमहात्मामधुपिङ्गलै ॥ क्रूरा केकरनेत्राश्चहरिणाक्षा . सकल्मषा : । जिह्माक्षलोचनै : क्रूरा सेनान्योगजलोचना ॥ गम्भीराक्षाईश्वरा ' ए ुम '

ग्निग्ध स्थूलचक्षुष । नीलोत्पला क्षाविहास सौभाग्यश्याबचक्षुषा म् ॥ क्षातूक्षणातारकाक्षाणाम- क्षणामुत्पाटनक्रिया । मण्डलाक्षा श्चपापा ख्युर्निःक्षा ख्युर्दीर्घले चना ॥ इक्स्निग्धाविपुलाभोगि अल्पायुर्यातिचोन्नता । विशालोन्न तासुखिनिर्दरिद्राविषमभ्रुव ॥ इ तिगारुडे ६६ ॥ लोच्यतेनेन । लोचृदर्शने । ल्युट ॥ आलोचने ।

लोचनहिता । स्त्री० तुत्थाञ्जने ॥

लोचना । स्त्री० गुच्छशक्तिविशेषे ॥

लोचनामय । पुं० चक्षूरोगविशेषे । अभिमन्थे ॥

लोचनी । स्त्री० महाश्रावणिका- याम् ॥

लोचमर्कट । पुं० लोचमस्तके ॥

लोचमस्तक । पुं० खराश्वायाम् । कारव्याम् । दीप्ये । मयूरे । म यूरशिखौषधे । रुद्रजटाइ० गौ० दे० प्र० ॥ लोच्यते । लोचृदर्शने घञ ॥ यद्वा । लोचयति । लोचृ भाषार्थे । पचाद्यच् । लोचोदर्श नीयोभासमानोवा० मस्तकोस्य ॥

लोठनम् । न० इतस्ततश्चालने ॥

लोडनम् । न० प्रतिघाते ॥

लोडणम् । न० लवणत्वगे ॥

लोणा । स्त्री० क्षुद्राम्लिकायाम् । चा ङ्गेर्याम् ॥ लोणोशाके । लोनिका०

लोनी० इ० भा० श्रुते ॥ अम्लगु णा । लोणारूक्षागुरु कटुर्वात श्लेष्महरोपटु । अर्शोघ्नीदीपनीचा म्लामन्दाग्निविषनाशिनी ॥

लोणाम्ला । स्त्री० क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥

लोणारम् । न० क्षारविशेषे । लवणो त्थे । लवणाकारजे । लवणक्षारे । लवणमदे ॥

लोणितम् । न० लोनियाख्यशाके ॥ शाकलोणितसञ्ज्ञकसुदलिततप्तेघृते तापितहिङ्ग्वार्द्रैणविमिश्रितंसलवण तक्रेणसपाचितम् । नोवाख्येद्यपि दसुहिङ्गुसहित तैलेनवावामित खिन्नतण्डुलसयुतसलवण तक्रैवि- नापाचितम् ॥ लोणित शुभशौतो ष्णारूक्ष विष्टम्भकारकम । दोषघ्नन् मधुरणकोवातघ्नञ्चामलपित्तकृत् ॥

लोणी । स्त्री० लोणायाम् ॥

लोत । पुं० न० चाश्ये । अश्रुणि । नेत्राम्बुनि ॥ न० लोप्त्रे ॥ लुना ति । लूञ० । हसिमृग्रिण्त्यादिना तन् । लोतोमिषइतिक्तावत्नि र्दे तिसूत्रे कैयट ॥

लोत्रम् । न० लोप्त्रे ॥ नेत्रजले ॥ लूञ । सर्वधातुभ्यष्ट्रन् ॥

लोध्र । पुं० गालवे । शाबरे । ति रीटे । तिल्वे । मार्जने । लोध० इ० भा० प्र० ॥ लोध्रोग्राहीलघु

शीतस्वच्छ्य . कफपित्तमुत् । क षायोरक्तपित्तासृग्ज्वरातीसारशो थहृत् ॥ कृणादि । रुधिर० । वा हुलकात्ट्रन् । कपिलकादि ॥

लोघ्रवृक्ष । पु० गालवे ॥

लोध्रपुष्पक । पुं० शालिप्रभेदे ॥

लोप । पु० अदर्शने ॥ गम्यमाना र्थस्याप्रयोगएवलोप । यथाविभक्त धनेषु० विभक्ताभ्रातर अचोत्तर पदस्थधनस्यलोप ॥ लुप्यते । लु प्लृच्छेदने । कर्म्मणिघञ् ॥ छेदे ॥

लोपा । स्त्री० लोपामुद्रायां ॥

लोपाक / लोपापक ) पु० शृगाले । फेरौ ॥

लोपायिका । स्त्री० शृगाल्याम् ॥

लोपामुद्रा । स्त्री० अगस्त्यमुने पत्न्याम् ॥ नमुद्राऽतिचमुद्रायातो नुपेतिक० । लोपेधर्मलोपायमुद्रा र्षनलभतइत्यर्थं ॥

लोपामुद्रापति । पुं० अगस्त्यमुनौ ॥

लोपाशक । पु० शृगाले ॥

लोपाशिका । स्त्री० शृगाल्याम् ॥

लोपत्रम् । न० चोरिते । चोरधने ॥ लुप्त० । ष्ट्रन् ॥

लोपञ्ची । स्त्री० हस्तलालनयाकृते० वारिमिश्रितगोधूमादिचूर्णपिण्डे । लोयी० मेडी० इतिचलोकभाषा याप्रसिद्धे ॥ षित्त्वान्ङीष् ॥ लो पञ्चि ॥

लोभ । पु० धनतृष्णायाम् । सच तिधनागमेजायमाने प्यनुक्षणवर्द्ध मानेतदभिलाषे । स्वविषयप्राप्त निवर्त्ये०इच्छाविशेषे ॥ आत्मनो ऽनुकूलेषुसुखहेतुषुदृश्यमानेषुभूय माणेषुस्मर्यमाणेषुवातद्गुणानु सन्धानाभ्यासेनयोरन्यात्मकोगर्द्धो भिलाषस्तृष्णा० लोभ ॥ धर्म विवे०धनपरद्रव्येच्छायाम् ॥ यथा । परवित्तादिकदृष्टानेतुयोऽहृदि जायते । अभिलाषोद्विजश्रेष्ठसलो भ परिकीर्त्तितइति ॥ सतुनाश कारणम् । यथा । लोभप्रमादवि श्वासै पुरुषोनश्यतेत्रिभि । तस्माल्लोभोनकर्त्तव्य प्रमादोनन विश्वसेत् ॥ अपिच । त्रिविधंनर कस्येदद्वार नाशनमात्मन० । का म . क्रोधस्तथालोभस्तस्मादेतत्त्र य त्यजेदिति ॥ अस्यस्वरूप यथा । सन्त्येतेमददन्तिनोमदजलप्रम्लान गण्डस्थलावातव्यायतपातिनश्चतुर गाभूयोऽपिलप्स्येपराम् । एतल्लब्ध मिद लभेपुनरिदलब्ध्वाधिकध्या यताचिन्ताजर्ज्जरचेतसांवतनृणा कानामशान्त कथा ॥ अपिच । क्षेत्रग्रामवनाद्रिपत्तनपुरीद्वीपत्क्षमा मण्डलप्रत्याशावनसूत्रवद्धमनसां लब्ध्वाधिकध्यायताम् । तृष्णे दे वियदिप्रसीदसितमोघ्यश्चानितुङ्गा

निचेत् तन्नो प्राणभृताकुत शमकथाब्रह्माण्डलक्षेरपीति ॥ लोभएवमनुष्याणादेहस्थोमहारिपु । सर्वदुःखाकर प्रोक्तोदुःखद प्राणनाशक ॥सर्वपापस्यमूलं हि सर्वदातृष्णयान्वित । विरोधकृत्त्रिवर्णानासर्वा्ते · कारण तथा ॥ लोभात्त्यजन्तिधर्मंवै कुलधर्मंतथैवहि । मातर भ्रातर हन्तिपितरंबान्धव तथा ॥ गुरु मित्र तथाभाम पुत्रश्चभगिनीतथा । लोभाविष्टो नकिंकुर्यादकृत्य पापमोहित ॥ क्रोधात्कामादहङ्कारात्लोभएव महारिपु · । प्राणास्त्यजन्तिलोभे नकि पुन . स्यादनाबृतम् ॥ तस्माल्लोभाभिभूतस्तुकिंनकुर्यान्नर किलेतिदेवीभागवतम् ॥

लोभनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोभनीय । त्रि॰ तृष्णोत्पादके ॥

लोभी । त्रि॰ गृध्नौ । लुब्धे । लोभयुक्ते ॥ लोभोस्त्यस्य । इनि . ॥

लोभ्य : । पुं॰ मुद्गे ॥ त्रि॰ लोभनीये ॥

लोमम् । न॰ पुच्छे । लाङ्गूले ॥

लोमकरणी । स्त्री॰ मांसच्छदायाम् ॥

लोमकर्ण : । पु॰ शशके ॥ त्रि॰ लोमयुक्तकर्णविशिष्टे ॥

लोमघ्न: । पुं॰ इन्द्रलुप्तकेरोगे॥ त्रि॰ लोमघातके ॥ लोमानिहन्ति । हन॰ । अमनुष्यकर्तृकेचेतिटक॥

लोम । न॰ तनूरुहे । रोमणि ॥ रोहति । रुह॰ नामन्सीमन्व्योमन्रोमन्लोमन्निति साधु ॥ यद्वा । रूयते । रुशब्दे॰ रुङ्गतौभाषणे वा । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद . । पु॰ ऋष्यशृङ्गमुने पुत्रे । अङ्गदेशीयराजविशेषे ।

लोमपादपू · । स्त्री॰ चम्पापुर्याम् । मालिन्याम् । कर्णपुरि ॥

लोमफलम् । न॰ भव्ये ॥

लोमवान् । त्रि॰ लोमशे ॥ लोमानि सन्त्यस्य । मतुप् ॥

लोमविष । पुं॰ व्याघ्रादौ ॥

लोमश । पुं॰ मुनिविशेषे ॥ मेषे ॥ त्रि॰ अतिशयलोमान्विते ॥ यथा । कदाचिद्दन्तुरोमूर्ख · कदाचिल्लोमश सुखी । कदाचित्तुन्दिलोदु : खीकदाचिच्चञ्चलासती ॥ लोमानिसन्त्यस्य । लोमादिभ्य श : ॥

लोमशकान्ता । स्त्री॰ कर्कट्याम् ॥

लोमशपर्णिनी । स्त्री॰ माषपर्ण्याम्॥

लोमशपुष्पक · । पु॰ शिरीषवृक्षे ॥

लोमशमार्ज्जार : । पुं॰ पूतिके । मार्जारके । सुगन्धिनि । मूत्रपतने । गन्धमार्जारकेगन्धगोकुला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰॥ गन्धमार्ज्जार

वीर्य्यन्तुवीर्य्यकृत्कफवातहृत् । क
षडूकीाठहर नेत्य सुगन्धश्लेष्मगन्धनु
त् ॥

लोमशा । स्त्री॰ काकजङ्घायाम् ॥
माषाम् ॥ वचायाम् ॥ शूकशि
म्ब्याम् ॥ महामेदायाम् ॥ काशी
शे ॥ शाकिनीभेदे ॥ शृगाल्याम् ॥
अतिबलायाम् ॥ घण्टारवायाम्
। शणपुष्प्याम् ॥ पर्वारी ॥ गन्ध
मास्याम् ॥ लोमानिसन्त्यस्याः ।
लोमादित्वाच्छ । टाप् ॥

लोमशातनम् । न॰ लोमपातने ॥

लोमहर्ष । पुं॰ रोमहर्षे रोमाञ्चे ॥

लोमहर्षण । पुं॰ सूते । व्यासशि
ष्ये ॥ न॰ रोमाञ्चे ॥

लोमहृत् । पुं॰ हरिताले ॥

लोमालिका । स्त्री॰ शृगालिकायाम्
। दीर्घजिह्वायाम् । उल्कामुख्या ॥

लोमावली । स्त्री॰ रोमावल्याम् ॥

लोल । त्रि॰ सतृष्णे ॥ चञ्चले ॥
लोडति । लुडविलोडने । क्वचिद
पवादविषयेऽप्युत्सर्गप्रवृत्तेरच् । ड
लयोरेकत्वम् ॥ यद्वा । लोडति
। लोड्डउन्मादे । पचाद्यच् ॥ देश
विशेषे ॥

लोलमान । त्रि॰ चलनशीले ॥ ता
च्छील्ये तिचानश् ॥ लुण्ठमाने ॥

लोला । स्त्री॰ जिह्वायाम् ॥ कमला
याम् । श्रियि ॥ चञ्चलायांनार्यां
म् ॥ कामलायाम् । अक्षरौच्छन्द
१४ प्रभेदे ॥ तल्लक्षण यथा । द्वि
सप्तच्छिद्लिलाम सौभोगौ चरणे
चेत् ॥ यथा । मुग्धे यौवनलक्ष्मी
र्विद्युद्विभ्रमलोला॰ त्रैलोक्याद्भुत
रूपोगोविन्दोतिदुराप तद्वृन्दाव
नकुञ्जे गुञ्जद्भृङ्गसनाथेश्रीनाथेनसमे
तास्वच्छन्दं कुरुकेलिम् । लोलाष्टा
प ॥

लोलार्क्क । पुं॰ सूर्ये । काशिस्थे
रवौ । लोलार्ककेशवौकोटीगङ्गा
व्यानगरधनु । कलिलश्च शरी
धर्म शिवोधन्वोपुनातुमाम् ॥

लोलिका । स्त्री॰ चाङ्गेर्य्याम् ॥

लोलित । त्रि॰ वशीकृते ॥ चा
लिते ॥ श्लथे ॥ लोल . सञ्जातोऽ
स्य । इतच् ॥

लोलुप । त्रि॰ अतिलुब्धे ॥ गर्हितं
लुम्पति । लुप्लृच्छेदने । लुपसदे
तियङन्तादच् ॥

लोलुभ । त्रि॰ लोलुपे ॥ भृश लुभ्य
ति । लुभगार्द्ध्ये । धातोरेकाचह
तियङन्तादच् ॥

लोष्ट । पुं॰ न॰ मृत्खण्डे । पांशु
पिण्डे । लोष्टौ । ढीम॰ ढेला॰
इ॰ भा॰ ॥ लोष्टति । लोष्टसङ्घा
ते । पचाद्यच् ॥ यद्वा । लुनाति ।
लूञ्॰ लोष्टपलितावितिक्तः : त
स्यसुट्॰ धातोर्गुणश्चनिपातनात्

॥ न० लोहमले ॥

लोष्टघ्न । पु० लोष्टभेदने ॥

लोष्टभेदन । पु० कोटिशे । लोष्ट भङ्गसाधनकाष्ठे ॥

लोष्टमर्द्दी । त्रि० लोष्टमर्द्दनशीले ॥

लोष्टु । पुं० लोष्टे । दृढमृत्पिण्डे ॥

लोह । पु० सर्वलोहितच्छागे ॥ पु० न० लौहे । लोहविकारे ॥ जोङ्गके । अगुरुणि ॥ सर्वतैजसे रुधिरे ॥ कृष्णायसे । दृषत्सारे । शस्त्रके । कालायसे । लोहा० इ० भा० प्र० । अथलोहस्योत्पत्त्यादयो यथा । पुरालोमिनदैत्यानांनिहतानांसुरैर्युधि । उत्पन्नानिशरीरेभ्योलोहानिविविधानिच ॥ लोहोऽस्त्रीशस्त्रकंतीक्ष्णं पिण्डं कालायसायसी । गुरुतादृढतोत्क्लेदकश्मलदाहकारिता ॥ अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्यतु । लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु ॥ रूक्षं वयस्यंचक्षुष्यं लेखनंचानिलं जयेत् । कफपित्तंगरं शूलं शोथार्शःप्लीहपाण्डुताः ॥ मेदोमेहक्रिमीन्कुष्ठं तत्किट्टं तद्वदेवहि । षण्ढत्वकुष्ठामयमृत्युदं भवेद्धृद्रोगशूलौ कुरुतेऽश्मरीञ्च । नानारुजानाञ्चतथाप्रकोपंकरोतिहृल्लासमशुद्धलोहम् ॥ जीवहारिमदकारिचायस



ऽशुद्धिमदस्रकृतं ध्रुवम् ॥ पाटवंनतनुतेशरीरकेदारुणांहृदिरुजाञ्चयच्छति ॥ अथलोहदोषप्रशान्तयेशोधनमभिधीयते । पत्रलीकृतपत्राणिलोहस्याग्नौप्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैलेतक्रेच काञ्जिके ॥ गोमूत्रेचकुलत्थानां कषायेचत्रिधात्रिधा । एवं लोहस्य पत्राणांविशुद्धिः सम्प्रजायते ॥ अथास्यमारणविधिः । शुद्धलोहभवंचूर्णंपातालगरुडीरसैः । मर्द्दयित्वापुटेद्वह्नौदद्यादेवंपुटत्रयम् ॥ पुटत्रयंकुमार्य्याश्चकुठारच्छिन्निकारसैः । पुटषट्कंततोदद्यादेवंतीक्ष्णमृतिर्भवेत् ॥ अन्यच्च । क्षिपेद्द्वादशमांशेनदरदंतीक्ष्णचूर्णतः । मर्द्दयेत्कन्यकाद्रावैर्यामयुग्मंततः पुटेत् ॥ एवंसप्तपुटैर्मृत्युंलोहचूर्णमवाप्नुयात् । सत्यानुभूतोयोगीन्द्रैः क्रमोऽयंलोहमारणे ॥ कथ्यतेरामराजेनकौतूहलधियाधुना । सूतकाद्द्विगुणंगन्धंदत्त्वाकुर्य्याच्चकज्जलीम् । द्वयोः समंलोहचूर्णंमर्द्दयेत्कन्यकाद्रवैः । ॥ यामयुग्मंततः पिण्डंकृत्वाताम्रस्यपात्रके । घर्म्मेधृत्वारुवूकस्यपत्रैराच्छादयेद्बुधः ॥ यामद्वयाद्भवेदुष्णंधान्यराशौन्यसेत्ततः । दत्त्वोपरिशरावञ्चत्रिदिनान्तेसमुद्धरेत् ॥

पिष्टाच्चगालयेद्वस्त्रा देव वारितरं भवेत् । दाडिमस्य दल पिष्टा तच्चतु र्गुणवारिणा ॥ तद्रसेनायसश्चूर्णं सन्नीयात्प्लावयेदपि आतपेशोषये त्तत्त्वपुटे देव पुन पुन ॥ एक वि शतिरात्रैस्तत्तृप्यिर्थतेनात्र सं श य एव सर्वाणिलोहानिस्वर्णादीन्य पिमारयेत् ; एवंमारितस्यलोहस्य मात्रा । गुञ्जामेकांसमारभ्ययावत् स्युर्नवरक्तिका । तावल्लोह सम श्नीयाद्यथादोषानल नर . ॥ कूष्मा गड तिलतैलञ्चमाषान्न राजिकांत था । मद्यमम्लरसञ्चैववर्ज्जयेल्लोहसेव कः ॥ लुह्यते । लुहगार्ध्ये । घञ् ॥ लोहतिवा । अच् ॥ यद्वा । रोह ति । रुह॰ । अच् । रलयोरैक्यम् ॥ रुह्यतेवा । घञ् । कपिलकादि ॥ लूयतेऽनेनवा । लूञ् ॰ । बाहु लकात् ॰ हेवा ॥ यदातु ग्रासे पार्श्व पक्वमश्नातिवै द्विज । सपा पिष्टोपिभुङ्क्तेऽन्न रौरवेपरिपच्य ते इतिमत्स्यसूक्तल्लोहपात्रे भक्षणनिषेध ॥ ब्रह्मवैवर्तेपि । यथा । अथ . पात्रेपय : पान गव्य सिद्धान्नमेवच । भ्रष्टादिकं मधु गुड नारिकेलोदकं तथा । फ लं मूल च यत्किञ्चिदभक्ष्य मुनिरब्र वीदिति ॥

लोहकण्टक . । पुं॰ मदनद्रुमे ॥ लोहमयकण्टके ॥

लोहकान्त । पुं॰ अयस्कान्ते ॥ लोह कान्तोऽस्य ॥

लोहकार । पुं॰ लोहकारके । व्योकारि ॥ लोह करोति । डुकृञ् ॰ । कर्मण्यण् ॥

लोहकारक . । पुं॰ लोहकृति । व्योकारि । लोहार॰ इ॰ भा॰ । कर्मकारि ॥ सङ्करजातिरय यथा । गोपालात्तन्तुवाय्यावै कर्मकारोऽथ भूत्सुत । इ॰ प॰ पु॰ ॥

लोहकिट्टम् । न॰ लोहमले । किट्टे ॥ यल्लोह यद्गुण प्रोक्त तत्किट्टमपि तद्गुणम् ॥ लोहस्यकिट्टम् ॥

लोहचूर्णम् । न॰ लोहकिट्टे ॥

लोहजम् । न॰ कांस्ये ॥ लोहकिट्टे ॥

लोहद्रावी । पुं॰ टङ्कणे ॥

लोहधमनी । स्त्री॰ भस्त्रायाम् ॥

लोहनाल । पुं॰ नाराचे ॥

लोहपृष्ठ । पुं॰ कङ्कपक्षिणि ॥ लोहमिवपृष्ठमस्य ॥

लोहप्रतिमा । स्त्री॰ लोहमय्याप्रतिमायाम् । सूर्म्याम् ॥

लोहमय ' । त्रि॰ लोहात्मके ॥

लोहमारक । पुं॰ शालिचशाके ॥

लोहराजकम् । न॰ कलधौते । रूप्ये ॥

लोहल . । पुं॰ शृङ्खलाधार्ये ॥ त्रि॰

अव्यक्ताशचिनि ॥ लोहम लोह लुहकल्पनाद्वावितिस्वामी । लुह भोगाकाङ्क्षतिवोपदेव । भावेघञ् । लोह लाति । भातोनुपेतिक ॥ यद्वा । रोहयतेर्वाकुलकादलच् । कपिलकादित्वाल्लत्व ॥

लोहवरम् । न॰ स्वर्णे ॥

लोहशिङ्खाणिका । स्त्री॰ लोहमले । मण्डूरे ॥

लोहश्लेषण: । पुं॰ टङ्कणे ॥

लोहसङ्करम् । न॰ वर्त्तलोहे ॥

लोहसार: । पुं॰ साराख्यलोहे ॥ यथा भण्डिखराकारान्यङ्गान्यग्निनलेपिते । लोहस्य यंचसूक्ष्माणितत्सारमभिधीयते ॥ लोहसाराङ्कयहन्यात् ग्रहणीमतिसारकम् । अर्शसर्वाङ्ग जवातशूलस्यपरिणामजम् । छर्दि स्पीनसपित्तश्वाससमाग्रुध्यपोहति॥

लोहाख्यम् । न॰ अगुरुणि ॥

लोहाभिसार: । पुं॰ भूपानानीराजनाविधौ । महानवम्याप्राक्प्रख्या नाच्छस्त्रवाहनादिपूजनविधौ । लोहाभिहारे । लोहस्यशस्त्रस्यअभित: सरणम् । स्गतौ । भावेघञ् ॥ लोहाभिसारोऽस्त्रभृतांराज्ञानीराजनाविधि: ॥

लोहाभिहार: । पुं॰ लोहाभिसारे । लोहस्यशस्त्रस्यअभितोहरणम् । हृ ओभावेघञ । लोहाभिहारहत्यु

क्तोविधिर्नीराजनोत्तर ॥

लोहार्गल । पुं॰ तीर्थविशेषे ॥ न॰ स्त्री॰ लोहकीलके ॥

लोहि । न॰ श्वेतटङ्कणे ॥

लोहिका । स्त्री॰ स्वरसीन्दे । स्वरपात्रे । लोहपात्रे ॥

लोहित: । पुं॰ नदविशेषे ॥ भौमे । मङ्गले ॥ रक्तवर्णे ॥ रोहितमत्स्ये ॥ मृगविशेषे ॥ सर्पे ॥ सुराकारे ॥ मसूरे ॥ रक्ताली ॥ रक्तशाली ॥ बलभेदे ॥ न॰ रक्तगोशीर्षे कुङ्कुमे॥ रक्तचन्दने ॥ पद्मरागेपतगे ॥ हरिचन्दने ॥ स्पणकुङ्कुमे ॥ रुधिरे ॥ युद्धे ॥ त्रि॰ रक्तवर्णान्विते ॥ रोहति॰ रुह्यतेवा । रुह॰ । रुहेरश्वलोवेतोतन ॥

लोहितक: । पुं॰ पद्मरागमणौ ॥ भौमग्रहे ॥ लोहितएवमणि॰ लोहितान्मणाविति कन ॥ न॰ रीतौ॥

लोहितचन्दनम् । न॰ कुङ्कुमे ॥ लोहितञ्चतच्चन्दनंच ॥ रक्तचन्दने ॥

लोहितपुष्प } पुं॰ दाडिमवृक्षे ॥
लोहितपुष्पक: }

लोहितमृत्तिका । स्त्री॰ गैरिके रक्तवर्णमृत्तिकायाम् ॥ लोहिताचासौ मृत्तिकाच ॥

लोहिता । स्त्री॰ रागादिरक्तायाम् ॥ वराहक्रान्तायाम् ॥ रक्तपुनर्नवायाम् ॥ वर्णादनुदात्तादितिपाणि

श्रीङीबभावस्तकारस्यनकारादेश स्वन ।

लोहिताक्ष । पुं० विष्णौ ॥ प्रति ष्टायामग्निभेदे ॥ कोकिले ॥ त्रि० रक्तवर्णचक्षुर्युक्ते ॥ लोहितेअक्षि णीयस्य । बहुव्रीहौसक्थ्यक्ष्णो स्वाङ्गात्षच् ॥

लोहिताङ्ग । पु० कुजे ॥ कम्पिल्ल के ॥ लोहितान्यङ्गान्यस्य ॥

लोहितानन । पु० नकुले ॥ त्रि० रक्तवर्णमुखे ॥

लोहिताय । न० ताम्रे ॥

लोहितायसम् । न० रक्तवर्णलोहजा तौ ॥

लोहितिका । स्त्री० लोहितायाम् ॥ लोहितैव । लोहितान्मणाविल्यत्र • लोहिताल्लिङ्गबाधनंवेतिकन् ॥

लोहित्य । पु० अब्धौ ॥ नदे ॥ व्रीहौ ।

लोहिनिका । स्त्री० लोहिन्याम् ॥ लोहिन्येव । लोहितालिङ्गबाधनंवे तिकन् ॥

लोहिनी । स्त्री० लोहितायाम् ॥ वर्णा दनुदात्तादितिङीप् • तकारस्यच नकारादेश ॥ गुञ्जायाम् ॥

लोहोत्तमम् । न० स्वर्णे काञ्चने ॥ लोहेषुसर्वतैजसेषुउत्तमम् ॥

लौकायतिक । पुं० चार्वाकदर्शना भिज्ञे ॥ लोकायतमधीतेवेदवा । उक्थादित्वात्• क्रतूक्थादिसूत्रा न्ताट्ठक् ॥ तार्किकभेदे ॥

लौकिक । त्रि० अप्राप्तशास्त्रपरिशी लनजन्यबुद्धिप्रकर्षे । प्रतिपाद्ये ॥ लोकप्रसिद्धे ॥ लोकव्यवहारमात्र परे ॥ लाकानुरञ्जनमेवतत्वमिति लौकिकानाभ्रान्तिमात्रमेव । लोक स्यभिन्नरुचित्वात्• तदनुरञ्जनस्ये श्वरेणापिकर्त्तुमशक्यत्वात् ॥ यथा हु । विद्यतेनखलुकश्चिदुपाय सर्वलोकपरितोषकरोय । सर्व थात्महितमाचरणीय किंकरिष्यति जनोबहुजल्पइति ॥ लोकेविदि त । अर्थशास्त्रादिज्ञाने ॥ लो कसर्वलोकाट्ठञ् ॥ भवार्थेत्वध्या त्मादित्वाट्ठञ् ॥ स्मृत्युपनिबद्धे धर्मादौ । न० जागरिते ॥

लौकिकाग्नि । पु० असंस्कृताग्नौ ॥

लौल्यम् । न० चापल्ये ॥ लोलस्यभा व ष्यञ् ॥

लौह । पुं० न० लोहे ॥ लोहएव । प्रज्ञाद्यण् ॥ लोहस्यविकार । रजतादित्वादञ् ॥

लौहदारक । पु० नरकभेदे ॥

लौहजम् । न० मण्डूरे ॥

लौहभाण्ड । पुं० अश्मभाले । हि मामृजिस्ता• इतिसाधारणभाषा प्रसिद्धे ॥ न० लोहनिर्मितभा ण्डे ॥

लौहभू. । स्त्री॰ कठिन्याम् ॥

लौहशङ्कु । पु॰ नरकविशेषे ॥ लौहनिर्मितकीलके ॥

लौहा । ) स्त्री॰
लौहात्मा । ) स्त्री॰ कठिन्याम् ॥

लौहित । पु॰ लोहिते ॥ त्रि॰ लोहितसम्बन्धिनि ॥

लौहितीक । पु॰ स्फटिके ॥ त्रि॰ लोहितवर्णतुल्ये ॥ लोहितद्रव्य । कार्कलोहिताद्दीकक् ॥

लौहित्य । पु॰ नदविशेषे । ब्रह्मपुत्रइतिप्रसिद्धे ॥ अब्धौ । सागरे ॥ व्रीहौ ॥ न॰ लोहितत्वे । रक्तिमनि ॥ तीर्थविशेषे ॥ †*†

लकारसमाप्त

•|—|•

---

वकारस्य प्रारभ

व॰ । अ॰ इवार्थे । औपम्ये ॥ पादपूरणे ॥

व । पुं॰ वकारे ॥ सान्त्वने ॥ वाते ॥ वरुणे ॥ वातिवानवा ॥ वागतिगन्धनयो । ड ॥ वाहौ ॥ मन्थे ॥ कल्याणे ॥ बलवति ॥ शार्दूले ॥ वस्त्रे ॥ आलूकी ॥ बन्दने ॥ न॰ प्रचेतसि ॥ वरुणबीजे ॥

वंश . पुं॰ पितृपितामहाद्युत्पादकप्रबन्धे । सन्ततौ । गोत्रे । जनने । कुले । जन्मनैकलक्षणे । सन्ताने ॥ शिष्याचार्यसम्बन्धाविच्छेदे ॥ त्वक्सारे । कर्मारे । त्वचिसारे । ध्वजे । वास॰इ॰भा॰प्र॰ ॥ अस्य गुणाःयथा । वंश सरोऽहिम स्वादु कषायोबस्तिशोधन । छेदनः कफपित्तघ्न कुष्ठास्रव्रणशोथजित् ॥ तत्करीर कटु पाकेरसेरूक्षोगुरु 'सर' । कषाय कफकृत्स्वादुर्विदाहीवातपित्तल ॥ तद्यवास्तुसरारूक्षा कषाया कटुपाकिनः । वातपित्तकराउष्णा बद्धमूत्रा कफापहाः ॥ पृष्ठावयवे ॥ वर्गे । सङ्घे ॥ वाद्यविशेषे । वसी॰वासी॰इ॰भा॰ ॥ इक्षुविशेषे । वंशके ॥ सालवृक्षे ॥ वमति॰वम्यतेवा । टूवमउद्गिरणे । वृभ्रंशमिभ्य शक्॰इतितुन । उक्षसूत्रस्थोज्ज्वलदत्तादिसूत्रवृत्तिष्वदर्शनात्॰अनुनासिकस्य क्व्युपधादीर्घप्रसङ्गाच्च ॥ वनति॰वन्यतेवा । वनशब्दे॰वनसम्भक्तौवा । बाहुलकात्॰श ॥ उश्यते॰वष्टिवा । वशकान्तौ । घञ्॰अजवा । सङ्ख्यावशेनेतिनिर्देशान्नुम् । आच्छ्रोत्यनुमितियोगविभागाद्वा ॥

वंशक पु॰ इक्षुविशेषे । वङोखा॰इ॰देशभा॰प्र॰ । वांशा॰सोमसाडा॰इ॰ष॰गौ॰दे॰भा॰प्र॰ । दीर्घ

घोर सुकठिन सन्धारोवंशक स्मृत ॥ वंशकस्तूनभिष्यन्दीलघु दीपनपाचक ॥ वंशद्रव । द्रुवेग तिक्ततावितिक्तन ॥ वाग्भटामा- च०ङ्ग०गौ०दे०भा०प्र०मल्ले ॥ न० अगुरुणि ॥

वंशकठिन ।पु० देशविशेषे ॥ वंशा वेणवश्च कठिनायस्मिन स ॥

वंशकफम् । न० दूरग्रतूले । वृङ्गसूच के । ग्रीष्मच्छासे । बुढियाक्षासूत० ङ्ग०भा०प्र० ॥

वंशकर्पूररोचना । स्त्री० वंशरोचना याम् ॥

वंशक्षीरी । स्त्री० वंशरोचनायाम् ॥ वंशात्क्षीरमस्या । गौरादि ॥

वंशगुल्म । पु० तीर्थविशेषे ॥

वंशज । पुं० वेणुयवे । वंशबीजे ॥ त्रि० वंश्ये । सद्वंशजाते ॥ वीज्ये ॥ वंशेजात । जनी० । ड ॥

वंशजा। स्त्री० वंशरोचनायाम् ॥ वं- शात्०जायते । जनी० । पञ्चम्या मितिड ॥

वंशतण्डुल ।) पु० वेणुयवे । वं
वंशधान्यम् । ) न० शयवे ॥

वंशनालिका । स्त्री० वंशीवाद्ये ॥

वंशनेत्रम् । न० इक्षुमूले ॥

वंशपत्रः। पु० नले ॥ न०वंशपत्रदले ॥

वंशपत्रक । पु० श्वेतेक्षौ ॥ वाग्भ टामा च० ङ्ग०गौ०टे०भा०प्र०सु द्रमल्ले ॥ नले ॥ न०हरिताले ॥

वंशपत्रपतितम् । न० अत्यष्टिच्छन्द १७ प्रभेदे ॥ यथा । दिङ्मुनिय शपत्रपतितभरनभनलगै ॥ य- था। नूतनवंशपत्रपतितरजनिजल लव०पश्यमुकुन्दमौक्तिकमिवोत्त- ममरकतगम् । एषचतचकोरनिक र प्रपिबतिमुदितो०कान्तमवेक्ष्य- चन्द्रकिरणैरमृतकणमिव ॥

वंशपत्री । स्त्री० वेणुपत्र्याम् । हिङ्गु- पर्य्याम ॥ हिङ्गुपत्रीगुणाविज्ञैर्वं शपत्रीचकीर्त्तिता ॥ नाडीहिङ्गु- नि ॥ तृणविशेषे । वंशदलाया- म ॥ अस्यागुणा । सुमधुरत्वशि शिरत्वपित्तरक्तदोषनाशित्वरुच्यत्वा नि०पशूनादुग्धदायित्वश्चेतिराज निर्घण्ट ॥

वंशपीत । पुं० कणगुग्गुलौ ॥

वंशपुष्पा । स्त्री० सहदेवीलताया- याम् ॥

वंशपूरकम् । न० इक्षुमूले ॥

वंशमूलकम् । न० तीर्थविशेषे ॥

वंशयव । पु० वंशधान्ये ॥ यवाव- शभवारूक्षा कषाया कटुपा- किन । बहुमूत्रा . कफघ्नाश्चवा- तपित्तकरा . सरा ॥

वंशरोचना । स्त्री० त्वक्क्षीर्याम् वे

गव्याम् । श्वेतायाम् ॥ गुणाय-
था । वशजाह्निमाीह्यावल्याग्वा
हीचशीतला । तृष्णाकासज्वरश्वा
सक्षयपित्तास्रकामला । हरेत्कु
ष्ठव्रण पाण्डुकषायावातकृच्छ्रजि-
त् ॥ रोचते । रुच० । नन्द्यादि ।
वशरोचना ॥

वंशरोचनिका । स्त्री० वंशरोचनाया
म् ॥

वंशलोचना । स्त्री० ) वंशरोचना
वंशशर्करा । स्त्री० ) याम् ॥

वंशशलाका । स्त्री० वीणामूले ॥

वंशस्तनितम् । न० वंशस्थविले ॥

वंशस्थम् । न० जगती १२ प्रभेदे ॥
यथा । पुरोजकार . परतस्तसज्ञ-
कौगणोजकारोरगणस्तत . परम् ।
निवेशितश्चेद्यशवन्तभूपतेर्ब्रवीतिव
शस्थमदस्तदाफणी ॥ जतौतुवंश-
स्थमुदीरितंजराविति चास्यलक्षणा-
म् ॥ त्रि० वंशेस्थिते ॥

वंशस्थविलम् । न० जगति १२ प्रभे
दे । वंशस्थेवृत्ते ॥ यथा । वदन्ति
वंशस्थविलंजतौजरौ । यथा । वि
लासवंशस्थविलमुखानिलै प्रपू-
र्यत : पञ्चमरागमुद्गिरम् । व्रजाङ्ग
नानामपिगानशालिनाजहारमान
सहरि : पुनातुन : ॥

वशाग्रम् । न० वंशाङ्कुरे ॥

वंशाङ्कुर । पुं० करीरे । वंशाग्रे ।
यवफलाङ्कुरे ॥

वशानुचरितम् । न० वंशचरित्रव-
र्णने ॥

वशिकम् । न० अगुरुणि ॥ वंशोस्त्य-
स्य । अतइनिठनाविति ठन् ॥

वशिका । स्त्री० वंशनाम वीणी ॥ अ
गुरुणि ॥

वंशी । स्त्री० मुरलीवाद्ये । वंसरी०
हि०भा० ॥ कर्षचतुष्टये ॥

वंशीधर । पु० श्रीकृष्णे ॥ धरतीति
धर । वंशाधर ॥ त्रि०वंशाधा-
रके ॥

वंश्य । त्रि० सद्वंशजाते । कुल्ये ।
बीज्ये ॥ वंशेभव . । दिगादित्वा
द्यत् ॥

वंहिष्ठ : । त्रि० अत्यन्तबहुले ॥ अय-
मेषामतिशयेनबहुल । अतिशाय
नेतमबिष्ठनाविति इष्ठन् ॥ प्रियस्थि-
रस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृ-
न्दारकाणाप्रस्थस्फवर्बंहिगर्वर्षित्र
ब्द्राघिवृन्दाइतिवंह्यादेशेनसाधु ॥

वंहीयान् । त्रि० बहुलतरे ॥ अयमन
योरतिशयेनबहुल . । द्विवचनवि
भज्योपपदेतरबीयसुनाविति ईयसुनि
प्रियस्थिरेत्यादिनावंह्यादेश . ॥

बक । पु० बकाख्येषु ॥ पक्षिविशेषे ॥
यथा । जलकच्छपाताटोलाभूध
रवालुक : । बकाद्यायन्त्रभेदास्युर्वं
क्यास्वाद्यास्वमूषिका ॥ दीर्घका-

शठकाचकुप्यागिलयेत्स्वल्पभाण्डकम्। तिर्यक्कृत्वापचेच्चुल्यांवक्त्रमिदमुत्तमम्॥ असुरविशेषे॥

वकवृत्ति। पुं० वकवृत्तौ॥ तल्लक्षणयथा। अधोदृष्टिनैकृतिकः स्वार्थसाधनतत्परः। शठोमिथ्याविनीतश्चवकवृत्तिरुदाहृतः॥

वकुल। पुं० वकुले॥ न० अस्यफले॥ अस्यगुणा। वकुलंमधुरं चाहिदन्तस्थैर्यकरं परम्॥ पुष्पगुणास्तु। पक्वंकषायंमधुरं शीतं पित्तकफासनुत्। तद्वकुलपुन्नागकल्हारोत्पलपाटलम्॥

वक्तव्य। त्रि० कुत्सिते। विहितकर्मत्यागाल्लोकविगर्हिते॥ हीने वचनार्हे। अधीने॥ वचनार्थः। वचपरिभाषणे० ब्रूञ्आदेशोवा तव्य॥ न० वचने॥

वक्ता। त्रि० पण्डिते॥ वदे। वदावदे। योह्विवस्तुजानातितस्मिन् औचित्यादहुविशिष्टयोवदतितच्चेत्यर्थः॥ सुष्ठुवक्तरि॥ बहुभाषिणि। वाचोयुक्तिपटौ। वाग्मिनि। वावदूके॥ वक्ति। वचपरिभाषणे। तृन्॥

वक्त्रम्। न० आस्ये। मुखे॥ यथा। सौम्यञ्चसन्ततंवक्त्रंमंगलंयस्यदेहिनः। महाराजाभवेन्नित्यविपरीतेतुनिर्द्धनद्गति॥ उच्यतेऽनेन। वच०। ब्रूञोवचिर्वा। गुधधीपचिवचियमिसदिचदिभ्यस्त्र॥ वस्त्रभेदे तगरमूले। विषमवृत्तान्तरे॥ तस्यलक्षणादियथा। भवत्यष्टसमंवक्त्रं विषमञ्चकदाचन। तयोर्द्वयोःपदयोश्छन्दस्तदधुनोच्यते॥ वक्त्रयुग्म्यामगौस्यातामब्धेर्योऽनुष्टुभिख्यातम्॥ अचवहिरानत्याश्लोकापूरयितव्यः॥ वक्त्रास्मोजसदाम्भोरचञ्चुनीलोत्पलफुल्लम्। जलवीनामुरारातेस्तेतीभङ्गजहारोच्चैः॥

वक्त्रखुर। पुं० दन्ते॥

वक्त्रज। पुं० ब्राह्मणे॥ त्रि० मुखजाते॥

वक्त्रतालम्। न० मुखवाद्ये॥

वक्त्रपट्ट। पुं० अश्वानभोजनपात्रे। तोवडा० इ० भा० प्र०॥

वक्त्रभेदी। पुं० तिक्तरसे॥ त्रि० मुखभेदके॥

वक्त्रवास। पुं० नागरङ्गे॥ मुखगन्धे॥

वक्त्रशोधनम्। न० भव्ये॥ मुखशुद्धिकरणे॥

वक्त्रशोधी। पुं० जम्बीरे॥ त्रि० आस्यशोधके॥

वक्त्रासव। पुं० अधरमधुनि॥

वक्र। पुं० शनैश्चरे॥ मङ्गलग्रहे॥ रुद्रे॥ त्रिपुरासुरे॥ पर्पटे॥ वक्र

गतिविशिष्टेग्रहे ॥ न॰ सरिद्वङ्के पुट भेदे ॥ त्रि॰ अनृजौ । अराले । कुटिले । क्रूरे ॥ वक्रगतिस्थ । वक्रग तौ । स्फायितञ्चीतिरक् । न्यङ्क्वा दित्वात्कुत्वम् ।

वक्रकाण्ट । पु॰ बदरवृक्षे ॥

वक्रकण्टक । पु॰ खदिरवृक्षे ॥

वक्रखड्ग । पु॰ करवाले ।

वक्रग्रीव । पु॰ उष्ट्रे ॥

वक्रचञ्चु । पु॰ शुके । कीरे ॥

वक्रतालम् । न॰ ) मुखवाद्ये ॥
वक्रताली । स्त्री॰ )

वक्रतुण्ड । पु॰ गणेशे ॥ शुकखगे ॥

वक्रदंष्ट्र । पु॰ शूकरे ॥

वक्रनक्र । त्रि॰ खले । पिशुने ॥ पु॰ शुकखगे ।

वक्रनालम् । न॰ मुखवाद्ये ॥

वक्रनासिक । पु॰ पेचके । त्रि॰ कुटिलनासायुक्ते ॥

वक्रपट्ट । पुं॰ तलसारके । तङ्ग॰ ह॰ भा॰ प्र॰ ॥

वक्रपुच्छ । पुं॰ कुक्कुरे ॥

वक्रपुष्प । पु॰ पलाशद्रुमे ॥ वकवृक्षे ॥

वक्रबालधि । पु॰ शुनि ॥

वक्रभणितम् । न॰ वक्रोक्तौ । कुटिलवाक्ये ॥

वक्रम । पु॰ पलायने

वक्रलाङ्गूल । पुं॰ कुक्कुरे ॥

वक्रवक्त्र । पु॰ शूकरे ॥

वक्रशल्या । स्त्री॰ कुटुम्बिनीक्षुपे ।

वक्रशृङ्गी । स्त्री॰ गोविशेषे ॥

वक्रा । स्त्री॰ शृङ्गग्राम् । अजशृङ्ग्याम् ॥

वक्राग्रम् । न॰ कबाटवकूवृक्षे ॥

वक्राङ्ग । पुं॰ हंसे । न॰ कुटिलावयवे ॥

वक्री । पुं॰ बुधे ॥ त्रि॰ वक्रगतिविशिष्टे ॥

वक्रोक्ति । स्त्री॰ काकूक्तौ ॥ शब्दालङ्कारप्रभेदे । यथा । यदुक्तमन्यथावाक्यमन्यथान्येनयोज्यते । श्लेषेणकाक्वावाज्ञेया सावक्रोक्तिस्तथाद्विधा ॥ तत्रैतिश्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ॥ पदभङ्गश्लेषेणयथा । नारीणामनुकूलमाचरसिचेज्जानासिकश्चेतनोवामानाप्रियमाद्धासिहिंस कुत्र वऽवलानांभवान् । युक्ताकिं हितकर्त्तनं ननुबलाभावप्रसिद्धात्मनः सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥ अभङ्गश्लेषेणयथा । अहोकेनेदृशीबुद्धिर्दारुणातवनिर्मिता । त्रिगुणाश्रूयतेबुद्धिर्नतुदारुमयीक्वचित् ॥ काक्वायथा । गुरुजनपरतन्त्रतयादूरतरदेशमुद्यतोगन्तुम् । अलिकुलकोकिललिलतैर्नैष्यतिसखिसुरभि

समयेसौ ॥ कुटिलोक्तौ ॥ यथा ।
वादीव्याकरणं विनैवविदुषांधृष्ट
प्रविष्ट सभांजल्पन्नल्पमति स्म
यात्पटुवटुभ्रूभङ्गवक्रोक्तिभि ।
ह्रीत सन्नुपहासमेतिगणकोगोला
नभिज्ञस्तथाज्योतिर्वित्सदसिप्रग
ल्भगणकप्रश्नप्रपञ्चोक्तिभि ॥

वक्रोष्टिका । स्त्री० स्मिते । ईषद्विर
दहासे । ईषद्धासे ॥

वक्षणम् । पुं० वक्षसि ॥

वक्षा । पुं० अनडुहि ॥ वहति ।
वह० । वहिहाधाञ्भ्यश्छन्दसीत्य
सुन्० प्रत्ययस्यचसुट्इतिवृत्तिक्ल
त् ॥

वक्ष । न० अवयवविशेषे । हृदयादु
परिकण्ठादधोभागे । क्रोडे । भु
जान्तरे । उरसि । वत्से ॥ अस्यशु
भाशुभलक्षणं यथा । अन्नवान्सम
वक्षा स्यात्पीनैर्वक्षोभिरूर्जित
। वक्षोभिर्विषमैर्निःस्व शस्त्रेण
निधनस्तथेतिगारुडे ६६ ॥ अथ
वान्समवक्षा स्यात्पीनैः शूरा
धनान्विता । अल्पैस्त्वविकलादी
नाविषमैः शस्त्रमृत्यवइतिसमुद्र
॥ वक्षति । वक्षसङ्घाते । असुन् ॥
उच्यतेऽनेनवा । वच० । पचिवचि
भ्यासुडुत्यसुन् ॥

वक्षोज । पु० ) कुचे । स्तने ॥
वक्षोरुहम् । न० )

वगला । स्त्री० देवीविशेषे ॥ यथा ।
वैद्यनाथेतुवगलास्थान सर्वोत्तमम्
तमिति ॥

वगलामुखी । स्त्री० महाविद्याविशे
षे । पीताम्बरायाम् । वगलायाम् ॥

वगाह । पु० अवगाहे ॥ भागुरीच्छ
याल्लोप ॥

वग्नु । पु० वक्तरि ॥ वक्ति । वच०
। वर्चे गश्चेतिनु ॥

वङ्क । पुं० पर्याणभागे । पर्याणको
टौ ॥ नदीपार्श्वे ॥ भङ्गुरे । व
क्रे । इतिमेदिनिकार ॥

वङ्कसेन । पुं० अगस्तिद्रुमे ॥

वङ्का । स्त्री० वल्गाग्रभागे ॥

वङ्किल । पुं० कण्टके । द्रुमनखे०
इ० त्रि० शेज ॥

वङ्क्य । त्रि० वक्रे ॥

वङ्क्रि । पु० न० वाद्यप्रभेदे ॥
वङ्कते । वक्किकौटिल्ये । वङ्क्यादि
यश्चेतिक्रिन्नला साधु ॥ गृहदा
रुणि ॥ पार्श्वास्थनि । पशुके ॥

वङ्क्रिम । त्रि० कुटिले ॥

वङ्क्षण । पुं० वस्त्यधऊरुमेढ्राणा
मन्तरालसन्धौ ॥ वाङ्क्षति० वाङ्
क्षत्येवा । वाक्षिकाङ्क्षायाम् ।
ल्युट्बाहुलकान्नातोह्रस्व ॥
वङ्क्षतेवङ्क्षणइतिस्वामी ॥ यद्वा
। वक्षति । वक्षरोषसङ्घाते ।
ल्युट् । आक्षीनदयोर्नुमित्यच०

नुमितियोगविभागान्नुम् ॥
वङ्क्षु । स्त्री० गङ्गास्रोतोविशेषे । यथा । तस्या स्रोतसिसीताचवङ्क्षुर्भद्राचकीर्त्तितेतिशब्दमाला ॥ सातत्पर्ततताद्दिक्षु चतुर्द्धाप्रतिपद्यते । सीताचालकनन्दाचवङ्क्षुर्भद्राचवैक्रमात् ॥ सागङ्गा ॥ वङ्क्षुश्चपश्चिमगिरीनतीत्यसकलं तत' । पश्चिम केतुमालाख्य वर्षमन्वेतिसार्णवम ॥
वङ्ग । पु० कार्पासे ॥ वृन्ताके ॥ चन्द्रवंशीयवलिराजपुत्रे ॥ वङ्गा. पु० भूम्नि० ॥ जनपदविशेषे ॥ रत्नाकरसमारभ्यब्रह्मपुत्रान्तगःशिवे । वङ्गदेशोमयाप्रोक्त सर्वसिद्धिप्रदर्शकः ॥ वङ्गानानिवासोजनपद वङ्गा । निवासिनोजनपदेलुप् । लुपियुक्तवद्भाव ॥ न० रङ्गे । त्रपुणि । सीसे । नागजीवने । मृदङ्गे । रङ्गे । सिहले । रागकृ० भा० प्र० धातुविशेषे ॥ खुरकमिश्रकचापिद्विविधवङ्गमुच्यते । उत्तमखुरकातत्र० मिश्रकन्त्वहितमतम् ॥ पश्याच्चरकम् ॥ सौसके ॥ वङ्गति । वगिगतौ । पचाद्यच् ॥
वङ्गजम् । न० सिन्दूरे ॥ त्रि० वङ्गदेशजाते ॥
वङ्गन. । पु० वार्त्ताको ॥
वङ्गशुल्वजम् । न० कांस्ये ॥

वङ्गसेन ' )
वङ्गसेनक । ) पु० वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥ अस्यपुष्पगुणा । वासकस्यचपुष्पाणिवङ्गसेनस्यचैवहि । कटुपाकानितिक्तानिकासक्षयकराणिच ॥
वङ्गला । स्त्री० रागिणीविशेषे ॥
वङ्गारि । पुं० हरिताले ॥
वङ्गाल ' । पु० भैरवरागपुत्रे ॥
वङ्गाली । स्त्री० भैरवरागस्यरागिण्याम् ॥
वच । पु० कीरे । शुकपक्षिणि ॥ वक्ति । वचपरिभाषणे । पचाद्यच् ॥
वचक्नु: । पुं० विप्रे । ब्राह्मणे ॥ ऋषिविशेषे ॥ त्रि० वावदूके ॥ वक्ति । वच० । स्युवचिभ्योन्युजागूजक्नुचङ्क्ष्यक्नुच् ॥
वचण्डा । स्त्री० वरिण्डार्थे ॥
वचण्डी । स्त्री० शारिकायाम् ॥ वर्त्तौ ॥ शस्त्रप्रभेदे । क्षुरिकायाम् ॥
वचनम् । न० शुण्ठ्याम् । उक्तौ । वाचि । भाषणे ॥ श्रुतिमाचात्सुधातुल्यंसर्वकालसुखावहम् । सत्यसारहितकरवचन श्रेष्ठमीप्सितम् ॥ वचेर्भावेल्युट् उच्यते०ऽनेनवा ॥ शुण्ठ्याम् ॥ वाचोक्तौ ॥
वचनग्राही । त्रि० वचनेस्थिते ॥
वचनीय । त्रि० वक्तव्ये ॥ वचेरनीयर् ॥

वचनीयता । स्त्री॰ निद्रायाम् । लो कापवादे ॥ भावितल् ॥
वचनेस्थित । त्रि॰ विधेये । विनय ग्राहिणि । आश्रवे । प्रवृत्तिनिवृत्त्योर्विधातुशक्ये ॥ वचनेतिष्ठति स्म । ष्ठा॰ । गत्यर्थेतिक्तः । तत्पुरुषेकृतीत्यलुक् ॥
वचनोपक्रम । पु॰ वाक्यारम्भे । उपन्यासे ॥
वचर . । पु॰ कुक्कटे ॥ शठे ।
वचलुः । पु॰ वैरिणि ॥ शचौ ॥
वच । न॰ वाक्ये । वाचि । वचने ॥ वच॰ । सर्वधातुभ्योऽसुन्नित्यसुन् ॥
वचसाम्पति । पुं॰ सुरगुरौ । बृहस्पतौ ॥
वचा । स्त्री॰ शारिकायाम् ॥ उग्रगन्धौषधौ । षड्ग्रन्थायाम् । गोलोभ्याम् । शतपर्विकायाम् अस्या गुणायथा । वचोग्रगन्धाकटुकातिक्तोष्णावान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् ॥ अपिच । अह्निर्वीपयसाध्येनमासमेवंतुसेविता । वचाकुर्यान्नरप्राज्ञस्मृतिधारणसंयुतम् ॥ चन्द्रसूर्यग्रहेपीतपलमेकपयोन्वितम् । वचायास्तत्क्षणंकुर्यान्महापज्ञान्वितनरम् ॥ अथवचाभेदाः । पारसीकवचाशुक्लाप्रोक्ताहैमवतीतिसा ॥ हैमवत्युदिताःतद्वत्कूलहन्तिविशेषतः ॥ अथमहाभरीवचा॰यस्याः कुलञ्जन॰इतिभाषायानामान्तरम् । सुगन्धाप्युग्रगन्धाचविशेषात्कफकासनुत् । सुस्वरत्वकरीरुच्याहृत्कण्ठमुखशोधनी ॥ अपरासुगन्धा स्थूलग्रन्थिर्यस्यालोकैमहाभराइति नाम । स्थूलग्रन्थिः . सुगन्धान्यात-तोहीनगुणास्मृता ॥ द्वीपान्तर वचा ॰ याचोपचीनीतिनाम्नालोकेविख्याता । द्वीपान्तरवचाकट्वीतिक्तोष्णावह्निदीपिनकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ वातव्याधिमपस्मारमुन्मादंतनुवेदनाम्व्यपोहतिविशेषणफिरङ्गामयमुद्धतम् ॥ वक्ति । वचेरन्तर्भावितण्यर्थात्पचाद्यच् । टाप् ।
वचोग्रह । । पु॰ कर्णे ॥
वचोहर . । त्रि॰ दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥
वज्र । पुं॰ श्रीकृष्णप्रपौत्रे ॥ अनिरुद्धात्सुभद्रायावज्रोनामनृपोभवत् इतिगारुडे १४४ ऽ ध्याय ॥ विष्कम्भादिषु पञ्चदशेयोगे ॥ अत्रजातफलं यथा । गुणीगुणज्ञो बलवान्महौजाः . सद्रत्नवस्त्रादिपरीक्षकः . स्यात् । वज्राभिधानेयदि

चेत्प्रसूतोवज्रोपम स्याद्रिपुकामिनीनाम् ॥ कोकिलाच्छद ॥ श्वेतकुशे ॥ सेहुण्डवृक्षे ॥ न॰ बालके ॥ धात्याम् ॥ काञ्जिके ॥ वज्रपुष्पे ॥ लौहविशेषे ॥ सच बहुविधोयथा । नीलपिण्डम्॰ अरुणाभम्॰ मोरकम्॰ नागकेशरम्॰ तित्तिराङ्गम्॰ स्वर्णवज्रम्॰ शैवालवज्रम्॰ शोणवज्रम्॰ रोहिणीकाङ्कोलम्॰ ग्रन्थिवज्रकम्॰ मदनाख्यमित्यादि एतेषानामानुरूपचिह्नमितिपुराणम् ॥ अभ्रविशेषे ॥ अस्योत्पत्त्यादियथा । पुरावधाय वृत्रस्य वज्रिणावज्रमुद्धृतम् । विस्फुलिङ्गास्ततस्तस्य गगनेपरिसर्पिता ॥ तेनिपेतुर्घनध्वानाच्छिखरेषु महीभृताम् । तेभ्यएवसमुत्पन्नं तत्तद्गिरिषु चाभ्रकम् । तद्वज्रं वज्रजातत्वादभ्रमभ्ररवोद्भवात् । गगनात्स्खलितं यस्माद्गगनञ्च ततोमतम् ॥ पिनाक दर्दुर नाग वज्रचेति चतुर्विधम् । वज्रन्तुवज्रवत्तिष्ठत् तन्नाग्नौविकृतिं व्रजेत् ॥ सर्वाभ्रेषुवरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् । पु॰ न॰ इन्द्रास्त्रविशेषे । ह्रादिन्याम् । कुलिशे । भिदुरे । पवौ । शतकोटौ । स्वरौ । शम्बे । दम्भोलौ । अशनौ । दधीचेरस्थिसम्भवेऽस्त्रे । आयुधानांमध्येभगवतीविभूतौ ॥ वज्रशारकविधिर्यथामुनेकण्वाणमित्रश्चजैमिनेश्चापिकीर्त्तनात् ॥ विद्युदग्निभयंनास्तिपठितेचगृहोदरे ॥ लिखितेचगृहोदरे॰ इतिशापाठ ॥ जैमिनिश्चसुमन्तुश्चवैशम्पायनएवच । पुलस्त्य पुलहश्चैवपञ्चैतेवज्रवारका ॥ रत्नविशेषे । अभेद्ये । हीरके । हीरा॰ इ॰ भा॰ प्र॰ अत्रविशेषोयथा । स्वच्छ विद्युत्प्रभं स्निग्धंसौन्दर्यं लघु लेखनम् । षडारं तीक्ष्णधारञ्च सुशाम्पार श्रिय दिशेत् ॥ भस्माभ काकपादञ्चरेखाक्रान्तञ्चवर्त्तुलम् । आधारमलिनं विन्दुसन्त्रासे स्फुटितं तथा ॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत् ॥ वज्रञ्च चतुर्वर्णलक्षणं यथा । श्वेतं तत्तोहितपीतंसितवर्णं यथाक्रमात् । यशस्तरा क्रमाद्विप्रादित्वमिहाश्रयत्सुमनस शस्तिसत्यतत । स्फीताकीर्त्तिमनुत्तमाश्रियमिदं दत्तं यथासनधृतमत्यानामयथायथ तुकुलिश पथ्यहितं जायत ॥ तस्यपरीक्षायथा । यत्पाषाणतलेनिकाशनकरैनोद्घृष्यतेनिष्ठुरैयच्चान्योपलखेहसुद्गरमुखैर्लेखाञ्चयात्याहनम् । यच्चान्य निजलीलयैवदलयेद्वज्रं णावा भिद्यतेतज्जात्यकुलिशं वदन्तिकशला॰ श्लाघ्य महार्घ्यंस्वतत् ॥ तस्य

वर्णगुणोयथा। विप्र सोपिरसाय नेषुवलवानष्टाङ्गसिद्धिप्रदोराजन्य स्तुनृणांवलीपलितजिन्मृत्युजयेद्ध्रसा। द्रव्याकर्षणसिद्धिदस्तुसुत रांवैश्योऽथशूद्रोभवेत्सर्वव्याधिहर स्तदेषकथितोवज्रस्यवर्णोगुण ॥ अपिच। वज्रस्यनामलक्षणगुणायथा। हीरक पुंसिश्चौस्त्रीचन्द्रोम णिवरश्चस । सतुश्वेत स्मृतो विप्रोलोहित क्षत्रियोमत ॥ पीतोवैश्योऽअसित ' शूद्रस्तुवर्णा त्मकश्चस '। रसायनेमतोविप्र सर्वसिद्धिप्रदायक ॥ क्षत्रियोव्याधिविध्वंसीजरामृत्युहर पर । वैश्योधनप्रद प्रोक्तस्तथादेहस्यदार्ढ्यकृत् ॥ शूद्रोनाशयतिव्याधीन् वयस्तम्भ करोतिच। पुंस्त्रीनपुंसकाश्चैतेलक्षणीयास्वलक्षणै ॥ सुवृत्ता फलसम्पूर्णास्तेजोयुक्तावृहत्तरा । पुरुषास्तेसमाख्यातारेखा बिन्दुविवर्जिता ॥ रेखाबिन्दु समायुक्ता षडस्रास्तेस्त्रिय स्मृता । षडस्रा ' षट्कोणा ॥ त्रिकोणाश्चसुदीर्घाश्चतेविज्ञेयान पुंसका ' ॥ तेषिस्युः पुरुषा ' श्रेष्ठारसबन्धनकारिण । स्त्रिय कुर्वन्तिकायस्यकान्तिंस्त्रीणासुख प्रदा : ॥ नपुंसकास्त्ववीर्या . स्युः रकामा : सत्ववर्जिता । स्त्रिय:



स्त्रीभ्य प्रदातव्या ' क्लीबा क्लीवे प्रयोजयेत् ॥ सर्वेभ्य सर्वदादेया पुरुषावीर्यवर्द्धना ॥ अशुद्धकुरु-तेवज्रं कुष्ठ पार्श्वव्यथातथा । पाण्डुताप गुरुत्वञ्चतस्मात्स शोध्य मारयेत् ॥ शोधनविधिस्तु। कुलत्थ कोद्रवक्वाथेदोलायन्त्रे विपाचयेत् । व्याघ्रीकन्दगत वज्रं त्रिदिन तद्वि शुध्यति ॥ व्याघ्रीकण्टकारिका । अन्य शोधनविधिर्यथा। गृहीत्वा क्षिशुभं वज्रं व्याघ्रीकन्दोदरेक्षिपे त् । मह्णिषीविष्ठयालिप्त्वाकरी षाग्नौविपाचयेत्॥ त्रियामायाचतु र्याम यामिन्यन्तेश्वमूत्रके । सेचये त्पाचयेदेव सप्तरात्रेणशुद्ध्यति ॥ अथास्यमारणविधि ॥ हिङ्गुसैन्ध वस युक्ते क्षिपेत् क्वाथेकुलत्थजे । तप्त तप्त पुनर्वज्रं भवेत्भस्मत्रिसप्त धा ॥ अन्योमारणप्रकारोयथा । मेषशृङ्ग भुजङ्गास्थिकूर्मपृष्ठाम्लवेत सम् । शशदन्तसम पिष्ट्वावज्रीक्षीरे णगोलकम् ॥ कृत्वातन्मध्यग वज्रं म्रियतेधमातमेवहि ॥ मारितस्य वज्रस्यगुणायथा। आयु पुष्टि ब ल वीर्यवर्ण सौख्य करोतिच। से वित सर्वरोगघ्न मृत वज्र नस शय ' ॥ शेषरत्नानाशोधनमारणविधि ॥ वज्रवत्सर्वरत्नानिशोधयेन्मारये त्तथा । शुद्धानांमारितानाश्च

तेषांस्पृशु गुणानपि ॥ मणयोवीर्यंत शीतामधुरास्तुवरारसात् । चक्षुष्यालेखनाश्चापि सारकाविषहारका. ॥ धारणात्तेतुमङ्गल्याग्रहदुष्टिहराअपि ॥ वज्रगणनातस्योत्पत्तिपरीक्षामूल्यानिचपश्यान्यत्र युक्तिकल्पतरुप्रभृतिषु ॥ मणिवेध कीरत्नविशेषे । मणिवेधकसूच्याम् ॥ वजतिगच्छतिपर्वतादौ । वजगतौ । ऋज्रेन्द्रेतिरन्॥ सगणं ०॥५०॥

वज्रकम् । न० वज्रक्षारे ॥ दुग्धपाचके ॥ वज्रकदुग्धपाचनमिति हारावली ॥

वज्रकङ्कट' ।पुं० हनुमति ॥

वज्रकण्टक. । पुं० कोकिलाक्षवृक्षे ॥ स्नुहीवृक्षे ॥

वज्रकण्टकशाल्मली । स्त्री० नरकविशेषे ॥

वज्रकन्द. । पुं० वज्रकर्ण । सकरकन्द इ० भा० प्र० ॥

वज्रकन्दा । स्त्री० स्नुह्यां ॥

वज्रकपाली । पुं० बुद्धविशेषे । हेरुके ॥

वज्रकालिका । स्त्री० मायादेव्याम् ॥

वज्रकूट । पुं० प्लक्षद्वीपस्याद्रिप्रभेदे॥

वज्रकेतु' । पुं० नरकराजे ॥

वज्रक्षारम् । न० क्षारभेदे । वज्रकेधूमोत्थे । क्षारश्रेष्ठे ॥

वज्रचर्म्मा । पुं० खड्गिनि । गण्डके

वज्रजित् । पुं० गरुडे ॥

वज्रज्वाला । स्त्री० वज्राग्नौ ॥

वज्रटीक । पुं० बुद्धविशेषे । चक्रसंवरे । वज्रकपालिनि ॥

वज्रतुण्ड पुं० गणेशे ॥ गरुडे गृध्रे । मशके ॥

वज्रदन्त: । पुं० शूकरे ॥ मूषिके ॥

वज्रदशन' । पुं० मूषिके ॥

वज्रद्रु । पुं० स्नुहीवृक्षे ॥ वज्रनाम्नाद्रुः ॥

वज्रद्रुम' । पुं० स्नुहीवृक्षे ॥

वज्रधर. । पुं० इन्द्रे ॥ जिनविशेषे ॥

वज्रध्वनि: । पुं० वज्रनिर्घोषे ॥

वज्रनिर्घोष: । पुं० अशनिशब्दे ॥ वज्रस्यनिर्घोष ॥

वज्रनिष्पेष: । पुं० स्फूर्जथौ । वज्रनिर्घोषे ॥ निष्पेषणम् । पिष्लृसञ्चूर्णने । घञ् । इदुदुपधस्येति ष. ॥ निष्पेषशब्दस्तुल्यशब्दपरः । सङ्घट्टमात्रपरइत्यन्ये । वज्रस्य निष्पेष: ॥

वज्रपञ्जर. । पुं० याचायोगान्तरे ॥ यथा । उच्चमूलत्रिकोणे शुभवर्गेषु शनैश्चर । वज्रपञ्जरयोगोयं हन्ति क्रूरानरीन्प्रति ॥

वज्रपाणि । पुं० पुरन्दरे । इन्द्रे ॥ वज्रपाणौयस्यस: ॥

वज्रपुष्पम । न० तिलपुष्पे । वज्र

मिवपुष्प ॥
वज्रपुष्पा । स्त्री॰ शतपुष्पायाम् ॥
वज्रबाहु । पु॰ इन्द्रे ॥
वज्रमूली । स्त्री॰ माषपर्ण्याम् ॥
वज्ररथ । पु॰ क्षत्रिये ॥
वज्ररद । पु॰ शूकरे ॥
वज्रलेप । पुं॰ कल्कविशेषे ॥ स चोक्तोवाराह्याथथा । आमांतिन्दुकमाम कपित्थकं पुष्पमपिचशाल्मल्या । बीजानिमल्लकीनांधन्वन कल्कास्त्वचाचेति ॥ एतैः सलिलद्रोण क्वाथयितव्योऽष्टभागशेषश्च । अवतार्योंऽस्यचकल्कोद्रव्यैरेतैः समनुयोज्य ः ॥ श्रीवासकरसगुग्गुलुभल्लातककुन्दुरूकसर्जरसैः । अतसीबिल्वैश्चयुत कल्कोऽय वज्रलेपाख्य ॥ ३ ॥ अस्यगुणाना ह । प्रासादहर्म्यवलभीलिङ्गप्रतिमासुकुड्यकूपेषु । सन्तप्तोदात व्योवर्षसहस्रायुतस्थायी ॥ ४ ॥ अन्यमप्याह । लाक्षाकुन्दरुगुग्गुलु गृहधूमकपित्थबिल्वमध्यानि । नागफलनिम्बतिन्दुकमदनफलमधुकमञ्जिष्ठा. ॥ सर्जरससालकानिचेति कल्क कृतोद्वितीयोयम् । वज्राख्य प्रथमगुणैरयमपितेष्वेवकार्येषु ॥६ अपिच । गोमहिषाजविषाणै खररोम्णामहिषचर्मगव्यैश्च । निम्बकपित्थरसै. सहवज्रतलोनामकल्को न्य ॥ ७ ॥ अपिच अष्टौसीसकभागा कांसस्यद्वौतुरीतिकाभाग । मयकथितोयोगोऽयंविज्ञेयो वज्रसङ्घत ॥ ८ । इति ॥
वज्रवल्ली । स्त्री॰ अस्थिसहारलतायाम् ॥
वज्रवारक । पु॰ जैमिन्यादौ ॥ यथा । जैमिनिश्चसुमन्तुश्चवैशम्पायनएवच । पुलस्त्य पुलहश्चैवपञ्चैतेवज्रवारका ॥
वज्रवाराही । स्त्री॰ मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् ॥
वज्रवीजक । पु॰ लताकरञ्जे ॥
वज्रवृक्ष । पु॰ सेहुण्डवृक्षे ॥
वज्रव्यूह । पु॰ वज्राकाररचनयाविधाव्यवस्थितबले ॥
वज्रशल्य । पुं॰ शल्यकनामजन्तौ ॥
वज्रशृङ्खला । स्त्री॰ विद्यादेव्याम् ॥
वज्रसार । त्रि॰ वज्रवत्कठिने ॥
वज्रसूर्य्य । पुं॰ बुद्धविशेषे ॥
वज्रा । स्त्री॰ स्नुह्याम् । गुडूच्याम् ॥ दुर्गायाम् ॥ वज्राङ्कुशकरीदेवीवज्रातेनापगीयतेइतिदेवीपुराणम्
वज्राङ्ग । पुं॰ भुजङ्गमे ॥ त्रि॰ वज्रतुल्याङ्गयुक्ते ॥
वज्राङ्गी । स्त्री॰ अस्थिसहारिणि । हाडजोड इ॰ भा॰ प्र॰ ॥ गवेधुकायाम् ॥
वज्राभ । पुं॰ दुग्धपाषाणे ॥ त्रि॰

वज्रसमानदोषमिति ॥
वज्रायुध । पु० इन्द्रे ॥
वज्राशनि । पु० स्त्री० वज्रे ॥
वज्रासनम् । न० अष्टाङ्गयोगस्यतृतीयाङ्गविशेषे ॥ यथा । ऊर्वोः पादौ क्रमान्न्यस्य कृत्वाप्रत्यङ्मुखाङ्गुली । करौ निदध्यादाख्यातं वज्रासनमनुत्तममिति ॥
वज्रास्थिशृङ्खला । स्त्री० कोकिलाक्षवृक्षे ॥
वज्री । पुं० देवाधिपे । शक्रे ॥ वज्रोऽस्यास्ति अतइनिठनाविति इनि ॥ वृक्षे ॥
वज्री । स्त्री० स्नुहीप्रभेदे ॥
वञ्चक । पु० जम्बुके । शृगाले ॥ गृहबभ्रौ ॥ त्रि० खले । धूर्त्ते । परप्रतारणस्वभावे । सुवर्णादिद्रव्यंगृहीत्वाऽपद्रव्यप्रर्पणेनवञ्चनशीले ॥ वञ्चयति । वञ्चु गतौ । ण्यन्तः । ण्वुल् ॥ वञ्चयतेर्वा । वञ्चु प्रलम्भने । आकुस्मीय । ण्वुल् ॥
वञ्चथ । पुं० धूर्त्ते ॥ वञ्चति । वञ्चु० । शीङ्शपीत्यादिनाऽथप्रत्यय ॥ कोकिले ॥ वञ्चनायाम् ॥
वञ्चनम् । न० प्रतारणे ॥ शाठ्ये ॥ वञ्चुप्रलम्भने । ल्युट् ॥
वञ्चना । स्त्री० प्रतारणायाम् ॥ प्रमादे ॥ यथा । मन्यतेस्मपिबतापिवेला चनै पक्षपातमपिवञ्चनां मनइ० ११ सर्गेरघु ॥ ३६ ॥
वञ्चनीय । त्रि० प्रतारणीये ॥ वञ्चितुमर्हे । अर्हेकृत्यतृचश्चेति वञ्चेरनीयर् ॥
वञ्चित । त्रि० प्रतारिते । विप्रलब्धे । वञ्चनाविशिष्टे ॥ वञ्च्यतेस्म । वञ्च० । ण्यन्तः । क्तः ॥
वञ्जुल । पु० तिनिशे ॥ अशोकतरौ ॥ वानीरे । वेतसे ॥ वञ्च्यते । बाहुलकादुलोजस्त्वञ्च ॥ वञ्जतिवा । वजगतौ । बाहुलकादुलच् नुम्च ॥ दीर्घपत्रे वेतसे ॥ स्थलपद्मे ॥ पक्षिविशेषे ॥
वञ्जुलक । पुं० कर्णशालखगे ॥
वञ्जुलद्रुम । पु० अशोकतरौ ॥
वञ्जुलप्रिय । पुं० वानीरे । वेतसे ॥
वञ्जुला । स्त्री० बहुक्षीरायांगवि ॥
वट । पु० वृक्षविशेषे । न्यग्रोधे । बहुपादे । पादरोहणे । यक्षावासे । अस्यगुणाः । वटः शीतोगुरुर्ग्राहीकफपित्तव्रणापहः । वर्ण्योविसर्पदाहघ्नः कषायोयोनिदोषहृदिति ॥ कपर्दे । वराटके ॥ गोले ॥ गुणे । रज्जौ ॥ भक्ष्ये । वडा० हि० भा० प्र० ॥ साम्ये ॥ पिशाचविशेषे ॥ पश्यवरुणम् ॥ वटति । वटवेष्टने । अच् ॥

बटक । पुं० तोलके । पिष्टकप्रभेदे । बडा० भल्ला० इ० भा० प्र० भक्ष्ये ॥ तस्य निर्माणादिर्यथा । माषाणां पिष्टिकां युक्तां लवणाद्रकहिङ्गुभिः । कृत्वा विदध्याद्वटकांस्तांस्तैलेषु पचेच्छनैः ॥ विशुष्का वटका बल्या वृष्या वीर्यवर्द्धनाः । वातामयहरा रुच्या विशेषाद्दर्दितापहाः ॥ विबन्धभेदिनः श्लेष्मकारिणोऽथ भिपूजिताः । सम्पूर्णान्निष्पिषेत्तक्रे भृष्टजीरकहिङ्गु च ॥ लवणं तत्र वटकान्सकलानपि मज्जयेत् । शुक्लास्ते च वटका बलकृद्रोचनो गुरुः ॥ विबन्धहृद्विदाही च श्लेष्मलः पवनापहः । राज्यक्तया तिरोचन्यापाचन्यालास्तु भक्षयेत् ॥ वटति । वट० । क्वुन् ॥

बटपत्र । पुं० बर्बराप्रभेदे । सितार्जके । न० न्यग्रोधपर्णे ॥

बटपत्रा । स्त्री० त्रिपुरमालीपुष्पवृक्षे ।

बटपत्री । स्त्री० मोहिन्याख्यलतायाम् । ऐरावत्याम् ॥ बटपत्रीकषायोष्णा योनिमूत्रगदापहा ॥

बटवासी । पुं० यक्षे ॥ त्रि० वटवृक्षवासकर्त्तरि ॥

बटाकर । पुं० शुल्वे । रज्जौ । आ करोति । पचाद्यच् ॥ वटस्याकारः ॥

बटारका । स्त्री० रज्जौ ॥

बटाबीक । पुं० नामचौरे ।

बटि । स्त्री० उपजिह्विकायाम् ॥ वर्त्तिकायाम् ॥ वर्त्तति । वट० । सर्वधातुभ्य इन् ॥

बटिका । स्त्री० बट्याम् । मोदके गुटिकायाम् । पिण्डाम् ॥ व्यञ्जनोपयोगिमाषादिद्रव्ये । बडी० इत्युभयोर्भाषायां प्रसिद्धिः । अस्या निर्माणविधिर्यथा । माषाणां पिष्टिकाहिङ्गुलवणाद्रकसंयुता । तथा विरचिता वस्त्रे वटिका साधुशोषिता ॥ तलितास्तप्ततैलेनाथ वा सुप्रलेहिता । वटकस्य गुणैर्युक्ता ज्ञातव्या रुचिदा भृशम् ॥ कुष्माण्डकवटी ज्ञेया पूर्वोक्तवटिकागुणा । विशेषात्पित्तरक्तघ्नी लघ्वी च कथिता बुधैः ॥ मुद्गनावटिका तद्वद्रचिता साधिता तथा । पथ्या रुच्या ततो लघ्वी मुद्गसूपगुणा स्मृतेति ॥

बटितम् । न० शिलापिष्टमांसे ॥ त्रि० शिलापिष्टद्रव्ये ॥

बटी । स्त्री० वटिकायाम् ॥ वर्णविशेषे । नदीवटे । यज्ञवटे ॥ त्रि० रज्जौ । गुणे ॥ वटति । वट० । अच् ॥ बध्यते वा ॥ खनोघच्चेति घ । गौरादि । यथा । सिताचतुर्गुणा देया वटीषु द्विगुणो गुड इति ॥

बटु । पुं० ब्रह्मचारिणि ॥ ब्राह्मणमाणवके ॥ बालके ॥ कुटन्नटवृक्षे ।

ग्येनाकी । वटति । वट० । यथा ष्टं तिसूत्रेष्वादु ॥

वटुक । पु० बालके । माणवके । भैरवविशेषे ॥

वटुकरणम् । न० उपनयने ॥

वटेश्वरपुरम् । न० तीर्थविशेषे ॥

वठर । पु० मूर्खे ॥ अम्बष्टे ॥ शब्दकारे ॥ वक्रे ॥ त्रि० शठे ॥ मन्दे वक्ति । वच० । वचिमचिभ्याकिर्च्च त्यरष्टोन्मादेशश्च ॥

वडभी । स्त्री० मुदनी० गृहचूडा० इ० गौ० दे० भा० प्र० । कुडरी युच्छादनार्थं दत्तं वक्रकाष्ठं । गोपानस्याम् ॥ वलति । बलसवर्णं । बाहुलकाद्भच् । गौरादित्वात् ङीष् ॥ चन्द्रशालायाम् ॥ चन्द्रशालाचवडभीश्चातांप्रासादमूर्द्धनी तिश्रीधर ॥

वडवा । स्त्री० द्विजयोषिति । ब्राह्मण्याम् ॥ अश्वायाम् । घोटक्याम् ॥ कुम्भदास्याम् ॥ नारीजात्यन्तरे ॥ बलं सामर्थ्यमतिशयितमस्याः । अन्येभ्योपीतिवः । डलयोरेकता ॥ बलवातिवा । आतोनुपेतिकः ॥ बलिनवत्नतिवा । अन्येभ्योपीतिङः ॥

वडवाकृत । पुं० पञ्चदशदासान्तर्गतदासविशेषे ॥ यथा । भक्तदासश्च विज्ञेयस्तथैववडवाकृतः । वडवादासीतल्लोभादङ्गीकृतदासइत्यर्थं ॥

वाडवाग्नि । पु० समुद्राग्नौ । सलिलेन्धने । वडवाग्नौ ॥

वडवादुग्धम् । न० अश्वाक्षीरे ॥ अस्य गुणा ॥ रूक्षोष्णा वडवाक्षीरवल्य शाखानिलापहम् । अम्ल पटु लघु स्वादुसर्वमेकाशफंतथा ॥

वडवानल । पुं० और्वे । वाडवे । वडवाग्नौ ॥ वडवायाअनल । आराधाधेयभावएवसम्बन्धस्त्वेनषष्ठ्यर्थ. । पुराकिलऔर्वेणमुनिना० ऽयोनिज पुत्रमिच्छतावचोमथित तत्रज्वालामय पुरुषोजात ०सचसमुद्रे वडवामुखेऽवस्थापितइतिपौराणिका . ॥

वडवामुख । पुं० और्वे । अश्व्यग्नौ वडवानले ॥ न० पाताले ॥

वडवासुतौ । पुं० २ अश्विनीकुमारयोः स्वर्वैद्ययोः ॥

वडवाहृत : । पुं० वडवाकृते । दासविशेषे ॥ वडवाग्रहदासीतयाहृतस्तल्लोभेनतामुद्वाढुंदासत्त्व नप्रविष्ट : ॥

वडा । स्त्री० वटके ॥

वडिशम् । न० मत्स्यधरणार्थंवक्रलौहकण्टकविशेषे । मत्स्यवेधने ॥ वलिनोमत्स्यान्श्यति । शोतनूकरणे । आतोनुपेतिकः । डलयोरेकता ॥

वडिशी। स्त्री० वडिश॥
वड्ड। त्रि० वृहति। वडा० वडी० इ० भा०॥ वलति। वलसंवरणे सञ्चरणे च। वहुलमन्यत्रापीतिरक्। डलयोरैकत्वस्मरणात्साधुः॥
वण। पुं० शब्दे॥
वणिक्पथ। पुं० हट्टे। आपणे॥ स्थलवणिज्यायाम्॥ स्थलजलादिनाशाणिज्यमितिकुल्लूकभट्ट॥
वणिक्। पु० क्रयविक्रयकर्त्तरि। वाणिज्यकारके। वैदेहके। सार्थवाहे। नैगमे। पण्याजीवे। क्रयविक्रयिके॥ करणान्तरे॥ स्त्री० वणिज्यायाम्॥ पणते। पण०। प्रथे विज्या देशश्च॥
वणिज्या। स्त्री० विपणे॥ न० वणिज'कर्मभावयो॥ दूतवणिग्भ्याञ्चेतिय। माधवस्तु० वणिज्या शब्द स्वभावात्स्त्रीलिङ्गोभावप्रत्ययोनतुकर्मणीत्याह॥ भाष्ये तु० वाणिकर्मेवनास्ति॥
वण्ट। पुं० अंशे। भागे। वाण्टा० इ० भा०॥ दात्रमुष्टौ। वेण्टा० इ० भा०॥ अनूढपुरुषे॥
वण्टक:। पु० अंशे। भागे॥ वण्टते। वटिविभाजने। कर्मणिघञ्। स्वार्थेक:
वण्टाल'। पुं० युद्धभेदे। शूरयुद्धे॥ नौकायाम्॥ खनित्रे॥

वण्ठ। पु० अकृतोद्वाहे॥ खर्वे॥ कुन्तायुधे॥ भृत्ये। वाठ० इ० प० भा० प्र० वण्ठते। वठिएकचर्यायाम्। अच्॥
वण्डर। पुं० खगिकायाम्॥ रज्जौ कुक्कुरस्यलाङ्गूले॥ करीरकोषे। ताल्लस्यपल्लवे॥ पयोधरे॥ वण्ठरश्च॥
वण्ड। पु० अनावृतमेढ्रे। दुश्चर्मणि। त्रि० हस्तादिवर्जिते॥ छिन्नलाङ्गूले। वाडा० इ० भा० प्र०॥ छिन्नहस्ते॥ वनुते। वनुयाचने। वनतिवा। वनसम्भक्तौ। अमन्ताड्ड॥
वण्डा। स्त्री० पांशुलायाम्॥ अजादित्वाट्टाप्॥
वत्। अ० सादृश्ये॥ तेनतुल्यमित्यादिभिर्विहितोवतिप्रत्यय। यस्तूपसर्गाद्वात्वर्थेइतिविहित, सनश्छान्त॥
वत। अ० आमन्त्रणे। रूक्तोषे॥ खेदे। अनुकम्पे॥ विस्मये॥ वयतेस्म। वयगतौ। गत्यर्थेतिक्त। नेटयलोप॥ वन्यतेस्मवा। वनुयाचने। क्त अनुदात्तोपदेशेतिनलोप.॥
वतंस.। पु० कर्णपूरे। कर्णाभरणे॥ शिरोभूषणे। शिखरे॥ अवतंसपति० अवतंस्यतेऽनेनवा। तसि'

गोभिप्रार्थे । पद्माक्षव्० इग
शैतिहत्ता । भागुरिसदिनाका
रलोपः ॥

वतगड । पु० मुनिविशेषे ॥

वतोका । स्त्री० अवतोकायाम । सुस्व
लितगर्भायाम् ॥

वत्स । पु० पुत्रादौ । मत्त्वा० इ०भा०
॥ तर्णके । शकृत्करो ॥ वदत्यभी-
ष्टा मातरम । वदव्यक्तार्थावाचि०
वदत्यैर्यबा । वृत्तवदीतिस ॥ वट
पिविशेषे ॥ वर्षे ॥ न० । उरसि ।
वक्षसि ॥

वत्सक । पु० कुटजवृत्ते ॥ न०पुष्प
कासोसे ॥ सञ्ज्ञायाकन ॥ अनुक-
म्पितोवत्से अनुकम्प्यतोवत्स ।
अनुकम्पायामितिक ॥

वत्सकबीजम् । न० इन्द्रयवे ।

वत्सकामा । स्त्री० वत्साभिलाषिण्यां
गवि । वत्सलायाम् ॥ पुत्रादिका
मनाविशिष्टायांनार्याम ॥

वत्सतर । पु० दम्ये । वत्सभावमती
त्यद्वितीयवय प्राप्ते ॥ तनुर्वत्स'
वत्सोक्षाश्वर्षभेभ्यश्चतनुत्वइति-
ष्टरच् ॥

वत्सतरी । स्त्री० वत्सायाभावमतोत्यद्वि
तीयवय प्राप्तायाम् । त्रिहायण्यां
गवि ॥ तन्वीवत्सा । ष्टरच् ।
ङीष् ॥

वत्सनाभः । पुं० विषभेदविशेषे । म
हते । उग्रे । महौषधे । मारणे ।
माहुराइ० भा०प्र० ॥ अ-स्यस्वरूप
निरूपणंयथा । सिन्धुवारसदृक्पत्र
ोवत्सनाभ्याकृतिस्तथा । यत्पा
र्श्वे नतरोर्वृद्धिर्वत्सनाभ सभाषित
इति ॥ अस्यगुणा' । अतिमधुर
त्वम०वातकफकण्ठरुक्सन्निपात-
नाशित्वम्०पित्तसन्तापकारकत्व-
ञ्चेतिराजनिर्घण्ट ॥ वत्सानन
भातिच्छिनत्ति । णभच्छिसायाम् ।
कर्मण्यण् ॥ वत्सस्तनाभिरिवनाभि
रस्येतिवा ॥

वत्सप । पु० वत्सचारकबालके ॥

वत्सपत्तनम् । न० भारतवर्षेउत्तरे
देशविशेषे । कौशाम्ब्याम् ॥

वत्सपाल । पु० बलदेवे ॥ श्रीकृ-
ष्णे ॥ वत्सपे ॥

वत्सर' । पुं० द्वादशमासात्मकेका-
ले ।संवत्सरे । अब्दे । हायने । श
रदि । समायाम् । वर्षे । संवत्स
रादिभेदेनपञ्चधाभवति । त
थाहि । शकाब्दात्पञ्चभि श्चे-
षात्समाद्यादिषुवत्सरा' । सम्परी
दानुपूर्वाश्चतथेदापूर्वकामताः ॥
अथषष्टिसवत्सराणांगणना । माने
गुरोरगभिद . पञ्चत्सराणांषष्टि.
स्मृतामुनिवरै' प्रभवादिकाना-
म् । स्यादेकवत्सरमितिगुरुमध्यमे-
कराशिसुभोगमितिरेवसदातथाहि॥

प्रभवो॰विभव॰शुक्ल, प्रमोदो॰थ॰प्रजापति । अङ्गिरा, श्रीमुखो॰भावो॰युवा॰धातीश्वराभिधौ॥ बहुधान्य प्रमाथीच॰विक्रमो॰ष्ट्रषसञ्ज्ञक । चित्रभानु सुभानुश्च॰-तारण पार्थिवो॰व्यय सर्वजित्॰सर्वधारीच॰विरोधी॰विकृतस्तत । खर॰नन्दनसञ्ज्ञौच॰विजयो॰जय॰मन्मथौ ॥ दुर्मुखस्तदनु प्रोक्तो॰हेमलम्बकसञ्ज्ञक । विलम्बाख्यो॰विकारी॰स्याच्॰छर्वरी प्लवसञ्ज्ञकौ ॥ उक्त'शुभकृतस्माद्वद शोभनकृत्स्मृत । क्रोधी॰-विश्वावसुर्ज्ञेयो॰वत्सरोहिपराभव । प्लवङ्ग कीलकाख्यो॰थसौम्य साधारणाह्वय. ततोविरोधकृन्नामा॰परिधावि॰प्रमाथिनौ॥ आनन्दो॰राक्षस प्रोक्तो॰ऽनल पिङ्गलसञ्ज्ञक । कालयुक्ताख्यसिद्धार्थौ॰रौद्रो॰दुर्मतिदुन्दुभी । रुधिरोद्गारिरक्ताक्षौ॰क्रोधन.॰क्षयक्रमत । वत्सराणागुरोर्मानेर्षष्टिरिसमुदाहृता ॥ वत्सरानयनयथा । नगेनेखै' सन्निहतीष्विधाशक सखविश्लोत्थयमाङ्गभाजित । गता . सतत्वब्धशकोभ्भपदृष्टतोऽश्वशेषकेश्व : प्रभवादिवत्सरा: । अत्र॰आद्यातुविंशतिब्राह्मी द्वितीयावैष्णवीस्मृता तृतीयारुद्रदैवत्याश्रेष्ठामध्याधमाभवेत् ॥ वसन्त्यस्मिन्नयनर्त्तुमासपक्षादय । वस निवासे । वसेश्चेतिमरप्रत्यय : । सत्वार्द्धधातुकइतिसस्यत ॥

वत्सरान्तक । पु॰ फाल्गुनेमासि ॥

वत्सल । पु॰ शृङ्गारादिरसान्तर्गत-रसविशेषे । वात्सल्ये । तृणाग्नौ , त्रि॰स्नेहयुक्ते । स्निग्धे ॥ वत्सेपुत्रादिस्नेहपात्रेऽभिलाषोऽस्यास्ति वत्सांसाभ्याकामबले॰इति लच् ॥

वत्सला । स्त्री॰ वत्सकामायाधेनौ ॥

वत्सशालम् । न॰ )
वत्सशाला । स्त्री॰ ) वत्सानागृहे ॥

वत्सानाश.ला पु॰। विभाषासेनेति॰पक्षेक्लीवता ॥ त्रि॰वत्सशालोत्पन्ने ॥ वत्सशालेजात । जातार्थे सवालुक् ॥ पक्षेत्रि॰वात्सशालोपि ।

वत्सा । स्त्री॰ पुत्र्याम ॥ वयसिप्रथमइतिङीप बाधित्वा॰अजादित्वाट्टप् ।

वत्साक्षी । स्त्री॰ गोडुम्बायाम् । चिर्भटायाम् ॥

वत्सादन . । पुं॰ वृके ॥

वत्सादनी । स्त्री॰ छिन्नरुहायाम् । गुडुच्याम् । वत्सैरद्यते । अद॰ । ल्युट् ॥

वद । त्रि॰ वक्तरि ॥ वदति । वद-

व्यक्तायाश्चि । पचाद्यच् ॥

वदनम् । न० आनने । मुखे ॥ वद्त्यनेन । वद० । करणेल्युट् ॥

वदनासव । पु० अधरमधुनि । वक्त्रासवे ॥ वदनस्यआसव ॥

वदन्ति । )
वदन्ती । ) स्त्री० कथायाम् ॥

वदन्य । त्रि० वदान्ये ॥

वदान्य । त्रि० अत्युदारे । दानशीलके । वल्गुप्रदे । आयाचते तिवदति । वद० । वदेरान्य ॥ चारुवादिनि । प्रियवादिनि ॥

वदामम् । न० फलविशेषे । सुफले । वातवैरिणि । वातादे ॥

वदाल पु० पाठीनमत्स्ये वोआलि० इ० गौ० दे० भा० प्रा० ॥

वदावद । त्रि० वक्तरि ॥ वदति । वद० । पचाद्यचि० चरिचलीति द्वित्वादि ॥

वद्रि । अ० कृष्णपक्षे ॥

वध । पु० हिंसके ॥ हिंसायाम् ॥

वधुका । स्त्री० वध्वाम् ॥

वधू । स्त्री० स्नुषायाम् । वहू० इ० भा० प्रसिद्धे ॥ वहति० उह्यतेवा । वहप्रापणे । वहेर्धश्च्यू ॥ शारिवौषधौ ॥ अध्याम् ॥ नवोढायम ॥ भार्यायाम् ॥ पृक्कायाम् ॥ अङ्गनायाम ॥

वधूजन । पु० योषिति ॥

वधूट । पु० यौवने ॥

वधूटशयनम् । न० गवाक्षे ॥

वधूटी । स्त्री० स्वल्पवध्वाम् ॥ स्नुषायाम् ॥ सुवासिन्याम् ॥ युवती ॥ वयस्यचरमइतिङीप् ॥

वधूत्भवप्रसव । पु० रक्ताम्लाने ॥

वध्रम् । न० इयरज्जौ ॥ वध्यतेऽनेन । वधेरौणादिक : ष्ट्रन् ॥

वध्रि । स्त्री० वध्रे ॥

वध्री । स्त्री० वध्रे ॥ षित्त्वान्ङीष । वध्रा . पश्यवध्रिका पश्येतिभाष्यम् ॥

वनम् । न० नीरे । जले ॥ निवासे ॥ आलये ॥ प्रस्रवणे ॥ कानने । स्वत : सिद्धवृक्षसमूहे । गहने । वना० इ० भा० ॥ प्रवासे ।. वन्यते० सम्भज्यते० सेव्यते० याच्यतेवा वनसम्भक्तौ० वनुयाचनेवा हलश्चेति कर्म्मणिघञ् । उपधायांवृद्ध्यभाव: ॥ कर्त्तरिपचाद्यच्वा ॥ त्रि० वननीये ॥ सम्भजनीये ॥

वनकादली । स्त्री० काष्ठकदल्याम् ॥

वनकन्द । पु० सितशूरणे ॥ धरणीकन्दे ॥

वनकार्पासी । स्त्री० त्रिपर्णायाम् । भारद्वाज्याम् । वनकपास० इ० भा० ॥

वनकुलत्थ : । पु० कुलत्थायाम् ॥

वनकोद्रव : । पु० उद्दाले ॥

वनकोलि । पुं० वनजबदर्याम् । कर्कन्धिकायाम् ॥

वनगो । पुं० स्त्री० गवये ॥

वनगोचर । पुं० नारायणे ॥ वनं जलं गोचरो निवासस्थानं यस्य सः ॥ व्याधे ॥

वनचन्दनम् । न० अगुरुणि ॥ देवदारुणि ॥

वनचन्द्रिका । स्त्री० मल्लिकायाम् ॥

वनचम्पक । पुं० वनदीपे । हेमाह्वे ॥

वनचर । पुं० किराते ॥ वनमृगे ॥ वनेचरति । चर० । चरेष्ट ॥

वनच्छाग । पुं० वनच्छगले । एडके । शिशुशाखके ॥ शूकरे ॥

वनज । पुं० मुस्तके ॥ स्तम्बेरमे । वनशूरणे अम्बुजे ॥ त्रि० वनोत्पन्ने ॥ वनेजायते । जनी० । ड ॥

वनजा । स्त्री० मुद्गपर्ण्याम् ॥ वनकार्पास्याम् ॥ वन्योपोदक्याम् ॥ अश्वगन्धायाम् ॥ गन्धपत्रायाम् ॥ मिश्रेयायाम् ॥ ऐन्द्रे । वनार्द्रकायाम् ॥

वनजायतेक्षण : त्रि० पद्मलोचने ॥

वनजीर । पुं० सूक्ष्मपत्रे । अरण्यजीरे ॥

वनतिक्त : । पुं० रोहितकद्रुमे ॥

वनतिक्ता । स्त्री० वनतिक्तिकायाम् ॥

वनतिक्तिका । स्त्री० पाठायाम् ॥ हरीतक्यां ॥

वनद । पु० घने । मेघे ॥ वनजलं ददाति । डुदाञ्० । क ॥ त्रि० वनदातरि ॥

वनदमन । पु० अरण्यदमने ॥

वनदीप । पु० वनचम्पके ॥

वनधेनु । स्त्री० गवय्या ॥

वननीय । त्रि० सम्भजनीये ॥

वनपल्लव । पुं० शोभाञ्जनवृक्षे ॥ अरण्यजपत्रे ॥

वनपांशुल । पु० व्याधे ॥

वनपिप्पली । स्त्री० क्षुद्रपिप्पल्याम् ॥

वनपुष्पा । स्त्री० शतपुष्पायाम् ॥

वनपूरक । पुं० वनबीजपूरे ॥

वनप्रिय । पुं० परभृते । कोकिले ॥ न० त्वचे । गुडत्वचि ॥ त्रि० अरण्यप्रियमात्रे ॥

वनभुक् । पु० ऋषभौषधे ॥

वनमक्षिका । स्त्री० दंशे ॥ वनस्थमक्षिका ॥

वनमल्लिका । ) वनमल्ली । ) स्त्री० वनोद्भवमल्लिकायाम् ॥

वनमाला । स्त्री० श्रीकृष्णस्रजि सप[illegible]पुष्पग्रथितायामाजानुलम्बिन्यां स्रजि ॥ तस्याः स्वरूपं यथा । आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वन

मालेतिकीर्त्तिता ॥ वनपुष्पस्रजि ॥

वनमाली । पु॰ हरौ । श्रीकृष्णे ॥ वन वनपुष्प तन्मालास्येति॰ वनमाली । व्रीह्यादित्वादिनि । सप्तम्याप्ययिता स्रक् वनमालेत्यन्ये ॥ आपादपद्म या माला वनमालेति सा मतेतितु कालिङ्ग । सास्य स्रीति ॥ वन मनितु शीलमस्येति वा । स नधारणे । सुपीतिणिनि । ... ॥

वनगामिनी । स्त्री॰ आरण्याम् ॥ दारकापुष्प्याम् ॥

वनसुका । पु॰ जलदे । मेघे ॥ वननीरमुञ्चति मुच्छ॰ । क्विप् ॥

वनमुद्ग । पु॰ मकुष्ठके ॥

वनमुद्गा । स्त्री॰ मुद्गपर्ण्याम् ॥

वनमूर्द्धजा । स्त्री॰ कर्कटशृङ्ग्याम् ॥

वनमेथिका । स्त्री॰ मेथिकाप्रभेदे ॥

वनमोचा । स्त्री॰ काष्ठकदल्याम् ॥

वनर । पु॰ वानरे ॥

वनराज । पुं॰ मृगेन्द्रे ॥ वनस्य राजनि ॥

वनराजक । पुं॰ सिंहे ॥

वनराजि : । स्त्री॰ वनवृक्षाणांपङ्क्तौ ॥

वनरुहम् । न॰ पद्मे ॥ वनेरोहति । रुह॰ । इगुपधेतिक ॥

वनलक्ष्मी । स्त्री॰ कदल्याम् ॥

वनवर्व्वर । पु॰ कृष्णार्जके ॥

वनवर्व्वरिका । स्त्री॰ अरण्यजवर्वर्याम् । सुप्रसन्नके । विषघ्ने । सूक्ष्मपत्रके । निद्रालौ ॥

वनवल्लरी । स्त्री॰ नि श्रेणिकातृणे ॥

वनवह्नि । पुं॰ दवानले ॥

वनवासन । पुं॰ गन्धोतौ । खट्टाशे ॥

वनवासी । पुं॰ नीलमहिषकन्दे । शाल्मलिकन्दे । पाटल्याम् । मुष्कककदर्ये । शृङ्ग्याम् । ऋषभौषधे ॥ शूकरकन्दे । वाराहीकन्दे ॥ त्रि॰ वनवासकर्त्तरि ॥

वनबीज । वनबीजक । वनबीजपूरक । पु॰ याम ॥ अरण्यजातबीजपूरे । मातुलुङ्गिका । अम्लस्लायाम् ॥

वनहन्ताकी । स्त्री॰ वृहत्याम् ॥

वनव्रीहि । पुं॰ नीवारे ॥

वनशूकरी । स्त्री॰ शूकशिमव्याम् । अरण्यवाराह्याम ॥

वनशूरण । पुं॰ वनोद्भवेओले । सितशूरणे । वनकन्दे ॥

वनशृङ्गाट । पुं॰ गोक्षुरके ॥ वनस्य शृङ्गाटइव ॥

वनशृङ्गाटक । पुं॰ गोक्षुरके ॥

वनशोभनम् । न॰ पद्मे ॥ त्रि॰ वन स्यशोभाकर्त्तरि ॥

वनश्वा । पु॰ गन्धमार्ज्जारे ॥ वभ्रुके । गोमायौ ॥ व्याघ्रे ॥

वनसङ्कट । पु॰ मसूरे ॥

वनसद् । त्रि॰ वनेचरे ॥

वनसमूह । पु॰ वन्यायाम् ॥ वना नांसमूह ॥

वनसरोजिनी । स्त्री॰ वनकार्पास्या म् ॥

वनस्थ । पुं॰ मृगे ॥ त्रि॰ वनवा सिनि ॥

वनस्था । स्त्री॰ अश्वत्थीवृक्षे ॥

वनस्पति । पुं॰ द्रुममात्रे ॥ विना पुष्पफलशालिनिवृक्षे ॥ अपुष्पाफल वन्तोये तेवनस्पतय: स्मृताइति मनु: ॥ स्थालीवृक्षे । नन्दीवृक्षे ॥ वनस्पति । पारस्करादित्वात् सुट् ॥ वटे ॥

वनहरिद्रा । स्त्री॰ काननोत्पन्नहरि द्रायाम् । शौलिकायाम् ॥

वनहास । पु॰ अश्ववाले । काशतृ णे ॥ कुन्दवृक्षे ॥

वनहासक । पुं॰ काशतृणे ॥

वनाखु: । पुं॰ शशके ॥

वनाखुक । पुं॰ मुद्गे ॥

वनाज । पु॰ वनच्छागे । टुण्डुके ॥

वनाटु । पु॰ स्त्री॰ बर्वणायाम् । नीलमक्षिकायाम् ॥

वनाधिवासी । त्रि॰ वनस्थे ॥ वनम धिवसतितच्छील । णिनि: ॥

वनामल । पुं॰ करमर्दे । कृष्णापा कफले ॥

वनाम्र: । पुं॰ कोषाम्रे ॥

वनायु: । पु॰ हरिणे ॥ देशविशेषे ॥

वनायव । पुं॰ बहुवचनान्तोयम् । देशविशेषे ॥

वनायुज । पुं॰ हयविशेषे । वनायु जे ॥ वनायुषुदेशेजात । सप्तम्या मजनेड ॥

वनारिष्टा । स्त्री॰ वनहरिद्रायाम् ॥

वनार्चक । पुं॰ पुष्पजीविनि । मालाकारे ॥

वनार्द्रका । स्त्री॰ ऐन्द्रे । वनभवार्द्र के ॥

वनालिका । स्त्री॰ वज्रवल्ल्याम् । हस्तिशुण्डाम् ॥

वनाश्रय । पु॰ द्रोणकाके ॥

वनाह्विर: । पुं॰ दन्तायुधे । शूकरे ॥

वनि । पुं॰ अग्नौ ॥ वन्यतेयाचते । वनुयाचने । खनिकष्यज्यसिवसि वनिसनिध्वनिग्रन्थिचलिचरिभ्यश्चे ति॰इप्रत्यय: ॥

वनित । त्रि॰ याचिते ॥ सेविते ॥

वनिता । स्त्री॰ उत्पादिताव्यर्थानुरा गनार्याम् ॥ योषिन्मात्रे ॥ वन्यते स्म । वनुयाचने॰ वनसम्भक्तौवा । क्त । शषविभाषेत्यस्यानित्यत्वा

दिट् ॥ यद्वा । वनतेर्बाहुलकादि तन् ॥

वनी । पुं० कन्दमूलफलाद्याहारेणसाग्निहोत्रे॰निरग्निहोत्रे॰वावानप्रस्थे । तृतीयाश्रमे ॥ वन निवासस्थानमस्यास्ति । अतइनिठनाविती नि ॥

वनी । स्त्री० विपिने । गहने ॥ वनति । वन० । पचाद्यच् । गौरादि ॥

वनीपक । त्रि० याचके ॥ वनीपाति । आतइतिक । तत . स ज्ञा याकन् ।

वनीयक : । त्रि० याचके ॥ वननम् । वनु० । सर्वधातुभ्यइन् । वनियाञ्चा॰तामिच्छति । सुपआत्मनक्यच् । ण्वुल् ॥

वनेचुद्रा । स्त्री० कारञ्जे ॥

वनेचर । पुं० किराते ॥ त्रि० अरण्यचारिणि ॥ वनेचरति । चरेष्टइतिट : ॥ तत्पुरुषेकृतीत्यलुक् ॥

वनेज्य । पुं० वनरसाले ॥

वनेसद् । पुं० वनेचरे ॥ वनेसीदति । षद्ऌ० । क्विप् । तत्पुरुषइलादिनाऽलुक् ॥

वनेसर्ज । पुं० असनवृक्षे ॥

वनोद्भवा । स्त्री० वनकार्पास्याम् ॥ त्रि० वनजे ॥

वनोपल : । पुं० आरण्यगोमये ॥

वनौका : । पुं० वानरे ॥ वनस्थिते । पुलिन्दे ॥ वनमोकोस्य ॥

वनौषधी । स्त्री० वनोद्भवौषधिमात्रे ॥ प्रायोजना सन्निवनेचराद्यागोपाद्य प्राक्तननामतज्ज्ञा । प्रयोजनार्थविचन प्रवृत्तिर्यत्तत प्राक्तनइत्यदोष ॥ किञ्च । रसवीर्यविपाकेभ्योमूलात्पुष्पात्फलाद्दलात् । आकाराद्देशकालादेर्वनौषध्यर्थमुन्नयेत् ॥

वन्दक । पुं० नीलवल्ल्याम् । वन्दायाम् ॥ त्रि० वन्दनकृति ॥

वन्दका । स्त्री० वृक्षादन्याम् । वन्दायाम् ॥

वन्दथ । त्रि० स्तोतरि ॥ स्तुत्ये ॥ वन्दते॰ वन्द्यतेवा । वदि अभिवादनस्तुत्यो शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथइत्यच बस्तीत्यस्यस्थानेवन्दोतिपाठोपिबहुश्रुतेनिशीरितइतिवन्देरथ ॥

वन्दनम् । न० नतौ । प्रणामे ॥ वन्देर्ल्युट ॥ मुखे ॥

वन्दनमाला । स्त्री० तोरणे । रम्भास्तम्भचतुष्टयवेष्टितानपत्ररचितमालायाम् ॥ यथा । कुर्याद्वन्दनमालायोरम्भास्तम्भैसुशोभनै । चूतवृक्षोद्भवै पत्रैर्जागरेचक्रपाणिन ॥ युगानिपत्रसङ्ख्यानांस्वर्गेतस्योत्सवोभवेत् । पूज्यतेवासवाद्यैश्च क्रीडतेचाप्सरोगत ॥

वन्दनमालिका । स्त्री॰ वहिर्द्वारोपरि शुभदायांमालायाम् ॥ यथा । तोरणोर्ध्वेतुमङ्गल्य दामवन्दनमालिका ॥

वन्दना । स्त्री॰ सभीच्याम् । स्तुतौ ॥ हेमभस्मनातिलके ॥ यथा । ऐशान्यामाहरेद्भस्मशुचावायस्तुवेण वा । वन्दनाकारयेत्तेनशिर क ण्ठांसकेषुच ॥ काश्यपस्येतिमन्त्रेण यथानुक्रमयोगतद्भुतिवशिष्ठ ॥

वन्दनी । स्त्री॰ नतौ ॥ जीवातौ ॥ वन्ध्याम् ॥ पाचनकर्म्मणि ॥

वन्दनीय ।पु॰ पीतभृङ्गराजे ॥ त्रि॰ नमस्ये । वन्द्ये । स्तवनीये ॥ वन्दितुमर्हे । वदि॰ । अनीयर् ॥

वन्दनीया । स्त्री॰ गोरोचनायाम् ॥ अजादित्त्वाट्टाप् ॥

वन्दा । स्त्री॰ वृक्षोपरिजातवृक्षे । वृक्षादन्याम । वृक्षरुहायाम् । जीवन्तिकायाम् । वन्दाके ॥ वृक्षे विजातीयप्ररोहोवन्दा । वन्द्यते । वदि॰ । गुरोश्च हलः ॥ भिक्षुक्याम । वन्द्यां ॥

वन्दाक : । पु॰ द्रुमरुहायाम् । वन्दायाम् ॥ यथा । वन्दाक : स्याद्धिमस्तिक्त : कषायोमधुरोरसे । मङ्गल्य . कफवातास्रक्षोव्रणविषापह ॥ † * †

वन्दाका ।) स्त्री॰ वन्दायाम् ।
वन्दाकी ।) स्त्री॰ वृक्षादन्याम् ॥

वन्दारु . । त्रि॰ वन्दनशीले । अभिवादके ॥ वन्दते । वदि॰ । शृवन्द्योरारु . ॥

वन्दि : । स्त्री॰ निवद्धमनुजादौ । प्रग्रहे । उपग्रहे । वन्दी॰ ङ्॰ लोक॰ प्र॰ ॥ सोपानके ॥

वन्दिग्राह । पु॰ अग्न्यायुधदेवतागारभेदके ॥

वन्दिचौर . । पु॰ माचले । सन्धिचौरे ॥

वन्दित । त्रि॰ पूजिते ॥

वन्दी । पु॰ राजादे ' स्तुतिपाठिनि । स्तुतिपाठके । भाट॰ ङ्॰ प्र॰ ॥ प्रस्तावानुवक्तरि ॥ वन्दिनस्त्वमल प्रज्ञा : प्रस्तावसदृशोक्तय ॥ वन्दते । वदि॰ । ग्रह्यादित्त्वादावश्यके तिवाणिनि ॥ पणमध्यस्थे ॥

वन्दिपाठ । पु॰ भोगावल्याम् । स्तुतिग्रन्थे ॥

वन्दी । स्त्री॰ आहृतस्त्रियाम् ॥ पणमध्यस्थायाम् । वन्द्यते॰ वन्दते वा । वदि॰ इन् । ङीष् ॥ शूद्रायांक्षत्रियेणोत्पादितायाम् ॥

वन्दीकार . । पु॰ वन्दिग्राहे । प्रसह्यचौरे । माचले ॥

वन्द्य । त्रि॰ स्तव्ये । वन्दनीये ॥

वन्द्या । स्त्री॰ स्तव्यायाम् । वन्दनीयाया

म॥ गोरोचनायाम्॥ वन्द्रायाम्॥
वन्द्र:। त्रि० पूजके॥ पु० गुरौ॥ वन्द्रते० वन्द्यतेवा। वदि०। स्फायितञ्चीत्यादिनारक्॥ न० नत्यार्थे॥
वन्य.। पुं वनौर्को। वनशूरणे॥ वाराहीकन्दे॥ देवनले॥ न० कैवर्तीमुस्तके॥ त्वचे॥ त्रि० वनो द्भूते। वनेभव। यत्॥
वन्या। स्त्री० वनसमूहे॥ अम्बुसमूहे॥ वनानांसमूह'। पाशादिभ्याय:॥ गोपालकर्क्यांम्॥ मुद्गपर्ण्याम्॥ गुञ्जायाम्॥ भद्रमुस्तायाम्॥ गन्धपत्रायाम्॥ मिश्रयायाम्॥
वन्योपोदकी। स्त्री० लताप्रभेदे वनआयाम्। वनसाक्षयायाम्॥ द्रुतिराजनिर्घण्ट:॥
वन्न। त्रि० भजिनि। भागिनि॥ वनति। वनसम्भक्तौ। स्फायिन्द्रायेत्यादिनारन्॥
वप:। पु० मेदसि॥ केशमुण्डने॥ बीजवपने॥ वपति। टुवप्०। पचाद्यच्॥ वपतियद्दिक्षणाया.र्द्धेऽभमासाद्यबीजम्॥
वपनम्। न० बीजाधाने॥ मुण्डने॥ यथा। गङ्गायाभास्करक्षेत्रेमातापित्रोर्गुरोस्तौ। आधानेसोमपानेच वपनंसप्तसुस्मृतम्॥
टुवप्०। ल्युट्॥ अन्यत्रनिधनात्पत्यु पत्नीकेशान्नवापयेत्॥ शौर्ये॥
वपनी। स्त्री० नापितशालायाम्॥
वपा। स्त्री० विवरे। छिद्रे॥ मेदसि॥ उप्यतेऽत्र। टुवप्०। भिदाद्यङ्॥ यद्वा। वपति। पचाद्यच्। टाप्॥
वपिल। पुं० पितरि॥
वपुस्रव.। पुं० शरीरस्थरसधातौ।
वपुन.। पु० देवे। सुरे॥
वपुषा। स्त्री० हवुषायाम्। इतिहेर० कू० भा॥
वपुष्मा। स्त्री० पद्मचारिण्याम्॥
वपु'। न० तनौ। शरीरे॥ प्रशस्ताकृतौ॥ वपति० उप्यतेवा। टुवप्बीजसन्ताने। अर्तिपृवपीत्युसि.॥
वप्तव्य:। त्रि० अर्पणीये॥ भूमौबीजं क्षिवप्तव्य० मुर्वरायानचोषरे॥
वप्ता। पुं० जनके॥ त्रि० वापके। वपति। टुवप्०। ण्वुल्तृचाविति तृच्। कवौ॥
वप्र.। पुं० तातौ॥ प्रकारे॥ न० सीसके॥ पुं० न० प्राकाराधारवेदिकायाम्। चये॥ तथाचार्थशास्त्रम्। खातादुद्धृतमृदावप्रकारयेत्। तस्योपरिप्राकारमिति॥ मध्वा वप्रोयथा। महोद्यानामध्वावप्रो

तडागशतशोभिताम् । प्राकारवप्र मसम्बाधामिन्द्रस्येवामरावतीम् ॥ महान्वप्रोयस्या । प्राकाराधार भूताकृचिमोच्छ्रितभूमिर्वप्रसंज्ञ तिवि॰ पु॰ ॥ रोधसि । तटे ॥ रेणौ ॥ चैत्ये ॥ केदारे ॥ सानुनि ॥ उप्यतेऽत्र । टुवप॰ । शृधिवपिभ्यां रन् ॥

वप्रक्रीडा । स्त्री॰ वृषभादीनांवप्रक्रियायाम् ॥ यथा । उत्खातकेलि शृङ्गाद्यैर्वप्रक्रीडानिगद्यतेइतिशब्दार्णव ॥

वप्रा । स्त्री॰ मञ्जिष्ठायाम् ॥

वप्रि : । स्त्री॰ क्षेत्रे ॥ वपति । टुवप॰ । वङ्क्र्यादित्वात्साधु : ॥

वप्री । स्त्री॰ वल्मीके ॥

वम । पु॰ स्त्री॰ वमने ॥

वमथु : । पु॰ वमने ॥ गजस्यकरशीकरे ॥ वमन॰ वम्यतेवा टुवमउद्गिरणे ॥ ट्वितोथुच् ॥

वमन । पु॰ शणे ॥ न॰ छर्दने ॥ अर्दने ॥ आहुतौ । आहरणे ॥

वमनी । स्त्री॰ जलौकायाम् ॥

वमनीया । स्त्री॰ मक्षिकायाम् ॥ त्रि॰ वमनयोग्ये ॥

वमि : । पुं॰ हुताशने । अग्नौ ॥ धूर्ते ॥ स्त्री॰ वान्तौ । छर्दने ॥ वमनम् । टुवम॰ । इक्कृष्यादिभ्य : ॥

वमित । त्रि॰ कृतवमने ॥ यथा । वमितलङ्घयेत्प्राज्ञोलङ्घितनतुवामयेत् । वमनेक्षीणवाह्नस्याद्यन्याल्लङ्घनकर्षितम् ॥

वमी । स्त्री॰ वमने ॥ कृदिकारादिति ङीष ॥

वम्भ : । पुं॰ वंशे ॥

वम्री । स्त्री॰ उपजिह्वायाम् । सोमक॰ हू॰ दे॰ भा॰ । वालवो॰ हू॰ महाराष्ट्रभाषा ॥ हू॰ हि॰ न्द्र॰ ॥

वम्रीकूट । पु॰ वल्मीके ॥

वय : । पुं॰ पक्षिणि । खगे ॥ तारुण्ये ॥ यौवने ॥ कालकृतायायौवनादिरूपायाशरीरावस्थायाम् । वाल्यादौ ॥ अवस्थाय . पञ्चा : । यथा । कौमारयौवनमध्यत्वस्थविरत्वानिचत्वारिवयांसीत्येक ' पक्ष . । तथाचाहु . । आद्येवयसिनाधीतद्वितीयेनार्जितधनम् । तृतीयेनतपस्तप्तं चतुर्थेकिंकरिष्यतीति ॥ त्रीणिवयांसीत्यन्ये । यदाहु । पितारक्षतिकौमारेभर्त्तारक्षतियौवने ॥ पुत्रास्तुस्थाविरेभावेनस्त्रीस्वातन्त्र्यमर्हतीति ॥ अन्ये तु॰ कौमारयौवनस्थविरत्वानि॰ त्रीणीच्छन्ति । आहुश्च । आषोडशाद्भवेद्वालोयावत्क्षीरनिवर्त्तक : । मध्यम . सप्तति यावत्परतोवृद्धउच्यतइति ॥ केचित्तुउपचयापचयलक्षणेद्वेवयसी

दृश्यन्तिअस्मिन्पक्षे यौवनस्यप्रथम वयोवाचित्त्वाद्वायसिप्रथमइतिवधू- टीचिरण्टीत्यत्रङीपिसिद्धं० वय श्चरमइतिनवक्तव्यमितिस्थितम्॥ यस्त्वर्थप्रकरणादिकमनपेक्ष्यश्रवण मात्रेणवय प्रतिपादयति० सव योवाचीत्युच्यते० अन्तरङ्गत्वात्० ङीनेहन। उत्तानशया० लोहित पादा। इत्यप्रकरणादिनावयस ' प्रतीतावपि० शब्दादप्रतीते .। अ वाला पिहित्याध्यादिवशादुत्तानाशे ते० अनन्तकेनचरणावरणाभवति॥ वयते० वेति० अजतिवा। वय गतौ ० वीगत्यादौ० अजगतौवा असुन्॥ वयस्त्रिविधबाल्य मध्य मवार्द्धकतयेतिसुश्रुत॥

वयस्थ। त्रि० मध्यमवयसि। तरु णे॥ वयसितिष्ठति। सुपीतियो गविभागात्क.॥

वयस्था।) वयस्था।) स्त्री० ब्राह्म्याम्॥ गुडू च्याम्॥ आमलक्याम्॥ सूक्ष्मैला याम्॥ काकोल्याम्। पथ्याया म्। पूतनायाम्। हरीतक्याम्॥ सोमलतायाम्॥ शाल्मलौ॥ क्षी रकाकोल्याम्॥ अध्यण्डपर्ण्याम्॥ मत्स्याक्ष्याम्॥ वयोयौवनतिष्ठ त्यनया।स्था०। कअर्थेक। युवतौ। तरुण्याम्। सख्याम्। आल्या

म्॥ खर्परेशरिवाविसर्गलोप॥

वयस्य। पु० समानवयस्के। स्नि ग्धे। सवयसि॥ वयसातुल्य। नौवयोधर्मेत्यादिनायत्॥ स ख्यौ॥

वयस्या। स्त्री० सख्याम्॥ टाप्॥

वयस्वी। पु० तरुणे॥

वयुन। पु० देवतालये॥ न० प्रज्ञा ने॥ कर्मणि॥ अजति। अज०। अजियमिशीङ्भ्यश्चेत्युनन्चित्। अजेर्वी गुणायादेशौ॥

वयोधा। पुं० यूनि। तरुणे॥ वयो दधाति। डुधाञ्०। वयसिधाञ इत्यसिङित्॥

वयोवङ्ग। न० सीसके॥

वयोवाची। पुं० अर्थप्रकरणादिकम नपेक्ष्यश्रवणमात्रेणवयस प्रतिपा दके कुमारादिशब्दे॥

वर। पु० देवाहृते। देवतादेरभी प्सिते॥ तपोभिरिष्यतेयस्तुदेवेभ्य. सवरोमतइतिभरत.॥ भर्त्तरि॥ जामातरि॥ वृत्तौ। वरणे॥ वि टे। पिङ्गे॥ गुग्गुलौ॥ कन्या र्थिनि॥ वर परीक्ष्यकन्यादेया। तथाहिविद्याप्रभाव ज्ञानञ्चपरीक्ष्य वणयादरम्। यथोक्तं देवीभागवते। वरायगुणहीनायवृद्धायाज्ञानिने तथा। दरिद्रायचमूर्खायरोगिणे कुत्सितायच॥ अत्यन्तकोपयुक्ताय

वाऽत्यन्तदुर्मुखायच । पङ्क्तिपङ्क्ति हीनायचान्धायबधिरायच ॥ जडायचैवमूकायक्लीबतुल्यायपापिने । ब्रह्महत्यालभेत्सोपिय स्वकन्यां प्रयच्छति ॥ शान्तायगुणिनेचैवयूनेचविदुषेपिच । साधकायसुतादत्त्वा दशयज्ञफलं लभेदितिनवम स्कन्ध ॥ न० कुङ्कुमे ॥ किञ्चिदिष्टे । मनाक्प्रिये ॥ तथाहि । वर प्राणास्त्यागोनचशिशुविनाशिष्वभिरतिर्वरं मौनं कार्यं नचवचनमुक्तं यदनृतम् । वर क्लीवभाव्यं नचपरकलत्राभिगमनं वरं भिक्षाशित्वं नच परधनानाहिरणम् ॥ त्रि० श्रेष्ठे ॥ साधुनि ॥ व्रियते०वरणा वा । वृञ्वरणे । ग्रहवृद्दित्यप् ॥ यद्वा । वृणोति० वरतिवा । पचाद्यच् ॥

वरक । पु० वनमुद्गे ॥ पर्पटे ॥ तृणधान्यप्रभेदे । स्थूलकङ्गौ । चीना० इ० भा० प्र० ॥ मधुरोवरकोरूक्ष कषायोवातपित्तकृत् ॥ न० पञ्चोर्णे । धौताधौतसाधारणवस्त्रे ॥ पोताच्छादने ॥

वरक्रतु । पुं० इन्द्रे । मरुत्वति ॥

वरचन्दनम् । न० कालीये ॥ देवदारुणि ॥ वरञ्चतच्चन्दनञ्च ॥

वरट । पुं० हसे ॥ गन्धोल्याम् । वरड० इ० प्र० कीटे ॥ म्लेच्छजातिविभेदे ॥ न० कुन्दपुष्पे ॥

वृणोतिसेवतेसर । वृङ्सम्भक्तौ । वृणोतिवा । वृञ्आवरणे । शकादिभ्योटन् ॥

वरटा । स्त्री० हसम्ययोषिति । हस्याम् ॥ गन्धोल्याम । वरड० इ० भा० प्र० कीटे ॥ कुसुम्भबीजे । वरट्टिकायाम ॥ यथा । वरटामधुरास्निग्धारक्तपित्तकफापहा । कषायाशीतलागुर्वी स्वादवृष्यानिलापहा ॥ + +

वरटी । स्त्री० हस्याम् । वरडे०इ०-प्र०सपक्षकीटे । गन्धोल्याम ॥ गौरादि ।

वरट्टिका । स्त्री० वरटायाम् । कुसुम्भबीजे ॥

वरण । पु० तिक्तशाके । वरुणद्रुमे ॥ प्राकारे । सालि॥उष्ट्रे ॥ सङ्क्रमे॥ न०कन्यादिवरणे ॥ वेष्टने । वृत्याम् ॥ व्रियते०वृणोतिवा । वृञ्० । युच् ॥ कर्तृकरणयोर्ल्युट् ॥ वरणे । यथा वरवृणवन्तितदेवाबरदश्चवरार्थिनाम् । धातुर्वै वरणेप्रोक्तस्तस्मात्सवरणः स्मृत ॥ इति साम्बपुराणम् ॥ पूजनादौ ॥

वरणसी । स्त्री० वाराणस्याम् ॥

वरणा । स्त्री० काश्य उत्तरसीम्निस्थितायानद्याम् ॥

वरणीय । त्रि० उपासनीये । वरेण्ये ॥

वरण्ड । पु॰ अन्तरावेदाम् । वर ण्डके ॥ समूहे । सङ्घे ॥ वदना मये । वयस्फोडा॰दू॰भा॰प्र॰ ॥ वृणोति । वृञ॰ । अण्डनृक्षरभृ- वृञङ्गल्यण्डन् ॥

वरण्डक । पुं॰ अन्तर्वेदौ । वरण्डे। मातङ्गवेदाम् ॥ अभ्यासकालिका स्वनवेदिमन्तर्वेयदन्तिनौयेधयेतेद् तिप्रसिद्धि: ॥ यौवनकण्टके ॥ स र्वतुले । गोलङ्गतिख्याते ॥ भि- त्तौ ॥ त्रि॰विशाले ॥ भयसम्प- न्ने ॥ कृपणे ॥

वरण्डा । स्त्री॰ शरिकायाम् ॥ व र्त्याम् । शस्त्रविशेषे । क्षुरिका याम् ॥

वरण्डालु । पुं॰ फलपुच्छे ॥

वरतिक्त । पुं॰ कुटजवृक्षे ॥

वरतिक्तिका । स्त्री॰ पाठायाम् ॥

वरत्करी । स्त्री॰ रेणुकानामनिगन्ध द्रव्ये ॥

वरत्रा । स्त्री॰ नद्ध्याम् । चर्ममयर ज्जौ॰ । वरत॰दू॰भा॰प्र॰ ॥ दू ष्यायाम । कक्षायाम् । गजमध्य बन्धनरज्जौ ॥ व्रियतेऽनया । वृ ञ॰ । बाहुलकादत्र । वृञश्चिदि त्यत्रन्वा ॥ यद्वा । वरत्रायते । चेड्पालने ॥ आतोनुपेतिक ॥

वरत्वच । पुं॰ निम्बवृक्षे ॥ न॰श्रेष्ठ वल्कले ॥

वरद । त्रि॰ प्रसन्ने ॥ अभीष्टदात रि । समर्द्धके ॥ शान्तचित्ते ॥ व रददाति । डुदाञ॰ । आतोनुप सर्गेकृतिक ॥ पुं॰ अग्नौ ॥ शा न्तिकर्मणिपुष्टौचवरदोऽव्यवाहन इत्यागमात् ॥

वरदा । स्त्री॰ कन्यायाम् । कुमारि कायाम ॥ वरदाख्याम् ॥ अश्वग न्धायाम् ॥ आदित्यभक्तायाम ॥ टाप ॥ तिथिविशेषे । माघशुक्लच तुर्थ्याम् ॥

वरदाचतुर्थी । स्त्री॰ माघशुक्लचतु र्थ्याम् ॥ तस्यांगौरीपूज्या । यथा। भविष्योत्तरेमाघशुक्लमधिकृत्य । चतुर्थीवरदानामतस्यांगौरीसुपूजि ता । सौभाग्यमतुलंकुर्यात्पञ्चम्यां श्रीरपिश्रियम् ॥

वरदातु: । पुं॰ भूमिसहवृक्षे ॥

वरदात्री । स्त्री॰ दुर्गायाम् ॥

वरदानम् । न॰ भौमेतीर्थभेदे ॥ यत्र विष्णवेदुर्वाससावरोदत्त ॥

वरदारु । पुं॰ शाकवृक्षे ॥

वरदासङ्गम । पुं॰ तीर्थविशेषे ॥

वरपर्णाख्य: । पुं॰ चीरकसुको- वृक्षे ॥

वरप्रद: । त्रि॰ वरदे ॥

वरप्रदा । स्त्री॰ अगस्त्यमुने: पत्न्या म । लोपामुद्रायाम् ॥ वरप्रददा ति । डुदाञ॰ क: । टाप ॥

वरफ । पु० पिशाचविशेषे ॥ यथो-क्तं शूलिनोमन्त्रविधाने । सहस्रं प्रजपेन्मन्त्रं शूलिन्यायस्य शङ्कर । बटाश्च वरफाश्चैव नस्यन्ति कदाचनेति ॥

वरफल । पु० नारिकेलवृक्षे ॥ वराणि फलानियस्य ॥ न० श्रेष्ठफले ॥

वरम् । अ० ईषदुत्कर्षे ॥ मनागिष्टे ॥

वरमुखी । स्त्री० रेणुकाभिधगन्धद्रव्ये ॥

वरम्बरा । स्त्री० पृश्निपर्ण्याम् ॥

वरयिता । पुं० भर्त्तरि ॥ वरयकारयितरि ॥

वरर । त्रि० वरप्रदे ॥ वरान्राति । राहाने । आतङ्कुतिक ॥

वररुचि । पु० पुनर्वसौ ॥ कात्यायनमुनौ ॥ विक्रमादित्यराजसभास्थे कविविशेषे ॥ वरेषुरुचिर्यस्य ॥

वरल । पुं० वरटे । गन्धोल्याम् ॥

वरलब्ध । पुं० चम्पकवृक्षे ॥ त्रि० वरप्राप्ते ॥

वरला । स्त्री० गन्धोल्याम् ॥ हंस्याम् ॥

वरली । स्त्री० वरटायाम ॥

वरवत्सला । स्त्री० श्वश्र्वाम् ॥

वरवर्णिनी । स्त्री० वरारोहायाम् । मत्तकाशिन्याम् । उत्तमायानार्य्याम् ॥ यथा . लक्षणयथा । शीतेसुखोष्णसर्वाङ्गीग्रीष्मे यासुखशीतला । भर्तृभक्ताचयानारीसाभवेद्वरवर्णिनी ॥ इतिशब्द ॥ वरोवर्णोस्त्यस्याः । इनि । ङीप् ॥ लाक्षायाम् ॥ हरिद्रायाम् ॥ रोचनायाम् ॥ फलिन्याम् ॥ साधीयस्याम् वरश्चासौवर्णश्चसोस्त्यस्याः । इनि । ङीप् ॥ श्रियि ॥ गौर्याम् ॥ सरस्वत्याम् ॥

वरवाह्लीकम् । न० कुङ्कुमे ॥

वरवृत । पु० सुप्रसादे । शिवे ॥ वरेषुवृत ॥

वरा । स्त्री० फलत्रिके । त्रिफलायाम् ॥ पाठायाम् ॥ रेणुकाख्यगन्धद्रव्ये ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ हरिद्रायाम् ॥ विडङ्गे । श्रेष्ठायाम् ॥ ग्रहवृद्धिस्थवन्ताद्धृअष्टाप् ॥

वराक । पु० सङ्करे । रणे । युद्धे ॥ त्रि० शोचनीये । शोच्ये ॥ अधरे ॥ वृणोतीतच्छील । वृङ्सम्भक्तौ । जल्पभिक्षकुट्टलुण्टवृङ . षाकन् ॥

वराकी । स्त्री० अवरोयाम् ॥ ङीष् ॥

वराङ्गः । पुं० पुष्करिणि । गजे । मातङ्गे ॥ न० योनौ ॥ मस्तके ॥ गुडत्वचि ॥ शोभनावयवे ॥ त्रि० शोभनावयवविशिष्टे ॥ वरञ्चतदङ्गञ्च । वराण्यङ्गान्यस्य ॥

वराङ्गकम् । न० गुडत्वचि । त्वक्पत्रे । त्वचे ॥ वरमङ्गमस्य । शोषा

द्विभाषितिकाप् ॥

वराङ्गना । स्त्री॰ अतिप्रशस्ताङ्गयुक्तायास्त्रियाम् ॥ यथा । शिर सपुष्प चरणौसुपूजितौवराङ्गनासेवनमत्यभोजनम् । अनन्नशायित्वमपर्वमैथुनम्चिरप्रनष्टांश्रियमानयन्तिषट् ॥

वराङ्गरूपोपेत : । त्रि॰ श्रेष्ठरूपयुक्ते । सिंहसहनने ॥ अङ्गानिचरूपञ्चअङ्गरूपाणि । वराणिचतानिअङ्गरूपाणिच॰तैरुपेत ॥

वराङ्गी । पुं॰ अम्लवेतसे ॥

वराङ्गी । स्त्री॰ हरिद्रायां ।

वराट . । पुं॰ कपर्दके ॥ तस्यभेदा: पञ्चयथा । सिंही॰व्याघ्री॰मृगी॰हंसी॰विदल्लेतिराजनिर्घण्ट. ॥ रज्जौ ॥ वरमटति । अटगतौ । कर्मण्यण ॥

वराटक: । पुं॰ पद्मबीजकोषे ॥ रज्जौ ॥ कपर्दके कौडी॰ बू॰ भा॰ प्र॰ ॥ तस्यसङ्ख्याभेदेनसञ्ज्ञाभेदा यथा । वराटकानाद्दशकद्वयंयत् साकाकिणीताश्चपणस्तस्त . तेषोडशद्रम्मइहावगम्योद्रम्मैस्तथाषोडशभिश्चनिष्क ' ॥ इतिलीलावती॥ अपिच । तान्त्रिक . कार्षिक . पणइतियाज्ञवल्क्यवचनेन॰गुञ्जापञ्चाद्यमाषकस्तेषोडशाद्य ' कर्षोऽस्त्रीत्यमरसिंहोक्तेनचअशीतिरक्ति

कापरिमितताम्रेपणशब्द : सङ्केतित सचतावत्सङ्ख्यकवराटकैर्लभ्यतेइतिवराटकेष्वपितथाव्यवहार । एतन्मूलकभविष्यमत्स्यसूक्तयोर्वचन यथा । अशीतिभिर्वराटकै पणइत्यभिधीयते । तैषोडशै : पुराण स्याद्रजत सप्तभिस्तु तैरितिप्रायश्चित्ततत्त्वम् ॥ तेचदक्षिणार्थंविधीयन्ते । यथा । हतमश्रोत्रियंदान हतोयज्ञस्त्वदक्षिण: । तस्मात्पणंकाकिणींवाफलपुष्पमथापिवा ॥ प्रदद्याद्दक्षिणायज्ञेतयासस्सफलोभवेत् । इतिशुद्धितत्त्वम ॥ त्रियतेदल ' । वृञ्आवरणे । अन्येभ्योपीत्याटच् ॥ ततस्वार्थेक : ॥ यद्वा । वर दलवर्णमटति । अट॰ । कर्मण्यण् । तत : स्वार्थेकन् ॥ वराटकारजा : । पुं॰ नागकेशरवृक्षे ॥

वराटिका । स्त्री॰ कपर्दके ॥

वराण . । पुं॰ इन्द्रे ॥ वरुणवृक्षे ॥

वराणसी । स्त्री॰ काश्याम् ॥

वरादनम् । न॰ राजादने ॥

वराभिध : । पुं॰ अम्लवेतसे ॥ श्रेष्ठनामनि ॥

वरारकम् । न॰ हीरके ॥

वरारोह . । पुं॰ परमश्वरे ॥ वरआरोहोस्य । पुनरावृत्त्यसम्भवात्॰वरमारोहणंयस्मिन्वा ॥ गजारो

हे ॥ अवरोहे ॥
वरारोहा । स्त्री॰ मत्तकाशिन्याम् । वरवर्णिन्याम् । वरआरोहोनितम्बोऽस्याः ॥ कटौ ॥
वरालिका । स्त्री॰ आर्यायाम् । पार्वत्याम् ॥ इ॰ चि॰ ॥
वराशि । पुं॰ स्थूलवस्त्रे । स्थूलशाटके ॥ वरश्रेष्ठवरणं वाअश्नुते । अशुव्याप्तौ । इन् ॥
वरासन । पुं॰ षिङ्गे ॥ द्वारपाले ॥ न॰ ओड्रपुष्पे ॥ श्रेष्ठासने ॥
वरासि । पुं॰ स्थूलशाटके ॥ खड्गधरे ॥
वरासी । स्त्री॰ म्लानवस्त्रे ॥
वराह । पुं॰ विष्णौ ॥ मानप्रभेदे ॥ तीर्थप्रभेदे ॥ अद्रिविशेषे ॥ मुस्तायाम् ॥ शिशुमारे॥ वाराहीकन्दे ॥ अष्टादशद्वीपान्तर्गतक्षुद्रद्वीपविशेषे ॥ यथा । गन्धर्वी॰ वरुणः सौम्योवराहः कङ्कएवच । कुमुदश्च कशेरुश्चनागोभद्रारकस्तथा॥ चन्द्रेन्द्रमलया शङ्खयवाङ्गकगभस्तिमान् । ताम्राङ्गश्चकुमारीचतत्र द्वीपादशाष्टभिरिति ॥ सूकरे । कोले । भूदारे॥ अस्यमांससाधनादियथा । वराहस्यतनु तोये सम्यक्प्रक्षालितामुहुः । दर्भाग्निनाथवादग्धाकिञ्चित्तोयेनसेकिताम् ॥ शस्त्रेणदशयेत्तान्तुयावन्निर्लोमता भवेत् । ततोतितीक्ष्णशस्त्रेणकट्टयित्वायथोचितम् ॥ गृह्णीयाच्चामिष तस्यपृथगङ्गविभागशः । रन्धयेद्बहुधाग्नपलिहतलनादिकम् ॥ स्वेदनन्तु हर्णं वृष्यं शीतलतर्पणं गुरु । श्रमानिलहरस्निग्धं वाराहबलवर्द्धनम् ॥ वरश्रेष्ठमाहन्ति । हन॰ । अन्येभ्योपीतिड ॥ तन्मांसं विष्णवेनदेयम् ॥ तदुक्तं विष्णुसूत्रे । नाभक्ष्यं नैवेद्यार्थे॰भक्ष्येष्वजामहिषीक्षीरंवर्जयेत् । पञ्चनखमत्स्यवराहमांसानिचेति ॥ आरण्यवराहमांसश्राद्धादौविहितम् । अश्नन्तीत्यनुवृत्तौ॰ महारण्यवासिनश्चवराहास्तथेतिहारीतोक्तेः ॥
वराहकन्द । पुं॰ वाराह्याम् ॥
वराहकर्णी । स्त्री॰ अश्वगन्धायाम् ॥
वराहक्रान्ता । स्त्री॰ वाराह्याम् । बदराद्रुमे ॥
वराहकाली । स्त्री॰ सूर्यमणिपुष्पवृक्षे ॥ सूर्यावर्त्ते ॥
वराहक्रान्ता । स्त्री॰ लज्जालौ । तिक्तगन्धिकायाम् । नमस्कार्याम् ॥
वराहनामा । पुं॰ वाराहीकन्दे॥
वराहपुराणम् । न॰ वाराहे ॥
वराहव्यूह । पुं॰ वराहाकृतिवत्सक्तरचनेव्यूहे ॥ सूक्ष्ममुखपश्चाद्भाग पृथुमध्योवराहव्यूहोभवति ।

अनेनपार्श्वयोर्भङ्गेमतिर्यातव्य मा र्गंब्रजेत् ॥

वराङ्गी । स्त्री० दन्त्याम् ॥

वराहिका । स्त्री० कपिकच्छौ ॥

वराही । स्त्री० भद्रमुस्तायाम ॥ ग्र कारकन्दे ॥

वरिमा । पु० उरुत्वे । विशालता याम् ॥ उरोर्भाव । पृथ्व्यादित्वा दिमनिच् । प्रियस्थिरेति० उरो र्वभाव ॥

वरिव । न० परिचर्यायाम् ॥ धने ॥

वरिउसित । त्रि० उपासिते ॥ वरि व कृतम् नमोवरिवइतिक्यच। ता क्यस्यविभाषेतिपक्षे यलोप ॥

वरिदसिता । त्रि० नमस्कर्त्तरि ॥

वरिवस्या । स्त्री० शुश्रूषायाम् । से वायाम् ॥ वरिवस करणम् । व रिवश्शब्द पूजार्थे । नमोव रिवश्चित्रङ क्यच् । अप्रत्ययादि त्य । टाप् ॥

वरिवस्त्रित । त्रि० उपासिते । वरि वसिते ॥ वरिवस क्यच् । क्तः । क्यस्यविभाषेतिपक्षे यलोपाभाव ॥

वरिशी । स्त्री० मत्स्यवेधने ॥

वरिषम् । न० वत्सरे ॥

वरिषा । स्त्री० भूम्नि० वर्षासु । प्रावृषि ॥ #

वरिषाप्रिय । पुं० चातकेखगे ॥

वरिष्ठ । पु० तित्तिरौ ॥ नारङ्गवृक्षे ॥ न० मरिचे ॥ ताम्रे । त्रि० वरतमे ॥ उरुतमे ॥ अयमेषामतिशयेनवर ० उरुर्वा । अतिशायने० इष्ठन् । प्रियस्थिरेति० उरोर्वभाव ॥ वस्ते ॥

वरी । स्त्री० शतावर्याम् ॥ नीलोत्प लाकारपुष्पत्वात् । वृणोति । वृ ञ् । पचाद्यच् । गौरादि ॥ सूर्यैर्योषिति ॥

वरीयान् । पुं० विष्कम्भादिष्वष्टादशे योगे । तत्रजातस्यफलयथा । दा तादयालु , सुतरासुवेश सत्कर्म कर्त्तामधुर स्वभाव : नरोवलीया न् धनवान् जनाढ्योयोगोवरीयान् यदिजन्मकाले ॥ त्रि० अतियूनि ॥ श्रेष्ठे । अतिविस्तारे ॥ अयमन योरतिशयितउरुर्वरोवा । द्विवचने तीयसुनिप्रियस्थिरेति० उरोर्वरा देश ॥

वरीवर्द । पुं० वलीवर्द्दे ॥

वरुट । पुं० म्लेच्छजातिविशेषे ॥ यथा । पुलिन्दानाहलानिष्ठ्याः शवरावरुटाभटाः । मालाभिल्ला किरातास्ससर्वेपिम्लेच्छजातय ॥ इतिहेमचन्द्र ॥

वरुड । पु० अन्त्यजजातिविशेषे ॥ यथा । रजकश्चर्मकारश्चनटोवरु डएवच । कैवर्त्तमेदभिल्लाश्चसप्तैते चान्त्यजाःस्मृता ॥ एतेषांचस्त्रियो गत्वाभुक्त्वाचप्रतिगृह्यच । प्रतत्य

स्नानतोऽभिप्रोक्षणात् साम्यन्तु गच्छति ॥ इतिश्रम ॥ अस्योत्पत्तिर्यथा । कौवर्त्तस्य कन्यायां मौलिकादेत्रमोचिका । सौचिक्यां मौलिकाज्जातो नटो वरुड एव च ॥ इ० प० प० ॥

वरुण । पु० पश्चिमाशापतौ । प्रचेतसि । पाशिनि । यादसांपतौ । अप्पतौ ॥ यादसामर्थ्य तेषां राजा वरुणो नाम भगवतो विभूति ॥ व्रियते० हणोति वा । वृञ्० । कृदादिभ्य उनन् ॥ अप्सु । जले ॥ खरश्मिस वरणात् सायङ्गते सूर्ये ॥ तरुविशेषे । वरणे । सेतौ । तिक्तशाके । कुमारके । अश्मरीघ्ने । श्वेतवृक्षे । तमाले । वरुणा० इ० भा० प्र० ॥ अस्यगुणा । वरुण पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् । निहन्ति गुल्मवातास्र कृमींश्चोष्णोग्निदीपन ॥ कषायो मधुरस्तिक्त कटुको रूक्षको लघु ॥ अपिच । वरुणो निलशूलघ्नो भेदी चोष्णोश्मरीहर । पुष्प वरुणज ग्राही पित्तघ्न मामवातजित् ॥ *

वरुणजा । स्त्री० मदिरायाम् ॥

वरुणात्मजा । स्त्री० मदिरायाम् ॥ वरुणालयोपि वरुणः । तस्यात्मजा ॥

वरुणानी । स्त्री० वरुणस्य पत्न्याम् ॥ वरुणस्य स्त्री० । इन्द्रवरुणेति ङी षानुकौ ॥

वरुणालय । पु० समुद्रे ॥ वरुणस्य आलय ॥

वरूत्रम् । न० प्रावरणे । उत्तरीयवस्त्रे ॥ वृणोति । वृञ्० । अशित्रादिभ्य इत्रोत्रौ इति उत्र प्रत्यय ॥

वरुल । पु० सम्भक्ते ॥

वरूथ । पु० रथगुप्तौ । परप्रहरणाभिघातरक्षार्थं रथस्य सन्नाहवद्रावरणकद्रव्ये ॥ वरूथो रथगुप्तिर्या तिरोधत्ते रथस्थितमितिमज्जन ॥ पिके ॥ काले ॥ समूहे ॥ त्रि० वरणीये ॥ न० चर्मणि ॥ वर्मणि ॥ वेश्मनि ॥ व्रियतेरथोऽनेन । वृञ् वरणे । जृवृञ्भ्यामूथन् ॥

वरूथाधिपति । पु० सेनान्याम् ॥

वरूथी । त्रि० गुप्तिमति ॥ रथिनि ॥

वरूथिनी । स्त्री० सेनायाम् ॥ वरूथा सन्त्यस्याम् । इति ङीप् ॥

वरेण्य । पु० वह्नौ ॥ प्रजापतौ ॥ ध्यानेनसूर्यमण्डले द्रष्टव्ये पुरुषे ॥ तथाचयोगियाज्ञवल्क्य । वरेण्य वरणीयश्च जन्मसंसारभीरुभि ॥ आदित्यान्तर्गत यच्च भर्गाख्य वामुमुक्षुभि । जन्ममृत्युविनाशाय दु खस्यत्रिविधस्य च । ध्यानेन पुरुषोयस्तु द्रष्टव्य सूर्यमण्डलेइति ॥ न० कुङ्कुमे ॥ त्रि० प्रधाने ॥ वरणीये ॥ व्रियते । वृञ० ।

बृ.अएव्य ॥
बरेन्द्री । स्त्री॰ गौडदेशे ॥
बरेश्वर । पु॰ सदाशिवे । बराणा मीश्वर ॥
बरोटम् । न॰ मरुवकपुष्पे ॥
बरोल । ) पु॰
बरोली । ) स्त्री॰ बरटे ॥
बर्कर पुं॰ नर्म्मणि । परिहासे ॥ युवपशौ ॥ छागे । बकरा॰ इ॰भा॰ प्र॰ अस्यमांसगुणा' । यथा सद्भिः नाड्येनयुतसुपक्वमजासुतस्यामिष मल्पकस्य । एलालवङ्गोषणयोगयो गात्करोतिपुष्टिं जठरानलस्य ॥ अ जासुतस्यबालस्यमासं गुरुतरस्मृ.त म् । हृद्यं मृदुतरश्चैव सुस्वादुबलद स्मृ.तम् ॥ बर्कायास्तु । सिद्धार्थसम्भवेते सिद्धतैवोपस्कराग्विते । साधितस्या प्रसूताया ' पलमाज गुणोत्तमम् ॥ अजाऽप्रसूतासम्भू.त मांस पीनस- नाशनम् । शुक्रकासारुचेशोफेहित मग्नेश्चदीपनम ॥ अजासुतस्यपीन- स्यशौशनस्यस्यसाधितम् । घृतराम ठस युक्तोपस्करैरसवत्पलम् ॥ वा तपित्तहरबल्यं सुस्वादुरुचिकारक- म् । हृद्यं पीनसकासाशं ' शोथ- घ्न पुष्टिकृत्परम ॥ इतिपिठौरा ॥ अथक्लिलोधिया । स्थू.लनिष्कासि- तान्त्रस्यमांसकृतमजस्यच । रचित बहुधासूदैराखुरादिकमस्तकम् ॥ त न्मांसमासदबल्यं रुच्यं पित्तानिला पहम् । सुस्वादुमधुरपाकेकिञ्चित्क फकरस्मृ.तम् ॥ बर्कते । हकाथादा ने । बाहुलकादरन् ॥
बर्कराट । पु॰ कटाक्षे ॥ तरुणादि त्वरोचिषि ॥ नारीपयोधरोत्स- ङ्गकान्तदत्तनखक्षते ॥ इतिमेदि निकर ' ॥
वर्ग ' । पु॰ सजातीयसमूहे । समा नधर्मिभि . प्राणिभिरप्राणिभिर्वो पलक्षितेद्वन्द्वे ॥ यथा । कवर्ग पशुवर्ग . । इति ॥ ग्रन्थपरिच्छे दे ॥ यथा । सर्गोवर्गपरिच्छेदोद्- घाताध्यायाङ्कसङ्ग्रहा : । उच्छ्वा स : परिवर्त्तस्पटल : काण्डम- स्त्रियाम् ॥ स्थानप्रकरणपर्वाह्निक वाश्चग्रन्थसन्धय . ॥ समानाङ्कद्वय स्यपूरणे । कृतौ ॥ वृज्यते । वृजीव र्जने । घञ् । कुत्वम् ॥
वर्गोत्तम ' । पुं॰ नवांशानामध्येस्वां शे ॥ यथाचराणामेषकर्कटतुलाम कराशीनाप्रथमोंश . । स्थिराणा वृषसिंहवृश्चिककुम्भानापञ्चमोंश: । द्व्यात्मकानांमिथुनकन्याधनुर्मीना नानवमोंश ' । चराणाप्रथमेचांशे स्थिराणांपञ्चमेतथा । नवमेद्व्यात्म कानाञ्चवर्गोत्तमइतिस्मृ.त . ॥ अपिच । मेषाद्यामकराद्याश्चतुला द्या ' कर्कटादय : । क्रमान्नवांशा

वर्ण .

राशीनांखाग्नावर्गोसमा स्मृता ॥ इति ॥
वर्चा । पुं॰ चन्द्रात्मजे ॥ यथा । रोहिण्यामभवद्वर्चावर्चस्वीयेनचन्द्रमाः । त्रि॰ ॥ न॰ रूपे ॥ विष्ठायाम् ॥ तेजसि ॥ वर्चते । वर्चदीप्तौ । सर्वधातुभ्योऽसुन् ॥
वर्चस्क । पुं॰ न॰ गूथे । पुरीषे । विष्ठायाम् ॥ वर्चते॰ वर्च्यतेवा । वर्च॰ । असुन् । कुत्सायांकन् ॥
वर्चस्वी । पुं॰ चन्द्रमसि ॥ त्रि॰ वर्चोविशिष्टे ॥ अस्मायामेधेतिमत्त्वर्थीयोविनि ॥
वर्जनम् । न॰ हिंसायाम ॥ त्यागे ॥
वर्जनीय । त्रि॰ त्यागार्हे । वर्ज्ये ॥
वर्जित । त्रि॰ परित्यक्ते ॥ वृजेः ॥ क्तः ॥
वर्ज्य । त्रि॰ त्याज्ये । वर्जनीये ॥
वर्ण । पुं॰ द्विजादौ । ब्राह्मणादौ । ब्राह्मणे । क्षत्रिये । वैश्ये । शूद्रे ॥ देवेषुवर्णायथा । आदित्या॰ क्षत्रियास्तेषाविशश्चमरुतस्तथा । अश्विनौचस्मृतौशूद्रौतपस्युग्रेसमास्थितौ । स्मृतास्त्वाङ्गिरसादेवाब्राह्मणाइतिनिश्चय । अपिच । चत्वार कथितावर्णाश्रमोअपिसुव्रते । आचारास्तापिवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णा पञ्चप्रकीर्तिता । ब्राह्मण क्षत्रियोवैश्यशूद्र. सामान्यएवच ॥ सामान्योवर्णसङ्करः ॥ शुक्लादौ ॥ सचबहुविधोयथा । श्वेत १ । पाण्डु २ धूसर ३ । कृष्ण ४ । पीत ५ । हरित ६ । रक्त ७ । शोण ८ । अरुण ९ । पाटल १० । श्याव ११ । धूम्र १२ । पिङ्गल १३ । कर्बुर १४ । यथाह्यमर । शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डरा । अवदात सितोगौरोऽवलक्षोधवलोर्जुन . ॥ १ ॥ हरिणपाण्डुर पाण्डु २ । ईषत्पाण्डुस्तुधूसर ३ । कृष्णेनीलासितश्यामकालश्यामलमेचका ४ ॥ पीतोगौरोहरिद्राभ ५ पालाशीहरितोहरित् ६ लोहितोरोहितोरक्त ७ । शोण कोकनदच्छवि ८ ॥ अव्यक्तरागस्त्वरुण ९ । श्वेतरक्तस्तुपाटल १० । श्याव स्यात्कपिशो ११ धूम्रधूमलौकृष्णलोहिते १२ ॥ कडार कपिल : पिङ्गपिशङ्गौकद्रुपिङ्गलौ १३ । चित्र किर्मीरकल्माषशबलैताश्चकर्बुरे १४ ॥ गुणेशुक्लादय पुंसिगुणिलिङ्गास्तुतद्वति । इति । यशसि ॥ गुणे । गजच्छिचकम्बले । प्रवेण्याम् । आस्तरणे । हाथीकीझूल॰ इ॰ भा॰ ॥ स्तुतौ ॥ काञ्चने ॥

ञ्जते ॥ गीतक्रमे ॥ न॰ कुङ्कुमे ॥ पु॰ न॰ भेदे ॥ रूपे ॥ विलेपने ॥ अक्षरे । अकारादिवर्णे सर्वहिवि ध. । ध्वन्यात्मकोऽक्षरात्मकश्च ॥ अक्षरात्मकस्योच्चारणमुक्तं नरदात्ते । यथा । श्रीशिवउवाच । वि शेषकथयाम्यद्यप्रोच्चार्या कण्ठत स्वरा: । चद्वयजिह्वयामूर्द्ध्वद्वय जिह्वदन्तजम्॥ मुखस्थानाद्वलोवा च्या चकार. कण्ठघातजद्गति ॥ चित्रे ॥ शब्दे ॥ तालविशेषे ॥ ष डजादिगतौ ॥ अङ्गरागे॥ त्रियु तेऽनेन । वञ्॰ । क्तवर्जूसिद्रुपन्य निस्वपिभ्योनिद्दितिन ॰ ॥ यद्वा । बहवोवर्णा सन्त्यस्य । अर्श आ द्यच् ॥ वर्ण्यतेऽर्थोऽनेनवा । व- र्णवर्णने॰ वर्णप्रेरणेवा । घञ् ॥ वर्णयतिवा । अच् ॥

वर्णक: । पुं॰ चारणे ॥ मण्डले ॥ न॰ हरिताले ॥ घृष्टचन्दनादिवि पमाचे ॥ गात्रानुलेपनयोग्यपिष्टे घृष्टेवासुगन्धिद्रव्ये ॥ चन्दने ॥ पुं॰ स्त्री॰ हिङ्गुलहरितालका चनोलीकादौ ॥ पुं॰ न॰ चन्दने ॥ विलेपने ॥ त्रि॰ वक्तरि ॥ वर्णं करोति॰ वर्णयति॰ वक्तीतिवा । वर्ण॰ ॥ ण्वुल् ॥

वर्णखण्ड: । पुं॰ भास्करे ॥

वर्णकवि: । पुं॰ कुवेरात्मजे ॥

मायुराजे ॥

वर्णका । स्त्री॰ प्रावर्णभेदे ॥ व र्णवर्णक्रियाविस्तारगुणवधनेष्विति चौरादिक ॰ । ततोण्वुल् । वर्ण कातान्तवद्गतीत्वंन ॥

वर्णकूट । पुं॰ योटकविशेषे ॥ य था । चाचविट्शूद्रविप्रा स्यु क्रमान्मेषादिराशय ॰ । तद्वर्णा धिकाकन्यानैवोद्वाह्याकदाचन ॥ दोषस्तु । वर्णज्येष्ठातुयानारीवर्णं हीनस्तुय . पुमान ॥ विवाहयदि कुर्वीततत्राभर्ताविनश्यतीति ॥

वर्णकूपिका । स्त्री॰ मसीधान्याम् ॥

वर्णक्रिया । स्त्री॰ वर्णकरणे ॥ यथा । वर्णस्यकरणेदेयंकुङ्कुमरक्तचन्दन- म । ताम्बूलयत्रयद्युक्तं तत्रतत्र प्रयोजयेत् ॥ पात्रेषुगुरुणादेया- गोस्यजेत्तोरजेषु च ॥ शेषेषुपात्र योगेषुधूपयेद्विङ्गुसर्पिषा ॥

वर्णचारक: । पु॰ चित्रकारे ॥

वर्णज्येष्ठ ॰ । पुं॰ ब्राह्मणे॥ वर्णानां॰ वर्णेषुवाज्येष्ठ . ॥ त्रि॰ स्ववर्णापि क्षयोत्तमवर्णे ॥

वर्णतूलि । )
वर्णतूलिका। ) स्त्री॰ लेखन्याम् ॥
वर्णतूली । )

वर्णदम् । न॰ कालीयके ॥ त्रि॰ व र्णदातरि ॥

वर्णदात्री । स्त्री॰ हरिद्रायाम ॥

त्रि॰ वर्णदातरि ॥

वर्णदूत । पु॰ लेखे । शाब्दिकहार के ॥

वर्णधर्म्म । पुं॰ न॰ वर्णाधिकृत धर्म्मे ॥ वर्णत्वमेकमाश्रित्ययोधर्म सम्प्रवर्त्तते । वर्णधर्म्म सउक्तस्तु यथोपनयन नृपेतिभविष्यपुराणम् ॥ अपिच । यजन याजन दान ब्राह्मणस्यप्रतिग्रह । अध्यापनंचाध्ययन षट्कर्माणिद्विजोत्तमा ॥ दानमध्ययन यज्ञोधर्म क्षत्रियवैश्ययो । दण्डोयुद्धक्षत्रियस्यकृषिर्वैश्यस्यशस्यते ॥ शुश्रूषैवद्विजातीनाशूद्राणांवर्णसाधनम् । कारुकर्म तथाजीव. पाकयज्ञोपिधर्म्मत ॥ क्षमादमोदयादानमलोभस्त्याग एवच । आर्जवं चानसूयाचतीर्थानुसरण तथा ॥ सत्यसन्तोषआस्तिक्य श्रद्धाचन्द्रियनिग्रह । देवताभ्यर्चन पूजाब्राह्मणानांविशेषत ॥ अहिंसाप्रियवादित्वमपैशुन्यमकल्कता । सामासिकमिम धर्म चातुर्वर्ण्येऽब्रवीन मुनि ॥ प्राजापत्य ब्राह्मणानास्मृत स्थान क्रियावताम् । स्थानमैन्द्र क्षत्रियाणा सङ्ग्रामेष्वपलायिनाम् ॥ वैश्यानांमारुत स्थान स्वधर्ममनुवर्त्तताम् । गान्धर्वं शूद्रजातीनांपरिचारेतुवर्त्तताम् । इतिकौर्मे २ अध्याय ॥

वर्णनम् । न॰ उपवर्णने ॥ स्तवने ॥ शुक्लपीतादिवर्णयोजने ॥

वर्णना । स्त्री॰ प्रशसायाम् । गुणकथने । स्तवे ॥

वर्णनीय । त्रि॰ वर्ण्ये । वर्णितव्ये ॥

वर्णपात्रम् । न॰ चित्रकारस्यनील्यादिवर्णाधारे ॥

वर्णपुष्प : । ) पुं॰ महासहायाम्
वर्णपुष्पक : । ) । राजतरुणीपुष्पवृक्षे । अम्लाने ॥

वर्णपुष्पी । स्त्री॰ उष्ट्रकाण्डीपुष्पवृक्षे ॥

वर्णप्रसादनम् । न॰ अगुरुणि ॥

वर्णमाता । स्त्री॰ भारत्याम् ॥ लेखन्याम् ॥

वर्णमातृका । स्त्री॰ सरस्वत्याम् ॥

वर्णमाला । स्त्री॰ क्रमागताकाराद्यक्षरसमूहे । मातृकायाम् ॥ वर्णानामालेव ॥ तत्रसस्कृतवर्णा ५० । जपमालायाम् ५१ । इङ्गरेजीयवर्णा. २६ । फरासीया २३ । हिब्रू॰ अर्थात्इहूदीया २२ । आरबीया २८ । पारसीया : ३१ । तुरस्कीया. ३३ । रूषीया ४१ । ग्रिक॰ अर्थात्इयुनानीया २४ । लाटिन्देशीया २२ । डच्॰ अर्थात्ओलन्दाजीया. २६ । स्पान्

देशीया . २७ । इटेलीदेशीया ' २० । तातारीया ' २०२ । वर्म देशीया ' १६ । चीनदेशीयवर्णा शब्दात्मका : तच्छब्दसङ्ख्या : ८०००० ॥ इतिशब्दकल्पद्रुमेरा धाकान्तदेव . ॥

वर्णरेखा । )
वर्णलेखा । ) स्त्री० कठिन्याम् ॥
वर्णलेखिका । )

वर्णवती । स्त्री० हरिद्रायाम् ॥ त्रि० वर्णविशिष्टे ॥ वर्णोस्त्यस्याम् । रसादिभ्यश्चे तिमतुप । उगित्वान् ङीप् ॥

वर्णविक्रिया । स्त्री० वर्णापचारे ॥ +

वर्णविलोडक . । पु० श्लोकस्तेने । काव्यच्छायाहृति ॥ सन्धिचौरे ॥

वर्णसङ्कर । पुं० सङ्कीर्णाचरे ॥ मिश्रितजातौ । मूर्द्धाभिषिक्तमाहि ष्यकरणाद्यनुलोमप्रतिलोमजातेऽ न्तरालजातौ ॥ वर्णयोर्वर्णानावास ङ्करोयस्मिन्जनयितव्येसवर्ण: सङ्क र ॥ व्यभिचारेणवर्णानामवेद्यावे दनेनच । स्वकर्मणांचत्यागेनजाय न्तेवर्णसङ्करा ॥

वर्णसङ्घात . । पु० अक्षरसमाम्नाये ॥

वर्णसमाम्नाय : । पु० वर्णमालाया म् ॥

वर्णसि . । पुं० जले । वृणोति । वृ अ० । सानसिवर्णसीत्यादिना०

असिप्रत्ययेधातोर्नुक्च ॥

वर्णा । स्त्री० आढक्याम् ॥

वर्णाङ्का । स्त्री० लेखन्याम् ॥

वर्णाट : । पुं० गायने ॥ चित्रकरे ॥ स्त्रीकृतजीवने ॥

वर्णात्मा । पु० शब्दे ॥

वर्णाश्रमधर्म्म । पु० वर्णाश्रमोभयाऽ धिकृतधर्मे ॥ यथा । वर्णत्वमाश्रम त्वञ्चयोधिकृत्यप्रवर्त्तते । सवर्णाश्र मधर्मस्तुमौञ्जीयामेखलायथा ॥ वर्णाश्रमयोर्धर्म्मे ॥ सचोक्त ' श्री महानिर्वाणतन्त्रे । यथा । श्रुत्वा धर्मान्बहुविधान्भवानीभवमोचि नी । हितायजगतामाताभूय श ङ्करमब्रवीत् ॥ श्रीदेव्युवाच । श्रुत बहुविध धर्मंमिहामुत्रसुखप्रदम । धर्मार्थकामद । शङ्कर निर्वाणकार णम् ॥ साम्प्रत श्रोतुमिच्छामित्रू हिवर्णाश्रमान्विभो । यत्रयेविहि ताचारा कृपयावदतानपि ॥ श्री सदाशिवउवाच ॥ चत्वार कथि तावर्णाआश्रमाश्चमिसुव्रते । आचा राश्चापिवर्णानामाश्रमाणापृथक्पृ थक् ॥ कृतादौ० कलिकालेतुव र्णा पञ्चप्रकीर्त्तिता ' । ब्राह्मण क्षत्रियोवैश्य ' शूद्र सामान्यएवच ॥ एतेषामवर्णानामाश्रमौद्वौमहे श्वरि । तेषामाचारधर्मांश्चसम्पूर्णाच्वा द्यो वदामिते ॥ पुरैवकथित तावत्

कलिसम्भवचेष्टितम् । तप स्वाध्यायहीनानान्नृणामल्पायुषामपि। क्लेशप्रयासाशक्तानाकुतोदेहपरिश्रम ' ॥ ब्रह्मचर्य्याश्रमोनास्तिवानप्रस्थोपिनप्रिये । गार्हस्थोभैक्षुकश्चैवआश्रमौद्वौकलौयुगे ॥ गृहस्थस्य क्रिया सर्वाआगमोक्ता कलौयुगे । नान्यमार्गै क्रियासिद्धि कदापिगृहमेधिनाम् ॥ भैक्षुकेप्याश्रमेदेवि वेदोक्त दण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौत स स्कृति ॥ शैवस स्कारविधिनाऽवधूताश्रमधारणम् । तदेवकथित भद्रे स न्यासग्रहण कलौ ॥ विप्राणामितरेषाञ्चवर्णानाप्रबलेकलौ । उभयत्राश्रमेदेविसर्वेषामधिकारिता ॥ सर्वेषामेवसस्कारा कर्माणिशैववर्त्मना। विप्राणामितरेषा ञ्चकर्म्मलिङ्ग पृथक्‌ पृथक् ॥ जातमात्रोगृहस्थ स्यात्स स्कारादाश्रमीभवेत् । गार्हस्थ्यप्रथम कुर्याद्यथाविधिमहेश्वरि ॥ तत्त्वज्ञानेसमुत्पन्ने वैराग्य जायतेयदा । तदासर्वं परित्यज्यस न्यासाश्रममाश्रयेत् ॥ विद्यासुपार्ज्जयेद्बाल्ये धन दारांश्चयौवने । प्रौढे धर्म्याणिकर्माणिचतुर्थे प्रव्रजेत्सुधी ॥ मातर पितर वृद्धभार्याञ्चैवपतिव्रताम् । शिशुञ्चतनयहित्वानावधूताश्रम व्रजेत् ॥ मातॄ :

पितॄन् शिशून् द राज् स्वजनान्बान्धवानपि । य प्रव्रजतिहित्वैतान् समहापातकीभवेत् ॥ मातृहा पितृहासस्यात्स्त्रीवधीब्रह्मघातक । असन्तर्प्य स्वपित्रादीन्योगच्छेत् भिक्षुकाश्रमे ॥ ब्राह्मणोविप्रभिन्न श्चस्वस्ववर्णोक्तस सक्रिया । शैवेन वर्त्मनाकुर्यादेशधर्म ' कलौयुगे ॥ श्रीदेव्युवाच । कोवाधर्मोगृहस्थस्य भिक्षुकस्यचकि विभो । विप्रस्यविप्रभिन्नानास स्कारादीनिमेवद ॥ श्रीसदाशिवउवाच ॥ गार्हस्थ्यप्रथम धर्म्म सर्वेषामनुजन्मनाम् । तदेवकथयाम्यादौशृणुकौलिनितत्त्वत ॥ ब्रह्मनिष्ठोगृहस्थ स्याद्ब्रह्मज्ञानपरायण । यद्यत्कर्म प्रकुर्वीततद्‌ब्रह्मणिसमर्पयेत् ॥ नमिथ्याभाषण कुर्यात्नचशाठ्य समाचरेत् ॥ देवतातिथिपूजासुगृहस्थोनिरतोभवेत् ॥ मातर पितरञ्चैव साक्षात्प्रत्यक्षदेवताम् । मत्वा गृहीनिषेवेतसदासर्वप्रयत्नत . ॥ तुष्टायामातरिशिवेतुष्टे पितरिपार्वति । तवप्रीतिर्भवेद्देवि परब्रह्मप्रसीदति ॥ त्वमाद्याजगतामातापितात्रह्मपरात्परम् युवयो प्रीणन यस्मात्तस्मात्कि गृहिणातप ॥ आसन शयन वस्त्र पान भोजनमेवच । ततत्तत्समयमाज्ञायमाचे

पित्रे नियोजयेत् ॥ श्रावयेन्मृदुला वाणीं सर्वदाप्रियमाचरेत् । पित्रोराज्ञानुसारी स्यात्सत्पुत्रः कुलपावनः ॥ औद्धत्य परिहासञ्च तर्जनं परिभाषणम् । पित्रोरग्रे नकुर्वीत यदीच्छेदात्मनोहितम् ॥ मातरं पितरं वीक्ष्य नत्वोत्तिष्ठेत्ससम्भ्रमः । विनाज्ञया नोपविशेत्संस्थितः पितृशासने ॥ विद्याधनमदोन्मत्तो यः कुर्यात्पितृहेलनम् । सयाति नरकं घोरं सर्वधर्मवहिष्कृतः ॥ मातरं पितरं पुत्रं दारानतिथिसोदरान् । हित्वागृहीनभुञ्जीयात्प्राणैः कण्ठगतैरपि ॥ वञ्चयित्वागुरूनबन्धून् योभुङ्क्ते स्वोदरम्भरः । इहैवलोकेगर्ह्यो सौपरत्रनारकी भवेत् ॥ गृहस्थोगोपयेद्दारान्विद्यामभ्यासयेत्सुतान् । पोषयेत्स्वजनान्बन्धूनेषधर्म्मः सनातनः ॥ जनन्यावर्ज्जितोदेहोजनकेनप्रपोषितः । स्वजनैः शिक्षितः प्रीत्या सोधमस्तान्परित्यजेत् । एषामर्थे महेशानि कृत्वाकष्टशतान्यपि । प्रीणयेत्सततं शक्त्याधर्म्मोह्येष सनातनः ॥ सधन्यः पुरुषोलोकेसक्तोपरमार्थवित् । ब्रह्मनिष्ठः सत्यसन्धोयोभवेन्नुविमानवः ॥ नभार्यां ताडयेत्क्वापिमातृवत्पालयेत्सदा । नत्यजेद्घोरकष्टेऽपियदिसाध्वी



पतिव्रता ॥ स्थितेषुस्वीयदारेषुस्त्रियमन्यानसंस्पृशेत् । दुष्टेनचेतसा विद्वानन्यथानारकीभवेत् ॥ विरले शयनं वासं त्यजेत्प्राज्ञः परस्त्रिया । अयुक्तभाषणञ्चैवस्त्रियं शौर्यंनदर्शयेत् ॥ धनेनवाससाप्रेम्णाश्रद्धयामृतभाषणैः । सततं तोषयेद्दारान्नाप्रियं क्वचिदाचरेत् ॥ उत्सवेलोकयात्रायांतीर्थेष्वन्यनिकेतने । नपत्नीं प्रेषयेत्प्राज्ञः पुत्रामात्यविवर्ज्जिताम् ॥ यस्मिन्नरेमहेशानि तुष्टाभार्यापतिव्रता । सर्वधर्मःकृतस्तेनभवतीप्रियएवसः ॥ चतुर्वर्षावधिसुतान्लालयेत् पालयेत्पिता । ततः षोडशपर्यन्तं गुणान्विद्याञ्चशिक्षयेत् ॥ विंशत्यब्दाधिकान् पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहं प्रदर्शयेत् ॥ कन्याप्येवं पालनीयाशिक्षणीयातियत्नतः । देयावरायविदुषेधनरत्नसमन्विता एवक्रमेणभ्रातॄंश्चस्वसृभ्रातृसुतानपि । ज्ञातीन्मित्राणिभृत्यांश्चपालयेत्तोषयेद्गृही ॥ ततः स्वधर्म्मनिरतानेकग्रामनिवासिनः । अभ्यागतानुदासीनान् गृहस्थः परिपालयेत् ॥ यद्येवं नाचरेद्देवि गृहस्थोविभवेसति । पशुरेवसविज्ञेयः सपापीलोकगर्हितः ॥ निद्रालस्यदेहयत्नकेशवि

भधिप : ॥

वागर : । पुं॰ गतातङ्के । परित्यक्तभये । मुमुक्षौ ॥ वातवेष्टके ॥ विशारदे । पण्डिते ॥ विषाणे ॥ निर्णये ॥ वारके ॥ शाणे ॥ वाडवे ॥ वृके ॥

वागात्त । त्रि॰ आशाह्न्तरि ॥ यथा । आशांबलवतीं दृत्त्वायोहन्तिपिशुनोजन । सजीवासोपिवागात्त: त्रो॰दानुसुदातरि ॥ इतिशब्दमाला

वागाशनि : । पुं॰ बुद्धे ॥

वागाशी : । पुं॰ शुभवाचि ॥ वाचि आशीर्यस्य स : ॥

वागीश : । पुं॰ जीवे । बृहस्पतौ ॥ त्रि॰ वाक्पतौ ॥

वागीशा । स्त्री॰ सरस्वत्याम् ॥ वाचामीशा ॥

वागीश्वर : । पुं॰ ब्रह्मणि ॥ बृहस्पतौ ॥ ऋग्वेदादिरूपाणांवाचामीश्वर : । मञ्जुघोषे ॥ त्रि॰वाचामीश्वरे ॥

वागीश्वरी । स्त्री॰ सरस्वत्याम् ॥

वागुजी । स्त्री॰ सोमराज्याम् ॥ वाचं गुञ्जति । गुजिअव्यक्तशब्दे । मूलविभुजादित्वात्क । पृषोदरादि: ॥

वागुण : । पुं॰ कर्मरङ्गे ॥

वागुरा । स्त्री॰ मृगबन्धनार्थजाले । मृगबन्धन्याम् ॥ खावल॰खावली॰ कृ॰जाल॰कृ॰च॰भण ॥ अवागुरते । गुरोहिंसायाम । कृगुपधेतिक : । वष्टिभागुरीत्यवाकारलोप ॥

वागुरिक : । पुं॰ व्याधविशेषे । जालिके ॥ वागुरयाचरति । चरतीतिठक् ॥

वाग्गुद । पुं॰ पक्षिविशेषे । वागुड॰ वाड॰कृ॰भा॰प्र॰ ॥

वाग्गुलि । पुं॰ ताम्बूलिनि । राज्ञाताम्बूलदातरि ॥ जातिविशेषे ॥

वाग्गुलिक : । पुं॰ ताम्बूलदे ॥

वाग्जालम् । न॰ शास्त्रमात्रे ॥ यथा । परिनिर्मथ्यवाग्जालंनिर्णीतमिदमेवहि । नोपकारात्परोधर्मोनापकारादघपरम् ॥

वाग्दरिद्र । त्रि॰ वाग्मे । मितभाषिणि ॥ वाचादरिद्र : ॥

वाग्दलम् । न॰ दन्तवाससि । ओष्ठाधरयो ॥

वाग्दुष्ट । पुं॰ व्रात्ये ॥ त्रि॰ वाचा दूषिते । परुषभाषिणि ॥ वाचादुष्ट : ॥

वाग्देवता । } स्त्री॰ सरस्वत्याम् ॥
वाग्दवी । }

वाग्बन्ध : । पुं॰ पर्वे । समये ॥ #

वाग्मी । पुं॰ सुराचार्ये ॥ त्रि॰ पटौ ॥ वक्तरि । विविधशास्त्राभ्यासाधिवासितप्रशस्तवाग्युक्ते ॥ वाग्मीसत्य

वाग्भवतीतिनिश्चितोर्थः ॥ प्रश स्तावागस्य । वाचोग्मिनि । गदा दोच्चारणप्रत्ययेभाषायामित्यनुना सिकाभावाय । उत्तरसूत्रस्यबहुभा षिणीत्यस्यापिसम्बन्धात् । सम्यग्बहु भाषिणि॰वाग्मीतिबोध्यम् ॥

वाग्य । त्रि॰ निर्वेदे ॥ कल्पे ॥ वा ग्दरिद्रे ॥

वाग्यत । त्रि॰ यतवाचि । मौनिनि ॥ वाचियत. ॥

वाग्याम । त्रि॰ योभ्रशत्त्यादिनावा चयच्छतितस्मिन ॥

वाग्वज्र. । पु॰ शापे ॥वागेववज्रोहिं सकत्त्वात् ॥

वाग्वित् । त्रि॰ वैयाकरणे । वाक्यवे विदे ॥ वाच विन्दति॰वक्तु॰वि वेक्तुंजानातिवा । सत्सूद्विषेत्या दिनाक्विप् ॥

वाग्विसर्गः । पुं॰ वाचः प्रयोगे ॥

वाङ्क । पुं॰ काचङ्कले । समुद्रे ॥

वाङ्मती । स्त्री॰ नदीविशेषे ॥ यथा । हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूतावाङ् मतीनदी । भागीरथ्याः शतगुण पवित्रतज्जलस्मृतम् ॥

वाङ्मयः । त्रि॰ वाक्यात्मके । यथा । व्यस्तसजभूगैर्लान्तेरेभिर्दशभिरक्ष रैः । समस्तवाङ्मयव्याप्तंत्रैलो क्यमिवविष्णुना ॥

वाङ्मयी । स्त्री॰ परापश्यन्तीमध्यमा वैखरीरूपायांवाण्याम् । सरस्वत्या म ॥

वाङ्मात्रा । स्त्री॰ वाचोमात्रायाम् ॥ यथा । निमेषोन्द्वेषणपुंसामङ् गुल्याछोटिकाथवा । गुर्वक्षरोच्चार णवावाङ्मात्रेयस्मृताबुधैः ॥

वाङ्मुखम् । न॰ वचनोपक्रमे । उप न्यासे ॥ वाचोमुखमिवमुखम्॰उप क्रम ॥

वाक् । स्त्री॰ वाण्याम् । भारत्याम् । अर्थपरिज्ञानफलायाम् । सर्वस्यार्थ स्यप्रकाशिकायासंस्कारवाण्याम् ॥ येनार्थसम्यगवबुध्यतेतेनैवसास्य व्यक्तुताभवति । प्रत्यत्तेपाशब्दस्वरू पमुपलभमानोऽपिअर्थापरिज्ञानान्न पश्यतिनशृणोतीत्यनुभवात् ॥ शब्द सामान्ये ॥ वचने । वाक्ये ॥ तोच्या नारुन्तुदाबुधि. कर्मशान्तप्रतापव त् । नोपतापिमन. सोष्मवागेका वाग्मिनसत ॥ कण्ठताल्वादि स्थाने॰इन्द्रिये ॥ जिह्वामूलादिष्वष्ट सुस्थानेषुविषक्तोयाग्नेयैवर्णानामभि व्यञ्जकेकरणे ॥ अकारादिवर्णेषु ॥ वर्णाश्चार्थसङ्केतपरिच्छिन्नाएतावन्तए वक्रमप्रयुक्ताइत्येवतदभिव्यङ्ग्य शब्द. पदवागित्युच्यते ॥ इतिभा ष्यम् ॥ वक्तीति॰उच्यते॰ऽनयावा । वचपरिभाषणे । क्विबवचीत्यादि नाक्विप्॰दीर्घोऽसम्प्रसारणञ्च ॥

वाच । पुं० मत्स्यविशेषे । वाचा० ष्टु०गौ०दे०भा० ॥

वाचयम । पुं० मुनौ । मौनव्रतिनि ॥ वाचयच्छति।यमउपरमे । वाचि यमोव्रतइतिखच् । वाचयमपुरन्द रौचेत्यमन्तत्वम् ॥

वाचक । पुं० शब्दे ॥ यथा । शास्त्रे शब्दस्तुवाचकः। शास्त्रेव्याकरणा दौयेोवाचक ' साधुशब्द ' सएवनि रूपपदेनशब्दशब्देनव्यवह्रियते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावा चकत्त्वमिच्छन्तिवैयाकरणा । वर्णा नांप्रत्येकवाचकत्त्वे द्वितीयादिवर्णो च्चारणानर्थक्यप्रसङ्गादितिकैयट ॥ कथके। पुराणादिपाठके॥ सचब्रा ह्मणएवभवति । यथा । ब्राह्मणंवा चकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरक व्रजेदिति ॥ त्रि०वक्तरि ॥ वक्ति ॥

वाचक्नवी । स्त्री० वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न० कथने ॥ पठने ॥ यथा । श्रुतिनानन्यचित्तेनपठितव्यप्रयत्न त. । नकार्यासत्ततमनसाकार्थस्तो त्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न० प्रहेलिकायाम् ॥ वा यने ।व्रतोप्रायने । यूपविशेषे ॥

वाचनिक : । त्रि० वचनप्राप्ते ॥ वच नादागत : । ठक् ॥

वाचनीय । त्रि० वाचयितुमर्हे ॥

वाचस्पति । पुं० जीवे । बृहस्पतौ ॥ वाच , समस्तविद्यारूपस्यवचस पति ' । षष्ठ्या. पतिपुत्रपृष्ठपारपद पयस्पोषेष्वितिसत्त्वविधानात् ० ष ष्ठ्याअलुक् ॥

वाचस्पतिवल्लभ ' । पुं० पुष्परागमणौ । पीखराज०इतिभाषाप्र० ॥

वाचस्पत्यम् । न० वाग्मित्त्वे ॥ ब्राह्म णादित्त्वात्ष्यञ् ॥

वाचा । स्त्री० वाचि । वाण्याम् ॥ क्वि बन्तादूवाचे०भागुरिमतेटाप ॥

वाचाट । त्रि० जल्पाके । वाचाले । बहुगर्ह्यवाचि ॥ कुत्सित बहुभाष ते । आलजाटचौबहुभाषिणि । कु त्सितइतिवक्तव्यमितिवाक्शब्दादा टच् ॥ सुबहुभाषिण्यपिजल्पाकवा चाटवाचालावसन्ति । वाचाटोवा चालोजल्पाक ' सुबहुभाषीत्यादि तिश्च।काद्येपर्यायेवोपालित ' । नित्यप्रगल्भवाचालामुपतिष्ठे सर स्वतीमितिमुरारिश्च ॥

वाचारम्भणम् । न० अन्ततजडनात्म रूपे ॥ निरूप्यमाणेस्वत सत्ताही नमपियदपरोक्षव्यवहारगोचरतया गम्यतेतदित्यर्थ : ॥

वाचाल । त्रि० वाचाट ॥ कुत्सितं बहुभाषते । वाचोबह्वीोस्यसन्तिवा। चालजाटचौबहुभाषिणि । कुत्सित

इतिवक्तव्य मितिवाचयालच् ॥
वाचिकम् । न० सन्देशवाचि ॥
वाचोव्याहृतार्थाया मितिठक् ॥
वाचिकतल्पवेद्यचद्रूतत्वेनाभिशसन
मितिशब्दरत्नावली ॥ पुं० वाक्या
रम्भे ॥ यथा । आलापश्चविलापश्च
सलापश्चविलापक : । अनुलापो
पलापश्चसन्देशश्चातिदेशिक ' ॥
अपदेशोपदेशौचनिर्देशोव्यपदेशक
। कीर्त्तितावचनारम्भाद्द्वादशा
मीमनीषिभिरित्युज्ज्वलनीलमणि :
॥ त्रि०वाचा०वचसाकृते ॥ यथा ।
कायिकवाचिकवापिमानसवायथा
मति । आराधनेपरेशस्यभावशुद्धि
र्विधीयते ॥

वाचिकहारक । पुं० लेखे । वर्णद्रू
ते ॥

वाचोयुक्ति :। त्रि० वाग्मिनि ॥ वा
चोवचस युक्ति ' सयुक्तिकत्वम्
। वाक्दिक्पश्यद्भ्योयुक्तिदण्डहरे
ष्वितिषष्ठ्याअलुक् ॥

वाचोयुक्तिपटु . । त्रि० सुवक्तरि । वा
ग्मिनि । वाचोयुक्तिशासौपटुश्च ॥

वाच्यम् । न० प्रतिपादने । दूषणे ॥
त्रि०कुत्सिते । हीने ॥ वचनार्हे ॥
अभिधेये ॥ यस्माच्छब्दान्नियमत
: प्रतीयते०तत्तस्यवाच्यम् । यथा
। गामानयेत्यस्मिन्वाक्ये०गोशब्द
स्यगोत्वम् ॥ उच्यते । वचपरिभाष

णे । ण्यत् । वचोऽशब्दसंज्ञायामि
तिनकुत्वम् ॥ अर्थोवाच्यश्चलक्ष्यश्च
व्यङ्ग्यश्चेतित्रिधामत । वाच्योऽर्थो
भिधयाबोध्योलक्ष्योलक्षणयामत .
। व्यङ्ग्योव्यञ्जनयाता स्युस्तिस्र
शब्दस्यशक्तय '॥

वाच्यमान .। त्रि० प्रस्तूयमाने ॥ व
चेर्खौरादिकात्कर्मणिलट .शान
च् ॥

वाज '। पुं० निस्वने । शब्दे ॥ प
क्षे । शरपक्षे ॥ वेगे ॥ मुनौ ॥
न० घृते । यज्ञे ।। अन्ने ॥ वारि
णि ॥ वजत्यनेन । वजगतौ । हल
श्चेतिघञ् । निष्ठायांसेटत्वान्नकु
त्वम् ॥ वाजयतिवा । ण्यन्त ।
पचाद्यच् ॥

वाजपेय '। पुं० न० अन्नसुराप्रधाने
यागविशेषे ॥ वाजपेयप्रतिपादके
ग्रन्थे ॥

वाजपेयिक .। पुं० वाजपेययागविदि
तरि ॥ वाजपेयप्रतिपादकग्रन्था
ध्येतरि ॥ वाजपेयमधीते० वेदवा
। क्रतूक्थादिसूत्रान्ताट्ठक् ॥

वाजभोजी । पुं० वाजपेययज्ञे ॥

वाजश्रवा '। पुं० अन्नदानादिनिमि
त्तयशोविशिष्टे ॥ वाजमन्नंतद्दा
नादिनिमित्तश्रवीयशोयस्य . ॥

वाजश्रवस .। पुं० वाजश्रवसोपत्ये ॥

वाजसनेय :। पुं० जनमेजयकृतवद्ध।

र्थयन्थे ॥ सतुवैशम्पायनशापाङ्गु च्छिन्न : ॥

वाजसनेयी । पुं॰ यजुर्वेदिनि ॥

वाजिगन्धा । स्त्री॰ अश्वगन्धायाम् ॥

वाजिता । स्त्री॰ अश्वत्वे ॥ पर्च ॥

वाजिदन्त । पुं॰ वासके ॥ वाजी दन्तोऽस्य॰ वाजिदन्ताभकेशरत्वात् ॥

वाजिदन्तक : । पुं॰ वेदमातरि । अटरूषे ॥ स्वार्थेक ।

वाजी । पु॰ अश्वे ॥ पक्षिणि । खगे ॥ वाणे ॥ वाजा पक्षा ' सन्त्यस्य । अतङ्गनि : । पूर्वंह्यश्वा सपक्षाआसन् । तथाचशालिहोत्रम् । सपक्षावाजिन . पूर्वंसञ्ज्ञाताव्योमचारिण : गन्धर्वेश्योयथाकामगच्छन्तिचसमन्ततइति ॥ अवश्यंवजति । वजगतौ । आवश्यकेतिणिनिवा ॥

वाजिनम् । न॰ आमिक्षाजले ॥ घनीभूत. पिण्डआमिक्षा॰ जलवाजिनमितिव्यवहारात् ॥

वाजिनी । स्त्री॰ अश्वगन्धायाम् ॥ अश्वायाम् । वडवायाम् ॥

वाजिपृष्ठ ' । पुं॰ अम्लानवृक्षे ॥

वाजिभक्ष ' । ) पुं॰ चणके ॥ वाजि
वाजिभक्ष्य ' । ) भोभक्ष्य . ॥

वाजिभोजन ' । पुं॰ मुद्गे ॥

वाजिसान । पुं॰ पटोले ॥

वाजिवाहन । पु॰ गन्धर्वे ॥

वाजिशाला । स्त्री॰ मन्दुरायाम् । घुडशाल॰ वृ॰ भा॰ ॥ वाजिनाशाला ॥

वाजीकर . । त्रि॰ वाजीकरणे ॥

वाजीकरणम् । न॰ वीर्यवर्धकद्रव्ये ॥ येनस्त्रीषुविषयेवाजीवनर ' सामर्थ्यंप्राप्नोति । अस्यलक्षणम् । यद्द्रव्यंपुरुषकुर्यात्वाजिवत्सुरतक्षमम् । तद्वाजीकरमाख्यातमुनिभिर्भिषजांवरैरिति॥ वाजीकरणतन्त्रंनाम॰ अदुष्टविशुद्धक्षीणरेतसामाप्यायनप्रसादोपचयजननति-मित्तंप्रहर्षजननार्थंचेतिसुश्रुत: ॥ विधिमाह । नरोवाजीकरान योगान्सम्यक्शुद्धधीनिरामय ' । सप्तत्यन्तंप्रकुर्वीतवर्षादूर्ध्वंतुषोडशात् ॥ नचवैषोडशादर्वाक्सप्तत्यापरतोनच । आयुष्कामोनर : स्त्रीभि ' सयोगकर्त्तुमर्हति ॥

वाञ्छनम् । न॰ वाञ्छायाम् ॥

वाञ्छा । स्त्री॰ इच्छायाम् । काङ्क्षायाम् । स्पृहायाम् । वाञ्छनम् । वाञ्छिइच्छायाम् । गुरोश्च ' । टाप ॥ आत्मवृत्तिगुणविशेषइतिनैयायिका । साद्विविधा ॥ यथा । उपायविषयिणी॰ फलविषयिणीवा । फलंसुखंदु ' खा

भावश्च । तत्र० फलेच्छाप्रतिफल
ज्ञानंकारणम् । उपायेच्छाप्रति०
इष्टसाधनताज्ञानकारणमितिसि-
द्धान्तमुक्तावली । ननाकपृष्ठनच
सार्वभौमनपारमेष्ठ्य नरसाधिपत्य
म । नयोगसिद्धीरपुनर्भवंवावा
ञ्छन्तितत्पादरज प्रपन्ना ॥
वाञ्छितम । त्रि० अभिलषिते ॥
वाञ्छिनी । स्त्री० वाञ्छनीयायाना
र्याम् । लज्जिकायाम् । कलतू
लिकायाम ॥
वाट । पुं० पथि । मार्गे ॥ वृत्ति
स्थाने । वृत्तौ । वाड० इ० भा०
॥ न० वरण्डे ॥ अङ्गे ॥ अन्नप्रभे
दे ॥ पुष्पादिवाटिकायाम् ॥
वाटधन । पु० भूर्जकण्टकोव्यस
ङ्कीर्णजातौ ॥
वाटरम् । न० मधुविशेषे ॥ वटरे
भवम् । क्षुद्राभ्रमरवटरेत्यण् ॥
वाटशृङ्खला । स्त्री० पथरोधकशृङ्ख
लायाम् लभायाम् ॥
वाटिका । स्त्री० हिङ्गुपत्र्याम् ॥ कु
ट्याम् ॥ वास्तुनि ॥ वाट्यालके ॥
गृहोद्याने ॥ वध्यते । वटवेष्टने ।
संज्ञायामितिण्वुल् । टाप् । प्र
त्ययस्थादितीत्वम् ॥
वाटी । पु० वाट्याले ॥ त्रि०वेष्टित-
स्थले ॥
वाटी । स्त्री० कुट्याम् ॥ वास्तौ ॥ गृ-
होद्याने । पूगपुष्पादिलतोपलक्ष्णे ॥
वाट्यालके ॥
वाटीदीर्घ । पुं० इत्कटतृणे ।
वाट्टकम् । न० भृष्टयवे ॥
वाट्यपुष्पी । स्त्री० वाट्यालके ॥
वाट्या । स्त्री० बलायाम् । वरिय्या-
रा०इ०भा० ॥
वाट्याल । पु० वाट्यायाम् ॥
वाट्यालक । पुं० क्षुपविशेषे । वा
ट्यायाम् ॥ वाटीमलति । अलभू
षणादौ । कर्मण्यण् । स्वार्थे कन्
। वा लुवा ॥ वाट्याआलकोवा ॥
वाट्याली । स्त्री० वाट्यालके ॥
वाड । पु० वेष्टने ॥
वाडव । पु० ब्राह्मणे ॥ वडवानले
॥ न० स्त्रीणांकरणे ॥ घोटकौघे
॥ पुं० न० पाताले ॥ वडवायां
भव । तत्रभवइत्यण् ॥ वडवा
यांजात । तत्रजातइत्यण्वा ॥
वडवानांसमूह । खण्डिकादि
भ्यश्चेत्यञ् ॥
वाडवाग्नि । पुं० वाडवाग्नौ ॥ वा
डवश्चासावग्निश्च ॥
वाडवाग्र्य । पुं० ब्राह्मणश्रेष्ठे ॥
वाडवेय । पु० अश्विनीसुते ॥ बीजा
ऽश्वे ॥ वडवायाअपत्य । वडवा
याश्चेवाच्य०इतिढक् ॥
वाडवेयौ । पु० द्विवचनान्त : नासत्य
यो : ॥

वाडव्यम् । न० विप्रवृन्दे ॥ वाडवानां समूहः । ब्राह्मणमाणववाडवाद्यन् ॥ वाडवतायाम् ॥ वाडवस्य कर्म भावो वा । ब्राह्मणादित्वात् ष्यञ् ॥

वाड्वलि । पु० वाग्वादस्यापत्ये ॥ अपत्ये० अतइञ् । वाचो वादे डस्य वल्भावश्चोत्तरपदस्येञि ॥

वाढम् न० दृढे । भृशे । अतिशये ॥ प्रतिज्ञायाम् ॥ त्रि० अतिशयिनि ॥ आतिशय्ये ॥ वाहते । वाहृ प्रयत्ने० औणादिः । गत्यर्थेतिक्त प्रत्यये० क्षुब्धस्वान्तेति निपातितम् ॥ ऊह्यते स्म वा । वहप्रापणे । क्त । क्षुब्धस्वान्तेति साधुः ॥

वाढम् । अ० स्वीकारे । अङ्गीकृतौ ॥

वाण । पु० काण्डे । शरे । पृषत्के । विशिखे । अजिह्मगे । खगे । कलम्बे । मार्गणे ॥ गोस्तने ॥ केवले ॥ अग्नौ ॥ शरस्यावयवे ॥ वृक्षविशेषे ॥ भद्रमुञ्जे ॥ दैत्यविशेषे । बलिज्येष्ठपुत्रे ॥ कविवरे ॥ मुञ्जे ॥ नीलझिण्ट्याम् ॥ ध्वनौ ॥ त्रि० ध्वनियुक्ते ॥ वाणयति० रोषमुत्पादयति शत्रुम् । वण शब्दे । स्वार्थे णयन्त । पचाद्यच् ॥ वण्यते । कर्मणि घञ् वा ॥ वणनम् । भावे घञ् वा ॥ वाणः शब्दोऽस्त्यस्य । अर्श आद्यच् वा ॥

वाणगङ्गा । स्त्री० रावणवाणनिर्भिन्नसोमेश्वरगिरिप्रभवनदीविशेषे ॥ यथा । सोमेशाद्दक्षिणे भागे वाणेनाद्रिं विभिद्य वै । रावणेन प्रकटिता जलधारातिपुण्यदा ॥ वाणगङ्गेति विख्याता या स्नानादघहारिणी ॥ स्नात्वा तु वाणगङ्गायां दृष्ट्वा वाणेश्वरं विभुम् । गङ्गास्नानफलं प्राप्य मोदते देववद्दिवि ॥

वाणदण्ड । पुं० वापदण्डे । वेमनि ॥

वाणपुङ्खा । स्त्री० शरपुङ्खायाम् ॥

वाणपुरम् । न० देवीकोटे । शोणितपुरे ॥ वाणाख्यासुरविशेषस्य पुरम् ॥

वाणभट्ट । पु० ग्रन्थकारविशेषे ॥

वाणयुद्धम् । न० वाणासुरेण सह श्रीकृष्णस्य युद्धे ॥ शरैर्युद्धे ॥

वाणलिङ्गम् । न० नर्मदानद्युद्भवशिवलिङ्गे ॥ यथा । नर्मदाजलमध्यस्थं वाणलिङ्गमिति स्मृतम् । वाणलिङ्गं स्वयम्भूतं चन्द्रकान्ताद्वयस्थितम् ॥ चान्द्रायणशतकार्यैः शक्तो नैवेद्यभक्षणात् । याम्यायाम्यविभागीयवाणलिङ्गं न विद्यते ॥ तदर्पितजलवाह्यं याम्य प्रासादसंज्ञया । शिवनाभमयं लिङ्गं सदा पूज्यं महर्षिभिः ॥ यतश्च सर्वलिङ्गेभ्यस्तद्धि पूज्यतमं मतम् । चतुरङ्गुल

मुक्ताफरस्य वेदिकयायुतम् ॥ उत्तम लिङ्गमाख्यातपञ्चसूत्रसुसाधितम् । तदर्धं मध्यमं प्रोक्तं तदर्धमवरं स्मृतम् ॥ तस्मान्न्यूनं पूजनीयं न कदापि न तत्फलम् ॥ रुद्राच शिवलिङ्गस्य स्थूलस्थूलं प्रशस्यते । शालग्रामेनार्मदस्य सूक्ष्मसूक्ष्मो विशिष्यते ॥

बाणवार । पु० भटादेर्दोलाकृतिसन्नाहे । वारबाणे । चोलके ॥

बाणवारक । पु० कञ्चुके । बाणस्य वारकः ॥

बाणसुता । स्त्री० ऊषायाम् ॥ बाणस्य सुता ॥

बाणहा । पु० विष्णौ ॥

बाणा । स्त्री० बाणमूले । पु० स्त्री० नीलझिण्टाम् ॥ बण्यते । बण शब्दे । कर्मणि घञ् ॥

बाणाह्व । पुं० मुञ्जे ॥ बाणाह्वया ख्याश्च ॥

बाणाश्रय । पुं० धनुषि ॥

बाणासनम् । न० धनुषि ॥

बाणि । स्त्री० वस्त्रादेर्वयनक्रियायाम् । स्यूतौ ॥ वयने ॥ वाद्यदण्डे अम्बुदे ॥ मूल्ये ॥ सरस्वत्याम् ॥ बाणनम् । वण० । चुरादि । अचट् ॥

बाणिनी । स्त्री० मत्तस्त्र्याम् ॥ मत्ताङ्गनायाम् ॥ विदग्धवनितायाम् ॥ अवश्यं वणति । वण० । आवश्यके तियन्त्रादित्वाद्वाणिनि । ॥ अष्टिसञ्ज्ञकछन्दः १६ प्रभेदे ॥ नजभजरैर्यदा भवति वाणिनी गयुक्तैः ॥ यथा । स्फुरतु ममाननेऽद्य ननु वाणिनीतिरस्य तव चरणप्रसादपरिपाकतः कवित्वम् । भवजलराशिपारकारणमममुकुन्द सततमहस्तवे स्वरचितस्तवानि निस्यम् ॥

वाणी । स्त्री० सरस्वत्याम् । भारत्याम् ॥ वायक्रियायाम् । स्यूतौ ॥ वचने ॥ वण्यते । वण० । सर्वधातुभ्य इन्निति० इन् । कृदिकारादक्तिन इति ङीष् ॥

वात: । पुं० पवने । श्वसने । वायौ ॥ निमित्तभेदेनास्य गुणा यथा । व्यजनस्थानिलस्त्याक्लेदमूर्च्छाश्रमापहः ॥ तालवृन्तभवो वातस्त्रिदोषशमनो मतः ॥ वंशव्यजनजः सोष्णो रक्तपित्तप्रकोपनः । चामरोत्थस्तसम्भूतो मायूरो विचजस्तथा ॥ एते दोषजितो वाता स्निग्धा हृद्याश्च पूजिता ॥ वाति । वा गतिगन्धनयो । हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्य स्तन्निति तन् ॥ स्वाति नक्षत्रे ॥ रोगविशेषे ॥ हेमन्तवर्षाशिशिरेषु वायोः प्रकोपो भवति । यत । मार्गे पौषे तथा माघे आषाढे श्रावणे पि च । भाद्रे मासि विशि

स्माद्वे वीतीरात्राप्रकोर्त्तितद्गति ॥

वातकः। पुं० शीतले। अपराजितायाम्। शणपर्ण्याम ॥ वातकरोति। डुकृञ्०। अन्ये भ्योपीति ड ॥

वातकर्म्म। न० मरुत्क्रियायाम। पर्द्दने ॥

वातकी। त्रि० वातरोगयुक्ते। वातरोगिणि ॥ वातोऽतिशयितोऽस्य। वातातीसाराभ्यांकुक्चेतीनि ॥

वातकुम्भ। पुं० गजकुम्भाधोभागे ॥

वातकेतुः। पुं० पांशौ। धूलौ ॥

वातकेलि। पुं० कलालापे। षण्डरीके ॥ विड्गदन्तक्षते ॥

वातखुडा। स्त्री० वात्यायाम् ॥ पिच्छिलस्फोटे ॥ वामायाम् ॥ वातशोणिते ॥

वातगुल्म। पुं० वातूलि ववण्डर० ववूला० इतिभाषाप्रसिद्धे ॥

वातघ्नम्। न० तैले ॥ त्रि० वातनाशकर्त्तरि ॥ वातहन्ति। हन० अमनुष्यकर्त्तृकेचेतिटक् ॥

वातघ्नी। स्त्री० अश्वगन्धायाम् ॥ शालपर्ण्याम् ॥ शिमडीक्षुपे ॥

वातचक्रम्। न० आषाढ्यावायुविचारे ॥ तच्चोक्तंवाराहमिहिरेण। यथा। आषाढपौर्णमास्यामुषद्यो शानानिलोभवेत्। अस्तं गच्छतितीक्ष्णांशौसस्यसम्पत्तिरुत्तमा ॥ पूर्वंसमुद्रवीचिशिखरप्रस्फालनाघूर्णितस्तन्द्रार्कांशुसटाकलापकलितोवायुर्यदाकाशत। नैकान्तस्थितनीलमेघपटलाशारदसवर्द्धितावासन्तोत्कटसस्यमण्डिततलासर्वा महीशोभते ॥ यदाग्नेयोवायुर्ज्वलितगगनेखण्डिततनु. प्रजत्यस्मिन्नुर्वीभगवतिपतङ्गे प्रवसति। तदानिस्तोयौघाज्ज्वलनशिखरालिङ्गिततला स्तमोत्माश्मोच्छ्वासैर्वमतिवसुधाभस्मनिकरम् ॥ तालीपत्रलतावितानतरुभिः शाखामृगान्नर्त्तयन्योगीशान्प्रवतिध्वनिः सुपरुषोवायुर्यदाद्क्षिणः। तद्वद्योगसमुत्थितस्तुगजवत्तालाङ्कशैर्घट्टिताः कौनाशा इवमन्दवारिकणिकामुञ्चन्तिमेघास्तदा ॥ सूक्ष्मैलालवलीलवङ्गनिचयान्व्याघूर्णयन्सागरेभानोरस्तमयेप्रवत्यविरतोवायुर्यदानैर्ऋतः। क्षुत्तृट्क्षामतमानुषास्थिशकलप्रस्तारभारच्छदामत्तात्मनेवधूर्विवाश्चपलाभूमिस्तदालक्ष्यते ॥ (*) यदारेणूत्पातैः प्रविचलसटाटोपचपलः प्रवातः पश्चाद्विदिनकरकरापातसमये। तदासज्जोपितास्रवरनिकरावद्धसमराश्चिति स्थानस्थानेष्वविरतवसामांसरुधिरा ॥ आषाढीपर्वकालेयदिकिरणपतेरस्तकालेप्रपत्तौ वायव्योवायवेग :

पवनघनवपु . पन्नगार्धानुकारी । जानीयाद्वारिधाराप्रमुदितमुदितां मुक्तमण्डूककण्ठोंसह्लोल्लासैकचि ह्नांमुखवहुलतया भाग्यसैनामिवोर्वीम् ॥ मेरुग्रस्तमरीचिमण्डलतलैग्रीष्मावसानेरवौ वात्यामोदिकदम्बगन्धसुरभिर्वायुर्यदाचोत्तर : । विद्युद्भ्रान्तिसमस्तकान्तिकलनाभ्रान्तास्तदातोयदाउन्मत्तादूवनष्टचन्द्रकिरणागांपूरयन्त्यम्बुभि ॥ इतिवातचक्रनामाध्याय । २७ ॥ हस्तायामाषाढ्याकृष्णाचतुर्थ्यामजैकपादर्चे । यदिवर्षतिपर्जन्य . प्राहट्शस्तानचेन्नतत ॥

वातचटक । पुं॰ वार्त्तिकेखगे । बटेर॰ इ॰ भा॰ ॥

वाततूलम् । न॰ मरुद्धूर्णे । वृद्धसूत्रे । आकाशे॰ उड्डीयमानसूत्रे । ग्रीष्मह्रासे ॥

वातधुडा । स्त्री॰ वातखुडार्थे ॥

वातध्वज . । पुं॰ मेघे ॥

वातपित्तजशूलम् । न॰ शूलरोगविशेषे ॥ तस्यौषधयथा । मातुलुङ्गस्यनिर्यास गुडाढ्येनसमन्वितम । वातपित्तजशूलानिहन्तिवैपानयोगत ॥

वातपुत्र : । पुं॰ महाधूर्त्ते ॥ भीमसेने ॥ हनूमति ॥

वातपोत॰ । )
वातपोतक . । ) पुं॰ पलाशे ॥

वातपोथ । पुं॰ पलाशे । कि शुके । पर्णे । वीसू॰ इ॰ भा॰ प्र॰ वृत्ते ॥ वात पोथयति । पुथहि सायाम् । कर्मण्यण् ॥

वातप्रमी । पु॰ स्त्री॰ वातमृगे । वाताटहरिणे । नि शृङ्गमृगाकृतौ ॥ वात प्रमिमीते॰ वाताभिमुखधावनात् । माङ्माने । वातप्रमीत्युणादिसूत्रेणमाङईप्रत्यय . कित् । खौत्वेकृदिकारादितिवाङीषिस्त्रैवे । अन्येतुकारग्रहणस्तत्परार्थत्वाद्दीर्घान्तान्ङीष्नेत्याहु भहिकारग्रहणंकेवलग्रहणमितिमुनित्रयेणपरिभाषितम् । अतएव॰ वातप्रमीश्रीलक्ष्मीतिपद्येभ्रान्ता॰ सुसाधवइतिरचित॰ ॥ अश्वे ॥ नकुले ॥

वातफुल्लान्त्रम् । न॰ पुपफुसे

वातमज । पुं॰ वातप्रमी । वाताटहरिणे ॥ वातमजति । अजगतिक्षेपणयो । वातशुनीतिलशर्द्धव्रजधेटतुदजहातिभ्यउपसङ्ख्यानमितिखश् । अरुर्द्विषदितिमुम् ॥

वातमजा । स्त्री॰ वातमृग्याम् ॥

वातमण्डली । स्त्री॰ वायुसहतौ । वात्यायाम् ॥

वातमृग । पुं० वातमजी । वातप्रमी ॥ वातद्रव० वातस्यवाम्मृग ॥

वातरक्तम् । न० रोगविशेषे ॥

वातरक्तघ्न । पु० कुक्कुरे । ग्रन्थिपर्णे ॥

वातरक्तारि । पु० पित्तघ्नाम् । गुडूच्याम् ॥

वातरङ्ग । पु० अश्वत्थे ॥

वातरथ । पु० मेघे ॥ वातोरथोस्य ॥ गन्धे ॥

वारशन । त्रि० दिग्वाससि । दिगम्बरे ॥

वातरायण : । पुं० उन्मत्ते ॥ निष्प्रयोजनपुरुषे ॥ काण्डे । सायकै ॥ करपत्रे । क्रकचे ॥ कूटे ॥ शरसङ्क्रमे ॥ परसङ्क्रमे० इ० मेदिनी ॥ सरलद्रुमे ॥

वातरूष । पुं० वातूले ॥ शक्रकार्मुके ॥ उत्कटे । इ० मेदिनी ॥ उत्कोचे । इ० हेमचन्द्र ॥

वातरोग पुं० वायुव्याधौ । चलातङ्के । अनिलामये ॥

वातरोगी । त्रि० वातरोगयुक्ते । वातकिनि ॥ वातरोगोस्यास्ति । इत्यर्थोपतापितोनि ॥

वातर्षि । पुं० काष्ठलोहैभयनिर्मितपात्रे । काष्ठलौह्याम् ॥

वातल : । पुं० चणके ॥ त्रि० वायुकारके ॥ वातलाति । ला० । क ॥

वातलमण्डली । स्त्री० वात्यायाम् ॥

वातवैरी । पु० वातादे ॥ त्रि० वातहरे ॥ वातस्यवैरी ॥

वातव्याधि । पुं० वातरोगे । क्षुष्मणिलिपि । उद्ववे ॥

वातशीर्षम । न० वस्तौ ॥

वातशोणितम् । न० वातरक्तरोगे ॥

वातष्ठीला । स्त्री० वातव्याधिविशेषे ॥ यथा । नाभेरधस्तात्सञ्जात : सञ्चारीयदिवाचल । अष्ठीलावद्घनोग्रन्थिरूर्ध्वमायतमुन्नत । वातष्ठीलांविजानीयाद्बहिर्मार्गनिरोधिनीम् ॥

वातसह । त्रि० अत्यन्तवायुयुक्ते ॥ वातूले ॥

वातसारथि : । पु० अग्नौ ॥

वातस्कन्ध । पुं० आकाशस्यभागविशेषे ॥

वातहा । त्रि० वातघ्ने । वायुनाशकौषधौ ॥

वातहुडा । स्त्री० वातगुडायाँ ॥

वातहू । पु० वायुग्रस्ताङ्गे ॥ वातह्न पारदारिक ॥

वाताट । पु० सूर्यघोटके । वातमृगे ॥

वाताण्ड । पु० मुष्करोगविशेषे ॥ तल्लक्षणं यथा । कुपथोदूषयेद्वायुश्च प्रणायस्यसंवृत. । तस्यमुष्कस्यसत्येकोरोगोवाताण्डसञ्ज्ञक ॥

वातात्मज । पु० हनुमति ॥

वाताद् । पुं० बदामपादपे । मेचो
पमफले ॥ वातादउष्णः सुस्निग्धो
वातघ्नः शुक्रकृद्गुरुः । वातादम
ज्जामधुरोवृष्यः पित्तानिलापहः ॥
स्निग्धोष्णः कफकृन्नेष्टोरक्तपित्त
विकारिणाम् ॥ वातमत्ति । अद० ।
कर्मण्यण् ॥

वाताख्या । पुं० वातायने ॥

वातापिः । पुं० इल्वलभ्रातर्यसुरवि
शेषे ॥ वातमाप्नोति । आप्० । फ
लेग्रहिरात्मम्भरिश्चेति चकारादिन् ॥

वातापिद्विट् । वातापिसूदन । वातापिहा । पुं० अगस्त्यमुनौ ॥

वाताम: पुं० वातादे ॥

वातायन: । पुं० एकशफे । अश्वे ।
हये ॥ न० गवाक्षे ॥ ईयतेऽनेन ।
इण्० । करणे ल्युट् वातस्य अ
यनम् ॥ त्रि० शीघ्रगे ॥

वातायु: । पुं० मृगे । कुरङ्गे । हरि
णे ॥ वातमयते । अय० । बाहुल
कादुण् ॥

वातारि: । पुं० रक्तैरण्डे ॥ सयथा ।
वातारिबीजं प्रस्थञ्च चतुष्पक्वं निस्तु
षीकृतम् । क्षीरद्रोणार्द्धसंयुक्तं
भिषक् मन्दाग्निनापचेत् ॥ घृत
प्रस्थार्द्धसंयुक्तं खण्डप्रस्थद्वयं क्षिपेत् ।
त्र्यूषणञ्चचतुर्जातग्रन्थिकवह्निचि
त्रकम् ॥ छत्रामिसीशटीविश्व दी
प्यमोरीनिशायुगम् । अश्वगन्धा
बलपाठाहपुषावैरपौष्करम ॥ श्व
दंष्ट्रारग्वधादारुवेल्लज बालकवरी ।
एतानिपिचुमात्राणिचूर्णयित्वावि
नि. क्षिपेत् ॥ वातव्याधिसशूलञ्च
राजयक्ष्मातथोदरम् । आनाहव
र्ध्मगुल्मञ्चआमवातकटिग्रहम् ॥ ज
ङ्घाग्रह तथाहिक्काश्वासकासहृदाम
यान् । अर्दितार्द्धपक्षिश्वासीगृध्र
सीमपतन्त्रकम् ॥ पक्षाघातपाण्डु
वातभङ्गदण्डापतानकम् । मन्या
स्तम्भहनुस्तम्भ नाशयेदपिवेगतः
ति ॥ पुत्रदात्रीलतायाम् ॥ यवा
न्याम् ॥ शेफालिकायाम् ॥ सु
ह्याम् ॥ भार्ग्याम् ॥ विडङ्गे ॥ शु
र्ण्ये ॥ भल्लातकी ॥ जतुकायाम् ॥
शतमूल्याम् ॥

वाताली । स्त्री० वातसंहती । वा
त्यायाम ॥

वाताश्व । पुं० कुलीनाश्वे । हयोत्त
मे । जात्ये । आजानेये ॥

वातासह । त्रि० वातुले ॥

वाति । पुं० अनिले । वायौ ॥ सू
र्ये ॥ सीमे ॥ वाति । वागतिगन्ध
नयो: । क्तिच् । वातेर्निदिश्य
तिर्वा ॥

वातिक: । पुं० आयुजव्याधौ ॥ न०
वातस्यशमने ॥ वातस्यकोपने ॥
वातपित्तश्लेष्मणः शमनकोपनयोः

रूपसड ख्यानमितिठञ् ॥

वातिग . । पु॰ भण्टाक्याम् ॥ त्रि॰ धातुवादिनि ॥

वातिगम । पुं॰ वार्त्ताकौ ॥

वातिङ्गण : । पु॰ वार्त्ताकौ । भण्ट॰ भटा॰ इ॰ च॰ प्र॰ फलशाके ॥

वातीयम् । न॰ काञ्जिके ॥

वातुल : । पुं॰ वात्यायाम् ॥ त्रि॰ वायुरोगिणि ॥ वातसुखसेवनयोरदन्त । बाहुलकादुलच् ॥ उन्मत्ते ॥

वातुलि : । स्त्री॰ महत्तूलिकायाम् । वादुड॰ इ॰ भा॰ ॥

वातूल . । पुं॰ वात्यायाम् ॥ त्रि॰ वातासहे । मारुतासहे ॥ वातानांसमूह । वातनसहतेवा । वातात्समूहेचेत्यूल : । वातृतदसहने ॥ यद्वा । वाता : सन्त्यस्यास्मिन्वा । सिध्मादित्वाल्लच् । वातदन्तबलललाटोनामूङ्चेत्यूङ् ॥ उन्मत्ते ॥

वाता । पुं॰ वाते । वायौ । वागतिगन्धनयो : ॥ तृच ॥

वातोना । स्त्री॰ गोजिह्वाक्षुपे ॥ त्रि॰ वायुहीने ॥

वातोर्म्मी । स्त्री॰ त्रिष्टुप्छन्द : ११ प्रभेदे ॥ तल्लक्षणादियथा । वातोर्म्मीयंगदितांभौतगौग : । यथा ॥ ध्यातामूर्त्ति . क्षणमप्यच्युतस्यश्रेणीनाम्नागदिताङ्कलयापि । ससारेऽस्मिन्दुरितंहन्तिपुंसावातोर्म्मी पोतमिवाम्भोधिमध्ये ॥

वात्या । स्त्री॰ वातसमूहे । वातालयाम् ॥ वातानांसमूह . । पाशादिभ्योय : ॥

वात्सकम् । न॰ वत्सानांवृन्दे । वत्सानांगणे ॥ वत्सानांसमूह . । गोत्रोक्षोष्ट्रेतिवुञ ॥

वात्सल्य : । पुं॰ रसविशेषे ॥ न॰ प्रेम्णि ॥ त्रि॰ तद्वति ॥

वात्सल्यता । स्त्री॰ कृपालुत्वे ॥

वात्सीपुत्र : । पुं॰ नापिते ॥

वात्स्य : । पुं॰ मुनिविशेषे ॥ वत्सस्यगोत्रापत्यम् । गर्गादिभ्योयञ् । बहुत्वे॰ वत्सा : । यञञोश्चेतिलुक् ॥

वात्स्यायन । पुं॰ शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमितिकल्पनापरेऋषिविशेषे । मन्दनागे । पक्षिले । स्वामिनि ॥

वाद . । पुं॰ यथार्थबोधेच्छोर्वाक्ये ॥ अरिविद्विषोर्द्वयो: कथायाम् ॥ व्यक्तवाक्ये ॥ भगवद्विभूतिविशेषे ॥ यथोक्तं भगवद्गीतायांवाद : प्रवदतामहमिति । अस्यार्थ : । प्रवदतावादिनांसम्बन्धिन्योवादजल्पवितण्डाख्यास्त्रिस्र : कथा : प्रसिद्धा:॰ तासामध्येवादोऽहम । यत्राभ्यामपिप्रमाणतस्तर्कतश्चस्वपक्ष:

स्थापयति॰ परपक्षञ्छलजातिनिग्रह
स्थानैर्दूषयतिसजल्पोनाम। यत्रै
क: स्वपक्षंस्थापयति॰ अन्यस्तु॰
छलजातिनिग्रहस्थानैस्तत्पक्षं दूष
यति॰ नतुस्वपक्षंस्थापयति॰ सा
वितण्डानामकथातत्रजल्पवितण्डे
विजिगीषमाणयोर्वादिनो . शक्ति
परीक्षामात्रफले॰ वादस्तुवीतराग
यो ' शिष्याचार्ययोरन्ययोर्वातत्त्व
निरूपणफल :। अतोऽसौश्रेष्ठत्वा
त्प्रादुर्भूतिरित्यर्थ . ॥ इतिश्रीध
रस्वामिन :॥ अस्यलक्षणं गौतमो
क्तं यथा। प्रमाणतर्कसाधनोपाल
म्भ : सिद्धान्ताविरुद्ध :॥ १।
४१॥ अस्यच॰ वादइतिलक्ष्यनि
र्द्देश॰ पक्षप्रतिपक्षौविप्रतिपत्ति
कोटी॰ तयो 'परिग्रहस्तत्साधनो
इ श्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भ'
तावन्मात्रञ्चकथान्तरसाधारणम
तआह॰प्रमाणेत्यादि । प्रमाण
तर्काभ्यांतद्रूपेणज्ञाताभ्यांसाधनो
पालम्भौयत्रसतथा । उभयत्रापि
प्रमाणादिसद्भावकोटिद्वयस्यापिसि
द्धि: स्यादतस्तद्रूपेणज्ञाताभ्यामि
ति। ज्ञानमनाहार्यंविवक्षितम्॰
उपालम्भोदूषणम्॰ तत्वादौतुप्र
माणाभासत्वादिनाज्ञाताभ्यामपि
साधनोपालम्भौभवतइतितद्वारणं
तथा॰ इतरथातुतद्धेतोरेवदुष्टत्व
म्॰ इत्यत्र प्रमाणाभासत्वप्रका
रकज्ञानविषयकरणकसाधनोपाल
म्भयोरन्यत्वे सतीत्यर्थ :। तेन
तादृशजल्पविशेषेनातिव्याप्ति। तच्च
चनिग्रहस्थानविशेषनियमार्थसिद्धा
न्तेत्यादिविशेषणद्वयम् अन्येतुतदपि
लक्षणघटकमेव॰ तदर्थञ्च॰ तावन्मा
त्रनिग्रहस्थानयोग्यत्वम्॰ तावद
तिरिक्तनिग्रहस्थानोपन्यासायोग्य
त्व वा॰ निग्रहस्थानप्रतिज्ञाहान्या
दौनामेकं धृत्वा॰ तदुपन्यासायोग्य
त्वमितिनिष्कर्ष :। तेनोक्तजल्प
विशेषवारणमित्याहु :। सिद्धा
न्ताविरुद्धइत्यनेनापसिद्धान्तो
द्भावनम्॰ पञ्चावयवोपपन्नइत्य
नेनन्यूनाधिकोद्भावने। अवयवा॰
भासस्यदृष्टान्तासिद्ध्यादेश्चोद्भावनम्
॰प्रमाणेत्यनेनचप्रमाणाभासत्वेनहे
त्वाभासानांतर्काभासस्यचोपन्यासो
नियम्यतेतथाचात्रहेत्वाभासन्यूनाधि
कापसिद्धान्तरूपनिग्रहस्थानचतुष्ट
योद्भावनमितिवदन्ति। वस्तुतस्तुवाद
स्यवीतरागकथात्वेन॰तत्त्वनिर्णयस्यो
द्देश्यतया पुरुषदोषस्याविज्ञातार्थादे
रिवन्यूनाधिकयोरपिनोद्भावनमुचि
तम्। अतएवपञ्चावयवावश्यकत्व
मपिभाष्यकारोनानुमेने। हेत्वाभा
सोद्भावनेनापिचतदेवकथाविच्छे
दोयदिहेत्वन्तरेणापिसाधयितु नश

क्यते॰ इतरथातुतदुर्भवेरिवदुष्टत्वम् । इत्यञ्चपञ्चावयवोपपन्नइतिप्रायिकत्वाभिप्रायेणेतितत्त्वम्। वादाधिकारिणस्तुतत्त्वबुभुत्सवः॰ प्रकृतोक्तिका :॰ अविप्रलम्भका ।॰ यथाकालस्फूर्तिका :॰ अनाक्षेपका : युक्तिसिद्धप्रत्येतार । अनुविधेयश्चेय सभ्यपुरुषवतीजनतासभा अनुविधेयो राजादि । स्थेयान्मध्य । साचवादेनावश्यकीवीतरागकथात्वादिति ॥ १ । ४१ ॥ अपिच। वादफलस्यतत्त्वनिर्णयस्यदुरूढवादिनिराकरणेन॰ संरक्षणार्थं विजिगीषुकर्थेजल्पवितण्डे॰ जयपराजयमात्रपर्यन्ते । तदुक्तम् । तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डेबीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवदिति ॥ छलजातिनिग्रहस्थानैः परपक्षोदूष्यते॰ इतिजल्पे वितण्डायाञ्चसमानम् । तत्रवितण्डायांकेवलंस्वपक्षस्थाप्यतएव॰ अन्येनचसदूष्यतएव । जल्पेतु॰ उभाभ्यामपिस्वपक्ष स्थाप्यते॰ उभाभ्यामपिपरपक्षोदूष्यतइतिविशेष : । तदुक्तम् । यथोक्तोपपन्नश्छलजातिनिग्रह स्थानसाधनोपालम्भोजल्पः ॥ १ । ४२ ॥ सप्रतिपक्षस्थापनाहीनोवितण्डेति । १ ॥ ४३ ।

अतोवितण्डादिप्रशरीरतत्त्वाज्जल्पोनाममनेकाकथा॰ किन्तुशक्त्यतिशयज्ञानार्थंसमयबन्धमात्रेणप्रवर्त्तंतइतिखण्डनकाराः॥ तत्त्वाध्यवसायपर्यवसायित्वेनतुवादस्यश्रेष्ठत्वमेव ॥ सङ्घातादिवादेषु ॥ तेचोक्तारामगोतोत्सवेयथा । सङ्घातवादोलौकायतिकानांनास्तिकानाम् । अनादौचणिकेलोकेनेश्वरादिरपेक्ष्यते । प्रत्यक्षसङ्घातभेदशक्तिभि : सर्वंसिद्धित : ॥ यथौषधानांसङ्घातेमादोरागोरसायनम् । तथैवभूतसङ्घाते चैतन्यकान्यजीवता ॥ १ ॥यथाचारम्भवादस्ताकिंकाणामीमांसकानाञ्च । आत्माकाशाणुमुखत : कारणंपूर्वमिष्यते । कुलालादिवद्दण्डन्तुघटवज्जन्मनाशभाक् ॥ पृथिव्यम्भोग्निवायूनाकर्मसयोजितायव । द्वाणुकादिक्रमेणाण्डमारभन्तइदमहत् ॥ २ ॥ यथाचपरिणामवादसाङ्ख्यपातञ्जलपाशुपतानाम् ।गुणसाम्यप्रधान स्याद्गुणा : सत्त्वरजस्तम. । सुखदु खमोहरूप इष्यतेहिस्फुटजगत् ॥ प्रधानस्यान्महान्सोऽहङ्कारोऽसौषोडशात्मना । जायतेपञ्चतन्मात्राण्यचाण्येकादशापिवत् । तन्मात्राणितुभूतानि जायन्तेतत्वसङ्ख्यया। चतुर्विंशति

वाद :

वति । अनीशोवाकुर्यीश्वनजनौ
क : परिकरीयवोमन्दास्तुप्रव्यमरव
रस शेरतडूमे ॥ इति । यतोवाइमा
निभूतानिजायन्ते येनजातानिजीव
न्तियत प्रयन्त्यभिस विशन्तितद्ब्रह्म
त्यादिश्रुतयस्तु खतन्त्रमेवप्रमाणम्
॥ १ ॥ आरम्भवादोपिनयुक्तिस
ह : । यथा । अणु स योजकं कर्म
निर्निमित्त यदाभवेत् प्रलयस्तर्हि
नभवेत सनिमित्तं कथ वद ॥ शरी
राभावतस्तत्रप्रयत्नादेरसम्भवात् ।
नित्यत्वादीशयत्नोपिकादाचित्कोऽ
र्हितोनहि ॥ जीवात्मसमवेतत्वाद
दृष्ट नाणुषुक्वचित् । एवमादिवि
चारेणदुष्टाणु परिकल्पना ॥ कुला
लवत्तटस्थत्वे दीश्वरस्तर्हिमत्सम :
। शरीरोपस्कराकाङ्क्षीविषमोनि
र्घृणस्तथा ॥ ईशेवेद : प्रमाणत्वे तु त्या
क्यातर्हितटस्थता । यत : स्फुट निरा
बाधं मायित्वतत्रवर्ण्यते ॥ अखण्डस
च्चिदानन्दोजगद्रूपेणभासते । मा
यायांदुर्घट नास्तिकिञ्चित्तद्रूप
णाहिसा ॥ परमाण्वादिकल्पना
विरोधिन्य : श्रुतय : । एकोऽहं
बहुस्यांप्रजायेयेति । एतस्मादात्म
नआकाश सम्भूत : आकाशाद्वा
युर्वायोरग्निरग्नेराप : अद्भ्य : पृ
थिवीति । मायान्तुप्रकृति विद्या
न्मायिनन्तुमहेश्वरमिति । इन्द्रो

वाद .

मायाभि : पुरुरूपईयते । इत्येव
मायावसङ्ख्यातापेव । एवं स्मृ
तीतिहासवाक्यान्यपि । २ । परि
णामवादोपिनयुक्तिसह : । यथा ।
विचित्रजगतोहेतुर्नप्रधानमचेतन
म् । चेतनोपिहिनिष्कर्तोनेसहाय
त्वमर्हति ॥ गुणकार्यं सुखादीना
मान्तरत्वश्चनिश्चयात् । घटादावन्व
येनास्तिकथमव्यक्तकार्यता ॥ कि
ञ्चापरिणतेतस्मिन्कार्योत्पत्ति
र्नयुज्यते । परिणामेतस्यनाश :
कार्यस्यापिनिराश्रयात् ॥ नचप्र
धानकल्पनायाम् । अजामेकांलो
हितशुक्लकृष्णामित्यादिश्रुति प्र
माणम् । तस्या : यदग्ने रोहितं
रूप तेजसस्तद्रूप यच्छुक्ल तदपांय
त्कृष्णं तदन्नस्ये तिच्छान्दोग्योक्तवे
जोवन्नात्मकप्रकृतिपरत्वेनमायापर
त्वेनापिसूरिभिर्व्याख्यातत्वात् । ए
वमन्यत्स्वयसमाधेयम् । ३ ॥ जीवो
त्पत्तिश्चनयुक्तिसहा । यथा । जीवोत्प
त्तिर्नयुक्तेतिजीवस्यानादिताश्रुता ।
विनाशिकृतनाश : स्यादकृताभ्या
गमस्तथा ॥ ४ ॥ विज्ञानवादोपि
नयुक्तिसह : । यथा । जागरेबाध्य
तेस्वप्नोजागरोनैवबाध्यते । तत्र
द्बाधकाभावाद्बाह्यमस्त्युपलब्धित
॥ बहिर्वदितितेप्युक्तिर्बाह्यमर्थं
प्रसाधयेत् । एव नयुज्यतेबुद्धे

भाद :

अंगदाकारतातव ॥ स्थिरचेतन राशिव्यात स्वयञ्चचयिकसूत : । स्त्र्यादिव्यवहारस्यलोपस्तत्व हारुण : ॥ ममतु॰आगरादिममा धिष्ठानस्याखण्डबोधानन्दरूपस्त्रह्मण साक्षात्कारोबाधकोस्ति ॥ ५ ॥ वाह्यास्तित्ववादो ऽ पिनयुक्तिसह. । यथा । स्थिरचेतनराशित्वा त्स्वयञ्चाचेतनत्वत । मस्का न्यामामणूनांवासमुदायोऽनयुज्यते ॥ ६ ॥ सप्तपदार्थोवादसनयुक्तिसह . । यथा । एकस्मिन्सदस त्वादिविरुद्धप्रतिपादनात् । अपन्याय : सप्तभङ्गीनयजीवस्यसां शता ॥ अस्यार्थ : । स्यादस्ति १ । स्यान्नास्ति २ । स्यादस्तिचनास्ति च ३ । स्यादवक्तव्य : ४ । स्याद स्तिचाऽवक्तव्य : ५ । स्यान्नास्तिचा वक्तव्य ६ । स्यादस्तिचनास्तिचा वक्तव्यश्चेति ७ । सप्तभङ्गीवाक्यानि । वेपुचस्याच्छब्द ' ईषदर्थवाची निपात : । वदर्थेचपूर्वपक्षश्लोकी क्तानांसद्वाद्यसद्वाद्युभयवाद्यनिर्व चनीयवाद्यसदनिर्वचनीयवादाद्युभयानिर्वचनीयवादिनांमतानि । क्रमेणाभिहितानि । तेचवादिन : समागच्छाहन्त प्रतिक्षिन्त्वन्मते मोक्षोस्तीत्यादिस्वस्वमत क्रमेणपृच्छन्ति । तन्वाहन्तान्प्रतिप्रत्ये

भाद .

क क्रमेणतान्येववाक्यानोषत्तन्मतान्युपगमनार्थवानिपृथक्पृथगे वोत्तरत्वेनब्रूते । तावतासर्ववादिनोनिर्विण्णा । सर्वोत्तर प्रतिपद्यन्तेएवंविधस्तेषासप्तमङ्गीरूपोय न्यायोऽपन्याय एव॰ अपकृष्टोन्यायोन्यायाभ्यास एवेत्यर्थ. । कुतइत्यतआह । एकस्मिन्निति । एकस्य जीवप दार्थस्यसत्वादिनप्रतिसद्रूपत्वम्॰ असत्वादिनप्रत्यसद्रूपत्वञ्चेत्येवमादिविरुद्धधर्मप्रतिपादकत्वात् । मचजीवस्यसावयवत्व युज्यते॰ श रीरादिवदनित्यत्वप्रसङ्गात् । तद नित्यत्वेमोक्ष . कस्यपुरुषार्थ. स्यात् । तस्मान्न्यायाभासेनसप्तभङ्ग्याख्य नजीवादिपदार्थानानसिद्धिरिति ॥ ततस्यपारिशेष्याज्जगतोमायाम यत्वसिद्धि ' । तदुक्तम् । ततोनि रुचानन्दे विवर्त्तीजगदिष्यताम् । अवस्थान्तरभानन्तुविवर्तोरज्जुसर्पवत् ॥ मायाशक्ति . कल्पिकास्या दिन्द्रजालिकशक्तिवत् । शक्ति श क्तातृपृथङ्नास्तितद्दृष्टे नचाभिदा ॥ प्रतिबन्धस्यदृष्टत्वाच्छक्त्यभावे तुकस्य स ' । शक्ति कार्यानुमेयाया अनिर्वाच्यत्वमिष्यताम् ॥ इति ॥ वदनम् । वदव्यक्तायाम्वाचि । धञ् ॥

वादक. । त्रि० वाद्यकारे ॥ वक्तरि ॥

वादनम् । न० शब्दे ॥ शिवागारेझ झकारञ्चसूर्य्यागारेचशङ्खकम् । दु र्गागारेवंशिवाद्यमधुरीञ्चनवादयेत्।

वादफलम् । न० तत्त्वनिर्णये ॥

वादरम् । न० कार्पासबीजे । काका चिञ्च्याबीजे ॥ दक्षिणावर्त्तश ङ्खे ॥ चीरे ॥ काकचिञ्चायाम् ॥ भारद्याम् ॥ कृमिजे ॥ जले ॥ कार्पासीफले ॥ वदरायाविकार: फलम् । अवयवेचेत्यण् । तस्यफ लेलुक् । वदरस्यविकार: । तस्य विकारइत्यण् ॥ त्रि० कार्पासी निर्मितवस्त्रादौ ॥

वादरङ्ग. । पुं० अश्वत्थवृक्षे ॥

वादरा । स्त्री० कार्पास्याम् ॥

वादरायण: । पुं० व्यासदेवे ॥

वादरायणि: । पुं० शुकदेवे । व्यास तनये । वादरायणस्यापत्यम् । अ तइञ् ॥ व्यासदेवे ॥

वादलम् । न० मधुयष्टिकायाम् ॥

वादवादी । पुं० जिनभेदे । आर्हते ॥

वादवित् । त्रि० धातुवादीमन्त्रवाद श्चस्याद्यौवादावस्तुभूतावस्मीति वादज्ञ ॥ कल्पनैवैषा० ताभ्यादि मावेधिर्नष्टेश्चानेकादिस्वभावा सम्भावात् । मन्त्रवादेपि० कालद ष्टोनजीवति । अकालदष्ट: स्वय मेवोत्थास्वतीत्यभ्युपगमात्० व्या मोहमात्रमेव ॥ वादज्ञे ॥

वादान्य । त्रि० बहुदातरि । बहु प्रदे ॥

वादमम् । न० वादामे । वातादे ॥

वादाल: । पुं० मत्स्यप्रभेदे । सहस्र दंष्ट्रे । बोयालि० इ० गौ० दे० भाषाप्रसिद्धे ॥

वादि: । त्रि० विदुषि ॥ वक्तरि ॥ वा दयति । वद० । वसिवपियजिरा जिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् । सूत्रे वादीतिस्यन्तोनिर्दि ष्ट: । बाहुलकादण्यन्तादपि । त थाचभूवादिसूत्रे० वदन्तीतिवाद योवाचकाइतिन्यासकारादय: ॥

वादित्रम् । न० वातोद्ये । वाद्ये ॥ वाद्यते० व्यन्यते । वदेर्ण्यन्तात् । भूवदिगृभ्योणित्रन्० इति० णि त्रन् ॥

वादी । त्रि० वक्तरि । वदनशीले ॥ अर्थिनि । विवादकर्त्तरि । पुका र० आद्० इ० भा० प्र० पूर्व्वप क्षकर्त्तरि । वादोऽस्यास्ति । इनि.॥

वादिरम् । न० वदरीसदृशसूक्ष्मफल द्रव्ये ॥

वादिराट् । पुं० पूर्वजिने । मञ्जु घोषे ॥

वादिराज. । त्रि० वादिश्रेष्ठे ॥ वा दिनांराजा । टच् ॥ पुं० मञ्जु घोषे ॥

वाद्यम्

वादित्र : । त्रि॰ साधुवादिनि ॥

वाद्यम् । न॰ वादनीये । वादित्रे । आतोद्ये ॥ वाद्यते॰ध्वन्यते । वदेर्ण्यं न्तात्कर्मणि यत् ॥ तच्चतुर्विधं यथा । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंश्यादिकन्तु शुषिरं कांस्यतालादिकं घनम् ॥ अथवा वाद्यानि । तालेनराजतेगीतं तालो वादित्रसम्भव : । गरीयस्तेनवादित्रं तच्चतुर्विधमुच्यते ॥ ततं शुषिरमानद्धं घनमित्य चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरन्तथा । चर्मावनद्धमानद्धं घनं तालादिकं मतम् ॥ तत्र ततं यथा । अलावनीब्रह्मवीणाकिन्नरीलघु किन्नरी । विपञ्चीवल्लकीज्येष्ठा चित्राघोषवतीजया ॥ हस्तिकाकुब्जिकाकूर्मीशारङ्गीपरिवादिनी । त्रिशवीशतचन्द्रीचनकुलोष्ठीचढसवी ॥ औडम्बरीपिनाकीचनिबन्धः शुष्कलस्तथा । गदावारणहस्तश्चरुद्रोऽथ शरमण्डलः ॥ कपिलासीमधुस्यन्दी घोषाद्यादिततंभवेत् ॥ अलावणी यथा । कनिष्ठिकापरिध्यस्तेमध्यच्छिद्रेणसंयुत : । दशयष्ठिमितोदण्ड : खादिरोवेणवोऽथवा ॥ अध . कारभवानूर्ध्वं छायावक्त्राभिशोभित : । नवाङ्गुलादधश्छिद्रोपरिचन्द्रार्द्धसन्निभाम् ॥ निवेश्यतुम्बिकांभद्रालाबु

वाद्यम्

खण्डं निवेशयेत् । द्वादशाङ्गुलविस्तारदृढपक्वमनोहरम् ॥ तुम्बिकावेधमध्येनदण्डच्छिद्रे तुनिर्मिताम् । अलाबुमध्यगांडोर्वीकृत्वातस्या न्तुकाष्ठिकाम् ॥ तथासवेष्ट्यतन्मध्ये काष्ठिकाभामयेत्तत । यथा स्यान्निश्चलालाबुर्वंशस्यकरभोपरि ॥ पञ्चाङ्गुलिपुसन्धव्यालाबुतस्याश्च बन्धयेत् । कौशान्तनिर्मितापट्टमयीसूत्रकृताथवा ॥ समासूक्ष्मादृढा तन्तन्त्रदेयाविचक्षणै : । एतल्लक्षणसंयोग्यान्यालावणीप्रकीर्त्तिता ॥ विन्दुनानसमुपेत तुम्बनि ' श्चिप्य वक्षसि । मध्यमानामिकाभ्याञ्च वाद्यादक्षिणपाणिना ॥ तारेमद्रे च घोषेचविस्थानेबिन्दुरिष्यते । तुम्बीमूलं समुत्पत्त्यवामाङ्गुष्ठेन धारयेत् ॥ ततस्ताभिस्तुसर्वाभि : स्वरव्यक्तिर्विधीयते । त्रिस्वरोदक्षिण ' पार्श्वेवामस्तुचतु : स्वर : ॥ अलावण्यांस्थिताज्ञेया ' सप्तषड् जाद्य ' स्वरा : । रागव्यक्तिर्यथारागेभवेत्षड्जादिभेदत : ॥ अंशन्यासविभेदाश्चतथाचापिविधीयते । कूर्मलावणीप्रोक्तामन अवचारकुनी ॥ प्रत्यचामारदादेवीवीणा कूपेषस स्थिता । कूर्मलावणी ॥ अन्ये षालक्षणं विस्तरभयान्नोक्तम् ॥ शुषिरं यथा । वंशोऽथपारीमधु

रीतिस्तिरीशङ्खकाहला । तीडत्री
मुरलीबुक्का शृङ्गिकास्वरनाभय ॥
शृङ्गं कापालिकं च शम्बर्म च ग्रस्तथा
पर । एते शुषिरभेदास्तु कथिता :
पूर्वसूरिभि ॥ वर्त्तुल सरलश्चै
कपर्वदोषविवर्ज्जित । वैणव
खादिरो वापि रक्तचन्दनजोऽथवा ॥
श्रीखण्डजोऽथसौवर्णो दन्तिदन्तमयो
ऽपिवा ॥ राजतस्ताम्रजो वापि लौह
ज स्फाटिकोऽथवा । कनिष्ठाङ्गुलि
तुल्येन गर्भरन्ध्रेण शोधित शि
ल्पविद्याप्रवीणेन वंश : कार्यो म
नोहर ॥ वंशेनैवमतो पीतिमतङ्ग
मुनिनोदितम् । ततोऽन्येपितदा
कारा वंशा एव प्रकीर्त्तिता ॥ तत्र
त्यक्त्वा शिरोदेशा दर्धाङ्गिमितमङ्गु
लम् । फूत्काररन्ध्रं कुर्वीतमित
मङ्गुलिपर्वणा ॥ पञ्चाङ्गुलानि सन्
त्यज्य तावद्रन्ध्रानि कारयेत् । कु
र्यात् तथान्यरन्ध्राणि सप्तसङ्ख्या
निकौशलात् ॥ वदरीवीजतुल्या
निसन् त्यज्यार्द्धार्द्धमङ्गुलम् । प्रा
न्तयोर्व्यन्तं कार्यं स्वराद्यै नादहेतवे
॥ सिक्थकेन कलादेया तेन सुस्वरता
भवेत् । पञ्चाङ्गुलीयं वंश : स्या
देकैकाङ्गुलिवर्द्धित ॥ षडङ्गु
लानि ना ख्याद्यावदष्टादशाङ्गु
लम् । फूत्कारताररन्ध्रस्य यावद
ङ्गुलिमन्तरम् ॥ तदेव नाम वंश



स्ववांशिकै परिकीर्त्त्यते । एका
ङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुर
ङ्गुल ॥ अतितारतरत्वेन वांशि
कै : समुपेक्षित । त्रयोदशाङ्गु
लो वीणापर : । निन्दितो वंशतत्व
ज्ञैस्तथा सप्तदशाङ्गुल ॥ महान
न्दस्तथा नन्दो विजयोऽथजयस्तथा ।
चत्वार उत्तमा वंशा मतङ्गमुनि
सम्मता ॥ दशाङ्गुलो महानन्दो
नन्द एकादशाङ्गुल : । द्वादशा
ङ्गुलमानस्तु विजय : परिकीर्त्ति
त ॥ चतुर्दशाङ्गुलमितो जयद्र
त्यभिधीयते । ब्रह्मारुद्रोरविर्विष्णु
क्रमाद्व्यवस्थिता : ॥ नैविडा
प्रौढता चापि सुस्वरत्वञ्च शीघ्रता
। माधुर्यमिति पञ्चामी फूत्कृतेषु
गुणा स्मृता : ॥ शीत्कारबहुल
स्तब्धो विस्वर स्फुटो लघु ।
अमधुराश्च विज्ञेया : षड्दोषा :
फूत्कृतेक्रमात् ॥ तथा प्रयोगबाहु
ल्यमल्पता गीतवादने । एभिर्दोषै
र्युतो तीव निन्दितो वांशिको मत
॥ स्थानकादिलयाभिज्ञो गमकाढ्य
स्फुटाक्षर । शीघ्रहस्त : कलाभि
ज्ञो वांशिको रक्त उच्यते ॥ प्रमुक्ति
र्वसुक्तिश्च युक्तिश्चेत्यङ्गुलैर्गुणा :
। सुस्थानत्वं सुस्वरत्वमङ्गुलीसा
धनक्रिया ॥ समस्तगमकज्ञानं राग
रागाङ्गवेदिता । क्रियाभाषाविभा

षा। मृदङ्गतालगीतवादने ॥ स्वस्थाने
वादितुं स्थानेनादनिर्माणकौश
लं । गातॄणां स्थानदातृत्वं तद्दो
षाच्छादनं तथा ॥ वादिकस्य गुणा
एते मया सङ्क्षिप्य दर्शिता । इति
व श :॥ ॥ काहलाशङ्खौ निषङ्ग.
। तोण्डी मुरली वंशाद्यास्ते च स्व
यांसप्तस्वराणामभिव्यञ्जनोभि'
श्रियां वर्त्तंते । इत एषां विस्तरभया
न्नोक्तम् ॥ ॥ आनद्धं यथा ।
आनद्धे मर्द्दल : श्रेयान् इत्युक्ता
भरतादिभि' । अपि च । मुरजपट
हढक्काविश्वकोदर्पवाद्यपणवघनस
ञ्ज्ञालावजाङ्गचिङ्कल्य '। करटक
मठभेरीश्यात्कुडुक्काहुडुक्काझनस
मुरलीझल्लीढुक्कलीदौण्डिमाना ॥
डमरुटमुकिमड्डु ' कुण्डलीस्तुङ्ग
नामारणमभिघटवाद्य दुन्दुभीचर
जय । क्वचिदपि टुटुकौश्चाहदु' रं
चाप्युपाङ्गप्रकटितमन वद्धवाद्यमि
त्यं जगत्याम् ॥ त्रिपुरमथनकर्त्तु
स्ताण्डवे तत्प्रयाणे ततसुखशुषिर
स्थानवमित्य घनस्य ॥ ॥ मर्द्दल
खादिर : श्रेष्ठाधीन : श्यादन्यदा
रुज : । रक्तचन्दनजोवाद्योगभीर
ध्वनिरुत्तम : ॥ सार्द्धहस्तप्रमाणस्तु
दैर्घ्यं मस्य विधीयते । त्रयोदशाङ्गु
लं वाममथवा द्वादशाङ्गुलम् ॥ द
क्षिणस्य भवेदधीनमेकेनार्द्धाङ्गुलेन



षा । करणानद्धवदनो मध्ये चैव पृ
थुर्भवेत् ॥ पण मासीयो भवेद्धस्त
स्तश्रमं कारण मतम् । मृत्तिकानि
र्मितश्चैव मृदङ्गः परिकीर्त्तितः
॥ पातयेत् खरलिं वाद्यमादनार्थं
स्वमर्द्दले । विभूतिर्गैरिक भक्त कीन्दु
कीनचसंयुतम् । यद्वाचिपीटक
देय जीवनीसत्त्वमिश्रितम् । सर्वं
मेकचपिष्ट तल्लेप' खरलिरुच्यते
॥ वामास्थे पूरिकां कृत्वा लेप दद्या
च्च दक्षिणे ।। एवं मर्द्दलक ' प्रोक्त:
सर्ववाद्योत्तमोमत :॥ अस्य से
गमासाद्य सर्व्ववाद्यश्च शोभते ।
एतदङ्गे बीजकाष्ठे दलमर्द्धाङ्गु
लं विदु . ॥ तधिधोतेमितिर्ज्ञेया'
पाटवर्णा : मृदङ्गजा ' । थौंद
ढें धिक्कटस्तद्धीताकंद द थोग धि
धि ॥ खर्भोर्भिंन गट दंथाकूटपा
टामताचमो । तथि थौंढें तक्कधीदों
द द धिगणांततं तधि ॥ तक्कत ध
धिदौंताधिपाटखण्डे त्वयं क्रम ॥
तथा चयतिमाने पाटखण्ड ' । द्रग
तथे जाद्रगतथे जांधोधेधिक्कताधि
काथेजांथेजातकतताधिकाथेता
द्रगतताधिधिधिधिकतताकडना
थेधिकथेजाधेताद्रगतताद्रतता
धि । इतियतिमाने पाटखण्ड ॥ ॥
यतिरोढाप्यवच्छेदे गजरोरूपकं
ध्रुवम् । गलप ' सारिगीणीचनाद

स्वकथितं तथा ॥ प्रहरणं छन्दनश्च
प्रबन्धाद्वाद्यसम्भृता : । यथा । द
थातद्भूत्यं कताल्यांयति : ॥ षोढ
वाद्यंयथा । दांतथोतधिकतधिक
दं थादथाथोधिथोधितत्ततत्तथविथ
विदिथ्यांदिथ्यांटटुनकिटटुनकित
दटङ्गतटंदगथवटङ् गथवटङ् गत
गिनगितगिनगिदांदांददंदौंदौंदता
मथा । इत्योढवाद्यम् ॥ षवर्णं दौ
वाद्यंयथा । दथात : दथात : धि
क्किधिक्किदिगणं दथात : । इत्यव
च्छेदवाद्यम् ॥ ॥ गजावाद्यं
यथा । थोकटे अनेअढें ङें गथोगथो
ङ् गटेक्कथोगतकिधिकटे क्कनधिधि
कटतकथोकतधिकटतक्ककतथोग
तद्धीम् । इत्ये कताल्यांगजर. ॥
रूपकवाद्ययथा । तकधिक्तक
धिक्कथवितकिथवितक्किधिकदथात:
। इतिरूपकवाद्यम् ॥ ध्रुवकवा
द्यंयथा । तक्कतक्कटधिक्कधिक्कट ।
इतिनिसारतालेध्रुवक : ॥ ॥
गलपोयथा । तधिद्धिधिक्कतकतधि
गलग थोथादेंतथाढे नञ ॥ इत्ये
कताल्यांगलप : ॥ ॥ सारिगे
णीयथा । थोङ् गटे ञ् तक्कधिक्कत
कधिक्तकथोहटङ्गनहटङ्गनथो
गनथो ' । इतिप्रथमखण्ड : ॥ ॥
टे अथो : धिथोह : टे अटे अदक्
कतगदक्कधिक्कतदिदक्कदंगदं



गथोगथोक्क तकतक धिकत धिकत
घोटे अघोटे अथटे गलखोगगलखो
गखोहटगेंटगेंखोहटञ । इत्यच्छ
न्दनम् । इतिसारिगोणी ॥ ॥
नादोयथा । दांकारचितयपूर्वं दां
धिगिति ततस्त्रयम् । दांदांधिक
षययषइतिनाद : शचीप्रिय . ॥
इतिनाद ' ॥ । द्रुत मानसमार
भ्य शुद्ध कूटविनिर्मितम् । सप्त
खण्डमयंवाद्यंकथितंतदिहोच्यते
॥ द्रुतमानत्वात्प्रतितालेयथा ।
तत्ततततततक्कितक्किदिदधि
गनथोधिगनथोधिक्कधिक्धिक्क
धिक्कधिक्नगिनगमिथोथोधिधि
धि : दांदांधिक्कथोथोथोहथोह
नञिथोनञिथोथोहथोहङे ढिङे
ढिथोहथोहतटितटितटुकगेंगेंध
गिधगितततधे ततधेततगिञो
अञोथोगथोगथोंथोगगथोगथोतत्ता
ता । इतिसप्तपदान्याहु . कथित वा
द्यपण्डितै : । प्रतितालेमतालेन
पादवर्णसमासत : ॥ गन्धर्वपति
नापूर्वमूर्वशीलास्यनर्त्तने । सुध
मरिक्षमार्थंस्वकथित प्रकटीकृतम्
॥ ॥ प्रहरणं यथा । थोगक्का
'तद्धिकाथागकटगगेंदंथोगदिद्
धिकधिक्कदिकटे ञ । इत्यें कता
ल्यांप्रहरणम् ॥ ॥ वाद्यंविमुच्य
तेयेनछन्दनंतन्निगद्यते । यथा ।

वाद्यम्

तदृधिधोदिमटीअतन्न : । इति
च्छन्दनम् ॥ ॥ कलासीविकलास
सटाकलीचार्द्धटाकली । जीला
टाकलिकाचैव गोमुद्रीमुरजस्तथा
। अलावुजवाद्य ञ्च च्छवाद्यम् ।
मर्द्दलस्वयोरद्याङ्गुलवामसुखोहाद
शाङ्गुलदक्षिणमुख. । मुरजस्त्वष्टा
दशांगुलवामसुख ' समदशांगुलद
क्षिणमुख : । मर्द्दलमुरजयोरयमे
द ॥ ॥ घनयथा । अनुरक्त विर
क्तञ्चद्विविधघनवाद्यकम् । गीता
नुगमनुरक्त विरक्ततालसंश्रयम् ॥ कर
ताल ' कांस्यवलोजयघण्टोथशुक्ति
का । कम्बिकापटवाद्यञ्चपट्टा
तोघस्वघर्षरम् ॥ भाञ्भातालस्य
मञ्जीरकर्त्तयुङ्घुरदृष्यपि । वाद्यै
वैमुनीन्द्रै पकथिताघनसञ्ज्ञका : ॥
अयोशाङ्गुलव्यामौशुद्धकांस्यवि
निर्मितौ । मध्यसुखौस्तनाकारौत
न्मध्ये रज्जुगुम्फितौ ॥ पद्मिनीपत्र
सदृशौकराभ्यारज्जुयन्त्रितौ । कर
तालावुभौवाद्यौपाटिभिर्नटकैरि
ति ॥ यद्वाअयोदशयवव्यामवक्रय
वोन्मितम् । यवपञ्चकगम्भीरमध्ये
चयवसप्तकम् ॥ विमृतवर्त्तुलनि
स्त्रंयवत्रयमित ततः । पृष्ठतोमध्य
देशेचशिवलिंगसमाकृतिम् ॥ च
च्छलपैष्टीनिर्दिष्टशुद्धकांस्यवि
निर्मितम् । स रक्ताङ्गुलिसुखि

वाद्यम्

गधसुदीर्घं मधुरध्वनिम् ॥ घनानि
सावितरक्त दृढ शुष्कमनोहरम् ।
काश्मीरादिसमुद्भूत तालमाहुर्मनी
षिण : ॥ सुनादंदक्षिण ताल ततो
हीनञ्च वामकम । कुर्वीततद्द्व
यकार्येतर्ज्न्यङ्गुष्ठयोगत. ॥ वा
महस्तस्थतालस्यमध्यम सन्निनादि-
तम् । तिर्यग्दक्षिणतालस्यपरि
व्य शेनतालयेत् ॥ तालादीवाद्ये
ध्वैबम्नुतदीर्घलघुद्रुते. । इतिक
रतालविशेष ' । कर्त्तरीघनविशे
ष. । ढक्कुरश्चघनविशेषोऽदन्तरेफा
न्तपुंल्लिङ्ग अन्येषांलक्षणविस्तर
भयान्नोक्तम ॥ ॥ रुक्मिण्या : स
त्यभामाया : कालिन्दीमित्रविन्द
यो : । जाम्बवत्यानाग्निजित्याल
क्ष्मणाभद्रयोरपि ॥ कृष्णस्याष्टमहि
षीणापुरीद्वारमहोत्सवे । ततंशुषिर
मानद्ध घनञ्चयुगपज्जना: ॥ अवा
दयन्नसङ्ख्यातमितिपौराणिकी-
श्रुति ' । ततवाद्यन्तुदेवानांगन्ध
र्वाणाञ्चशौषिरम् ॥ आनद्धं
राक्षसानान्तुकिन्नराणांघनंविदु . ।
निजावतारेगोविन्द : सर्वमेवानय
त्क्षितौ ॥ यावन्तिवाद्यभाण्डानि
रामरावणयोर्युधि । तावन्त्योनाभ
वन्सेना:कुरुपाण्डवसङ्गरे ॥ ॥
किञ्च । निलिम्पकुलकम्पनतोम
रैश्चरणौ सुरारिमर्थनात्सुरैश । च

भूत्ततातूर्यैरपिसिंहनादैः साप्यभवदितिकथादर्शात्' ॥ युद्धे सैन्यानांयोऽहङ्काररवः ससिंहनादः । ततास्त्रिभिरेभिश्चतुर्भिर्वाद्यैः समं नासिंहनादैश्चपञ्चशब्दोवाद्यमभूत् । सिंहनादेनसह वाद्यं पञ्चविधं भवतीत्यर्थः ॥ इतिसङ्गीतदामोदरः ॥ शिवागारेभल्लकं अर्कसूर्यागारेचशङ्खकम् । दुर्गागारेवंशीवाद्यं माधुरीञ्चनवादयेत् ॥ भल्लकंकांस्यनिर्मितकरतालम् । इतियोगिनीतन्त्रम् ॥ मत्स्यपुराणेपि । गीतवादित्रनिर्घोषं देवस्याग्रेचकारयेत् । त्रिरिंसं घण्टैढक्कांघण्टांसर्वमौख्येवर्जयेत् ॥ घण्टाभवेदशक्तस्यसर्ववाद्यमयीयतः ॥

वाद्यभाण्डम् । न० वादनीयपात्रे ॥

वाद्यकरः । त्रि० वादित्रकर्त्तरि । बजन्तीतिभाषाप्रसिद्धे ॥

वाधनम् । न० बाधायाम् ॥

वाधुक्यम् । न० विवाहे ॥

वाधूः । पुं० वधिरे ॥

वाध्रीणसः । पुं० खड्गी । गण्डके ॥ वार्ध्रीणसि ॥ पक्षिविशेषे ॥ यथा । रक्तग्रीवोरक्तशिराः श्वेतःपक्षोविहङ्गमः । सर्ववाध्रीणसः प्रोक्तइत्येवानेगमीश्रुतिः ॥

वानम् । न० सूतिकाम्ले । सौवने ॥ कटे ॥ गतौ । गमने ॥ जलस्य स्रुतवातोर्म्याम् ॥ सुरुङ्गायाम् ॥ सौरभे ॥ गोक्षीरजीतक्षीरे ॥ वाजिनागतौ ॥ त्रि० शुष्कफले ॥ शुष्के ॥ वनजे ॥ वनसम्बन्धिनि ॥ वायतिस्म । पै ओवै शोषणे । गत्यर्थाकर्मकेतिक्तः । ओदितश्चेतिनत्वम् ॥ वन्यते । वनुयाचने । घञ् वा ॥

वानप्रस्थः । पुं० मधूकवृक्षे । गुडपुष्पे । किंशुके । पलाशवृक्षे ॥ तृतीयाश्रमे ॥ सचकालीनाख्येव ॥ वनमिवप्रस्थोवनस्यवाप्रस्थः । प्रविशः । वनप्रस्थे वनैकदेशेभवः । तत्रभवः इत्यण् ॥

वानरः । पुं० मर्कटे । कपौ । प्लवङ्गे । शाखामृगे । बन्दर० इ० भा० ॥ वनेभवम् । फलादि० वानम् । अण् । वानंराति । रा० । आतोनुपसर्गेकः ॥ यद्वा । वानम् । वा० । सम्पदादित्वात्क्विप । वा० गमनेपि० नृणाति० वानकम् । नृनये । पचाद्यच् ॥

वानरप्रियः । पुं० क्षीरिवृक्षे ॥

वानराक्षः । पुं० वनच्छागे ॥

वानराघातः । पुं० लोध्रवृक्षे ॥

वानरी । स्त्री० मर्कट्याम् । बांदरी० इ० भा० ॥ वानरस्यस्त्री । ङीष ॥ शूकशिम्ब्याम् ॥ वानरीकृष्णवि

धर्चेष्ट । इतुत्वात् ।

वानरेन्द्र । पुं॰ सुग्रीवे । वानराणामिन्द्र ॥

वानल । पुं॰ बायवे । कालीवाबु इ॰ इ॰ भा॰ ॥

वानस्पत्य : । पुं॰ पुष्पजातफलवृक्षे ॥ वानस्पत्य : फलै पुष्पादित्यमर : ॥ वनस्पति : । पारस्करादित्वात्सुट् । वनस्पतौभव । दित्यदित्या । दित्यपत्युत्तरपदाण्ण्य । वनस्पतिसमूहे । तस्य समूहइत्यर्थे पूर्वेण ण्य ।

वाना । स्त्री॰ वर्त्तिकापक्षिणि ॥

वानायु : । पुं॰ हरिणे ॥ वनवनमुवमयति । अय॰ । बाहुलकादुण् ॥ भारतवर्षस्योत्तरपश्चिमस्थे देशविशेषे ॥ बहुवचनान्त : ॥

वानायुज । पुं॰ हयविशेषे ॥ वनायुषुजात : । सप्तम्यांजनेर्ड : । सएव । प्रज्ञादाण् ॥

वानीर । पुं॰ वेतसे । वञ्जुले ॥ वायति । प्रशोषे शोषणे । क्विप् वांशुष्कमासमन्तान्नीरमस्य ॥

वानीरक : । पुं॰ मुञ्जतृणे ॥

वानीरजम् । न॰ कुष्ठे । कुठइ॰ प्र॰ औषधौ ॥

वानेयम् । न॰ कैवर्त्तीमुस्तके । मोथाख्ये । वनेपानीयेजायते । नद्यादिभ्योढक् ॥

वान्तम् । न॰ उद्गीर्णे ॥ त्रि॰ कृतवमने ॥

वान्ताद : । पुं॰ कुक्कुरे ॥ वान्तमत्ति । अण् ॥

वान्ताशी । त्रि॰ उद्गीर्णाशिनि ॥ पुं॰ शुनि ॥

वान्ति : । स्त्री॰ उल्लेखने । वमने ॥

वान्तिकृत् । पु॰ मदनद्रुमे । मयनफल॰ इ॰ भा॰ प्र॰ ॥ वान्ति करोति । डुकृञ्॰ । क्विप् । तुक् ॥

वान्तिदा । स्त्री॰ कटुक्याम् ॥

वान्या । स्त्री॰ वनसमूहे ॥

वाप । पुं॰ क्षेत्रे ॥ उप्यतेस्मिन् । डुवप् घञ् ॥ वपने ॥

वापक : । त्रि॰ वपनकारयितरि ॥

वापदण्ड: । पु॰ तन्तुवायदण्डे । वेमनि ॥ वपनम् । डुवप्॰ । घञ् । वापस्यदण्ड ॥

वापि । स्त्री॰ वापिकायाम् ॥ उप्यतेपद्मादयस्याम् । डुवप्बीजसन्ताने । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्यइञ् ॥ भावे इञ्॰ वपादिभ्यइतीञ् वा ॥

वापिका । स्त्री॰ वाप्याम् ॥

वापित : । त्रि॰ मुण्डिते ॥ बीजाकृते । उप्तकृष्टे ॥ न॰ धान्यविशेषे । वीयाधान॰ इ॰ भा॰ ॥ वापितंगृह्य तद्धान्यकिञ्चिद्बीजमवापित ॥

वापी । स्त्री॰ दीर्घिकायाम् ॥ वद्धसो

पानकूपे ॥ पाषाणैरिष्टिकाभिर्वा बद्धकूपाद्बृहत्तरा । ससोपानाभवेद्वापीप्राहुः शास्त्रविशारदाः ॥ प परिभाषेनद्द्रोणदशगुणावापीति । यथा । नव्यवर्द्धमानधृतीवशिष्ठः । शतेनधनुर्भिः पुष्करिणी० त्रिभिः शतैर्दीर्घिका० चतुर्भिर्द्रोणः पञ्चभिस्तडागः द्रोणाद्दशगुणावावापी । तेनचतुर्दिक्षु पञ्चत्रिंशद्धस्तान्यूनतायाद्वादशशतहस्तान्तरान्यूनत्वेनदीर्घिका ॥ चतुर्दिक्षुचत्वारिंशद्धस्तान्यूनतायाषोडशशतहस्तान्तरान्यूनत्वेनद्रोणः । चतुर्दिक्षुत्रिंशदधिकशतहस्तान्यूनतायाम्षोडशसहस्रहस्तान्तरान्यूनत्वेनवापीतिजलाशयोत्सर्गतत्त्वम् ॥ योवापीमथवाकूपंदेशेवारिविवर्ज्जिते । खानयेत्सदिवंयातिविन्दौविन्दौशतंसमा. ॥ तज्जलगुणास्तु । वाप्यगुरुकटुक्षारंपित्तलकफवातजित्० इ० ॥ उप्यतेपद्मादिकमत्राम् । डुवप० । वसिवपौत्यादिना० इञ् । ततः कृदिकारादिपाक्षिकोङीष् ॥ याचायोगान्तरे ॥ यथा । एकान्तरगतेलग्नात्कुभेखेटेऽथवाऽशुभे । वापीयोगस्त्वरिव्रातिमिरौघदिवाकरः ॥

वापीहः । पुं० चातकखगे ॥

वाप्यम् । न० कुष्ठौषधे । पारिभाव्ये ॥ वाप्यांभवम् । दिगादिभ्योयत् ॥ वापीजले ॥ वाप्यवारियदिक्षारपित्तलकृत्कफवातहृत् । तदेवमिष्टमफलकृद्वातपित्तज्वरभवेत् ॥ त्रि० वापीभवे ॥

वाभ्रवी । स्त्री० चण्ड्याम् । दुर्गायाम् ॥ बभ्रोरपत्यंस्त्री । अण् । ङीप् ॥ बभ्रोर्विष्णोरियवा ॥

वाम् । अ० युवामित्यर्थे ॥

वाम । पुं० उमानाथे । हरे ॥ कामदेवे । पयोधरे ॥ न० धने ॥ वास्तूकेे ॥ पुण्यकर्मफले ॥ त्रि० वल्गौ । चारौ । शोभने । पतिसुन्दरे ॥ प्रतीपे । प्रतिकूले ॥ सव्ये ॥ वमति० वम्यतेवा । टुवमउद्गिरणे । ज्वलितिकसन्तेभ्योणः । भावेघञ्वा ॥ यद्वा । वाति । वागतिगन्धनयोः । अर्त्तिस्तुखिति मन् ॥

वामदृक् । स्त्री० वनितायाम् ॥ वामामनोहराहक्दृष्टिर्यस्या सा ॥

वामदेव । पुं० शिवे ॥ वामयति० दुष्टानामदर्मितिवामः । टुवम्० । णिजन्तात्पचाद्यच् । वामश्चासौदेवश्च ॥ लोकविपरीतत्वात्० सुन्दरत्वाद्वावामः । सचासौदेवश्च ॥ ऋषिविशेषे ॥

वामदेव्यम् । न० सामविशेषे ॥ वामदेवेनदृष्टम् । वामदेवात्

ड़ातृड़ी ॥

वामन । पुं॰ अच्युते । हरौ ॥ मन्वन्तरेप्यसम्प्राप्तेतथावैवस्वतेद्विज । वामन: कश्यपाद्विष्णुरदित्यांसम्भूवहेतिविष्णुपुराणम् ॥ अङ्कोठवृक्षे । दक्षिणाशास्थ।दिग्गजे॥ मुमुक्षुभि: सम्भजनीये ॥ त्रि॰ खतिखर्वे । ह्रस्वे । बौना॰ हि॰ भा॰ प्र॰ ॥ खर्वत्त्वाद्वामन वामयति त्याजयतिमदम् । टुवम्॰ । नन्द्यादित्वाल्ल्युः ॥ वामशब्दादस्त्यर्थे पामादित्वान्नो वा ॥ न॰ अयुतवामनाख्यश्लोकसङ्ख्याविशिष्टे महापुराणविशेषे ॥

वामनतीर्थम् । न॰ तीर्थविशेषे ॥ तत्रकौशिकीदेवीतिष्ठति ॥

वामनी: । पु॰ अक्षिस्थे निरञ्जनेपुरुषे ॥ वामानिपुण्यकर्मफलानि॰ पुण्यानुरूपं प्राणिभ्योनयतिप्रापयतीतितथा ॥

वामनी । स्त्री॰ खर्वायांगवि ॥ वमनप्रदौषधिप्रभेदे ॥

वामनेत्रम् । न॰ सव्येचक्षुषि ॥ नेत्रस्राध 'स्फुरणममलतत्सङ्गरेभङ्गहेतुर्नेत्रोपान्तं हरतिनयनं नेत्रमूलेचमृत्यु: । नेत्रस्योर्द्ध्वं हरतिसकलमानसं दु: खजातं वामेचैवफलमविकलंदक्षिणेवैपरीत्यम् ॥

वाममार्ग: । पुं॰ पुन: पुनर्गमनागमनवर्ज्जितेविद्यावतांमार्गे । देवयानाख्येऽर्चिरादिमार्गे शुक्लकृष्णे गतीह्येतेजगत: शाश्वतेमते । एकयायात्यनावृत्तिमन्ययावर्त्तते पुन: ॥ दक्षिणादुत्तम वाममित्युक्तप्रकुलार्णवे ॥ अग्नेनयसुपथेति मन्त्रे॰ सुपथेतिविशेषणा दक्षिणमार्गनिवृत्त्यर्थम्॰ निर्विर्णोऽहदक्षिणेनमार्गेणगतागतलक्षणेन॰ अतो याचेत्वांपुन: पुनर्गमनागमनवर्ज्जितेनशोभनेनपथानयेत्याचार्य्यभाष्यम् ॥

वामलूर: । पु॰ नाकौ । वल्मीके । बांबी॰ हि॰ भा॰ प्र॰ ॥ वामैर्वा मंवा॰ लूयते । लूञ् छेदने । वाहुलकादूरक् ॥

वामलोचना । स्त्री॰ उत्कृष्टस्त्रीविशेषे ॥ वाम: कामोलोचनेयस्या लोचने॰ नेत्रे वा॰ यस्या: यद्वा । वामेसुन्दरेलोचनेचक्षुषीयस्या: ॥

वामशील: । त्रि॰ वक्रस्वभावे ॥ सुन्दरस्वभावे ॥

वामा । स्त्री॰ नार्याम् । वनितायाम् ॥ वमतित्वेचम् । टुवम्॰ ज्वलादित्वाण्णः ॥ यद्वा वाम: कामोऽस्त्यस्या: । अर्श आद्यच् ॥ दुर्गायाम् ॥ वामविकटरूपन्तुविपरीतन्तुगीयते । वामेनसुखदादेवी वामातेनमतावुधै: ॥ पक्षिविशेषे ॥

वामाक्षी । स्त्री० वामलोचनायाम् ॥ वामेमनोहरेअक्षिणीयस्याः । प च् । ङीष् ॥

वामाचार । पुं० देवयानमार्गसाधकेदक्षिणाचारादुत्तमेसदाशिवोक्ताचारविशेषे ॥ वामश्चासावाचारश्च॥

वामापीडन । पुं० पीलुवृक्षे ॥

वामिका । स्त्री० चण्डिकायाम् ॥

वामी । पुं० वामाचारयुक्ते ॥ वामस्य सुन्दरीवादक्षिणादुत्कृष्टत्वादाचार "० सोऽस्यास्ति । अतइनिठनावितीनि " । नतवर्दक्षिणायान्तिनाविश्वासस्तपस्विन " । तत्रञ्चालोके ॥

वामिल । त्रि० दाम्भिके । वामे ॥

वामी । स्त्री० शृगाल्याम् ॥ वडवायाम् ॥ रासभ्याम् ॥ करभ्याम् वामयति । टुवम्०स्वार्थेण्यन्त. । मिताह्रस्वइत्यत्रवेत्यनुवर्त्तनं ह्रस्व ॥ यद्वा । वमत्युग्रमति । अमगत्यादौ । कर्मण्यण् । घञ्वा । गौरादि " ॥

वामोरूः । स्त्री० नारीविशेषे ॥ वामौसुन्दरौऊरूयस्याः " । संहितशफलक्षणवामादेश्च ऊङ् ॥

वायक । पुं० गणे । समूहे ॥ तन्तुवायविशेषे ॥

वायदण्ड. । पुं० वेमनि । वापदण्डे ॥ वयनम् । वेञ्तन्तुसन्ताने । भावेघञ् । आतोयुक् । वायस्यदण्ड ॥

वायनम् । न० व्रतोपायने । प्रहेणके । वायना० इ० भा० प्र० प्पादिद्रव्ये ॥

वायवी । स्त्री० वायुकोणे ॥

वायव्यम् । न० वायुदेवताकहविषि ॥ वायुदेवताकेऽस्त्रविशेषे ॥ वायुर्देवताऽस्य । वाय्वृतुपित्रुषसोयत् । गुणावादेशौ । त्रि० वायुसम्बन्धिदिगादौ ॥ न० षट्शतश्लोकाधिकचतुर्विंशतिसहस्रश्लोकात्मकेमहापुराणविशेषे ॥ वायव्यषट्शतानिचचतुर्विंशतिसङ्ख्यातद्वतिदेवीभागवतोक्तेः ॥

वायस । पुं० अगुरुवृक्षे ॥ श्रीवासे ॥ ध्वाङ्क्षे । काके ॥ वयते । वयगतौ । वयश्चेत्यसच् । णित् ॥ वायससमूहे । तस्यसमूहइत्यण् ॥

वायसविरुतम् । न० शकुनविशेषे ॥

वायसादनी । स्त्री० तेजोवत्याम् ॥ महाज्योतिष्मत्याम् ॥ काकतुण्ड्याम् ॥

वायसारातिः । पुं० पेचके ॥ वायसस्यकाकस्यआरातिः ॥

वायसाह्वा । स्त्री० काकनामनि ॥ काकमाच्या ॥

वायसी । स्त्री० काकोदुम्बरिकाया

म् ॥ काकमाच्याम् । महाज्योतिष्मत्याम् ॥ काकनामनि ॥ काकातुण्डाम् ॥ वायसानामियम् । तस्येदमित्यण् । ङीप् ॥ काक्याम् ॥

वायसेचु । पु० काशि । दृच्गन्धायाम् ॥

वायसोलिका । स्त्री० काकोल्याम् ॥

वायसोली । स्त्री० काकोल्याम् ॥ वायसान्षोलखण्डयति । षोलखिडत् चपि । अन्येष्योपीतिड । शकन्ध्वादि ॥

वायु : । पुं० श्वसने । स्पर्शने । शातरिश्वनि । शब्दतन्मात्रसहितात् स्पर्शतन्मात्रादुत्पन्ने शब्दस्पर्शगुणे सर्वदाचलनस्वभावेरूपरहितस्पर्शवतिमारुते । शरीरान्तर्वाह्यभेदेन वायुर्दशविधोयथा । प्राण ॥ १ ॥ तस्यकर्मवहिर्गमनम् । अपान : ॥ २ ॥ तस्यकर्माधोगमनम् । व्यान : ॥ ३ ॥ तस्यकर्मकुञ्चनप्रसारणादि । समान : ॥ ४ ॥ तस्यकर्माऽशितपीतादीनासमनयनम् । उदान : ॥ ५ ॥ तस्यकर्म०ऊर्द्धनयनम् । उद्गारेनाग ॥ ६ ॥ आख्यात 'कूर्म ॥ ७ ॥ उन्मीलनेस्मृत : । क्षुकर ॥ ८ ॥ क्षुत्करोज्ञेये देवदत्तो ॥ ९ ॥ विजृम्भणे ॥ नजहातिमृतञ्चापिसर्वव्यापीधनञ्जय : ॥ १० ॥ अन्यदप्युक्तं यथा । द्वितीयं

मारुतोभूतं त्वगध्यात्मञ्चविश्रुता । स्पृष्टव्यमधिभूतञ्चविद्युत्तत्राधिदैवतम् ॥ अस्यगुणायथा । स्पर्शस्त्वगिन्द्रियञ्चापिलघुतास्पन्दनतनो । चेष्टासर्वशरीरस्थवायोरेतेगुणास्मता ॥ अपिच । वायोरनियमस्पर्शोवादस्थानस्वतन्त्रता । बलशैघ्रञ्चमोचञ्चकर्मचेष्टात्मताभव ॥ इ०म०भा०मोक्षधर्मे । अस्यार्थ । अनियमस्पर्श । अनुष्णाशीतस्पर्श : ॥ १ ॥ वादस्थानम्०वागिन्द्रियगोलकानि ॥ २ ॥ स्वतन्त्रता०गमनादौ ॥ ३ ॥ बलम् ॥ ४ ॥ शैघ्रम् ॥ ५ ॥ मोच : सूत्रादे : ॥ ६ ॥ कर्म०उत्क्षेपणादि ॥ ७ ॥ चेष्टा०श्वासप्रश्वासादि ॥ ७ ॥ आत्मता०प्राणरूपेणस्थितिः०धित्वम् ॥ ८ भव जन्ममरणे ॥ १० ॥ इतितट्टीका ॥ न्यायमतेऽस्यगुणादिर्यथा । अपाकजानुष्णाशीतस्पर्शस्तुपवनेमत : । तिर्यग्गमनवानेषज्ञेय स्पर्शादिलिङ्गक ॥ पूर्ववन्नित्यताद्युक्तंदेहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमत . ॥ वायुनिरूपयति० अपाकज इति । अनुष्णाशीतस्पर्शस्तुपृथिव्यामपिसत्त्वात्०अपाकजइति । अपाकजस्पर्शस्यजलादावपिसत्त्वादुक्तम्०अनुष्णाशीतइति । एतेन

वायोर्विजातीयस्पर्शोदर्शित: । तज्जनकतावच्छेदकं वायुत्वमितिभाव:। एषवायु स्पर्शादिलिङ्गक:।वायुर्हिस्पर्शशब्दधृतिकम्पैरनुमीयते। विजातीयस्पर्शेन॰विलक्षणशब्देन॰ तृणादीनांधृत्या॰शाखादीनांकम्पनेनच॰वायोरनुमानात् । तथाच वायुर्नप्रत्यक्ष: । वायुर्नित्योऽनित्योवा॰परमाणुरूपोनित्यस्तदन्योऽनित्य: समवेतश्च । सोऽपित्रिविध शरीरेन्द्रियविषयभेदात् । अत्रशरीरमयोनिज पिशाचादीनाम् । देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रिय त्वक् । तच्च वायवीयम् रूपादिषुमध्ये स्पर्शस्यैव व्यञ्जकत्वात् । अङ्गसङ्गिसलिलशैत्यव्यञ्जकव्यजनवातवत् । विषय दर्शयति॰प्राणादिरितियद्यप्यनित्योवायुश्चतुर्विध: तथापिचातुर्विध्यंप्राणादिना॰ कृत्स्नतमाकारे । तथापिसङ्ख्येपाद्वचनैविध्यमुक्तम् ॰ प्राणस्त्वेकएवहृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च॰नानासंज्ञांलभतइत्यर्थ: ॥ ॥ सप्तवायवोयथा । भूवायुरावहइहप्रवहस्तदूर्द्ध: स्यादुद्वहस्तदनुसंवहस्त्रितश्च । अन्यस्ततोपिसुवह: परिपूर्वकोऽस्माद्बाह्य: परावहइमेपवना: प्रदिष्टाइतिशिरोमणि:



॥ प्रावाहोनिवहश्चैवउद्वह: संवहस्तथा । विवह . प्रवहश्चैवपरिवहस्तथैव च ॥ अन्तरीक्षेचवाह्येतेपृथङ्मार्गविचारिण: । महेन्द्रप्रविभक्ताङ्गामरुत: सप्तकीर्त्तिता: ॥ ॥ वायो: सप्तस्कन्धायथा । वायुस्कन्धा: सप्ततेषामेकैक सप्तसप्तभि: । आमेयादेवावहादिरुपर्युपरिसंस्थिता: ॥ आवहप्रवहानुवहउद्वहइ॰पाठान्तरम् स वहविवहपरावहाभ्यपरिवहेति पाठान्तरम् वर्त्मतिभेदात्सप्तवायो. स्कन्धा: ॥ तथाचपुराणम् । आवाह . प्रवहश्चैवतथाचैवोद्वह: पर: । संवहोविवहश्चैवतदूर्द्ध्वंस्यात्परावह: ॥ तथापरिवहश्चोर्द्ध्वंवायोर्वैसप्तनेमयइति । तेषास्थानानियथा । मध्येभूमेघयोर्वायुरावह: प्रवहस्तत: । मेघभास्करयो: सूर्यशशिनोरुद्वहस्तत: ॥ चन्द्रनक्षत्रगणयो: संवहोविवहस्तत: । नक्षत्रग्रहमध्यस्थोग्रहसप्तर्षिमध्यग: ॥ परावह' परिवह: सप्तर्षिध्रुवमध्यग: ॥ इत्येवंवायव: सप्तवहन्तिभुवनत्रयमिति ॥ वाति । वा॰ । कृवापाजीत्युण् । वातीयुगित्युक् ॥ वायुरायुर्वा वायुर्वायुर्धाता शरीरिणाम् । वायुर्विश्वमिदंसर्वं प्रभुर्वायु: प्रकीर्त्तित: ॥ वाताम

षडलचक्रेषुयथाराजाप्रशस्यते ।
तथाशरीरमध्येपिवायुरेक प्ररोवि
भु : ॥ वायो : पत्नीस्त्रस्तिदेवी ॥
वायुकेतु । पुं॰ चितिकणे । धूली॥
वायुगण्ड । पु॰ अजीर्णे ॥
वायुगुल्म : । ) पुं॰ आवर्त्ते । अम्भसा
वायुगुल्मक )
भ्रमे ॥
वायुग्रस्त । त्रि॰ विचिप्तचित्ते ॥
वायुदारु । पुं॰ व्योमधूमे । मेघे ॥
वायुपुत्र । पु॰ भीमसेने ॥ हनू
मति ॥
वायुफलम् । न॰ शक्रकार्मुके ॥ जल
दोपले ॥
वायुभक्ष्य : पुं॰ सर्पे ॥ त्रि॰ वात
भक्षके ॥
वायुवर्त्म । न॰ ख । नभसि ॥ वायो
वर्त्म ॥
वायुवाह : । पुं॰ धूमे ॥
वायुवाहन । पुं॰ विष्णौ ॥ वहत:
सप्त॰ वावहादीन्वाहयतीतिव्यु
त्पाद्वहोत्यु : ॥
वायुवाहिनी । स्त्री॰ वायुसञ्चारिण्यां
शिरायाम् ॥
वायुष : । पुं॰ मत्स्यविशेषे । काल
वायुरपीना॰ बृ॰ गौ॰ दे॰ भा॰
प्र॰ ॥ वायुषोह रूचोव्योमधुरो
धातुवर्द्धन : ॥
वायुसख : । पुं॰ पावके । वह्नौ ॥

वायो : सखा । राजाह : सखिभ्य
श्च ॥
वायुसखा । पुं॰ अनले ॥ अग्नौ ॥
वायु सखास्येतितथा । टजभा
वाद्नडसाविच्चनङ् ॥
वाय्यस्पदम् । न॰ आकाशे ॥
वा : । न॰ जले ॥ वारयति । वृञो
ण्यन्तात्क्विप् ॥
वार । पु॰ सूर्यादिवासरे ॥ यथा ।
रवि : सोमोमङ्गलश्चबुधोजीव सि
त : शनि । एतेषांनामतोवाराविं
ख्याता : सर्वकर्म्मसु ॥ सितेन्दु
बुधजीवानांवारा : सर्वत्रशोभना :
भानुभूसुतमन्दानांशुभकर्मसुकेष्व
पि ॥ द्वारे ॥ हरे ॥ कुजद्रुमे ॥
निवहे । वृन्दे ॥ अवसरे ॥ अर्णे ॥
वारयति॰ व्रियतेवा । वृञ् । प
चाद्यच् । घञ्वा ॥ यद्वा । वार्यते॰
आच्छाद्यतेऽनेन । वृञश्चुरादेः पु॰
सौतिघ : ॥ स्यन्दने ॥ न॰ मदि
रापात्रे ॥
वारक । पुं॰ अश्वगतौ ॥ अश्वविशे
षे ॥ न॰ कष्टस्थाने ॥ ह्रीवेरे ॥
त्रि॰ कार्य्यनिषेधके ॥ वारयति
वृञ् । ण्वुल् ॥
वारकी । पुं॰ शत्रौ ॥ निषाङ्गे ॥
पर्णाशे ॥ जीवे ॥ पर्णाजीविनि
पयोधौ ॥ वृ॰ मेदिनिकार : ॥
वारकीर : । पुं॰ श्याले ॥ द्वारपालि

घि ॥ वाडवे ॥ यूकायाम् ॥ वेधि
वेधिन्याम् ॥ जलौकायाम् ॥ नी
राजितहये ॥

वारङ्गः । पुं० पक्षिणि ॥

वारङ्गः । पुं० खड्गादिमुष्टौ ॥ वा
र्यते० ध्रियतेऽसा । हञ्० । स्व
ओर्हृद्धिश्चेत्यङ्गच् ॥

वारटम् । न० क्षेत्रे ॥ क्षेत्रसमूहे ॥

वरटा । स्त्री० हंस्याम् ॥

वारण । पुं० मतङ्गजे । गजे ॥
वाणवारे ॥ न० प्रतिषेधे । प्रष्ट
त्तिविघाते ॥ नदेवगुरुविप्राणांदी
यमानन्तुवारयेत् । नचात्मानंप्रशं
सेद्वापरनिन्दाश्चवर्जयेत् ॥ वार
यतिणिजन्तत्वम् । वृञ्‌आवरणे ।
ल्युः ॥

वारणवल्लभा । स्त्री० कदल्याम् ॥

वारणवुसा । स्त्री० कदल्याम् । र
म्भायाम् ॥ वुस्यते । वुसउत्सर्गे ।
इगुपधज्ञाप्रीकिरः कः । वारणा
नांवुसा ॥

वारणसी । स्त्री० वाराणस्याम् । का
श्याम् ॥ वरणातदनस्य० वरान
श्रेष्ठादकम् । तस्यादूरेभवा । अ
दूरभवश्चेत्यण् । वृद्धिः । ङीप्
। पृषोदरादिः ॥

वारप्रवृत्तिः । स्त्री० रेखादेशस्यलोका
नांसूर्यावलोकनसमये ॥ रेखाभूमौ
विभाग्रवृत्तिर्भवति । रेखाभूमि
स्थ० लङ्का सुमेरुपर्वतयोर्मध्यसूत्रग
तोदेश० । यथा । यल्लङ्कोज्जयनीपु
रोपरिकुरुक्षेत्रादिदेशान्स्पृशन्
सूत्रं मेरुगतंबुधैर्निगदितासामध्य
रेखाभुवः । आदौप्रागुदयोऽपरत्रवि
षयेपश्चाद्धिरेखोदयात् स्यात्त
स्मात्क्रियतेतदन्तरभुवखेटैर्व्यृण
स्वंफलम् ॥ इतिसिद्धान्तशिरोमणि
॥ अपिच । रेखोक्तासूर्यसिद्धा
न्ते यथा । रेखामधिकृत्य । राक्ष
सालयदेवौकःशैलयोर्मध्यसूत्रगाः
। रौहितकमवन्तीचतथासन्निहितं
सरः ॥ अस्यार्थः । लङ्कासुमेरुप
र्वतयोर्मध्यसूत्रगादेशारेखासंस्थि
ताः । तान्देशानाह । रौहितक
देशोऽवन्तीदेश० सन्निहित सर. कु
रुक्षेत्रमित्यर्थः । रेखायाः पूर्व
देशे० परदेशेच० यथासङ्ख्यसूर्यो
दयकालात्परकालम्० पूर्वकाल
श्च० वारप्रवृत्तिः स्यादित्यर्थः प
र्येन तदुक्तं भवति० रेखासंस्थदेशस्य
लोकायदासूर्यं पश्यन्ति० तदैवसर्व
देशेवारप्रवृत्तिरित्यर्थः । तत्र० रे
खापूर्वस्थाः सन्निहितत्वादादौ
सूर्यं पश्यन्ति० तदनन्तरं रेखास्थाः
। अतोरेखापूर्वे० सूर्योदयात्पर
वारः । तथारेखास्थैः सूर्ये दृष्टे स
ति । पश्चात् रेखापरस्थाः पश्यन्ति
अतोरेखापरदेशेसूर्योदयात्पूर्ववार

ह्रलर्थ: । तत्कालपरिमाणमा ह । रेखातोयावन्तिदेशान्तरयो रनानि० तत्परिमिताभिर्विघटी भि: पलै: पादहीनाभि: चतु र्थभागहीनाभिर्वारप्रवृत्ति: स्यादि त्यर्थ: । देशान्तरसाधनप्रकारस्तु सूर्यसिद्धान्ते० उक्त: ॥ रामदे वज्ञोप्याह । पादोनरेखापरपूर्व योजनै: पलैर्युतोनास्तिथयोदि नार्द्धत: । जनाधिकास्तद्दिवरोत्र वै: पलैरूनास्तथाधोदिनपप्रवेशन मिति ॥

वारमुख्या । स्त्री० जनै: सत्कृतायां वेश्यायाम् ॥ वारे० वेश्यावृन्दे मु ख्या ॥

वारम्वारम् । अ० पौन: पुन्ये ॥

वारम्वारेण । अ० अजस्रदर्थे ॥

वारयिता । पुं० भर्त्तरि ॥ त्रि० निषे धके ॥

वारवुष: । पुं० वरवुषिनाकृतेयर्थ्ये ॥ कृतेयन्यद्रव्यप् ॥

वारला । स्त्री० गन्धोल्याम् । वरटा याम् ॥ हंसकान्तायाम् ॥

वारलीक: । पुं० वल्वजायाम् । वाव्वृ० हृ० आ० ॥

वारवधू: । स्त्री० वेश्यायाम् ॥ वार स०समूहस्यवधू: साधारणत्वा त् ॥

वारवन्तीयम् । न० सामविशेषे ॥ वा रवन्तशब्दोऽस्मिन्नस्ति । मत्तोच्छ सूत्रसाम्नोरितिच्छ ॥

वारवाण: । पु० न० लोहचर्मणि । कवचे । कञ्चुके । चोलकाकृतिस न्नाहे ॥ वाण वारयति०हणोतिवा । वृञ्० ल्यन्तोवा । कर्मण्यण् । राजदन्तादित्वात्परनिपात: ॥ वारमाच्छादकं वानमस्यवा । पूर्व पदादितिणत्वम् ॥

वारवाणि: । पु०वंशीवादके ॥ उत्तम गायके ॥ धर्माध्यक्षे ॥ संवत्सरे ॥

वारवाणि: । ) स्त्री० वेश्यायाम् ।
वारवाणी । ) शुक्लायाम् । भार्यायाम् ॥

वारविलासिनी । स्त्री० वेश्यायाम् ॥ वारे० जनसमूहे० विलासिनी० विलसनशीला ॥

वारवेला । स्त्री० यामार्द्धविशेषे ॥ यथा । चतु: सप्तद्विपञ्चाष्टत्रिषट् सूर्यादिवारत: । यामार्द्धं वारवेला स्यान्नशुभाशुभकर्मसु ॥ अपिच । कृतम् नियमशरमङ्गलरामसमशुभा स्कराद्यामार्द्धे । प्रभवतिदिवारवे लानशुभाशुभ कार्य करणाय ॥ इति ॥

वारसिद्धा । स्त्री० वासरविशेषैर्नन्दादि तिथौ ॥ यथा । वारेनन्दापूर्व्वदे वार्कि ताञ्ज्रेभद्राविद्याऽऽरेजया० सौ रिक्ता । पूर्णागीर्वाणशवन्द्री

ऽखिलेषुकर्म्मस्वि बन्दोषवत्स्वपिसि द्धा ॥ भीमादिवारेएताएवनेष्टा यथा। सर्वारम्भे भूमिदायादभान्वो र्नन्दा॰गुर्विन्दोश्चभद्राजयार्के । रिक्ताधिष्ण्ये॰ हेलिसूनोश्चपूर्णा॰ स्त्रेयायाम्यागारदा॰कालविद्भिः ॥

वारसुन्दरी । स्त्री॰ वेश्यायाम् । म ञ्जिकायाम् ॥ वारस्यजनतायाः सुन्दरी॰स्त्रीसामान्यत्वात् ॥

वारस्त्री । स्त्री॰ गणिकायाम् । वेश्या याम् ॥ वारस्यवृन्दस्यस्त्री । साधार णत्वात् ॥

वारानिधिः । पुं॰ अम्बुधौ । समु द्रे ॥

वाराणसी । स्त्री॰ विश्वनाथनगर्याम् । काश्याम् । तपस्थल्याम् । महा श्मसाने ॥ अविमुक्ते । आनन्दका नने ॥ मोक्षसुदुर्लभमत्वा॰स सारस्यातिभीषणम् । अश्मनाच रणौहत्वा वाराणस्यांवसेन्नरः ॥ वरणायास्तथाचास्याऽमध्येवाराणसी पुरी । वाराणस्यांमहादेवाज्ज्ञान लब्ध्वाविमुच्यते ॥ वरणासीचन द्यौद्वे पुण्येपापहरेउभे । तयोरन्त र्गतायातुसैषावाराणसीस्मृता ॥ विशेषोऽसिशब्दे द्रष्टव्यः ॥ वरअध तत् अनसवरान: श्रेष्ठोदकाम् । तस्यअदूरेभवा । अदूरभवश्चेत्यण् । आदिवृद्धिः । ङीप् । पूर्वप दात्स ञ्ज्ञायामगकृतिणत्वम् ॥

वाराणसीचेत्रम् । न॰ सिद्धक्षेत्रविशे षे । काश्यां ॥

वाराणसेयः । त्रि॰ वाराणसीभवे ॥ वाराणस्यांजातादिः । नद्यादिभ्यो ढक् ॥

वारासनम् । न॰ जलालये । वाः स दने ॥

वाराहः । पुं॰ महापिण्डीतकवृक्षे ॥ वराहार्थ ॥ वराहएव । अण् ॥ त्रि॰ वराहसम्बन्धिनि ॥ न॰ चतु र्विंशतिसहस्रश्लोकात्मकेमहापुरा णविशेषे ॥ चतुर्विंशतिसाहस्रवारा हं परमाद्भुतमितिभागवतोक्तेः ॥

वाराहकर्णी । } स्त्री॰ अश्वगन्धायाम् ॥<br>वाराहपत्री । }

वाराहाङ्गी । स्त्री॰ दन्तोवृक्षे ॥

वाराही । स्त्री॰ मातृप्रभेदे ॥ योगिनी विशेषे ॥ तीर्थविशेषे वराहदेवस्यशक्ती च्यामापचिणि ॥ विष्वक्सेनप्रियायाम् । वृष्टिभेषजे । गेंठी॰ वृ॰भा॰ ॥ अस्यागुणायथा। वाराहीपित्तला बल्याकट्वीतिक्तारसायनी । आयु शुक्राग्निकृन्मेहकफकुष्ठानिलापहा ॥ वाराहीकन्दसंज्ञस्तुपश्चिमेगृष्टि सञ्ज्ञकः । वाराहीकन्दएवान्यैस्च र्म्मकालुकोमतः ॥ अनूपेसम वेहशेवाराहवद्वसोमवान् ॥ वराह स्येयम्॰प्रियत्वात् । तस्येदमित्यण् ॥

वाराह्या । स्त्री॰ शूकरयाम् ॥ वराहस्यापत्यं स्त्री । यतञ्ञ् । तस्य॰ यजिञोरनाषयोगुरूपोत्तमयो' ष्यङ् गोत्रे॰ इतिष्यङादेश: ॥

वारि: । स्त्री॰ शचि । सरस्वत्याम् । गजबन्धनभूमौ ॥ वन्द्याम् । वारयति॰ वार्यते ऽनयावा । वसिवपियजिराजीतीञ् ॥ न॰ वालके । ह्रीवेरे ॥ अम्बुनि । जले । नीरे ॥ रसोरसेन्द्रियग्राह्यो यस्य गुरुतातथा । सांसिद्धिकद्रवत्वमूत्रशुक्ल वारिगुणास्मृता: ॥

वारिकण्टक: । पु॰ शृङ्गाटके ॥ सिंघाड़ा॰ इ॰ भा॰ ॥

वारिकर्णिका । स्त्री॰ कुम्भिकायाम् । जलमूलिकायाम् ॥

वारिकपूर: । पुं॰ इलिशमत्स्ये ॥

वारिकुब्ज:
वारिकुब्जक: } पुं॰ वारिकण्टके । शृङ्गाटके ॥

वारिक्रिमि: । पुं॰ जलमक्षिकायाम् ॥

वारिचत्वर: पुं॰ कुम्भिकायाम् ॥

वारिचर । पुं॰ मत्स्ये ॥ याद्सामात्रे ॥

वारिचामरम । न॰ शैवले ॥

वारिज: । पुं॰ शङ्खे ॥ शम्बूके ॥ न॰ पद्मे ॥ द्रोणीलवणे ॥ गौरसुवर्णे ॥ लवङ्गे ॥

वारितस्कर: । पुं॰ सूर्ये ॥ मेघे ॥

वारिदा । स्त्री॰ जलमकुम्भ्याम । दाजम्बूके॰ वारिवस्तोमे॰ चलतीतम्बू॰ इ॰ भा॰ यथा । जलचाञ्जलमकुटीकावारोमूर्धकम्परीति हारावली । इत्ये ॥

वारिद: । पुं॰ जलदे । मेघे ॥ मुस्तके ॥ वारिददाति । डुदाञ्॰ । आतोनुपसर्गेक: ॥ न॰ वालायाम् । ह्रीवेरे ॥

वारिधर: । पुं॰ मेघे ॥

वारिधार: । पु॰ अद्रिविशेषे ॥

वारिधारा । स्त्री॰ जलधारायाम् ॥

वारिधि: । पुं॰ समुद्रे । अकूपारे । अर्णवे ॥ वारीणिधीयन्तेऽत्र । डुधाञ्॰ । कर्मण्यधिकरणे चेति॰ कि: ॥

वारिनिधि: । पुं॰ वारिधौ ॥

वारिपथिक: । त्रि॰ जलपथेनागते ॥ जलपथगामिनि ॥ वारिपथेनाहृतम्॰ तेनगच्छतिवा॰ । ठञ् ॥

वारिपर्णिका । स्त्री॰ वारिपर्ण्याम् ॥

वारिपर्णी । स्त्री॰ कुम्भिकायाम् । जलमूल्याम् । वारिपर्णीहिमातिक्तालघ्वीस्वादीसरापटु: । दोषत्रयकरीरूक्षाशोषितज्वरशोफहृत् ॥ वारिणिपर्णान्यस्या: ॥ पाककर्णेतिङीष । यद्वा वारिणिपर्णं । पृ॰ । पाक्कर्णपर्णेतिङीष: । गौरादित्वात्ङीष् ॥

वारिपालिका । स्त्री॰ जलमूल्याम् ॥

वारिप्रवाह : । पुं० निर्झरे । झरे । उत्सान्निर्गतजलप्रवाहे । वारिण. प्रवाह : ॥

वारिप्रश्नी । स्त्री० कुम्भिकायाम् ॥

वारिबदरम् । न० प्राचीनामलके ॥

वारिभवम् । न० स्रोतोञ्जने ॥

वारिमसि : । स्त्री० पायोदे । मेघे ॥

वारिमुक् । पुं० खतमाले । मेघे ॥

वारिमूली । स्त्री० वारिपर्ण्याम् । वारिणिमूलं यस्या : । पाककर्णेति ङीष् ॥

वारिरथ : पुं० नावि । तरिके ॥

वारिराशि : । पुं० समुद्रे ॥

वारिरुहम् । न० कमले । वारिणि रोहति । रुह० । इगुपधेतिक ॥

वारिलोमा । पुं० अप्पतौ । वरुणे ॥

वारिवल्लभा । स्त्री० विदार्याम् ॥

वारिवास : । पु० सुराजीविनि । शौण्डिके ॥

वारिवाह : । पुं० जलदे । मेघे ॥ वारिवहति । वह० । कर्मण्यण् । सुखोयम् ॥

वारिवाहक : । पुं० बलाहके । मेघ ॥ वारिणोवाहक : ॥

वारिवाहन : । पुं० वारिदे ॥

वारिश : पुं० विष्णौ ॥

वारिशिरीषिका । स्त्री० शिरीषिकायाम् ॥

वारिसम्भव : । पुं० [illegible] ॥

न० उशीरे ॥ लवङ्गे ॥ सौवीराञ्जने ॥

वारी । स्त्री० गजबन्धन्याम् । हस्तिशालायाम् ॥ कलस्याम् ॥ वार्यतेऽनया । वृञ्० । ण्यन्त : । वसिवपियजिराजीबीञ् । वह्वादित्वान्ङीष्वा ॥

वारीट : । पुं० गजे । हस्तिनि ॥

वारीश : । पु० समुद्रे ॥

वारु : । पुं० विजयकुञ्जरे ॥

वारुठ : । पु० मञ्चशय्यायाम् ॥

वारुणि : । पुं० वरुणापत्ये ॥ व्यामवरुणेत्यादिनेञ् । अकङादेशश्च ॥

वारुण । पुं० भारतवर्षीयोपद्वीपविशेषे ॥ न० उपपुराणविशे ॥ शतभिषर्क्षे ॥ जले ॥ त्रि० वरुणसम्बन्धिनि ॥

वरुणकर्म । न० जलाशयखननादौ ॥

वारुणव्रतम् । न० नृपतेर्नियमविशेषे ॥ यथा । वरुणेनयथापाशैर्बद्धएवाभिदृश्यते । तथापापान्निगृह्णीयाद्व्रतमेतद्धिवारुणम ॥

वारुणि : । पुं० अगस्त्यमुनौ ॥ वसिष्ठे ॥

वारुणी । स्त्री० गण्डदूर्वायाम् ॥ पश्चिमायाम् । प्रतीच्यांदिशि ॥ इन्द्रवारुण्याम ॥ दूर्वायाम् । शतभिषानक्षत्रे ॥ तिथिविशेषे ॥ यथा । [illegible]

यथोदृष्टौ । गङ्गायांयदिलभ्येतसू र्य्यग्रहशते समा ॥ वरुण • शतभि षा ॥ इयमेवशनिवारयुक्ताचेन्महा वारुणीतिशुभयोगयुताचेन्महाम हावारुणीतिसंज्ञालभते । यथा । शनिवारसमायुक्तासमहावारुणी- स्मृता । गङ्गायांयदिलभ्येतकोटिसू र्य्यग्रहैः समा ॥ शुभयोगसमायुक्ता शनौशतभिषायदि । महामहेति ख्यिताताविकोटिकुलमुद्धरेत् ॥ सुराधिदेवतायाम् । प्रथमाभिमा निन्यांमहत्यांदेवतायाम् ॥ मन्त्रो वारुणीतिश्रुतेः ॥ ६ ॥ अन्नमय्यां सुरायाम । पेष्याम् ॥ पुनर्नवा- शालिपिष्टैर्विहितावारुणीस्मृता । सहितेस्तालखर्जूररसैर्यासापिवारु णी ॥ सुरावद्वारुणीलघ्वीपीनसा ध्मानशूलनुत् ॥ वरुणप्रेरितवृ न्दावनस्थकदम्बतरुकोटरनि : सृतायांबलदेवपीतवारुण्याम ॥ यथा । पराशरउवाच । वनेविचर तस्तस्यसहगोपैर्महात्मनः । मा नुषच्छद्मरूपस्यशेषस्यधरणीभृत निष्पादितोरुकार्य्यस्यकार्य्येणोर्वी- विचारिणः । उपभोगार्थमत्यर्थंव रुण प्राहवारुणीम् ॥ अभीष्टा- सर्वदायस्यमदिरेत्वमहौजस । अ नन्तस्योपभोगायतस्यगच्छमुदेशुभे ॥ इत्युक्तावारुणीतेनसन्निधानमथाक

रोत्वृन्दावनवनोत्पन्नकदम्बतरुको टरे ॥ विचरन्बलदेवोऽपिमदिराग न्धमुत्तमम् । आघ्रायमदिरातर्षम वापाथपुरातनम् ॥ ततः कदम्बात् सहसामद्यधारासलाङ्गली । पतन्तीं वीक्ष्यमैत्रेयप्रययौपरमांमुदम् ॥ प पौचगोपगोपीभिः समवेतोमुदा न्वितः । उपगीयमानोललितं गीतवाद्यविशारदैः ॥ इतिविष्णु पुराणेपञ्चमांशे २५ अध्याय ॥ अ न्याहाधिकारिणः प्रतिश्रोसद्दाश्वि नः । सम्यग्विधिविधानेनस सगाहितचेतसा । पिबन्तिमदिरांम र्त्याअमर्त्याएवतेक्षितौ ॥ इयन्तु वा रुणीदेवीनिपीताविधिवर्ज्जिता । नृ णांविनाशयेत्सर्वंबुद्धिमायुर्यशोध नमितिकुलार्णवसेतु ॥ कुलार्ण वेपिनिसङ्गोनिर्भयोधीरोनिर्लज्जो निष्कुतूहल । निर्णीतवेदशास्त्रा र्थोऽरदावारुणींपिबेदिति ॥ वरुण स्येयम् । तस्येदमित्यण् । ङीप ॥

वारुणीवल्लभः । पुं • वरुणे • वारु णीवल्लभायस्य सः ।

वारुण्ड । पुं • फणिनांराज्ञि । पुं • न • सेकपात्रे । नौस्थजलनिस्सा रणभाजवे । नेत्रमले ॥ कर्णमले ॥

वारुण्डी । स्त्री • द्वारपिण्डाम् ॥

वारूढ : । पुं • वज्राम्बले ॥ कपाटे ॥ अर्गले ॥ पञ्जरे ॥ शम्बले ॥

इतिमेदिनिकरः ॥

वारेन्द्र . । त्रि० वरेन्द्राजाते । भवा ॥

वरेन्द्री । स्त्री० देशविशेषे । राजसा ही० इतिगौडदेशभाषाप्रसिद्धे ॥

वार्द्धम् । न० वने ॥ वृक्षाणांसमूहः । तस्यसमूहइत्यण् ॥ त्रि० वृक्षसम्बन्धिनि ॥

वार्क्षदुर्गम् । न० वृक्षैः समन्ताद्वेष्टितेपुरेपुराद्बहिः सर्वतोयोजनमात्रं व्याप्यतिष्ठतिमहावृक्षकण्टकिगुल्मलताद्याचितोराज्ञोवासस्थाने ॥

वार्क्षी । स्त्री० स्त्रीविशेषे । इतिमहाभारतम् ॥

वार्त्तम् । न० पद्मे ॥

वार्णव : । त्रि० वर्णदेशजे । कच्छादयण् ॥

वार्णिक : । त्रि० लेखके ॥

वार्त्तम् । न० निस्सारे ॥ आरोग्ये । पाटवे । स्वास्थ्ये ॥ त्रि० वृत्तिमति । वृत्तिशालिनि ॥ नीरोगे ॥ वृत्तिरस्त्यस्य । वृत्तेर्वेतिण ॥

वार्त्तक . । पुं० पक्षिविशेषे । बटेर इ० भा० । वर्त्तके ॥ न० वर्त्तकानांगणे ॥ वर्त्तकानांसमूह : । तस्यसमूहइत्यण् ॥

वार्त्ता । स्त्री० वर्त्तने ॥ वात्तिङ्गने ॥ वार्त्ताकयाम् ॥ कृष्यादीवृत्तौ ॥ यथा । कृषिवाणिज्यातद्वद्वतीयं पशुपालनम् । विद्यादेतामहाभागवार्त्तांवृत्तिवयाश्रया ॥ चतुर्विधापिसाप्रोक्ताकृषानपितरंप्रति । कृषिवाणिज्यागोरक्षाकुसीदन्तुर्यमुच्यतेइति ॥ जनश्रुतौ ॥ उदन्ते ॥ वृत्तान्ते ॥ वृत्तिर्जीवनृत्तम् । तदस्त्यस्याम् । वृत्तेर्वेतिवार्त्तिकेन० ण . ॥ दुर्गायाम् ॥ यथा । पश्वादिपालनाद्देवीकृषिकर्मानिकारणात् । वर्त्तनाधारणाद्वापिवार्त्तासाएवगीयते ॥

वर्त्तांक : । पुं० वार्त्ताकी ॥ वातिङ्गणे । बनभण्टा० इतिख्याते ॥ वार्त्तमारोग्यमाकयति । अककुटिलायाङ्गतौ । अन्त : कर्मण्यण् ॥ वार्त्तफलाभकयवका ॥ वार्त्तक पक्षिणि ॥

वार्त्ताकी । स्त्री० हिंगुल्याम् । भण्टाक्यम् ॥ आतेरितिङीष् । वृहत्याम् ॥ वातिङ्गणे । बनभण्टा० इतिभा० ॥

वार्त्ताकु : । स्त्री० हिंगुल्याम् । भण्टाक्याम् । वृन्ताके । अस्यागुणायथा । अग्निप्रदामारुतनाशिनीच शक्रप्रदाशोणितवर्द्धिनीच । हृद्यासकासारुचिनाशिनीचवार्त्ताकुरेषागुणसप्रयुक्ता ॥ सामाक्षावपवातघ्नीमेवासक्तापित्तला । सदाफलानिदोषघ्नीरक्तपित्तप्रसादनी ।

अङ्गारपक्वावार्त्ताकु . किञ्चित्पित्त करीमता । कफमेदोऽनिलहरासरा लघुतरापरा॥ पुंलिङ्गोपीतिचिन्ता गडशेष ' ॥ वर्त्तते । वृतु० । वृतेर्वृ द्धिश्चेतिकाकु ' ॥ बाहुलकादुक्ता स्त्वात्स्वे वार्त्ताकमपि ॥

वार्त्तायन : । पुं० हेरिके । गूढपुरुषे । प्रवृत्तिज्ञे । प्रणिधौ । चरे ॥ वृत्तिहेमचन्द्र : ॥

वार्त्तावह : । पुं० कृषिवाणिज्यादि जीवे । वैश्यधिके ॥ वार्त्तायाव ह . ॥

वार्त्ताहारी । पुं० चारे । यथार्हव र्णे ॥

वार्त्तिक : । पुं० वर्त्तिके । बटेर० हि० भा० ॥ वार्त्तिकोमधुरोवृष्य : शीतश्चकफपित्तनुत् ॥ वार्त्तावे॥ चरे । स्पशे ॥ ग्रन्थे । न० उक्ताऽ नुक्तदुरुक्तार्थव्यञ्जकसङ्ग्रहे ॥ उक्ता नुक्तदुरुक्तार्थचिन्ताकारितुवार्त्तिक मितिहेमचन्द्र . ॥ वृत्तिमधीते० वेद वा । उक्थादित्त्व ठक् ॥ वृत्तौसाधुर्वा ' कथादिभ्यष्ठक् ॥

वार्त्तिका । स्त्री० वर्त्तिकायाम् । विषाणिकायाम् । बटेर० हि० भा० ॥ वर्त्तिकेतिशारावली ॥

वार्त्रघ्न : । पुं० पार्थे । अर्जुने ॥ वृ त्रघ्नोऽपत्यम् । अण् ॥ अयम्लचि० हलपसम्बन्धिनि ॥

वार्दल । पु० मेलानन्दायाम् ॥ न० दुर्द्दिने । बादला० हि० भा० ॥ मसाम् ।

वार्द्धकम् । न० वृद्धसङ्घाते ॥ वृ द्धानासमूह । वृद्धाच्चेतिवक्त व्यमितिवुञ् ॥ वृद्धस्यभावकर्म णो ' । वृद्धत्वे । यौवनात्पराव स्थायाम् ॥ यथा । तिथिवर्षमत बाल्य चिंशद्वर्षन्तुयौवनम् । मु ख्य गौण द्विधाभिन्न वार्द्धकन्तुतत . परम् ॥ वृद्धस्यकर्म्मभावोवा । मनोज्ञादित्त्वाद्वुञ् ॥ वार्द्धकेतप आतिष्ठेदितिशास्त्रोदित वच ' ॥

वार्द्धक्यम् । न० वृद्धत्वे । वार्द्धके ॥ वृद्धसङ्घाते ॥ वार्द्धकमेव । चतु र्वर्णादित्त्वात्० स्वार्थेष्यञ् ॥

वार्द्धि : । पु० समुद्रे ॥ वारीणिधीय न्तेऽत्र । कर्मण्यधिकरणे चेतिधा अ : कि : ॥

वार्द्धिभवम् । न० द्रोणीलवणे ॥ ❋

वार्द्धुषि । चि० वृद्ध्याजीवे ॥ वृद्ध्य र्थंद्रव्य वृद्धि ' तत्प्रयच्छति । प्रयच्छतीतिगर्ह्यमितिठक् । वृ द्धेर्वृधुषिभाव : ॥ पृषोदरादि त्वात्लोप ' ॥

वार्द्धुषिक । त्रि० कुसीदिके । वृद्ध्याजीवे । वार्द्धुषी । वहुरा० हि० भा० ॥ तल्लक्षणंयथा । समर्घंधा न्यमादायमहार्घंय : प्रयच्छति ।

सवै वार्द्धुषिकोनाम हव्यकव्यवहिष्कृत । इत्यवृद्धिग्रहणनियमो यथा । अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शतात् । द्विकं शतं वा गृह्णीयात्सतांधर्ममनुस्मरन् ॥ द्विकं शतम्वागृह्णानोनभवत्यर्थकिल्विषीति । शतस्याशीतितमो भागं वि शतिपणा ' । द्विकं पुराणद्वयम् । एव विध नियममतिक्रम्य अनापदि॰ स्वयमन्यद्वारावासाच्छन्दोनयोव्यवहरतितस्यैवप्रायश्चित्तम् । आपदितुस्वयङ्करणे॰ नियमातिक्रमेपनदोष : । इतिप्रायश्चित्तविवेक ॥ वृद्ध्यर्थं द्रव्यवृद्धि । तांप्रयच्छति । प्रयच्छतिगर्ह्यमितिठक् । वृद्धेर्वृधुषिभावोवक्तव्य : ॥

वार्द्धुष्यम् । न॰ धान्यवर्द्धने ॥

वार्धेयम् । न॰ द्रोणीलवणे ॥

वार्द्ध्रम । न॰ स्त्री॰ चर्म्मणि ॥ वध्र्यूद्भूदम् । चर्मणोऽन् वि॰ वर्ध्रस्यविकारे । तस्यविकारइत्यण् ॥

वार्ध्री । स्त्री॰ चर्मरज्ज्वाम् । वधी॰ इ॰ भा॰ । वाध्रीन्॰ङीष् ॥

वार्ध्रीणस : । पुं॰ वाध्रीणसे । छागविशेषे ॥ यथा । त्रिपिबन्त्विन्द्रियक्षीणं श्वेत वृद्धमजापतिम् । वार्ध्रीणसमितिप्राहुर्याज्ञिका. पितृकर्मणीतिनिगमे । एकचरे । गण्डके । गौंडा॰इ॰भा॰ ॥ पक्षिविशेषे । यथा । नीलग्रीवोरक्तशीर्ष : कृष्णपाद सितच्छद : । वार्ध्रीणस : स्यातृपक्षीशोममविष्णोरतिप्रिय ' । रोहितसातुमक्त्यस्यमांसैर्वार्ध्रीणसस्यच । तृप्तिमाप्नोतिवर्षाणां शतानिचीणिमत्प्रिया ॥ महिषाणाञ्चखड्गानांरुधिरै : शतवार्षिकीम् । तृप्तिमाप्नोतिपरमांशार्दूलरुधिरैस्तथा ॥ इतिकालिकापुराणे ६६ ऽध्याय : । वार्ध्रीवनासिकाऽस्य । अत्रनासिकायाइत्यच्॰ नसादेशश्च । पूर्वपदात्दितिणत्त्वम् ॥

वार्भट ' । पुं॰ नक्र । कुम्भीरे । वारिजलि॰भट : ॥

वार्म्मणम् । न॰ वर्मसमूहे ॥ वर्मणां समूह । भिक्षादिभ्योण् ॥

वार्म्मिणम् । न॰ वर्मिणासमूहे ॥

वार्मुक् । पुं॰ अम्भोदे । मेघे ॥ वा . मुञ्चति । मुच्लृ॰ । क्विप् ॥

वार्य्य . । पु॰ ऋत्त्विजि ॥ व्रियते । हङ्सम्भक्तौ । ण्यत् । क्यप्तु॰इड्जुषएव । —॰— ॥

वार्य्य . । त्रि॰ वरणीये ॥ वारिसम्बन्धिनि ॥

वार्य्युद्भवम् । न॰ पद्मे । त्रि॰जलजे ।

वारीशि : । पुं॰ समुद्रे । इतिपुराणम् ॥

वाव्वट ' । पुं॰ वहित्रे ॥

वार्ष्वणा । स्त्री० वर्वणायां ॥

वार्षकम् । न० सुश्रुतकृतपृथिवीद्वभागान्तर्गतभागविशेषे ॥

वार्षगण्य । पुं० पतञ्जलौ ॥ वृषगणस्यगोत्रापत्यम् । गर्गादित्वाद्यञ् ॥

वार्षभाणवी । स्त्री० वृषभाणुकन्यायाम् । श्रीराधायाम् ॥ यथापरात्पर . कृष्णस्तथैव वार्षभाणवीति पद्मपुराणम् ॥

वार्षलम् । न० वृषलकर्मणि ॥ यथा । नकदाचनकुर्वीतब्राह्मणः कर्म वार्षलम् । वृषल . कर्मचत्रास्य पतनीयेष्विति तयो : ॥

वार्षिकम् । न० त्रायमाणायाम् । वलभद्रिकायाम् ॥ वृष्टिजले ॥ यथा । वार्षिकं तदृहवृष्टं भूमिष्ठमहित जलम् । विरावमुषित ततु प्रसन्नमस्तोपमप ॥ त्रि० वर्षाभवे ॥ वर्षासुभवम् । जातम् ० साधु वा । वर्षाभ्यष्ठक । ठ थक ॥ वर्षभवे वात्सरिके । वर्षासम्बन्धिनि ॥ यथा । वार्षिकाश्चतुरोमासा दुर्गमा : पथिसर्वदा । तस्मादेकत्र विबुधै : स्थातव्य मितिनिश्चय : ॥ षष्टोमासांस्तुप्रवसेत्सदाकार्यवशाद्विज . । वर्षाकालेनगन्तव्य प्रवासिसुखमिच्छता तिभागवते नारद . ॥

वार्षिकी । स्त्री० त्रायमाणायादमेधौ ॥ वैलङ्ग० प्र० पुष्पविशेषे ॥ यथा । श्रीपद्मेषट्पदानन्दावार्षिकीमञ्जवल्लभेतिभावप्रकाश । वार्षिकीशीतलालघ्वीतिक्तादोषत्रयापहा । कर्णाक्षिमुखरोगघ्नी ० तत्तैलतद्गुणमुत्तमम् ॥ इतिच ॥ वर्षकर्तव्यपूजादौ ॥ वर्षासुभवा । ठक् । ङीप् । कालाट्ठञ्वा ॥

वार्षिला । स्त्री० करकायाम ॥

वार्ष्णेय । त्रि० वृष्णिवंशोद्भवे ॥

वार्हतम् । न० वृहतीफले ॥ वृहत्याफलम् । प्लक्षादिभ्योण् बिल्वादिगणसमध्यात्तस्यफलेनलुक् ॥

वार्हद्रथ । वार्हद्रथि । पुं० ) नृपे ॥ वृहद्रथस्यापत्यम् । अण् इञ् वा ॥

वार्हस्पत्य . । पुं० नास्तिके ॥ यथा । स्याद्वादवाद्यार्हत स्या० शून्यवादीतुसौगत । नैयायिकस्त्वक्षपादो० योग साङ्ख्यस्तुकापिल वैशेषिक स्यादौलूक्यो० वार्हस्पत्यस्तुनास्तिक . । चार्वाकोलौकायतिकश्चैतेषडपितार्किका . ॥ मैत्रेये ॥ कश्याञ्चिद्विद्यायामेव योवृहस्पते . शिष्य ॥ न० नीतिशास्त्रे ॥ वृहस्पतिदेवताके त्रि० वृहस्पतिसम्बन्धिनि ॥ वृहस्पतिर्देवताऽस्य० वृहस्पतेरिदंवा । दित्य

दित्यादित्यपत्युत्तरपदाख्य ' ॥

वालक । पुं० न० पारिहार्ये ॥ त्रि० अङ्गुरीयके ॥ वालकोऽस्त्रीपारिहार्ये० त्रिपुस्यादङ्गुरीयके । इ०मेदिनि ' ॥ बालके ॥

वालव : । पुं० द्वितीयकरणे । तत्र जातस्य फलं यथा । कार्यस्य कर्तास्वजनस्य भर्तासिनाप्रणेता कुलशीलयुक्त ' । उदारबुद्धिर्बलवान्मनुष्य स्याद्वालवाख्ये जननं प्रियस्य ॥

वाल्कम् । न० क्षौमादिवस्त्रे ॥ त्रि० वल्कभवे ॥ वल्कस्य वल्कलस्य० विकार : । तस्य विकार इत्यण् ॥

वाल्कलम् । त्रि० वल्कलनिर्मिते ॥ वल्कलस्येदम् । अण् ।

वाल्कली । स्त्री० मदिरायाम् ॥

वाल्मिकि ।
वाल्मीक : । पुं० } कविश्रेष्ठे ॥
वाल्मीकि ।

प्राचेतसे भृगुवंशीय मुनिविशेषे ॥

वाव । अ० अवधारणार्थे ॥ प्रसिद्धौ ॥

वावदूक ' । त्रि० वाचोयुक्तिपटौ । वाग्मिनि । वक्तरि ॥ कुर्वादिषु आवदूकशब्दपाठसामर्थ्यादिदेतक ॥ यद्वा पुन पुनरतिशयेन वा वदति० इति० वदेर्यङन्तात्० उलूकादयश्चेत्यूक ' ॥

वावय : । पुं० तुलसीविशेषे । वावुद्र०

इ० भा० ॥ इतिशब्दचन्द्रिका ॥

वावृत ' । त्रि० कृतवरणे । वृते । वृते । स्वयंवरादिना स्त्रीकृतवरादौ ॥ वावृत्यते स्म । वावृतु वर्त्तने । क्त ॥

वाशा । स्त्री० वासके ॥ वाश्यते । वाशृ शब्दे । गुरोश्चेत्य ' । टाप् ॥

वाशि । पुं० छेदनसाधने । कुठारप्रभेदे ॥ वह्नौ ॥ वाश्यते । वाशृ० । वसिवपीत्यादिना इञ् ॥

वाशिका । स्त्री० वासके ॥ वाश्यते । वाशृ० । गुरोश्च हलइत्य : टाप् । क ' । यद्वा । उश्यते । वश कान्तौ । सञ्ज्ञायामित्यनेन० ण्वुल् ।

वाशितम् । न० पशुपक्ष्यादिशब्दे ॥ वाशनम । वाशृ० भावे क्त ॥

वाशिनायनि : । पुं० वाशिनोऽपत्ये ॥ उदीचां वृद्धादगोत्रादिति० फिञ् दाण्डिनायनेति० इति निपातनात् ॥

वाशिष्ठ । त्रि० वशिष्ठसम्बन्धिनि ॥

वाशिष्ठी । स्त्री० । गोमत्याख्यायाम् " ॥ तीर्थविशेषे ॥ यत्रैव कपिककुल्या तीर्थम् ॥ वशिष्ठसम्बन्धिन्याम ॥

वाशुर : । पुं० गर्द्दभे ॥ वाश्यते । वाशृ० । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥

वाशुरा । स्त्री० रात्रौ ॥ वाश्यन्तेऽस्याम् । वाशृ० । मन्दिवाशी

ष्युरच् । टाप् ॥

वाश्र . । पु॰ दिवसे ॥ शकुनौ ॥ रासभे ॥ न॰ मन्दिरे । चतुष्पथे ॥ वाश्यते । वाशृ॰ । स्फायितञ्चिव ञ्चीत्यादिना - रक् ।

वाष्पः । पु॰ न॰ नेत्रजले । भाफइ॰ भा॰ प्र॰ ॥ ऊष्मणि ॥ वायति । ओवै शोषणे॰ वातिवा । वागच्छा दौ । खष्पशिल्पशष्पवाष्परूपपर्प तल्पा . इतिसाधु । बाधतेर्वा मितिवा । बाधते : षोनिपातना त् ॥ लोहे ॥ इतिमेदिनीकार : ॥

वाष्पक । पु॰ मारिषे । यथा । मा रिषोवाष्पकोमार्ष स्ततोरक्तश्चस स्मृत . ॥

वाष्पका । स्त्री॰ हिङ्गुपत्र्याम् ॥

वाष्पायमाण . । त्रि॰ वाष्पमुद्गमति ॥

वाष्पिका । स्त्री॰ हिङ्गुपत्र्याम् । कार व्याम् ॥ वाष्पमिव इवेप्रतिकृता विति कन् ॥

वाष्पी । स्त्री॰ वाष्पिकायाम् ॥

वाष्पीका । स्त्री॰ त्वक्पत्र्याम् । वाष्पि कायाम् । रांधुनी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ वाष्पमिव । कन् । टाप् । पृषोदरादि ॥

वास : । पु॰ वेश्मनि ॥ अवस्थाने ॥ वासके ॥ वसन्त्यत्र । वसनिवासे । वसंतिघञ् ॥ लघ्वादिविक रि॰ । ऽ॰ ॥

वासकोष . । पु॰ वस्त्रपेटके ॥

वासक । पु॰ वैद्यमातरि । वृषे । अटरूषे । सिंहास्ये । वासा॰ वासू टी॰ इ॰ भा॰ प्र॰ वृत्ते ॥ अस्य गुणायथा । वासकोवातकृत्स्वर्य कफपित्तास्त्रनाशन । तिक्तस्तुवर कोहृद्योलघु . शीतस्तृडर्त्तिहृत् ॥ श्वासकासज्वरच्छर्दिमेहकुष्ठक्षया पह, ॥ गानाङ्गविशेषे ॥ त्रि॰ गन्ध कृति ॥ वासयति । ण्वुल ॥ यद्दा । वस्त्र॰ आच्छादयति । वसआ च्छादने । ण्वुल् ॥

वासकर्णी । स्त्री॰ यज्ञशालाया म् ॥

वासकसज्जा । स्त्री॰ स्वीयादिनायिका भेदे ॥ अद्यमेप्रियवासर . ॰ इत्य निश्चित्य॰या॰ सुरतसामग्रींसज्जी करोतिसा॰ वासकसज्जा । वास कोवासर : ॥

वासका । स्त्री॰ वासकवृक्षे ॥

वासगृहम् । न॰ गर्भागारे । गृहमध्य भागे ॥ शयनगृहे ॥ स्थितिगेहे ॥ वासाय॰ वासस्य वागृहम् ॥

वासतेयी । स्त्री॰ रात्रौ ॥ वसनम्॰ वसति . वसतौसाधु : । पथ्यति थिवसतिस्वपतेर्ढञ् ॥

वासनम् । न॰ धूपने ॥ वारिधान्या म् ॥ वस्त्रे ॥ निक्षेपाधारे ॥ वासे ॥ ज्ञाने ॥ त्रि॰ वसनेनक्रीते ॥

शतमानविंशतिका सहस्रवत्सरानद्या ॥

वासना । स्त्री॰ प्रत्याशायाम् ॥ ज्ञाने ॥ देहात्मबुद्धिजन्यमिथ्यासंस्कारे । दुर्गायाम् ॥ यथा । वसत्यहष्टा सर्वेषु भूतेष्वन्तर्हिताय च । धातुर्वसनिवासितो वासना तेन सा स्मृतेति ॥ स्मृतिहेतौ । संस्कारे । भावनायाम् ॥ धर्माधर्मरूपे जीवगतसंस्कारविशेषे ॥ वासना द्विविधा । मलिना॰ शुद्धा च । शुद्धा॰ दैवीसम्पत्॰ शास्त्रसंस्कारप्राबल्यात् तत्त्वज्ञानसाधनत्वेनैकरूपैव । मलिना तु॰ त्रिविधा । लोकवासना॰ शास्त्रवासना॰ देहवासना चेति । सर्वे जना यथा न निन्दन्ति॰ तथैवाचरिष्यामीति॰ अशक्यार्थाभिनिवेशो लोकवासना । तस्याश्च लोकमाराधयितुम् समर्थः इति न्यायेन॰ सम्पादयितुमशक्यत्वात्॰ पुरुषार्थानुपयोगित्वाच्च मलिनत्वम् । शास्त्रवासना तु॰ त्रिविधा । पाठव्यसनम्॰ बहुशास्त्रव्यसनम्॰ अनुष्ठानव्यसनञ्चेति । क्रमेण॰ भरद्वाजस्य॰ दुर्वाससो॰ निदाघस्य च प्रसिद्धा । मलिनत्वञ्चास्याः क्लेशावहत्वात्॰ पुरुषार्थानुपयोगित्वात्॰ दर्पहेतुत्वात्॰ जन्महेतुत्वाच्च । देहवासनापि त्रिविधा । आत्मत्वभ्रान्ति॰ गुणाधानभ्रान्ति॰ दोषापनयनभ्रान्तिश्चेति । तत्रात्मत्वभ्रान्तिर्विरोचनादिषु प्रसिद्धा॰ सार्वलौकिकी । गुणाधानं द्विविधम्॰ लौकिकं॰ शास्त्रीयञ्च । समीचीनशब्दादिविषयसम्पादनम् लौकिकम्॰ गङ्गास्नानशालग्रामतीर्थादिसम्पादनं शास्त्रीयम् । दोषापनयनमपि द्विविधम्॰ लौकिकं॰ शास्त्रीयञ्च । चिकित्सकोक्तैरौषधैर्व्याध्याद्यपनयनं लौकिकं॰ स्नानाचमनादिभिरशौचाद्यपनयनं वैदिकम् एतस्याश्च सर्वप्रकाराया मलिनत्वम्॰ अप्रामाणिकत्वात्॰ अशक्यत्वात्॰ पुरुषार्थानुपयोगित्वात्॰ पुनर्जन्महेतुत्वाच्च शास्त्रप्रसिद्धम् । तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेन प्रतिभासमानमपि॰ विविदिषोर्वेदनोत्पत्तिविरोधित्वात्॰ विदुषो ज्ञाननिष्ठाविरोधित्वाच्च॰ विवेकिभिर्हेयम् । तदेवं बाह्यविषयवासना॰ त्रिविधा निरूपिता । अभ्यन्तरवासना तु॰ कामक्रोधदम्भदर्पाद्यासुरसम्पद्रूपा सर्वानर्थमूलं मानसी वासनेत्युच्यते । तदेवं बाह्याभ्यन्तरवासनाचतुष्टयस्य॰ शुद्धवासनया त्यागः सम्पादनीयो विवेकिभिः ॥ अत्र विशेष

॥ शुभाशुभाभ्यांमार्गाभ्यांवहन्तीवा
सनासरित् । पौरुषेणप्रयत्नेनयोज
नीयाशुभेपथि ॥ अशुभेषुसमाविष्ट
शुभेष्वेवावतारयेत् । स्वमनः पुरु
षार्थेनबलेनबलिनांवर ॥ अशुभा
च्चालितं यातिशुभं तस्मादपीतरत्
। अन्तोश्चित्तशिशुस्तस्मात्
तच्चालयेद्बलात् ॥ अपिच । वास
नानापरित्यागेयदियत्नकरोष्यलम्
। तत्तेशिथिलतांयान्तिसर्वाधिव्या
धयः क्षणात् । पौरुषेणप्रयत्नेन
बलात्सन्त्यज्यवासनाः । स्थिति
बध्नासिचेत्तर्हिपदमासादयस्यल
मिति ॥

वासनाक्षय · । पुं· वासनानाशे ॥
यथा । पूर्वापरपरामर्शमन्तरेण·
सहसोत्पद्यमानस्यक्रोधादिवृत्तिवि
शेषस्य· हेतुश्चित्तगत · संस्कार
विशेषोवासना । पूर्वपूर्वाभ्यासेन·
चित्तेवास्यमानत्वात् । तस्याः
क्षयोनाम· विवेकजन्यायांचित्तप्र
शमवासनायांदृढायांसत्यपिवाह्ये
निमित्तेक्रोधाद्यनुत्पत्तिः । तत्र·
तत्त्वज्ञानेसति· मिथ्याभूतेजगति
· नरविषाणादाविव· धीवृत्त्यनुद
यात् · आत्मनश्चद्रष्टृत्वेन· पुनर्वृ
त्त्यनुपयोगात · निरिन्धनाग्निवन्
मनोनश्यति· नष्टेचमनसि· संस्का
राद्बोधकस्यबाह्यस्यनिमित्तस्याऽप्र

तिपत्तौ· वासनाक्षीयते । एवं
क्षीयमाणायांवासनायां· हेत्वभावे
नक्रोधादिवृत्त्यनुदयात् मनोनश्य
ति· नष्टेचमनसि· शमदमादिसम्प
त्त्या· तत्त्वज्ञानमुदेति· एवमुत्पन्ने
तत्त्वज्ञाने · रागद्वेषादिरूपावासना
क्षीयते· क्षीणायाञ्चवासनायाप्रति
बन्धाभावात् तत्त्वज्ञानोदय इति
परस्परत्वदर्शनीयम् ॥ वासनाया
क्षय ॥

वासनाक्षयाभ्यास । पुं· वासनाक्ष
यस्याभ्यासे ॥ यथा । दृश्यासम्भव
बोधेनरागद्वेषादितानवे · । रति
र्घनोदितायासौब्रह्माभ्यासः सउ
च्यते ॥

वासनात्याग : । पुं· पूर्वसंस्कारो
पेक्षायाम् ॥ वासनायाः त्या
गः ॥

वासनापरित्याग · । पुं· मनोनिग्रह
स्योपायविशेषे ॥ यस्तु· विद्यामदा
दिदुर्वासनयापीड्यमानोनसाधून
नुवर्त्तितुमुत्सहते· तस्यविवेकेन
वासनापरित्यागएवोपायः ॥ वास
नायाः परित्यागः ॥

वासनिक । पु· निवासे । मार्गे
निवासे ॥

वासन्त । पुं· परपुष्टे । कोकिले ॥
करभे । उष्ट्रे ॥ विटे ॥ मुद्गे ॥
कृष्णमुद्गे ॥ मदनवृक्षे ॥ त्रि· वस

ह्निते ॥ वसन्तोत्सवे ॥ वसन्ते भव सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥

वासन्तक । त्रि० वसन्तसम्बन्धिनि ॥

वासन्तिक । पु० विदूषके । केलिकिले । त्रि० वसन्तोत्सवे ॥ वसन्तसहचरिताध्ययनवति ॥ वसन्तमधीते वेद वा । वसन्तादिभ्यष्ठक् ॥

वासन्ती । स्त्री० लताविशेषे । माधव्याम् ॥ यूथ्याम् ॥ पाटलायाम् ॥ स्मरोत्सवे । चैत्रावल्याम् । मधूत्सवे । गणिकायाम् ॥ पुष्पलताविशेषे । प्रहसन्त्याम् । वसन्तजायाम् । नवमल्लिकायाम् । वेवारा० निवारी० इ० प्र० पुष्पवृक्षविशेषे ॥ यथा । नेपालीकथिता तज्ज्ञैः सप्तलानवमालिका । वासन्ती शीतला लघ्वी तिक्ता दोषत्रयापहा ॥ वसन्ते पुष्प्यति । काला त् साधुपुष्प्यत् पच्यमानेष्विण् ॥ शर्करीच्छन्दः १४ प्रभेदे ॥ तल्लक्षण यथा । मात्ती नोगौ यदिगदिता वासन्तीयम् । यथा । भाम्यद्भृङ्गीनिर्भरमधुरालापोद्गीते श्रीखण्डाद्रेरनुपवनैर्मन्दान्दोला । लीलालोलापल्लवविलसद्वल्लीवासैः कंसारातेर्नृत्यति सहसी वासन्तीयम् ॥ वासन्तीदुर्गापूजाप्रमाणं यथा । चैत्रे मासि सिते पक्षे सप्तम्यादि दिनत्रये । पूजयेद्विधिवद्दुर्गां दशम्यां तु विसर्जयेत् ॥ अपि च । श्रीनारायण उवाच । पुरा स्तुता सा गोलोके कृष्णेन परमात्मना । सम्पूज्य मधुमासे च प्रीतेन रासमण्डले ॥ मधुकैटभयोर्युद्धे द्वितीये विष्णुना पुरा । तत्रैव काले सा दुर्गा ब्रह्मणा प्राणसङ्कटे ॥ इति ब्रह्मवैवर्ते प्रकृतिखण्डे ६२ अध्याय ॥

वासयोग । पुं० चूर्णायाम् । पाटवासादिभेदे । गन्धचूर्णे ॥ वासि सुगन्धीकरणे योगउपाय: ॥

वासर । पुं० न० अह्नि । दिने ॥ रागप्रभेदे ॥ वासयति वसतेर्ण्यन्तात् अर्त्तिकमिभ्रमीत्यादिनाऽर: ॥

वासरच्छवि: । स्त्री० प्रकाशे । आतपे ॥

वासव: । पुं० इन्द्रे । मरुत्वति । मघोनि । देवाधिपतौ ॥ वसुदेवानामध्येभगवतो विभूति ॥ वसवो देवा: वसुनिरत्नानि वा अस्य सन्ति । ज्योत्स्नादित्वादण् ॥ वासो रपत्य वा ॥ देव्यानां वासवानि । वासतियम्यमयो । भ्यांतोनुपसर्गेक: । त्रि० वसुदेवताके । सास्य देवतेत्यण् ॥ वसुधन्वाल्लायिक: प्रत्ययाण् वा ॥

वासवदत्ता । स्त्री० गद्यरूपे० आख्यायिकाग्रन्थविशेषे ॥ वासवदत्तामधिकृत्यकृता० आख्यायिका । वृद्धाच्छ . । तस्यलुक् ॥

वासवानुज . । पुं० उपेन्द्रे ॥ वासवस्यअनुजः ॥

वासवी । स्त्री० व्यासमातरि । सत्यवत्याम् । दासेय्याम् । उपरिचरस्वसोर्वीर्य्याज्जातायाम् ॥ वसोरापत्यम् । अण् । ङीप् ॥ इन्द्राण्याम् ॥

वासवेयः । पु० व्यासे । पाराशर्ये ॥ वासव्याअपत्यम् । स्त्रीभ्योढक् ॥

वास । न० वस्त्रे ॥ वस्यतेऽनेनवा० वस्ते शरीरंवा । वसआच्छादने । वसेर्णिदित्यसुन् ॥

वाससज्जा । स्त्री० नायिकाप्रभेदे ॥

वासा । स्त्री० अटरूषे । वासके ॥ वासायांविद्यमानायामाशायांजीवितस्यच । रक्तपित्तक्षयीकासीकिमर्थमवसीदति ॥ वासयति । वसनिवासे । ण्यन्तः । पचाद्यच् ॥

वासागारम् । न० भोगगृहे । कन्याटे ॥ वासस्यआगारम् ॥

वासिः । पुं० कुठारभेदे । छेदनसाधने । वसूला० इ० भा० ॥ वाश्नातीनामिवकरणानांकाष्ठव्यापारत्व नियमादितिवैशेषिकाः ॥ वसति० वस्तेवा । वसनिवासे० आच्छादनेवा । वसिवपियजीत्यादिना० इञ् ॥

वासिका । स्त्री० वासके । वासैव । स्वार्थेकन् । प्रत्ययस्थादितीत्वम ॥

वासितम् । न० रुते । खगाऽऽरावे ॥ ज्ञानमात्रे । त्रि० सुरभीकृते । धूपितव्यञ्जनादौ । भाविते ॥ वस्त्रच्छन्ने ॥ वाससेव्य । वासञ्छेदना दौ । चुरादि क्त । वासउपमेवायामवा ॥ ख्याते ॥

वासिता । स्त्री० करिण्याम ॥ नार्य्याम् ॥ वासयति । वसनिवासे० ण्यन्तः । वासुसेवायामवा । क्तः । टाप् ॥

वासिनी । स्त्री० सितभिण्ट्याम् ॥

वासिष्ठः । पुं० वसिष्ठापत्ये ॥ अण्यण् । बहुत्वे० वसिष्ठाः ॥ न० रुधिरे ॥ उपपुराणविशेषे ॥ वसिष्ठकर्तृकेयोगशास्त्रादौ ॥ त्रि० वसिष्ठसम्बन्धिनि ॥

वासी । स्त्री० तक्षण्याम् । वसूली० इ० भा० प्र० ॥

वासुः । पुं० विष्णौ । नारायणे ॥ वसतिसर्वभूतेषु जीवरूपेणात्मर्या मिरूपेणवा० वासयतिसर्वाणिभूतानिस्वात्मनिवा । वस० । वाहुलका

दुण् ॥ पुनर्वसौ ॥ विश्वरूपे ॥
वासुकि : । पुं० अहिराजे । सर्पराजे । सर्पजातिभेदानांमध्ये० भगवतोविभूतौ ॥ वसु रत्नंकेमूर्द्धि यस्य । वसुकायतिवा । कै शब्दे । आतोनुपसर्गेक : । वसुकस्यापत्यम् । अतइञ् ॥
वासुकेय : । पुं० अहिराजे ॥
वासुकेयस्वसा । स्त्री० विषहर्याम् । मनसादेव्याम् ॥ आस्तीकस्यमुनेर्माताभगिनीवासुकेस्तथा । जरत्कारुमुने ' पत्नी मनसादेविनमोस्तुते ॥
वासुदेव . । पुं० चित्ताधिष्ठातरि । विष्णौ । नारायणे । वृष्णीनांमध्ये० वसुदेवपुत्रत्वेनप्रसिद्धे०ऽर्जुनोपदेष्टरिभगवद्विभूतौ ॥ तस्येश्वरस्यापिविभूत्वन्त : पाठस्तंनरूपेणचिन्तनार्थ : । एवरामादावप्यवगन्तव्यम् ॥ वसुदेवस्यापत्यम् । ऋष्यन्धकेत्यण् ॥ यद्वा । वसतीति वासु : । वस० बाहुलकादुण् । वासुश्चासौदेवश्च ॥ विष्णुपुराणे नामव्युत्पत्तिर्यथा । सर्वत्रासौसमस्तञ्चवसत्यत्रेतिवैयत । ततोमौ वासुदेवेतिविद्वद्भि : परिगीयते ॥ इतिविष्णुपुराणम् ॥ यद्वा । वस आच्छादयति० स्वमायया आवृणोतिजगदितिवासु : । वसेरौणादिकउ । अन्येषामपिहश्यतइतिवसुशब्दाकारस्यदीर्घ : । बाहुलकादुण्प्रत्ययोवा । दीव्यतिप्रकाशतइति देव : वासुश्चासौदेवश्च ॥ छादयामिजगत्सर्वंभूत्वासूर्यइवांशुभिरितिमोक्षधर्मेभारतम् ॥ सवर्णस्वयथा । दक्षिणेतुकरेचक्रमधस्तात्पद्ममेवच । वामेशङ्खगदाधस्ताद्वासुदेवस्यलक्षणमित्यग्निपुराणम् ॥
वासुदेवप्रियङ्करी । स्त्री० शतावर्याम् ॥ श्रीकृष्णप्रियकारिण्याम् ॥
वासुदेववरीयसी । स्त्री० शतावर्याम्
वासुपूज्य . । पुं० जिनविशेषे ॥
वासुभद्र : । पुं० श्रीकृष्णे ॥
वासुरा । स्त्री० वासितायाम् । रात्रौ ॥ भुवि । वासतेयभूमौ ॥
वासू : । स्त्री० नाव्योक्त्याबालायाम् ॥ वाश्यते० स्वरट्टे । वसेर्ण्यन्ताद्बाहुलकादूः ॥
वासौक : । न० शयनास्पदे । वासमन्दिरे ॥
वास्तवम् । न० परमार्थभूते । परमात्मनि ॥ वस्त्वेव । स्वार्थेऽण् ॥ जीवे ॥ वस्तुनोंऽशत्वात् ॥ मायायाम ॥ वस्तुन: शक्तित्वात् ॥ जगति वस्तुन : कार्यत्वात् ॥
वास्तविक : । त्रि० परमार्थभूतेवस्तुनि ॥
वास्तव्य : । त्रि० वस्तरि । वासकर्त

रि ॥ वसति । वस० । वसेस्तव्यत् कर्त्तरिणिच्चेतितव्यत् ॥ वासयो ग्ये ॥ पु० वसतौ ॥

वास्तु । न० वास्तुकशाके । वास्तूके ॥ पुं० न० पुर्याम् ॥ सीम्नि ॥ सुरङ्गायाम ॥ गृहार्थभूमौ । वेश्मभूमौ ॥ वसन्त्यत्र । वसनिवासे । वसेस्तुन् । अगारेणिच्च ॥ पु० दैत्यविशेषे ॥ जलाशयगृहारामसेतुसङ्क्रमशालिनाम् । देवतानांप्रतिष्ठायांवास्तुदैत्यं प्रपूजयेत् ॥ अनर्चयित्वा यो वास्तु कुर्यात्कर्माणिमानव । विघ्नं तस्यचरेद्वास्तु . परिवारगणैः सहेतिनिर्णयामृतम् ॥ अपिच । मारीभयेरोगभयेडाकिन्यादिभयेतथा । औत्पातिकेपत्यदोषेव्यालिरक्षाभये पिचेति ॥ ध्यात्वाचपूजयेद्वास्तु सर्वशान्तिस्ततो भवेदित्युक्त ॥

वास्तुकम् । न० वास्तूकशाके । वथु वा० कू० भा० प्र० ॥ यथास्यगुणा । लघुदीर्घपत्रभेदाद्वास्तुकद्वितयं मतम् । वास्तुकद्वितयस्वादुक्षारंपाकेकटूदितम ॥ दीपनंपाचनंरुच्य लघु शुक्रबलप्रदम् । सरंप्लीहास्रपित्ताशं . क्रिमिदोषत्रयापहम ॥ वास्तोभवम् । धन्यात्मादित्वाट्ठञ् । इसुसुक्तान्तात्कः ॥

वास्तुकी । स्त्री० चिल्लीशाके । क्षुद्रवास्तुके ॥

वास्तुपुरुष । पुं० वास्तुरक्षसि ॥ पूर्वमासीन्महद्भूतंसर्वभूतभयङ्करम् । तद्देवैर्निहतंभूमौसवास्तुपुरुषस्मृत . ॥

वास्तुविद्या । स्त्री० वास्तुविधानशास्त्रे ॥ पथ्यवाराहीमन्यत्रच ॥

वास्तूकम् । न० वास्तुके । वथुवा० इ० प्र० शाके ॥ वसतिर्देहेचिरम्० गुणावाऽस्मिन्वसन्ति । वस० । उलूकादयश्चेतिसाधु ॥

वास्तेयम् । त्रि० वस्तिसदृशे ॥ वस्तिरिव । वस्तेढञ् । ङीपि० वास्तेयी ॥

वास्तोष्पति : । पु० सुरपतौ । वलारातौ । इन्द्रे ॥ वास्तोर्गृहस्येवस्य० पतिरधिष्ठाता । वास्तोष्पतिगृहमेधाच्छचेतिनिपातनाद्लुक् ० षत्वं च त्ययेषि । इयः परत्वात् ० कस्कादिषुचेतिषत्वम ॥ देवे ॥

वास्तोष्पतीयम् । न० वास्तोष्पतये० हविषि ॥ वास्तोष्पतिर्देवताऽस्य । द्यावापृथिवीत्यादिनाछ . ॥

वास्तोष्पत्यम् । न० वास्तोष्पतीये । वास्तोष्पतिर्देवताऽस्य । द्यावापृथिवीत्यादिनायत् ॥

वास्त्र . । त्रि० वस्त्रावृतरथे ॥ वस्त्रेणपरिवृतोरथ परिवृतोरथइत्यण् ।

वास्थ । त्रि० जलस्थे ॥

वाहिकः। पुं॰ ढक्कायाम्॥ गोवा हि। मकटादौ॥

वाहितः। त्रि॰ लङ्घिते॥

वाहित्थम्। न॰ हस्तिकुम्भाधोभागे॥ कुम्भोऽत्रवातकुम्भः। वाहित्थं वा यत्कुम्भाधइतिभागुरिः। सचललाटाधोभागः। अवश्यवहति। वह॰। आवश्यकेणिनिः। सतिष्ठत्यत्र। घञर्थेकः। पृषोदरादित्वात्साधुः॥

वाहिनी। स्त्री॰ तरङ्गिण्याम्। सैन्याम्॥ सेनायाम्॥ सेनाविशेषे। त्रिगुणगणेषु॥ यथा। इभाः ८१। रथाः८१। अश्वाः २४३। पदातयः ४०५। एतत्परिमाणपरिमितायाःसेनायामित्यर्थः। समस्तसङ्ख्या ८१०॥ वहति। वह॰। ग्रह्यादित्वात्णिनिः॥ वाहाःसन्त्यस्यांवा। इनिः॥

वाहिनीपतिः। पुं॰ सेनापतौ। सेनान्याम्॥ समुद्रे॥ वाहिन्याः सेनायाः॰ वाहिनीनांनदीनांवा पतिः॥

वाहीकः। पुं॰ देशविशेषे॥ अस्ति पञ्जाबी जाट॰ अट्ट॰ इ॰ भा॰ प्र॰ जातौ॥ यथोक्तंकर्णपर्वणि २०॰ अध्याये। तत्रत्व पुरातनी कथा। कश्चिद्॰ द्विजोत्तमः। वाहीकदेशंमद्रांश्चकुत्सयन्वाक्यमब्रवीत्॥ पञ्चानांसिन्धुषष्ठानामन्तरं येसमाश्रिताः। तान्धर्मबाह्यानशुचीन्वाहीकान्परिवर्जयेत्॥ शाकलंनामनगरमापगानामनिम्नगा। जर्त्तिकानामवाहीकास्तेषांवृत्तंसुनिन्दितमिति॥ शतद्रुर्विपाशैरावतीवितस्ताचन्द्रभागेतिपञ्चनद्यः सिन्धुः षष्ठः तन्मध्यदेशोवाहीकइतिव्याख्यातारः॥ म्लेच्छप्रभेदे॥ गवि॥ वाहो॥ वहति। वह॰। बलीकादित्वात्कीकन्॰ वहतेर्वृद्धिश्च॥ त्रि॰ वाह्ये॥ प्राग्दीव्यतीयेष्वर्थेषु॰ ईकक्चेतिवार्तिकेन॰ ईकक्॰ वहिष्टिलोपश्च॥ वाहीकाः॰ पुं॰ भूम्नि॰ देशविशेषे। टक्कनामसु॥ वाहीकाष्टक्कनामानोवाह्लीकावह्लिकाश्चयाइतिहेमचन्द्रः॥

वाहुवारः। पुं॰ श्लेष्मातके। वहुवारे॥

वाह्यम्। न॰ याने। युग्ये। पत्रे। वाहने। धुर्ये॥ त्रि॰ वहनीये। बलीवर्दादौ॥ वहिरर्थे॥ वहिर्भवे॥ वाहयितुंयोग्यः। वहेर्ण्यत्॥ वहिर्भवोवा। वहिष्टिलोपोयञ्चेतियञ्॥

वाह्यप्रपञ्चः। पुं॰ आन्तरप्रपञ्चातिरिक्ते॥ सयथा। पृथिव्यादिपञ्चभूतजन्यब्रह्माण्ड तदन्तर्भूतोप॰

र्य्युपरि विद्यमानभूर्भुवः स्वर्महर्ज
नस्तपः सत्यनामका धोधोविद्यमा
नातलवितलसुतलतलातलमहात
लरसातलपातालनामकाश्चतुर्द्दशभु
वनतन्निष्ठजरायुजाण्डजस्वेदजोद्भि
ज्जचतुर्विधभूतग्रामसमुदायोयथा
योग्य विविधनाम रूपगुणधर्म्मश
क्त्याश्रयो० बाह्यप्रपञ्च ॥ *

बाह्यमानः । त्रि० पृष्ठेनोह्यमाने ॥

बाह्यवृत्तिः । पुं० श्रोत्रवागादौ ॥

बाह्यास्तित्ववादः । पुं० बौद्धैकदे
शिनांवादे ॥ तथथा । समुदायोऽ
णुसम्भूतोबाह्योभूम्यापगादिक
। आन्तरः स्कन्धजश्चित्तचैत्यरूपश्च
सौगत ॥ मृदम्बुवह्निवायूनां
खरस्निग्धोष्णचञ्चला । चतुर्द्धा
णव पञ्चस्कन्धारूपादिभेदतः ॥
रूपशब्दादयस्तेषाव्यक्तिर्विज्ञानमु-
च्यते । वेदनासुखदुःखेस्त संज्ञा
डित्थादिनामयत् ॥ संस्कारोवास
नाचैवमुक्तलक्षणयात्मकम् । ज
गत्प्रस्यक्षत . सिद्धक्रिमन्यपरिक
ल्पनैरिति ॥ नायवादोयुक्तिसहः
। यतः । यथा । स्थिरचेतनराहि
त्यात्स्वपञ्चाचेतनस्वतः । नस्क
न्धानामणूनाञ्चासमुदायोबयुज्यते ॥

बाह्येन्द्रियम् । न० श्रोत्रत्वक्चक्षुर्जि
ह्वाघ्राणेषु ॥ वाक्पाणिपादपा
यूपस्थेषु ॥

बाह्येन्द्रियविषयम् । न० श्रोत्रादिवि
षयेषु ॥ यथाहु । बुद्धीन्द्रिया
णितेषांपञ्चविशेषाविशेषविषयाणि
। वागभवतिशब्दविषयाशेषाणितुप
ञ्चविषयाणि ॥ अस्यार्थ । तेषांद
शानामिन्द्रियाणांमध्ये० पञ्च० वि
शेषाविशेषविषयाणि० विशेषाः०
स्थूला शब्दादयः शान्ताघोरामू
ढाः पृथिव्यादिरूपा ० अविशेषाः
तन्मात्राणि० सूक्ष्माः शब्दादय.
। तन्मात्रग्रहणेन० स्थूलभूतभा
वमपाकरोति० विशेषाश्चअविशे-
षाश्चविशेषाविशेषा ० तएवविषया
येषाबुद्धीन्द्रियाणातानि० तथो
क्तानि । तत्रोर्द्ध्वरेतसांयोगिनां
चश्रोत्रम्० शब्दतन्मात्रविषयस्थू
लशब्दविषयञ्च० अस्मदादीना
न्तुस्थूलविषयमेव । एवं तेषान्त्व
क्० स्थूलसूक्ष्मस्पर्शविषया० अ
स्मदादीनान्तुस्थूलस्पर्शविषयैव ।
एवंचक्षुरादयोपि० तेषामस्मदा
दीनाञ्चरूपादिषुस्थूलेषुद्रष्टव्या
एवं कर्मेन्द्रियेषुमध्ये० वागभव
तिशब्दविषया० स्थूलशब्दविषया०
तद्धेतुत्वात्० नतुशब्दतन्मात्रस्यहे
तु ० तस्याहङ्कारकार्यत्वेन० वा
गिन्द्रियेणसहैककारणत्वात् । शेषा
णितुचत्वारि० पाणिपादपायूप
स्थानि० पञ्चविषयाणि० पाण्य

ग्राहार्योपपटादीनापञ्चशब्दा-
ग्रात्मकत्वात् ॥

वह्निः । पुं॰ अश्वयोनौदेशविशेषे ॥

वाह्लिकः । पुं॰ वाह्लीकदेशे ॥ वा
ह्लीकदेशोत्पन्नेऽश्वे ॥ न॰ धीरे ।
कुङ्कुमे ॥ हिङ्गुनि ॥ वह्लिकदेशे
भवः । वीपधादिव्यण् ॥

वाह्लिजः । पुं॰ वाह्लिदेशोत्पन्नेतु
रगे ॥

वाह्लीकः । पुं॰ वलख॰ इ॰ भा॰
प्र॰ देशविशेषे ॥ यथोक्तंशक्तिस
ङ्गमे । काम्बोजदेशमारभ्यमहा
म्लेच्छात्पूर्वके । वाह्लीकदेशोदे
वेशिअश्वोत्पत्तिपरायणः ॥ तद्दे
शोत्पन्नाश्वे ॥ न॰ हिङ्गुनि ॥ धी
रे । कुङ्कुमे ॥ उच्यते॰ वहतिवा ।
वहप्रापणे । अलीकादयश्चेतिसा
धु ॥ यद्वा॰ वह्लति । वह्लप्राधान्ये ।
बाहुलकादीकन् ॥ त्रि॰ वह्लीकदेशो
द्भवे ॥ वह्लीकदेशभवः कच्छादिभ्य
श्चेत्यण् ॥ पुं॰ गन्धर्वविशेषे ॥

वि । अ॰ निग्रहे ॥ नियोगे ॥ पदपूर
णे ॥ निश्चये ॥ सहने ॥ हेतौ ॥
अव्याप्तौ ॥ विनियोगे ॥ ईषदर्थे ॥
परिभवे ॥ शुद्धावलम्बने ॥ वि
भागे ॥ श्रेष्ठे ॥ अतीते ॥ विग
ते ॥ विशेषे ॥ गतौ ॥ आलम्भे ॥
पालने ॥ नानार्थे ॥ गते ॥ वि
रुद्धे ॥

वि । पुं॰ स्त्री॰ पक्षिणि । वातिति
गन्धनयोः । वातेर्डिच्चेतीण् ॥

विंश । त्रि॰ विंशते पूरणे विंश
तितमे ॥ तस्यपूरणेडट् ॥

विंशकः । त्रि॰ विंशती ॥ विंशत्या
क्रीते ॥ विंशतित्रिंशद्भ्यांड्वुन्न
सञ्ज्ञायाम् । तिविंशतेर्डितीति-
लोप ॥

विंशति । स्त्री॰ सङ्ख्याविशेषे ।
एकाऽधिकोनविंशती ॥ सङ्ख्या
र्थे॰एकद्विबहुवचनान्त । सङ्-
ख्येये॰एकवचनान्त । यथा । वि
शत्याद्याः सदैकत्वे सर्वाः सं-
ङ्ख्येयसङ्ख्ययोः । सङ्ख्या
र्थेद्विबहुत्वेस्तास्तासुचानवतिः स्त्रि
यः ॥ द्वौदशतौपरिमाणमस्य ।
पङ्क्तिविंशतीतिनिपातनात्॰प्रकृ
तेर्विन्भावः शतिप्रत्ययश्च ॥

विंशतिकः । त्रि॰ विंशत्याक्रीतम्
त्याद्यर्थे ॥ विंशतित्रिंशद्भ्यांड्वुन्नसं
ज्ञायामित्यत्रयोगविभागात्कन् ॥

विंशतितमः । त्रि॰ विंशे ॥ विंश
ते पूरणः ॥ तस्यपूरणेडट् ।
विंशत्यादिभ्यस्तमडन्यतरस्याम्॰
इतिडटस्तमडागमः ॥

विंशी । पुं॰ विंशती ॥

विक्रम् । न॰ सद्यः प्रसूतायाः गोः
क्षीरे ॥ यथा । क्षीरसद्यः प्रसूता
याः पेयूषः पालनविक्रमितिशब्द

चन्द्रिका ॥

विकङ्कट । पुं॰ गोक्षुरे ॥ इतिशब्दमाला ॥

विकङ्कत । पुं॰ स्वादुकण्टके । स्रुवावृक्षे । ग्रन्थिले । व्याघ्रपादि । कटुफले । वङ्क च॰ कु॰ गो॰ दे॰ भा॰ प्र॰ ॥ विकङ्कते । कङ्किगतौ । अतच् प्रत्ययः ॥ विकङ्कतफलं पक्वं मधुरं सर्वदोषजित् ॥

विकङ्कता । स्त्री॰ अतिबलायाम् ॥

विकच । पुं॰ क्षपणे । केतुग्रहे ॥ त्रि॰ प्रकाशे । केशशून्ये । विकसिते । स्फुटिते । कचति । कचबन्धने । पचाद्यच् ॥ विगतः कचोऽस्मात् ॥

विकचा । स्त्री॰ महाश्रावणिकायाम् ॥

विकच्छः । त्रि॰ कच्छरहिते । मुक्तकच्छे ॥

विकट । पुं॰ विस्फोटके । शाकुरुण्डवृक्षे ॥ त्रि॰ उग्रे । विशाले । पृथुले । पृथौ । विकराले । रम्ये । सुन्दरे । दन्तुरे । कटाभावे । विकटति । कटे वर्षावरणयोः । पचाद्यच ॥ यद्वा । सम्प्रोदश्चेतिचकारादुरपि कटच् ॥

विकटा । स्त्री॰ बौद्धदेव्यन्तरे । मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् । वज्रवालिकायाम् । वज्रवाराह्याम् । गौर्याम् । पीवरायायाम् ॥

विकटानन । पुं॰ राक्षसान्तरे ॥ त्रि॰ भीषणास्ये ॥

विकण्टक । पुं॰ विकङ्कते ॥ दुरालभायाम् । विगतः कण्टकोऽस्य ॥

विकत्थन । न॰ मिथ्याश्लाघायाम् ॥ यथा । श्लाघाप्रशंसार्थवादः सातु मिथ्याविकत्थनम् । कु॰ हेमचन्द्र ॥ विकत्थ्यते । कत्थ श्लाघायाम् । भावेल्युट् । त्रि॰ तच्छीले । ताच्छीलिकेषु वासरूपविधेर्नास्तीत्यस्याप्रायिकत्वात् वीकत्थनसेति चिनुण् विषये वलनशब्देतियुच् ॥ स्वगुणश्लाघनादौ ॥

विकत्थी । त्रि॰ विकत्थनशीले ॥ विकत्थते । तच्छील । कत्थ॰ । वौक्ष्मलसकत्थस्रम्भः । इति घिनुण् ॥

विकथा । स्त्री॰ अध्ययनेऽनुपयुक्तायां कथायां ॥

विकनीनिकः । त्रि॰ काणे ॥ विगताकनीनिकातारायस्मात् ॥

विकम्पित । त्रि॰ विशेषेणकम्पविशिष्टे ॥

विकर । पुं॰ रोगे । विकीर्यते । कृ॰ । ऋदोरप् । त्रि॰ करशून्ये ॥

विकरालः । त्रि॰ भयानके ॥

विकर्णः । पुं॰ विदिशि । कोणे ।

हयोर्मध्ये ॥ यथा । श्रक्रादीनापु रेसि उनस्य शर्खपपुरत्रयम् । वि कर्णादी० विकर्णस्तस्त्रीन् कीयान् हेपुरेतथेतिविष्णुपुराणम ॥ दुर्यो धनानुजे ॥ त्रि०कर्णरहिते ॥

विकर्णिक । त्रि० कर्णिकारहिते ॥ पु० भूमि०सारस्वतदेशे ॥ यथा । काश्मीरःसुमाधुमता सारस्वता विकर्णिका । इतिहेमचन्द्रः ॥

विकर्णी । स्त्री० अयाङ्गुशेशरे०उद्दा रेऽन्तर्हारिणि ॥

विकर्त्तन । पुं० अर्के । मार्त्तण्डे । सूर्ये ॥ विकर्त्तयतिभक्तरागात् । कृतीछेदने । णिजन्तात्ल्युट् ॥ यद्वा । विशेषेणकर्त्तनं यस्य । वि-श्वकर्मणेयन्त्रोल्लीढत्वात् ॥ अर्क-वृक्षे ॥

विकर्मकृत् । त्रि० निषिद्धकर्मका रिणि ॥

विकर्म । न० शास्त्रप्रतिषिद्धे०व्या पारे ॥

विकर्मस्थ । त्रि० निषिद्धकृति । चौहैदेहिकस्वकर्मणोविरोधीनि यानिकर्माणि०अगस्त्यागमनादीनि तत्कारिणि ॥

विकर्ष । पु० । कर्षणा ॥ विकर्षणम् । कृष० । घञ् ॥ बाणे ॥

विकर्षण । न० आकर्षणे ॥

विकज । त्रि० जने ॥ विह्वले ॥ स्व भावहीने । ...कलायस्य ॥ निष्फले ॥

विकलपाणिक । पु० कुणौ । कुक रे । विकृतकरे ॥ विकलः पाणिर्यस्य ॥

विकला । स्त्री० ऋतुहीनायाम् ॥ रा श्यादिकलाया षष्टितमांशे ॥

विकलाङ्ग । त्रि० स्वभाववतोन्यूना धिकाङ्गे । अपोगण्डे ॥ विकल मङ्गमस्य ॥

विकली । स्त्री० ऋतुहीनायाम् । गौरादित्वान् ङीष् ॥

विकल्प । पु० भ्रमे । भ्रान्तौ ॥ क ल्पने ॥ सङ्कल्पविपर्यये ॥ वित र्के ॥ संशये ॥ तुल्यबलत्वपविरो धे विकल्पोभवति ॥ शब्दज्ञानानु पातीवस्तुशून्योविकल्पः ॥ विका ल्पनम् । कृपू सामर्थ्ये । भावेघ ञ् ॥ विविधकल्पे ॥ विशिष्टका ल्पे ॥

विकल्पक । त्रि० निर्मातरि ॥

विकल्पित । त्रि० विपरीतत्वेनक ल्पिते ॥

विकषा । स्त्री० मासरोहिण्याम् ॥ म ञ्जिष्ठायाम् ॥ विकषति । कषहिं सायाम् । पचाद्यच् ॥

विकस । पु० सिन्धुनन्दने ॥ च न्द्रे ॥

विकसत् । त्रि० जृम्भमाणे ॥

विकसनम् । न॰ स्फुटने ॥

विकसा । स्त्री॰ मञ्जिष्ठायाम् ॥ विकसति । कसगतौ । अच् ॥

विकसितः । त्रि॰ उज्जृम्भिते । विनिद्रे । दलानामन्योन्यविश्लेषे । दलिते ॥ व्यकासीत् । कस॰ । गत्यर्थेतिक्त ॥

विकस्वर । त्रि॰ विकसनशीले । विकाशिनि ॥ विकसति । कस॰ । स्थेशभासपिसकसोवरच् ॥

विकस्वरा । स्त्री॰ रक्तपुनर्नवायाम् ॥

विकारः । पुं॰ प्रकृतेरन्यथाभावे । विकृतौ ॥ स्वरूपपरित्यागेनरूपान्तरापत्तौ । कार्ये ॥ पञ्चमहाभूतान्येकादशेन्द्रियाणीतिषोडशकोगणे॥जन्मादिनाशान्तपरिणामे । तत्रयास्केनपठितोयथा। जायते॰अस्ति॰वर्द्धते॰विपरिणमते॰अपक्षीयते॰विनश्यतीतिषट्भावविकारा.इति शास्त्रेज्योति काथमनुदितानस्तनिर्यत्प्रकोशं विश्वोत्पत्तौव्रजतिविकृति निष्कलंनिर्मलत्वं । अश्वत्थोहित्यखत्वलकमपुवालवीनाप्रादुर्भावेभवतिनभस 'कोइशोवाविकार ॥ विकरणम् । कृञ॰ । घञ् । रुजि । रोगे ॥

विकारहीन । त्रि॰ निर्विकारे । जायतेऽस्तीत्यादिषड्भावविकारशून्ये ॥

विकारावर्त्ति । न॰ निर्गुणे॰भगवद्रूपे ॥ विकारेषुनवर्त्ततद्रूतिवधा ॥

विकारी । पुं॰ षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ विषमस्थ जगत्सर्वं विरोधिभयसम्भवम् । विकारीसर्वतोऽपायोममवाक्यन्तुनान्यथा ॥ ३३ ॥ त्रि॰ उपचयादिमति । परिणामिनि ॥ विकारोऽस्यास्ति । इनिः ॥ षड्भावविकारयुक्तेदेहवति ॥ तथाहि । ब्रह्मादिस्तम्बपर्यन्तादेहवन्तोविकारिणः।किंविष्णुः किंशिवोब्रह्मामघवाकिं बृहस्पतिः । देहवान्प्रभवत्येवविकारैः संयुतः सदेतिव्यासः ॥

विकाश्यः । पुं॰ सोमादौ॰ कामशेषे ॥ विक्रियते । डुकृञ॰ । विभाषाकृवृषोरितिक्यपभावे॰ऋहलोर्ण्यत् । वृद्धिः । आद्गुणे ॥ विविधकार्यमस्य । सत्वविविधः । तामसोराजससात्त्विकइतिभेदात् । तत्रतामसात्तज्जडानिभूतसूक्ष्माणिजायन्ते॰ राजसादहिर्मुखानिदशेन्द्रियाणि॰ सात्त्विकान्मनइन्द्रियदेवताश्चजायन्ते ॥

विकालः । पुं॰ दिनान्ते । सायाह्नि ॥ दैवपैत्र्यादिकर्मणोविरुद्धःकालः ॥

विकालकः । पुं॰ विकाले ॥

विकालिका । स्त्री॰ ताम्रघम् । मा

नरनश्रायाम्। ताबी० इ० गौदे० भा० प्र० बाद्ये ॥

विकाश :। पु० विजने। रहसि ॥ प्रकाशे। व्यक्ते ॥ विकाशनमस्मिन वा। काशृदीप्तौ। भावेहलश्च त्यधिकरणे वाघञ्॥ यद्वा। विकशनमथवा कशशब्दे। पूर्ववद्घञ्॥ विजृम्भणे ॥

विकाशनम्। न० विकाशे ॥

विकाशी। त्रि० विकस्वरे। विकासशीले ॥ विकाशोऽस्यास्ति। अतइनि० ॥

विकाषी। त्रि० विकाशिनि ॥ वीकषेतिघिनुण्॥

विकास.। पु० विस्तरे ॥

विकासी। त्रि० विकसूरे। विकसति। कसगतौ ॥ वीकषेतिघिनुण्। पृषोदरादि.॥ विकासोऽस्यास्ति वा। अतइनि.॥

विकिर. पुं० खगे। पक्षिणि। विकिरति। कृविक्षेपे। इगुपधेतिक ॥ कूपे ॥ पूजासमयेविघ्नोत्सारणार्थं क्षिपणीयलाजादौ। यथा। लाजाचन्दनसिद्धार्थभस्मदूर्वांकुशाक्षता :। विकिराइतिसन्दिष्टा : सर्वविघ्नौघनाशका.॥ चन्दनदग्धादीनांपिण्डदाने ॥ न० जलविशेषे ॥ यथा। नद्यादिनिकटे भूमिर्याभवेद्वालुकामयी। उद्धृतेतोयस्तुतज्जल विकिर बिदु ॥ विकिरंशीतल स्वच्छनिर्दोष लघुचस्मृतम्। तुवर स्वादुपित्तघ्नमनाक्कफकर स्मृतम्॥

विकीरण :। पुं० रक्तार्कवृक्षे ॥ विकिरति। कृविक्षेपे। कॄवृइतिक्युन्। इत्वरपरत्वम्। बाहुलकाद्दीर्घ:॥ विक्षेपणे। अखेरणा० इ० भा० ॥ विहिंसने। विज्ञाने॥

विकीर्ण.। त्रि० विस्तीर्णे। लुलितकीर्णे। विक्षिप्ते। विखराइतिख्याते ॥ विललापविकीर्णमूर्द्धजेति० कुमारसम्भव०॥ विकीर्यतेस्म। कृ०। क्त०॥

विकीर्णरोम। न० स्थौणेये। कुकुरौंधा० इ० भा० प्र० ओषधौ ॥ विकीर्णानिरोमाण्यस्मिन्॥

विकीर्णसञ्ज्ञम्। न० स्थौणेये॥ *

विकुण्ठित। त्रि० कुण्ठीकृते ॥

विकुर्वाण। त्रि० हर्षमाणे। हृष्टचित्ते ॥ विकुरुते। करोतेश्शानश्०शानज्वा ॥ विक्रियमाणे ॥ विकृते ॥

विकुस्र। पुं० चन्द्रे ॥ विकसति। वौकसेरितिरक० उत्तोपधाया ॥

विकूणिका। स्त्री० नासिकायाम्।

विकूननम्। न० आस्यगतविकारे। विरावना० कूटकढावना० छीलना० इत्यादिभाषाप्रसिद्धे ॥

विकृतम् । न० विकारे ॥ तत्पर्याय यथा । क्षीरतैलादिभिर्यन्नोच्यते स्वविवक्षितम् । व्यज्यते चेष्टयैवेद विकृतं तद्विदुर्बुधा ॥ पु० वत्सर विशेषे ॥ तत्फलं यथा । सर्वा प्रजा प्रपीड्यन्ते व्याधि हि कष्टजायते । शिरोवक्षोविरोगाश्च पादघ्निविकृते जना ॥ २४ ॥ त्रि० वीभत्से ॥ रोगिते ॥ असंस्कृते ॥ वीभत्साख्यरसान्विते ॥ विकारगत विकृतम्० जुगुप्साप्रभवत्वात् ॥ विक्रियते स्मेति । कृ ॥

विकृतिः । स्त्री० विकारे ॥ दुजि ॥ डिम्बे ॥ यच्चनसमग्राङ्गोपदेश . साविकृतिरिति मीमांसकाः० यथा सौर्यादि । तस्यकृतिपर्याऽङ्गाना मतिदेशेनापिप्राप्तत्वात् ॥ मद्यादौ ॥ विकरणम् । कृञ : क्तिन् ॥

विकृष्टः । त्रि० दीर्घे ॥ आकृष्टे ॥ विकृष्यते स्म । कृषविलेखने । क्तः ॥

विकेश ' । त्रि० केशरहिते ॥

विकेशी । स्त्री० केशशून्यायाम् ॥ पटवस्त्रीम ॥

विकोक . । पुं० वृकासुरपुत्रे ॥

विकोष . । त्रि० कोषरहिते । निष्कोषे ॥

विक्क । पुं० करिशावके । कलभे ॥

विक्रम : । पुं० पादविन्यासे ॥ आक्रमे । कान्तिमात्रे ॥ शक्तिसम्पत्तौ । यथा । प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च । विक्रमास्तत्र सिद्ध्यन्ति परीक्ष्य विधिनाकृता ' ॥ इति युद्धकाण्डे रावणं प्रति विभीषणवाक्यम् ॥ शौर्यातिशये ॥ चरणे ॥ शिक्षाशास्त्रप्रयोगकौशले ॥ लग्नात्तृतीयभवने ॥ प्रभवादिषु चतुर्दशेवर्षे ॥ यथा । जायन्ते सर्वशस्यानि मेदिनी निरुपद्रवा । सावर्णं मधु गव्यञ्च महार्घं विक्रमे प्रिये ॥ विक्रमादित्यभूपतौ ॥ विक्रमणम्० क्रमेणधा । क्रमु पादविक्षेपे । घञ् ॥ त्रि० क्रमात् च्युते ॥

विक्रमादित्य ' । पुं० स्वनामख्यातप्रसिद्धे नृपतिश्रेष्ठे । साहसाङ्के । शकारौ ॥ विक्रमश्चादित्यश्च ॥ अथविक्रमार्कवर्णनम् सन्दधाति- ज्योतिर्विदाभरणसमाप्तौ श्रीकालिदास. । वर्षे श्रुतिस्मृतिविचारविवेकरम्ये श्रीभारतेखधृतिसम्मित १८० देशपीठे । मत्तोऽधुनाकृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत् ॥ प्रथमं नृपतेः सभायाः पण्डितवर्गं वर्णयति । शङ्कुः सुवाग्वररुचिर्मणिरंशुदत्तो जिष्णुस्त्रिलोचनहरी घटखर्पराख्यः । अन्येऽपि सन्ति कवयोऽमरसिंहपूर्वा यस्यैव विक्रमनृपस्य सभासदोऽमी ॥

सप्तोवराहमिहिर श्रुतसेननामाश्री
वादरायणमणित्यकुमारसिंहा ।
। श्रीविक्रमार्कनृपस सदिसन्ति
चैतेश्रीकालतन्त्रकवयस्त्वपरे महा-
द्या ॥ धन्वन्तरि क्षपणकोऽमर
सिंहशङ्कु वेतालभट्टघटखर्परका-
लिदासा । ख्यातोवराहमिहिरो
नृपतेः सभायांरत्नानिवैवररुचिर्न
वविक्रमस्य । अथपरिजनान्वर्ण
यति । अष्टौयस्यशतानिमण्डलध
राधीशा . सभायामहस्यु स स
तृपरिपाइकोटिसुभटा ' सत्पण्डि
ता षोडश । दैवज्ञादशपञ्चमि
ता०भिषजो०भट्टा०स्तथा०ठड्ढि
नो०वैदज्ञारसचन्द्रमा १६ विजयते
श्रीविक्रम ' सोधिभू ॥ अथास्य
सैन्यवर्णयति । यस्याष्टादशवीज
नानि कटकै०पादातिकोटित्रयम्
३००००००० वाहानामयुतायुतम्
१००००००० च०नवतेस्त्रिघ्ना । क्ष
ति २४३०० र्हस्तिनाम । नौकाल
क्षचतुष्टय • विजयिनोयस्यप्रयाणे
भवेत्•सोय विक्रमभूपतिर्विजयते•
नान्योधरित्रीतले । अथास्यशाकप्र
वृत्ति दर्शयति । येनास्मिन वसुधा
तलेधनगणान् सर्वादिश , सङ्ग्रेह
त्वापञ्चनवप्रमान् ५५५५५५५५५५
कलियुगेशाकप्रवृत्ति कृता ।
श्रीमद्विक्रमभूभुजाप्रतिदिनं मुक्ता



मणिस्वर्णगोमत्स्योऽभ्यादयवस्त्रोजनवि
हितोधर्मं सुवर्णनिन ॥ अथा
स्यदिग्विजयमाह । उद्दण्डद्रविडद्रु
मैकपरशुर्लाटाटवीपावकोम्लादङ्ग
भुजङ्गराजगरुडोगौडाब्धिकुम्भोद्भव
। गर्जर्ज्जरकुञ्जरराजमित्र गढ्गिर्धारा
न्धकारार्यमाकाम्बोजाम्बुजचन्द्र
माविजयतेश्रीविक्रमार्कोनृप ' ॥
अथास्यप्रभुत्त्वादिगुणान् वर्णयति
। येनाप्ययमहोधरावनिमयेदुर्गाण्य
सह्यान्यहोनीत्वायानिनतोह्लताम्त
दधिपाद्दत्तानितेषाम्पुन । कुन्द्रा
ओध्यमरद्रु मस्मरसुरक्ष्माभृद्गुणे ना
स्मस'श्रीमद्विक्रमभूभृताखलजनाम्भो
जेदुनामण्डले ॥ अस्यपुरींवर्णय
ति । यद्राजधान्युज्जयिनीमहापुरी
सदामहाकालमहेशयोगिनी । स
माश्रितप्राप्यपवर्गदायिनी श्रीवि
क्रमार्कोऽवनिपोजयत्यपि ॥ गौरू
मदेशाधिपति शकेश्वर जित्वाहतो
त्योज्जयिनींमहाहवे । आनीयस
भ्राम्यसुमोचतन्त्वहो श्रीविक्रमार्क :
समसह्यविक्रम ॥ तस्मिन् सदा
विक्रममेदिनीशेविराजमानेसमव
न्तिकायाम् । सर्वप्रजामण्डलसौ
ख्यसम्पद्वभूवसर्वत्रचवेदकर्म्म ॥ श
ङ्कादिप ण्डितवरा कवयस्त्वने
केज्योतिर्विद : सममवश्चवराहपू-
र्वा . । श्रीविक्रमार्कनृपस सदिमा

अवुविस्तेरप्यह न पसखाकिलका लिदास ॥ इतिज्योतिर्विदाभरण म् ॥ पाकविशेषे ॥ यथा । घृतेगु ड़पल विशत्पचेत्सम्यग्भिषग्वर । उत्तार्य चविमेदेषांखण्डद्वयपलवि शति । तालमूलीतुरङ्गीचशुण्ठो चेतिपलार्द्धकम् । जातीफल चक कोल लवङ्गचे तिकार्षिकम् ॥ मा लतीमुकुलिञ्चवावकरभत्वच म् । एतेषांकोलमाचास्त्रायसस्य पलद्वयम् ॥ पलैकमोदक खल्वाए कैक भक्षयेद्दिने । धातुक्षीणोग्नि क्षीणश्चबलानलकर परम् ॥ नेच रोगेषुसर्वेषुकासश्वासेषकामले । प्रमेहान्विंशतिहन्याद्विक्रमादि त्यमोदकइति ॥

विक्रमार्क । पुं० विक्रमादित्ये ॥

विक्रमी । पुं० सिंहे ॥ त्रि० शक्ति मति ॥ विक्रम . शौर्यम. तद स्यास्मिन्वाचस्ति । अतइनिठना विति नि ॥

विक्रय । पुं० विक्रयणक्रियायाम् । विपणे । मूल्यग्रहणपूर्वकद्रव्य त्यागे । वैया० इ० भा० ॥ क न्याविक्रयेदोषो यथा । य . कन्या पालन कृत्वाकरोतिविक्रयं यदि । विपद्धनलोभेन कुम्भीपाकं सग च्छति ॥ कन्यामूत्रपुरीषञ्चतभक्ष तिपातकी । कृमिभिर्दंशित . का

कीर्थावदिन्द्रायतुर्दश ॥ मृतस्तव्याध योनौच सलभेज्जन्मनिश्चितम् । विक्रीणीतेमासभार यस्त्वं बदिका निशमितिब्रह्मवैवर्त्त पुराणे ॥ विक्रयणम् । डुक्रीञ् द्रव्यविनिम ये । एरच् ॥

विक्रयणम् । न० विक्रये ॥ यथा । यमाद्दिशकाम्निहुताशपूर्वानिष्ठा : क्रयेविक्रयणे प्रशस्ता . । मैत्राग्नि विश्वाशतविन्दुवाता : क्रयेहिता विक्रयणे निषिद्धा . ॥

विक्रयिक । त्रि० विक्रेतरि ॥ विक्र येणजीवति । वस्नक्रयविक्रयाट्ठ न् । क्रयविक्रयग्रहण सङ्घातविग् हीतार्थम् ॥

विक्रयी । त्रि० विक्रयकर्त्तरि ॥

विक्रान्त : । पुं० शूरे ॥ विक्रान्तस्य लज्जाभूषणम् ॥ सिंहे ॥ न० वैक्रान्तमणौ ॥ नीचवज्रे । क्रम ञ्च ॥ विक्रामतिस्म । क्रमु० गत्य र्थेतित्त . ॥

विक्रान्ति । स्त्री० अश्वगतौ । पुरा यिते ॥ विक्रमे ॥

विक्रयिक । त्रि० विक्रेतरि ॥

विक्रिया । स्त्री० विकारे । विकृतौ ॥ विकरणम् । कृञ : श्च ॥ विशिष्टत्वेनक्रियतेइतिवा ॥ विशे षाकारे ॥

विक्रीत . । त्रि० कृतविक्रये । मेघ

दिया० भा० ॥ विक्रीतेकरिणिकि
मह्मीविवादः ॥
विक्रुष्टः । त्रि० निष्ठुरे ॥
विक्रेता । त्रि० विक्रयकर्त्तरि ॥ वि
क्रयिणि ॥ विक्रीणाति । डुक्रीञ्
०तृच् ॥
विक्रेय' । त्रि० विक्रयणीयद्रव्ये ।
पणितव्ये । विक्रयक्रियाकर्म्मणि
॥ विक्रीयते । डुक्रीञ्० । अचो
यत् । गुणः ॥
विक्लवः । त्रि० विह्वले । भयादिना
विभूते ॥ विक्लवते । क्लुङ्गतौ । प
चाद्यच् ॥
विक्लवता । स्त्री० भीरुतायाम् ॥ अथ
तिष्ठविक्लवतागुणोत्कानाम् ॥
विक्लित्तिः । स्त्री० विक्लेदने ॥ क्ति
न् ॥
विक्लिधिः । पुं० विचर्चिकादियुक्तदे
हे ॥
विक्लिन्न' । त्रि० अरसाजीर्णे ॥ जी
र्णे ॥ आर्द्रे ॥ विक्लिद्यतिस्म ।
क्लिदू० । कर्त्तरि क्तः ॥
विक्षतः । पुं० विशेषेणक्षते ॥
विक्षरः । त्रि० अविनाशिनि ॥ वि
विगतः क्षरोविनाशोयस्य स ॥
विक्षवणम् । न० विक्षावे । कासे ॥
टुक्षुशब्दे । ल्युट् ॥
विक्षारः । पुं० भोजनादौ ॥
विक्षालित । त्रि० धौते ॥

विक्षाव' । पुं० विक्षवणे ॥ शब्दे ॥
विक्षवणम् । टुक्षु० । वोक्षुश्रु
वृतिघञ् ॥
विक्षिप्तम् न० चित्तस्य भूमिकाविशे
षे ॥ यथा । सर्वदाविषयासक्तम
पि० कदाचिद्ध्याननिष्ठं क्षिप्ताद्विशि
ष्टतया० चित्तम्० चित्तस्यतृतीया
भूमि । तत्र० क्षिप्तमूढयोः स
माधिशङ्कैवनास्ति० विक्षिप्ते तुचे
तसि० कादाचित्क. समाधिर्वि
क्षेपप्राधान्यायोगपक्षे नप्रवर्त्तते०
किन्तु । तीव्रपवनविक्षिप्तप्रदीपवत्
स्वयमेवनश्यति ॥ त्रि० विप्रस्ते
॥ विक्षेपयुक्ते ॥ विक्षिप्यतेस्म ।
क्षिपप्रेरणे । क्त । त्यक्ते ॥
विक्षीरः । पुं० अर्कवृक्षे ॥
विक्षुब्ध । त्रि० क्षुब्धे । कूटागश्रा
द्ध० भा० ॥
विक्षेप' । पुं० प्रेरणे । त्यागे । वि
क्षेपणे ॥ ताडने ॥ अखण्डवस्तु
नवलम्बनेन० चित्तस्यान्यावल
म्बने । विषयस्फुरणे ॥ ज्ञानेना
वरणे नष्टे विक्षेपस्त्वशिष्यते० कु
ताराहीति ' ॥ विक्षेपलक्षयति
गौतमः कार्यव्यासङ्गात्कथाविच्छे
दोविक्षेप' । सूत्र ॥ अस्यार्थ. ।
कार्यव्यासङ्गात्० कार्यव्यासङ्गमु
द्भाव्यत्यर्थं० ल्यब्लोपेपञ्चमी ।
कार्यव्यासङ्गस्यासम्भवात्कालान्त

रज्जुत्वेनारोपितः तेनतादृशकथा
विच्छेदोविक्षेपः। तेनराजपुरुषा
दिभिराकारणं गृहजनादिभिर्वा
अवश्यकार्यार्थमाकारणं स्वगृह
दाहादिकं पश्यतोगमनंवा शिरो
रोगादिनाप्रतिबन्धोवा नविक्षे
पः। ननुकार्यव्यासङ्गोऽप्यावर्त्त
कः सभाक्षोभादिनाचेत् अन
नुभाषणमेव उत्तराप्रतिपत्तावे
व अप्रतिभेवेतिचेन्न। उत्तरान
न्तराभावात्। वस्तुतस्तूत्तरस्फू
र्त्तावपि तद्दूषणसम्भावनयावि
क्षेपसम्भवात्। यथाक्षितिः सक
र्तृका कार्यत्वादित्युक्ते अङ्कुरे
व्यभिचारस्तावन्नाद्योऽप्यत्र तच्च
चेदयं पक्षसमक्षं ब्रूयात् तदाने
कोत्तरम् अतोऽवकाशार्थं विलि
खितमयावधिमवधारितम् किञ्चि
त्कार्यमुत्थाप्य गृहे गत्वा हृष्यते इ
त्यं व विक्षेपसम्भवादिति॥ वि
क्षेपणम्। क्षिप। भावे घञ्॥
विक्षेपशक्तिः। स्त्री। अज्ञानसाम
र्थ्यं। मायाशक्तिः॥ यथा रज्ज्व
ज्ञानं स्वावृतरज्जौ स्वशक्त्या
सर्पादिकमुद्भावयति। एवम् अ
ज्ञानमपि स्वावृतात्मनि तथा
विक्षेपशक्त्या आकाशादिप्रपञ्च
मुद्भावयतितादृशसामर्थ्यम्। वि
क्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जग



त्सृजेदित्युक्तेः। विविधस्वरूपेण
भवनं विक्षेपशक्तिः॥

विक्षेपसहभू। पुं। अन्तरायविशे
षः॥ तेचयोगसूत्रे प्रदर्शिताः।
यथा। दुःखदौर्मनस्याङ्गमेजयत्वश्वा
सप्रश्वासाविक्षेपसहभुवः इति॥
अस्यार्थः। कुतश्चिन्निमित्तादुत्प
न्नेषु विक्षेपेषु एते दुःखादयः
प्रवर्त्तन्ते। तत्र दुःखं चित्तस्य राज
सः परिणामो बाधनालक्षणः य
द्बाधात् प्राणिनस्तदुपघाताय प्रवर्त्त
न्ते। दौर्मनस्यं बाह्याभ्यन्तरैः
कारणैर्मनसो दौःस्थ्यम्। अङ्ग
मेजयत्वं सर्वाङ्गीणो वेपथुरासनमन
स्थैर्यस्य बाधकः। प्राणो यद्बाह्यं वा
युमाचामति स श्वासः। यत्कौ
ष्ठ्यं वायुं निःश्वसिति स प्रश्वासः
। एते विक्षेपैः सह प्रवर्त्तमाना
यथोदिताभ्यासवैराग्याभ्यां निरोद्ध
व्याः समाहितचित्तस्यैते न भवन्ति
विक्षिप्तचित्तस्यैव भवन्तीति विक्षे
पसहभुवोऽन्तराया एव। एते अभ्या
सवैराग्याभ्यां निरोद्धव्याः ईश्वर
प्रणिधानेन वा॥

विखः। त्रि। विगतनासिकः।

विखना। पुं। खष्टरि। ब्रह्मणि॥

विखुः। त्रि। गतनासिकः॥ विगता
नासिकाऽस्य। खुः खौ च वक्तव्याः वि
गतनासिकायाः खुः॥

विखुर । पु० राक्षसे ॥ चौरे ॥

विखिद । त्रि० गतमोहे ॥ विगत ' खेदोऽस्य ॥

विख्य ' । त्रि० विखौ ॥ विगतानासिकाऽस्य । ख्यशेतिनासिकाया ख्यादेशोऽच प्रत्ययश्च ॥

विख्यात . त्रि० प्रसिद्धे । ख्याख्या पन्न ॥ विपूर्वात्ख्यातेः क्तः ॥

विख्याति । स्त्री० अतिप्रसिद्धौ ॥ विख्यानम् । ख्याप्रकथने । स्त्रियां क्तिन् ॥

विख्यापनम् । न० व्याख्याने ॥ प्रकाशने

विखु । त्रि० विख्ये ॥ विगतानासिकाऽस्य । खुखौचवक्तव्याविति नासिकायाः खु ॥

विगयनम् । न० कटमुक्तौ । कटया दिनिर्यातने ॥

विगत . । त्रि० निष्प्रभे । अरोके । प्रभारहिते ॥ वीते । गते ॥ विगच्छतिस्म । गम्लृ गतौ । गत्यर्थेति क्तः ॥ च्युते ॥

विगतकल्मष . । त्रि० निर्गतमले । निर्मले । स्वच्छे ॥ संसारहेतुधर्माधर्मरहिते ॥

विगतक्लम । त्रि० शरीरक्लमशरहिते ॥

विगतज्वर . त्रि० ऐहिकपारत्रिकदुर्घोनरकपातादिनिमित्तशोकरहिते ॥ ज्वरहीने ॥

विगतशोक । त्रि० निःशोके । शोकरहिते ॥ विगताशोकोऽस्य . ॥

विगतस्पृह : । त्रि० देहजीवितभोगेष्वपिशाऽहंकाररहिते । सर्वद्रष्टृषु दोषदर्शनेन०निजबोधपरमानन्दरूपमोक्षगुणदर्शनेनच०सर्वतोविरक्तः ॥ स्पृहारहिते ॥ विगतास्पृहायस्य ॥

विगतार्त्तवा । स्त्री० निष्कलायाम् । पञ्चपञ्चाशदब्देभ्योनिवृत्तरजसिस्त्रियाम् ॥ विगत आर्त्तवरजोऽस्या ॥

विगन्धक । पुं० इङ्गुद्याम् ॥

विगन्धिका । स्त्री० हबुषायाम् ॥

विगम : । पु० नाशे ॥ यथा । एकदलिङ्गनेविद्यानितरस्तु०यदुपाध्यनवच्छिन्नस्यब्रह्मणोविशुद्धरूपता०तादृशोपाधिविगमएवकैवल्यम् । किंच लिङ्गनस्तु०आनन्दमयपरमात्मनि०जीवात्मनोलयोमोक्षः । जीवात्मपरमात्मनोरभेदेपि०उपाधिविशेषविशिष्टस्यात्मनोजीवरूपतया०तयोरौपाधिकः ' परमात्मभेद । इति भेदकोपाधिविगमएवजीवस्यपरमात्मनिलय . । यथाघटाकाशस्यघटविगमएवशुद्धाकाशेतस्यलयः । लिङ्गशरीरावच्छिन्नस्यैवात्मनोजीवभाव . इतिलिङ्गशरीरनाश

एवपथ्यं वसितीमोच : । इतिमु
क्तिवाद . ॥
विगर्हणम् । न० विगर्हणायाम् ॥
विगर्हणा । स्त्री० निन्दने । भर्त्सना
याम्
विगर्हितः । त्रि० जुगुप्सिते । निन्दि
ते ॥ निषिद्धे ॥
विगलित । त्रि० सुखलिते ॥ यथा ।
विगलितवसन परिहृतवसन घटय
जघनमपिधानम् । किसलयशयने
पङ्कजनयनेनिधिमिवहर्षनिधान
म् ॥
विगाढ । त्रि० प्रविष्टे ॥ विगाह्यते
स्म । गाहूविलोडने । क्त : ॥ क
ठिने ॥ प्रवृद्धे ॥ स्नाते । अवगा
हिते ॥
विगाथा । स्त्री० मात्रावृत्तप्रभेदे ॥ य
था । गाथाद्वितीयतुर्यौ • पादौभव
तोयदाचविपरीतौ । सेयंभवतिवि
गाथा • फणिनायकपिङ्गलेनोक्ता॥
यथा । वृन्दारण्यविहारी • बल्लवनारी
मनोहारी । गोपालीकरतालो • न
र्त्तनशालीपुनातुवनमाली ॥
विगानम् । न० निन्दायाम् ॥ परस्प
रवदे ॥ विरुद्धगानम् ॥
विगाहनम् । न० स्नाने ॥
विगाह्यमानः । त्रि० प्रविश्यमाने ॥
विगाह्यते । गाहू० । शानच् ।
मुक् ॥
विगीत । त्रि० निन्दिते ॥
विगुण । त्रि० गुणवैपरीत्यविशि
ष्टे ॥ यथा । यथामनोममाचष्टने
य मातातथामम । विगुणेष्वपिपु
त्रेषुनमाताविगुणाभवेत् ॥ ख
ङ्गविचारे ॥
विगूढ । त्रि० गर्हिते ॥ गुप्ते ॥
विगृह्यवाद । पुं० जयपराजयप्रधा
नेजल्पन्याये ॥
विग्न । त्रि० भीते ॥
विग्र । त्रि० गतनासिके ॥ विग
तानासिकाऽस्य । वेर्ग्रोवक्तव्य. ।
प्रादिभ्योधातुजस्येतिसमास. ॥
विग्रहः । पुं० काये । शरीरे ॥ वि
भागे ॥ विस्तारे ॥ समासवाक्ये ।
विस्तरे । तदर्थबोधकवाक्ये ॥ पुं०
न० राज्ञांगुणभेदे । वैरे । रणे ।
युद्धे । कलहे । सङ्ग्रामे ॥ सम
ज्यायोभ्यांसन्दधीत० हीनेनविग्र
हणीयात् । यथा । बालोवृद्धोदी
र्घरोगी तथाज्ञातिबहिष्कृत :
भीरुकोभीरुकजनोलुब्धोलुब्धजन
स्तथा ॥ विरक्तप्रकृतिश्चैवविषयेष्वति
शक्तिमान् । अनेकचित्तमन्त्रश्चदेव
ब्राह्मणनिन्दकः ॥ दैवोपहतश्चैव
दैवचिन्तकएवच । दुर्भिक्षव्यसनो
पेतोबलव्यसनसंयुत. ॥ अदेश
स्थोबहुरिपुर्युक्तःकालेनयश्च : ।
सत्यधर्मव्यपेतश्चविंशति पुरुषाः

धर्माः ॥ एतैः सन्धिं न कुर्वीत विगृह्णीयात् केवलम् इति कामन्दकीयः ॥ विरुद्ध विविध वा ग्रहणम् । ग्रह० । ग्रहवृदृनिश्चिगमश्च अप् ॥ विविधैर्व्याधिभिर्गृह्यते वा । अप् ॥ विविध सुखदुःखादि गृह्णाति वा । अच् ॥ त्रि० ग्रहयुक्ते ॥

विग्रहावरम् । न० पृष्ठे ॥

विग्लापनम् । न० श्रमहेतौ ॥ विग्लापयति । ग्लै० । ल्युट् ॥

विघटनम् । न० विरुद्धनिर्माणे ॥

विघटिका । स्त्री० पले ॥

विघटितः । त्रि० नाशिते ॥

विघटी । स्त्री० पले ॥

विघट्टनम् । न० सङ्घर्षे ॥

विघट्टितः । त्रि० अभिहते ॥ विशेषेण चालिते ॥ विपूर्वात् घट्टतेः क्तः ॥ घट् ॥

विघसः । पु० भुक्तशेषे । अतिथिगुर्वादिभुक्तावशेषे ॥ विघस्यते अद्यते । अद० उपसर्गेऽदः अप् । घस्लादेशः ॥ आहारे ॥ न० सिक्थके ॥

विघसाशी । त्रि० अतिथिगुर्वादिभुक्तशेषभुक् ॥ विघसं भुक्तशेषम् अश्नाति । अश० । णिनि ॥ विघसाशी भवेन्नित्यं नित्यं वाऽमृतभोजनः । विघसो भुक्तशेषस्तु यज्ञशेषं तथामृतम् ॥

विघातः । पुं० मारणे ॥ हनन घात । विशिष्टो घातः ॥ व्याघाते । आघाते ॥

विघाती । त्रि० निवारके ॥ घातके ॥

विघूर्णम् । त्रि० भ्रमति ॥ घुण घूर्ण भ्रमणे । अनुदात्तत्त्वप्रयुक्तात्मनेपदस्य० चक्षिङो ङित्त्वेनानित्यत्वज्ञापनात् परस्मैपदम् ॥

विघ्नः । पु० अन्तराये । प्रत्यूहे । समाप्तिप्रतिबन्धकादृष्टे ॥ विहननम्० विघ्नन्ति मनांस्यस्मिन् वा० विहन्यतेऽनेन वा । हन० । घञर्थे कः ॥

विघ्नकारी । त्रि० घोरदर्शने ॥ विघातिनि । विघातस्य कारके ॥

विघ्नचतुष्टयम् । न० लयविक्षेपकषायरसास्वादलक्षणेषु चतुर्षु ॥ निर्विकल्पसमाधौ क्रियमाणे चैतेषां चत्वारो विघ्ना सम्भवन्ति ॥ विघ्नानां चतुष्टयम् ॥

विघ्ननायकः । पु० गणेशे । विघ्नानां नायक ॥

विघ्ननाशकः । पुं० विनायके । गणेशे ॥ विघ्नानां नाशक ॥

विघ्ननाशनः । पु० गणेशे ॥

विघ्नराजः । पुं० विनायके । गणाधिपे ॥ विघ्नानां राजा । राजाहःसखिभ्यष्टच् ॥

विघ्नविनायकः । पुं० श्रीगणेशे ॥

विघ्नहारी। पुं० गणाधिपे। लम्बोदरे॥ अवश्यं हरति। हृञ०। णिनि। विघ्नस्यहारी॥

विघ्नित। त्रि० सञ्जातविघ्ने॥ कृतच्॥

विघ्नेश। पुं० हेरम्बे॥ विघ्नानामीश॥

विघ्नेशवाहन। पुं० महामूषिके॥ विघ्नेशस्यवाहन॥

विघ्नेशानकान्ता। स्त्री० श्वेतदूर्वायाम्॥

विङ्क। पुं० अश्वखुरे। पुटे॥

विङ्का। स्त्री० अश्वगतिप्रभेदे॥ शुकशिम्ब्याम्॥ नर्त्तने। कु० मेदिनिकर॥

विचकिल। पुं० मल्लीप्रभेदे। विपुटायाम्॥ मदनवृक्षे॥ कृतिमेदिनिकर॥

विचक्षण। पुं० पण्डिते॥ विचष्टे। चक्षिङ्०। अनुदात्तेतश्चहलादेरितियुच्। कर्त्तरिख्युञितिख्यासकार॥ त्रि० विचारकुशले॥ निपुणे। तत्तत्कालकर्त्तव्यतायां चतुरे। निपुणतरवस्तुदर्शिनि॥

विचक्षणा। स्त्री० नागदन्त्याम्॥

विचक्षुः। त्रि० विमनसि॥ चक्षुर्हीने॥

विचयः। पुं० अन्वेषणे॥ विचीयते। विञ् चयने। कर्मण्येरच्॥

विचयनम्। न० मार्गणे॥ समीक्षणे॥ विविधम्० चयनम्॥ चिञ्० ल्युट्॥

विचर्चिका। स्त्री० रोगविशेषे। पामनि। पामायाम्॥ दाल्यतेत्वक्खराकण्डूपापाणयोर्याविचर्चिका। पादेविपादिकाज्ञेया स्थानभेदाद्विचर्चिका॥ दाल्यते०॥ विदार्यते॥ विचर्च्यते। चर्च अध्ययने। रोगाख्यायांण्वुल्बहुलम्॥ प्रत्ययोपसर्गाभ्यांरोगप्रतीतिः॥

विचल। त्रि० अस्थिरे॥

विचलनम्। न० विभ्रमे॥

विचलित। त्रि० स्खलिते। पतिते॥ स्थानान्तरप्राप्ते॥

विचार। पुं० कार्याकार्यरूपेविमर्शे॥ तत्त्वनिर्णये। सन्दिग्धे वस्तुनिप्रमाणैनतत्त्वपरीक्षायाम्। वितर्के। प्रमाणैर्वस्तुतत्त्वपरीक्षायाम्। चर्चायाम्। सङ्ख्यायाम्॥ सन्दिग्धसप्रयोजनस्य० विचारमर्हति॥ विवेके॥ कोहकायमिदंजात कोवैकर्त्तास्यविद्यते। उपादानं किमस्तीहविचार सोयमीदृश॥

विचरणम्। न० विचरन्त्यनेनवा। चर०। घञ॥

विचारणा। स्त्री० विद्यायाम्॥ यथा। परीक्षापरीक्षाचविद्याविद्याविचारणा। तथापरीक्षविद्यायां

विचारोऽस्य समाप्यते ॥ त्रि० वि चारोत्पन्न । विचाराज्जाते ॥ ज- नी० । ङ ॥

विचारणम् । न० विचारे ॥ चरस श थेच् रादि ' युच् ॥

विचारणा । स्त्री० विचारे । चर्चाया म् ॥ मीमांसाशास्त्रे ॥ चरस शये० चरादि । ण्यासश्रन्थोयुच् । टाप् ॥

विचारणीयम् । न० शास्त्रे ॥ त्रि० विचार्ये ॥

विचारित । त्रि० कृतविचारे । वि श्रे । विर्ण ॥ विचार्यतेस्म । चर गतौ० णन्त । क्त ॥ विचार ' सञ्जातोऽस्य । तारकादित्वादि तच् ॥

विचार्य्य: । त्रि० विचारयोग्ये । वि चारितव्ये । विचारणीये ॥

विचार्य्यमाण । त्रि० विमृश्यमाणे ॥ ज्ञान स्वेयतथाज्ञाताञ्चितय भाति मायया । विचार्यमाणे चितयैवा तवैवकोऽवशिष्यतइतिश्रीमच्छानि वर्णितक्रम् ॥

विचाल: । पुं० न० अन्तरे । अभ्यन्त रे । अन्तराले ॥ रूपान्तरापत्तौ ॥ यथापयसोदध्यादिरूपताविचाल ॥

विचि: । पुं० स्त्री० अल्पतरङ्गे ॥

विचिकित्सा । स्त्री० संशये । विकल्पा त्मकोऽव्ययगादिज्ञाने ॥ विचिकि त्सनम् । कितस शये । गुप तिज् कित्वा . सन् । तत ' अप्रत्ययो दित्वकारप्रत्यय । टाप् ॥

विचिकित्सित: । त्रि० संशयिते । सन्दिग्धे ॥ विचिकित्सासञ्जाता स्य । तारकादित्वादितच् ॥

विचिकिल । पुं० द्विपुटायांमल्लिका याम् ॥ दमनके । हे०शे०चन्द्र. ॥

विचित ' । त्रि० अन्विष्टे ॥

विचित्त । त्रि० उन्मत्ते ॥

विचित्रम् । न० कर्बुरवर्णे ॥ पुं० न० अलङ्कारविशेषे ॥ विचित्र त्वमि ष्टध्वस्तफलसाध्यात्समुद्यमइतिल क्षणात् ॥ त्रि० विचित्रवर्णान्विते ॥ नानाविधे ॥

विचित्रक: । पुं० भूर्जद्रुमे ॥

विचित्रदेह ' । पुं० मेघे ॥ त्रि० आश्च र्यशरीरे । नानावर्णदेहे ॥

विचित्रवीर्य्य ' । पुं० चन्द्रवंशीयनृ पतिविशेषे ॥

विचित्रवीर्य्यसू ' । स्त्री० सत्यवत्या म् ॥

विचित्रा । स्त्री० मृगेर्वारौ ॥ चित्रा ख्यनाडाम् ॥

विचित्राङ्ग: । पुं० किकिनि । मयूरे । व्याघ्रे ॥ त्रि० आश्चर्यशरीरे ॥ वि चित्राणि० अङ्गानियस्य . ॥

विचिन्वन् । त्रि० मृगयमाणे । अ न्विष्यति ॥

विजय : | विजया

नि । प्रलापी । रहसि ॥ यथा । आहारनिर्हारविहारयोगा सदैव सद्भिर्विजनेविधेया ॥ पक्षखड्गाल्दे मध्यस्थि ॥ पादोबन्नेषमध्येषक नोरश्चिन्नविस्यते । शेमेदसततव्या मसदेशोविजन स्मृत : ॥ विगतो जनोऽस्मात् ॥

विजननम् । न० प्रसवे ॥ पुं०सूति मासि । विजायतेऽस्मिन् । जनी० । करणेतिल्युट् ।

विजन्मा । पु० मेघे । सुधन्वाचार्ये ।

विजपिलम । न० पिच्छिले ॥

विजय . । पुं० जये । शत्रुपराजयनिमित्तउत्कर्षे ॥ पार्थे । अर्जुनपाण्डवे ॥ विमाने । विष्णुनुचरविशेषे ॥ कुलार्हतपितरि ॥ जिनबलदेवे ॥ यमे ॥ कल्किनृपे । वत्सरविशेषे ॥ ततफलयथा । मध्यदेशास्थयामेधावषन्निखरखण्डमखण्डले । मध्यन्तिसर्वसस्यानिविजयेनाक्सयय . ॥ २७ ॥ यात्रायोगान्तरे ॥ यथा । दिगीशेदिक्वलोचेतस्थानवेगस्थुसुखयदि । विजयोनामयोगोय यातारोजाजयीभवेत् । सम स्याबायोगे ॥ गुरौवीयेकेन्द्रयुतेबुधे वाभृगुनन्दने । विजयोनामयोगोयंयातुर्विजयद : सदा ॥ विजयनम् । विजये । एरण्ड् ॥ एकादशेमुहूर्ते ॥ चतुर्दिग्द्वारगृहे ॥ परमे

श्वरे ॥ विजयतेश्वाघवैराग्येश्वर्यादिगुणै विशेषम् । जिपूरर्वोत्कर्षयते पचाद्यच् ॥

विजयक । पु० विजयिकुशले ॥ आकर्षादित्वात्कन् ॥

विजयकुञ्जर . । पु० राजवाह्यमातङ्गे ॥

विजयच्छन्द . । पु० पञ्चशतमौक्तिकहारे ।

विजयनन्दन । पु० इक्ष्वाकुवंशजराजविशेषे ॥ जये ॥ अभिमन्यौ ॥ विजयस्यनन्दन ॥

विजयमर्दल । पुं० ढक्कायाम् । जयढक्का० शू० मा० ॥

विजयसख : । पुं० श्रीकृष्णे ॥ विजयस्यसखा । राजाह . सखिभ्यष्टच् ॥

विजया । स्त्री० उमायाम् । आख्यायन्याम् । दुर्गायाम् ॥ यथा । जिजिताः पञ्चनामानदैत्यराजमहाबलम् । विजयातेनसादेवीलोकेचैवापराजितेतिदेवीपुराणम् ॥ उमासख्याम् ॥ तिथिविशेषे ॥ यथा । इषमासिसिताद्दशमीविजयाशुभकर्म सुसिद्धिकरीकथिता । श्रवणर्क्षयुतासुतरांशुभदानृपतेस्तुगमेजयसन्धिकरी ॥ अत्रानीलकण्ठदर्शनविधिर्यथा । श्रुत्वानीराजनराजाबलहर्षोयथाबलम् । शोभनखञ्ज

नपश्चिरञ्जलगोगोष्ठसन्निधौ ॥ द र्शनान्तरतन्नमस्कारमन्त्रोयम् । शौलयोवशुभयोवसर्वकामफलप्रद । पृथिव्यामवतीर्णासिखञ्जरीटक मोस्तुते ॥ स्वयोगयुक्तोमुनिपुङ्गव स्त्वमहश्यतामेषिशिखोद्गमेन । त्व द्दश्यसेप्राट्षिनिर्गतायांत्वखञ्जना श्चर्यमयोनमस्ते ॥ द्रव्यविशेषोपरि स्थितस्यतस्यदर्शनफलंयथा ॥ प र्णेपुगोषु गजवाजिमहोरगेषु राज्य प्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषु दृष्टो- दुःखददातिबहुशः खलुखञ्ज रीटः ॥ अशुभदर्शनेप्रायश्चित्तंय था । अशुभखञ्जनदृष्टौदेवब्राह्म णपूजनम् । दानंकुर्वीतकुर्याच्चस्ना नसर्वौषधीजलैरिति ॥ मादकद्रव्य विशेषे । भङ्गायाम् ॥ तस्यानामा निगुणाश्चयथा । भङ्गागञ्जा मातुलानीमादनीविजयाजया । भङ्गाकफहरीतिक्ताग्राहिणीपाच नीलघुः । तीक्ष्णोष्णापित्तलामोह मदवाग्वह्निवर्द्धनी इतिभावप्र काशः ॥ अपिच । मन्नामनतुती क्ष्णोष्णमोहक्रत्कुष्ठनाशनम् । बल मेधाग्निकच्च श्लेष्मदोषहरिरसाय नम् ॥ जातामन्दरमन्थनाज्जलनि धौपीयूषरूपापुरार्चैलोक्ये विजय- प्रदेतिविजयाश्रीदेवराजप्रिया ॥ लो

कानांहितकाम्ययाक्षितितलेप्राप्ता नरैः कामदासर्वातङ्कविनाशहर्ष जननीयैःसेवितासर्वदा ॥ इतिरा जवल्लभः ॥ वचायाम् ॥ यमभार्या याम् ॥ हरीतक्याम् ॥ जलाबुन्न त्याविजयैतिलक्षणम् ॥ जयन्त्या म् ॥ शेफालिकायाम् ॥ मञ्जि ष्ठायाम् ॥ शमीभेदे ॥ अग्निमन्थे । गणिकार्याम् ॥ अष्टमवाहाद श्यन्तर्गतहादशीविशेषे ॥

विजयासप्तमी । स्त्री॰ सप्तमीतिथिप्र भेदे ॥ सायथा । शुक्लपक्षस्यसप्तम्यां सूर्यवारोयदाभवेत् । सप्तमीविज यानामतत्रदत्तंमहाफलम् ॥

विजयी । त्रि॰ विजयशीले ॥ विशेषि णजेतुशीलमस्य । जिहक्षीत्यादि ना॰ इनि ॥

विजर । पुं॰ वेदान्तवेद्यपरमात्मनि ॥ त्रि॰ जरारहिते ॥ विगताजरा यस्य ॥

विजलम् । न॰ विजिलि । पिच्छिलो इतिहेमचन्द्रः ॥ त्रि॰ जलशून्ये ॥

विजल्प । पुं॰ वाक्यविशेषे ॥ यथा । व्यञ्जयाऽसूययागूढमानमुद्रान्तरा लया । अघद्विषिकटाक्षोक्तिर्वि ज ल्पोविदुषांमतः ॥ इत्युज्ज्वल नीलमणि ॥

विजात । त्रि॰ विकृते ॥ जाते ॥

विजाता । स्त्री॰ जातापत्यायाम् ।

प्रजातायाम् ॥

विजातीय . । त्रि॰ विभिन्नधर्माक्रान्ते ॥ विलक्षणे । भिन्ने ॥ यथाह चाहिजातीय : शिलादि ' ॥

विजिगीष ' । त्रि॰ जयेच्छौ ॥

विजिगीषा । स्त्री॰ विजयेच्छायाम् ॥ स्वोदरपूरणासक्तिनिमित्तकनिन्दात्यागेच्छायाम् ॥

विजिगीषाविवर्जित ' । त्रि॰ आमूले । औदरिके ॥ स्वोदरपूरणासक्तिनिमित्तकनिन्दात्यागोविजिगीषा॰व्यवसाय : कश्चित्प्रकर्षोवा॰ आलस्यात्तेनविहीनोय : केवलमुदराधीनवृत्तिभाव : ॥

विजिगीषु : । त्रि॰ जयेप्सिनि । जयेच्छाशीले । प्रतिवादिजयकामे ॥ यथा । जेतुमेषणशीलस्यविजिगीषुरितिस्मृत । इति ॥ यज्ञस्यहि विजिगीषो ' कार्यसाधनंप्रधानम्॰ अन्यत्समयरचणाद्यशक्तस्येतिनीति : ॥ विजेतुमिच्छाधातो . कर्मसामर्थ्यादिति . . . ॥

विजिघत्स : । त्रि॰ विगताशनेच्छे ॥ विगताजिघत्साच्,धायस्य ॥

विजिज्ञासितव्य ' । त्रि॰ सम्वेदतामापादयितव्ये॰निजात्मनि ॥ विशेषेणज्ञातुमेष्टव्य ' ॥

विजित . । त्रि॰ पराजिते ॥ विजीयतेस्म । जिभभिभवे । क्त ' ॥

विजितात्मा । त्रि॰ स्ववशीकृतदेहे ॥ वशीकृतान्त करणे ॥ विजित आत्मादेहो॰मनोवायेन ॥

विजिताश्व । पुं॰ पृथो : पुत्रे ॥ त्रि॰वशीकृततुरगे ॥

विजिति । स्त्री॰ विजये ॥ यथाह दण्डी । चितिविजितिस्थितिविहितिव्रतरतय : परगतय : । उरुरुरु धुर्गुरुधुर्युविकुरव . स्मरविकुलम् ॥ इति ॥

विजिलम् । त्रि॰ पिच्छिले । मण्डयुक्तजलयुक्तव्यञ्जनयो . ॥ विजन विजि । ओविजीभयचलनयो : । इगुपधात्किदितीन् । विजिलाति । ला॰ । आतोनुपसर्गेक : ॥

विजिविल : । त्रि॰ विजिले ॥ इतिहेमचन्द्र : ॥

विजिहीर्षा । स्त्री॰ विहर्तुमिच्छायाम् ॥

विजिह्म ' । त्रि॰ कुटिले । वक्रे ॥ विशेषेणजिह्म : ॥

विजुल ' । पुं॰ शाल्मलीकन्दे ॥

विजृम्भणम् । न॰ विभ्रमे ॥ विकासे ॥ जृम्भणे ॥

विजृम्भितम् । न॰ चेष्टायाम् ॥ त्रि॰ विकसिते । विकासनशीले ॥ प्रस्फुरिते ॥ उल्लसिते ॥ जृम्भायुक्ते ॥ विजृम्भासञ्जाताअस्य । तारकादित्वादितच् ॥

विजोहा । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । यत्रपञ्चित्रयं दृश्यते सुन्दरम् । सर्पराजोदितासाविजोहामता ॥ यथा । आलिवशीधरेकामकेलीपरे । किमयासाधित मौनमारोपितम् ॥

विज्जलम् । न॰ तीरे । सायके ॥ चि॰ पिच्छिले ॥

विज्जिलम् । न॰ विजिले ॥

विज्जुलम् । न॰ गुडत्वचि । त्वचे ॥

विज्जुलिका । स्त्री॰ जतुकायाम् ॥

विज्ञः । चि॰ निपुणे । अभिज्ञे । शिक्षिते । प्रवीणे ॥ विजानाति । ज्ञाअवबोधने । आतश्चोपसर्गे इतिकः ॥

विज्ञप्तिः । स्त्री॰ विज्ञापने ॥ विज्ञाने ॥

विज्ञबुद्धिः । स्त्री॰ जटामांस्याम् ॥ चि॰ सुशिक्षिते ॥

विज्ञात । चि॰ विश्रुते ॥ ख्याते ॥ निश्चिते ॥ यथं परिज्ञानात्सर्वं विज्ञात भवति ॥ ज्ञाते । विशिष्य ज्ञातेर्थे ॥ व्यज्ञायि । ज्ञा॰ । क्त । यद्वा । विजानाति । मति बुद्धीतिक्तः ॥

विज्ञाता । चि॰ अनुभवितरि ॥

विज्ञानम् । न॰ ज्ञाने । कर्मणि ॥ विज्ञानं ज्ञानकर्मणोरितिमेदिनी ॥ कार्मणे । विज्ञान कार्मणे ज्ञाने इतिहेमचन्द्र ॥ निश्चये । संशयविपर्ययरहितज्ञाने ॥ चिच्छक्तौ । विज्ञमिहूपेब्रह्मणि ॥ अपरोक्षज्ञाने । ब्रह्मात्मैक्यानुभवे । विद्यायाम् ॥ यत्रादिकर्मकौशले ॥ विवेकबुद्धौ ॥ उपासने ॥ शास्त्रार्थविषयज्ञाने । शिल्पबुद्धौ । शिल्पकर्मणि ॥ विज्ञायतेऽनेन । ज्ञा॰ । करणेल्युट् ॥ विवेकेन ज्ञान वा ॥ मोक्षे धीर्ज्ञानमन्यत्रविज्ञानं शिल्पशास्त्रयोरित्यमरः । अस्यार्थः । शिरोविशेषसामान्येनच॰ अववेधिमेधेमुक्तिः शिल्पं चित्रादि॰ शास्त्रं व्याकरणादि । मोक्षे॰ शिल्पे॰ शास्त्रेचयाधीः सा॰ ज्ञान॰ विज्ञान चोच्यते॰ एषाविशेषप्रवृत्तिः । अन्यत्र॰ घटपटादौ॰ याधीः सापिज्ञानं विज्ञानञ्चोच्यते । एषासामान्यप्रवृत्तिः । मोक्षे धीर्ज्ञानं॰ विज्ञानञ्चयथा । ज्ञानान्मुक्तिरिति॰ सायाचिताच विज्ञानतुष्टाकविं प्रयच्छतीति। अन्यत्रयथा। ज्ञानमस्तिसमस्तजन्तोर्विषयगोचरे॰ इति । घटत्वप्रकारकज्ञानमिति । येकेचित्प्राणिनो लोकेसर्वेविज्ञानिनोमताइति । ब्रह्मणोनित्यविज्ञानानन्दरूपत्वात्॰ इति । एवंचित्रज्ञानंव्याकरणज्ञानंघटपटविज्ञानमित्यादिकप्रयुज्य

तएवतद्विगमे० गवत्वादिशब्दव
त्० गवत्वच्छन्दोऽपिगरुडपक्षिमा
त्रे प्रवर्त्तते । मोक्षव्युत्पत्तिनिमित्तस
त्त्वे० मोक्षनिमित्त शिल्पशास्त्रयो
र्धीर्ज्ञानमुच्यते । तन्निमित्ततोऽन्य
निमित्त० यातयोर्धीः साविज्ञा
नमितिकेचित् । मोक्षविषयामोक्ष
फलाधीर्ज्ञानम्० अन्यधीर्विज्ञान
म् । ज्ञान्यवेत्याह शिल्पशास्त्रयोरि
तिकेचित् । अवबोधद्वयव्याहृत्य०
मोक्षविषये० अवबोधोधीर्ज्ञानम्०
अन्यत्रघटपटादिविज्ञान शिल्पशा
स्त्रविषयेविज्ञानमितिकेचिदितिभ
रत ॥

विज्ञानतत्त्वम् । न० महत्तत्त्वे ॥

विज्ञानपाद । पु० वेदव्यासे ॥ इ
तिकेचित् ॥

विज्ञानमय । पुं० पञ्चसुकोषेषु चतु
र्थे । ज्ञानेन्द्रियैः सहितायांबुद्धौ
। ज्ञानशक्तिमतिकर्तृरूपे० बुद्धि
मये । लीनसुप्तौ० वपु र्धीर्धि०
व्याप्नुयादानखाग्रगा । चिच्छाया
पे तधीनात्मा विज्ञानमयशब्दभाक् ॥

विज्ञानमातृका । पुं० बुद्धे । सुगते ॥

विज्ञानवान् । त्रि० निपुणे । विवे
कविशिष्टे ॥ विज्ञानमस्त्यस्य । तद
स्यास्तीतिमतुप् ॥

विज्ञानवाद । पुं० बौद्धानाक्षणिक
विज्ञानातिरिक्तभावाभाववादे । वि
ज्ञान । बुद्धिरितिनार्थान्तरम् ।
यदन्तर्ज्ञेयतत्त्वंतद्बहिर्वदवभासते ।
स्वप्नवज्जागरेशुभ्राभास० स्फुटप
यंहि ॥ अयस्वप्नादेनयुक्तिसह ।
तथाहि । जागरेबाध्यतेस्वप्नोजाग
रोनैवबाध्यते । तत्रतद्बाधकाभावा
द्बाह्यमस्त्युपलक्षित ॥ बहिर्वदि
तिशब्दात्तिर्बाह्यमर्थंप्रसाधयेत् । ए
वमयुक्ततैव बुद्धेर्जगदाकारतात
व । स्थिरचेतनराहित्यात्क्षयवृत्त
क्षणिकत्वत । स्मृत्यादिव्यवहार
स्यलोपस्तत्वदारुण ॥ मतुजाग
रादिमाधिष्ठानस्याऽखण्डबोधान
न्दरूपस्यब्रह्मण साक्षात्कारोबाध
कोस्ति ॥

विज्ञानवादी । पु० बौद्धविशेषे । तेषां
भ्रान्तिस्तु । एकैकाश्वासनातत्प्रति
क्षणविनाशिनीम् । आहु क्षणिक
मात्मानंबौद्धाविज्ञानवादिनः ॥ ता
च० बुद्धौ० वासनातद्धेतुभूता
वृत्तिमितियावत् ॥

विज्ञानस्कन्ध । पु० आलयविज्ञानस
न्ताने । रूपस्कन्धाभिव्यक्ती । अह
मित्याकारोरूपादिविषयइन्द्रियज
न्योदण्डायमानोविज्ञानस्कन्धइति
वाचस्पतिमिश्रा । अहमित्याकारमा
लयविज्ञानमिन्द्रियादिजन्यं० रूपा
दिविषयञ्च ज्ञानमेतद्द्वयं० दण्डा
यमान० प्रवाहापन्नविज्ञानस्कन्धइ

स्यर्दूतिकस्यतत् । अहमितिप्रत्य योविज्ञानस्कन्धस्तूत्मानन्दगिरि ॥

विज्ञानावसित । त्रि० विज्ञानेनन्नि श्चिते ॥

विज्ञानिक । त्रि० वैज्ञानिके । प्रवी ण ॥ विज्ञानमस्त्यस्य । त्रोह्यादि त्वान्मत्वर्थीयठन् ॥

विज्ञापनम् न० बोधने । अमा० वना० बुधा० वना० कृ० भा० प्र० ॥ विपूर्वाण् यन्तज्ञानातेर्ल्युट् ॥

विज्ञेयम् । न० परमात्मतत्त्वे ॥ त्रि० विज्ञातव्ये । इदमेवमितिविस्पष्ट ज्ञानार्हे ॥ विज्ञातुंयोग्यः । ज्ञा० । यथीयत् । ईद्यति ॥

विज्यम् । न० निर्गुणे धनुषि ॥ विग ताज्यायस्मिन् ० दक्षा० बा० तत् ॥

विज्वर । त्रि० विगतज्वरे ॥ विगत मनस्तापे ॥ विगतोज्वरोयस्य ॥

विझर्झर । त्रि० विषमे ॥

विझामरम् । न० चक्षुष शुक्लभेवे ॥ इतिकश्चित् ॥

विञ्झोली । स्त्री० वीथ्याम् । पङ्क्तौ ॥

विट । पुं० षड्गौ ॥ लवणविशेषे ॥ षिङ्गे । स्त्रैणे ॥ मूषिके ॥ खदि रे ॥ कामुकानुचरे ॥ धूर्ते ॥ काम तन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वे टति । विटशब्दे । इगुपधलक्षण क : ॥

विटका । स्त्री० वीटिकायाम् ॥ इति कश्चित् ॥

विटङ्क । पु० न० गृहप्रान्ते रचितप क्षिस्थाने । कपोतपालिकायाम् ॥ विशेषेणटङ्क्यते ऽत्र । टकिबन्धने । हलश्चेतिघञ् ॥ तोरणस्तम्भयोरुप रितर्यङ्निहितेदारुणि ॥ त्रि० सु न्दरे ॥ यथा । तस्मिन्नतीक्ष्णमुनय पङ्कसज्जमाना . काचा : समामम यसावयसममोयाम् । देवावबध्नत गृहीतगदौपरार्ध्यकेयूरकुण्डलकि रीटविटङ्कवेषौ ॥ इतिभा० ह० स्क न्धे १५ अध्याय : ॥

विटङ्कित : । त्रि० अलङ्कृते ॥

विटप : । पु० विटाधिपे । पारदारिकश्रे ष्ठे ॥ आदित्यपर्णे ॥ पुं० न० शाखा पल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ पल्लवे ॥ मु ष्कवङ्क्षणयोरन्तरे । मध्यावीर्ये ॥ विटानपाति । पा० । आतोनुपे तिक : ॥ यद्वा । विटानांपानम् । पा० । घञर्थेक : ॥ वेटति० विस्त रीवा । विटधातोरपि० शब्दे च । वि टपविष्टपविशिपोलपा : ० कृ० सौ धु : ॥

विटपी । पुं० पादपे । तरौ । वृक्षे ॥ वटे ॥ विटप : शाखाविस्तारोऽस्या स्ति । अतइनि : ॥

विटप्रिय । पुं० मुद्गरवृक्षे । मोगरा० कृ० भा० प्र० ॥ विटानांप्रिय : ॥

विटमाक्षिक । पु॰ धातुविशेषे । सोण्ये । मटोजे । कामारी ॥

विटि . । स्त्री॰ पीतचन्दने ॥

विट्कारिका । स्त्री॰ पक्षिविशेषे । गोराख्याम् ॥

विट्खदिर . । पुं॰ दुर्गन्धिखदिरे । अरिमेदे ॥ विड्गन्धि खदिर ॥

विट्चर । पुं॰ ग्राम्यशूकरे ॥ विष विष्ठाचरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात्कोवा ॥ विषचरोवा ॥

विट्ठल . । पुं॰ अज्ञानुग्राहकेदेवे ॥ यदाहुर्वाचीनादाक्षिणात्या . । विदाज्ञानेनठान्शून्यान्॰लाति अदत्ते आत्मीयतयाऽऽदत्ते । ला॰ । आतोनुपसर्गइतिकः । विदाज्ञानेनठान्शून्यान्लातिगृह्णातिय . स्वयम् । अज्ञानुग्राहकोदेवोविट्ठल . कथ्यतेबुधैरिति प्रक्रियाप्रसादः ॥

विट्पतिः । पु॰ जामातरि ॥ यथा । मातामहमातुलश्वस्रीय श्वशुर गुरुम् । दौहित्र विट्पतिं बन्धुमृत्विग याज्यौचभोजयेत् । एतान्मातामहादीन्॰दशमुख्यणोविप्रान्सभवेभोजयेद् । गुरुर्विद्यागुरुराचार्यादि ' । विट्दुहितातस्या . पतिः । इतिकुल्लूकभट्टः ॥ भोजयेत्॰आद्दे॰इतिशेषोवोध्यः ॥ नृपतौ ॥ वैश्यवर्ये ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कृष्णश्याम् । गुयासालक्॰इ॰गौ॰दे॰भा॰प्रसिद्धे ॥

विठर । पुं॰ वाग्मिनि ॥

विडम् । न॰ कृत्रिमलवणे । पाक्ये । खारीलूण॰इ॰भा॰ ॥ अस्यगुणायथा । विड सक्षारमूर्द्ध्वाधःकफवातानुलोमनम् । अक्रं कफमयोबात सचारयेदित्यर्थः . । दीपनंलघुतीक्ष्णोष्णं रूक्ष रुच्य व्यवायिच । विबन्धानाहविष्टम्भहृद्ग्रगौरवशूलनुत् ॥ विडति । विडभेदने ॥ इगुपधज्ञाप्रीकिरःक . ॥

विडङ्ग । पुं॰ न॰ वेल्ले । चित्रतण्डुलायाम् । कृमिघ्ने ॥ विडङ्गंकटुतीक्ष्णोष्णं रुक्ष वह्निकरंलघु । शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत् ॥ त्रि॰ अभिज्ञे ॥ विडति ॥ विड॰ । विडआक्रोशेवा । विडादिभ्यः कित्॰इत्यङ्गच् ॥

विडम्बनम् । न॰ अनुकरणप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमान' । त्रि॰ अनुक्रियमाणे ॥

विडम्बित : । त्रि॰ अनुकृते ॥ व्यस्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्बाः । त्रि॰ उपहासास्पदे ॥

विडार : । पुं॰ विडाले ॥ रत्नयोर भेद ॥

विडारक । पुं॰ विडाले ॥

विडाल । पुं॰ खोतौ । मार्जारे । वृषदंशके ॥ नेत्रपिण्डे ॥ विडति॰ विडातीवा । विडआक्रोशे ॥ तमि विशिविडिम्रिणिकुलिकपिपलिपञ्चि भ्य: कालन् ॥ नेत्रौषधविशेषे ॥ र गणे॰८ । ८॰ ॥

विडालकम् । न॰ हरिताले ॥ पुं॰ने त्ररोगौषधविशेषे ॥

विडालपद : । पुं॰ तोलकद्वयपरिमा णे ॥ न॰मार्जारचरणे ॥

विडालपदकम् । न॰ कर्षपरिमाणे ॥

विडाली । स्त्री॰ भूमिकूष्माण्डे । वि दार्याम् ॥ मार्जार्याम् ॥

विडीनम् । न॰ खगानांगतिप्रभेदे ॥ विशिष्टंडयनम् । डीङ्विहायसा गतौ । स्वादि. । नपुंसकेभावेक्त : । स्वाद्यओदितइत्यतिदेशात्रोदि त्वान्निष्ठानत्वम् ॥ विडीनंविचि त्रपक्षिण : पतनमितिमहाभा- रत ॥

विडुल . । पुं॰ वेतसवृक्षे ॥

विडौजा : । पुं॰ इन्द्रे ॥ वेवेष्टि । विष्लृव्याप्तौ । क्विप् । विट्॰व्या पकम्॰ओजोयस्यसोऽस्य ॥ विट् सुप्रजासु॰मनुष्येषुवा॰ओजोयस्ये तिवा ॥

विडौजा : । पुं॰ पाकशासने । इ न्द्रे ॥ विडति । शिडभेदने । इगु पधेतिक : । विडंभेदकमोजोऽ स्य । साम्त : ॥

विड्भ्रम् । न॰ विड्लवणे ॥

विड्ज : । त्रि॰ विष्ठाशजाते ॥

विड्लवणम् । न॰ विडे ॥

विड्वराह : । पुं॰ विट्चरे ॥

वितस । पुं॰ वीतसे ॥

वितण्डा । स्त्री॰ कच्चीशाके ॥ शिला ह्वये ॥ करवीर्याम् ॥ दर्व्याम् ॥ वा दप्रभेदे । परपक्षप्रतिवादे । स्वपक्ष स्थापनहीनायाम्विजिगीषुकथाया म् ॥ तथाचन्यायसूत्रम् । सप्रतिप क्षस्थापनाहीनोवितण्डा । यद्यपि तच्छब्देनजल्पोनपरामष्टुंशक्यते॰ जल्पस्यस्थापनाद्वयवत प्रतिपक्ष स्थापनाहीनत्वस्यविरुद्धत्वात् । त थापिस्थापनाद्वयवत्त्वंविहाय॰जल्पै कदेश : परामृश्यते । प्रतिपक्षोद्वि तीयपक्ष । तथाच॰प्रतिपक्षस्थाप नाहीनाविजिगीषुकथा॰वितण्डेति । नचस्वस्यस्थापनीयाभावात्कथमि यंकथाप्रवर्त्तामितिवाच्यम् । पर पक्षखण्डनेनजयस्यैवोद्देश्यत्वात् । परेतु॰यत्परपक्षखण्डनेनैवस्वपक्ष सिद्धेर्यादिवसिद्धेतत्साधनाभावेपि नप्रवृत्त्यनुपपत्तिरितिवदन्ति ॥ १ । ४२ ॥ वितण्डातेपरस्त्रोऽमया

। तद्धिघचादौ । गुरोश्चेत्य : ॥

विततः । त्रि० विस्तृते ॥ विश्लेषित ते ॥

विततिः । स्त्री० विस्तारे ॥

वितथम् । न० अनृतवचसि ॥ त्रि० तद्वति ॥ विगतंतथासत्यंयस्मात्० तत्०वितथम् । अजितियोगविभागात्समासान्तोऽच् ॥

वितन्द्र : । त्रि० जागरूके ॥ तन्द्रारहिते ॥ विगतातन्द्रायस्य स ॥

वितन्यमान : । त्रि० वितायमाने ॥ तनोतेः कर्मणिलट : शानजादेश ॥

वितन्वन् । त्रि० विस्तारयति ॥

वितमा : । त्रि० तमोगुणरहिते ॥

वितरणम् । न० दाने ॥ तॄप्लवनतरणयो : विपूर्व । भावेल्युट् ॥

वितर्क : । पुं० ऊहे ॥ संशये ॥ विपरीततर्के ॥ वितर्कणम् । तर्कभाषार्थश्चुरादी । भावेघञ् ॥ ज्ञानसूचके ॥

वितर्कणम् । न० वितर्के ॥ तर्क० । ल्युट् ॥

वितर्द्दि : । स्त्री० वेदिकायाम् ॥ विगतातर्द्दिं हिंसाऽस्या. । तर्दहिंसायाम् । सर्वधातुभ्यइन्नितीन् ॥

वितर्द्दिका । स्त्री० वेदिकायाम् ॥ स्वार्थेक ॥

वितर्द्दी । स्त्री० वेदिकायाम् ॥ कृदिकारादितिङीष् ॥

वितलम् । न० पातालप्रभेदे ॥

वितस्ता । स्त्री० नदीविशेषे ॥ तीर्थविशेषे ॥ काश्मीरेवितस्ताख्यनागसदनमस्ति ॥

वितस्ति । पुं० स्त्री०कनिष्ठयासहविततेङ्गुष्ठे । द्वादशाङ्गुलपरिमाणे ॥ वितस्यति०वितस्यतेवा । तसु उपक्षये । वीतसीरितिति : ॥

वितान : । पुं० न०यज्ञे ॥ क्रतुकर्मणि । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारे ॥ उल्के । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न०वृत्तविशेषे । अवसरे ॥ त्रि०मत्ते ॥ तुच्छे ॥ शून्ये ॥ मन्दे ॥ विताननम्०वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानक : । पु० माडहक्षे ॥ पुं०न० चन्द्रातपे ॥

वितानतनिका । स्त्री० पटमण्डपरज्जौ ॥

वितानमूलकम् । न० उशीरे ॥

वितायमान । त्रि० वितन्यमाने । विस्तीर्यमाणे ॥ वितनोते कर्मणि लट शानजादेश । तनोतेर्यक्वीति० वा० आकारादेश : ॥ विटङ्कितै । अलङ्कृते ॥

वितिष्ठमान । त्रि० अवतिष्ठमाने ॥ समवप्रविभ्यस्थइत्यात्मनेपदम् ॥

वितीर्ण । त्रि० दत्ते ॥ अवगाढे ॥
वितुन्नम् । न० सुनिषण्णे । शिषखप
रिया० ष्ठ० भा० प्र० शाकि ।। शे
वाले ।। विगतन्तुन्न व्यथनमस्मात्
॥ त्रि० व्यथिते ॥
वितुन्नक ' । पु० न० धन्याके॥ भाटा
मलोषधौ । तामलक्याम् । भू
म्यामलक्याम् ॥ मुस्तायतपिलमघु
रमुका । शखावितुन्नकाम् ॥ वितुन्न
कञ्चिमतिक्तं कषायकटुकान्तिदम॥
कफपित्तास्रश्वासपर्कुष्ठकण्डूविषप्र
णुत ॥ वितुद्यतेसा । तुदव्यथने
कर्मणि क्त । स्वार्थेकन् ॥ विगत
तुन्नदु . खमस्माद्वा । कप् ॥
वितुन्ना । ) स्त्री० तामलक्याम् ।
वितुन्निका । )
भूम्यामलक्याम् ॥ वितुन्नके ॥
वितृप्त । त्रि० सन्तुष्टे ॥ विशेषेण
तृप्त . ॥
वितृष्ण . । त्रि० निष्कामे ।
वित्तम् । न० धने ॥ न्यायाज्जिते धन
मे ॥ धर्माययशसेऽर्थायकामायस्वज
नायच । पञ्चधाविभजन्वित्तमि
हामुत्रचमोदते । प्रभूतेहिरण्य
रत्नादौ ।। ज्ञाते ।। लब्धादिदृतीय
भवने । त्रि० ख्याते । विचारिते ॥
विचारिते ॥ विद्यतेस्म। विद्विचार
णे । क्त ॥ नुदविदेतिपक्षेनत्वा
भाव : ॥ यद्वा । अवेदि । विद्लृ
लाभे । क्त । वित्तोभोगप्रत्यय
योरितसाधु । लब्धे ॥
वित्तद ' । पु० पूर्वदक्षिणोत्तरद्वारे
गृहे ॥ त्रि० धनदातरि ॥ वित्तद
दाति । डुदाञ्दाने । आतश्चो
पसर्गे क ' ॥
वित्तप : । पुं० कुबेरे ॥ त्रि० धनर
क्षके ॥ वित्तंपाति । पा० क : ॥
वित्तमय ' । त्रि० धनप्राये ।
वित्ति । स्त्री० विचारे । ज्ञाने ॥
यथा । सत्य भोवनवित्तिर्व्यपनुद
तियत . कर्मनाप्योघटादिर्मिथ्या
भूतपक्वमंघपयतिनतथावित्तिचा-
स्य यतस्तत् । इत्थ सिद्धंविभागेऽस्तु
तिशिखरगिरांवित्तिधाम्नप्रतीतौ व
न्धोमिथ्येतिसिद्धंनतदपघ्नतयेत्त
द्भ्यातसमर्थम् ॥ वृत्ति ॥ लाभे ॥
सम्भवे ॥ विदेर्भावादौस्त्रियांक्तिन्।
वित्तेश ' । पुं० धनपतौ कुबेरे ।
वित्तैषणा । स्त्री० धनलाभेच्छायाम्॥
कर्मयासाधनेवित्तेतृष्णावित्तैष-
णामता ।
वित्रस्त : । त्रि० त्रासयुक्ते ॥ विप्र
र्वात् त्रसे ' क्त : ॥
वित्रास ' । पुं० भये । त्रसीउद्वे
गे० विपूर्व . । घञ् ॥
विथुन : । पुं० वृषभे ॥
विथुर : । पुं० चौरे । राक्षसे ॥ व्य
थते । व्यथभयचलनयो : । व्य थे :

सम्प्रसारणं किच्चेच्युरच् ॥

विध्या । स्त्री० गोजिह्वायाम् ॥

वित्०द । चि० विदुषि ॥ न० ज्ञाने ॥ वेदनम् । विदज्ञाने । सम्पदादित्वात्भावेक्विप् ॥

विद । पुं० पण्डिते । वेत्ति । विद० क: ॥

विदश: । पुं० अवदंशे ॥ विदश्यते । दंश० । कर्मणि० भावेवाघञ् ॥

विदग्ध । त्रि० चतुरे । दग्धे ॥ नागरे ॥ पण्डिते ॥ अत्यन्तपक्के ॥

विदग्धता । स्त्री० विदग्धत्वे ॥

विदग्धा । स्त्री० परकीयान्तर्गतनायिकाप्रभेदे ॥

विदथ । पुं० योगिनि ॥ कृतिनि । प्राज्ञे ॥ वेत्ति । विदज्ञाने । रुदिविदिभ्यांङिदित्यथ: ॥ यज्ञे ॥ वेत्ति० अस्मिन्देवान् ॥

विदम् । चि० पण्डिते ॥

विददङ्क्षु । चि० विदष्टुमिच्छौ । उपदंशेच्छावति । दंशे सन्नन्तादुप्रत्यय. ॥

विदन्ता । स्त्री० नातिदीर्घायांवराटिकायाम् ॥

विदर: । पुं० स्फुटने । भिदायाम् । फटना०इ०भा० । विदरणम् । दृविदारणे । ऋदोरप् ॥ न०विश्वसारके । नागफणीथूहर०इ०भा० ॥ चि० दरशून्ये । निर्भये ॥

विदरकम् । न० विदरे ॥ विद्रधौ ॥

विदर्भ । पुं० कुण्डिनपुरे ॥ सतुवङ्गदेशस्यदक्षिणपश्चिमेवर्त्तते०अधुना० बडानागपुर०इतिख्यात । भद्रकालीमहापूर्वेरामदुर्गाच्चपश्चिमे । श्रीविदर्भाभिधोदेशोवैदर्भीतत्रतिष्ठति ॥ चि० दर्भशून्ये ॥ कर्मठे ॥ विशिष्टेनदर्भेणोपलक्षित ॥

विदर्भजा । स्त्री० अगस्त्यमुनेपत्न्याम् । कौशीतक्याम् । लोपामुद्रायाम् ॥ दमयन्त्याम् । रुक्मिण्याम् ॥

विदर्भराज . । पुं० विदर्भदेशाधिपतौ । भीमाभिधेपुराणप्रसिद्धेराजनि । दमयन्तीजनके ॥

विदर्भसुभ्रू । स्त्री० दमयन्त्याम् ॥

विदर्भाधिपति: । पुं० कुण्डिनपतौ । भीष्मकाभिधे । रुक्मिणीजनके ॥

विदल . । पुं० रक्तकाञ्चने ॥ पिष्टके ॥ न०वंशादिकृतपात्रविशेषे ॥ वेणुदले ॥ शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दममितिमनु: ॥ दाडिमवल्कले ॥ द्विधाकृतकलायादौ । दाल०इ०भा० ॥ स्वर्णादेरवयवे ॥

विदला । स्त्री० चिव्रति ॥ पत्रशून्यायाम् ॥

विदा । स्त्री० ज्ञाने ॥ मनीषायाम् ॥ भिदादित्वादङ्विदेरङ् । टाप् ॥

विदाय: । पुं० गमनानुमतौ ॥ यथा । त्वयं वाचम्यकवनंगच्छवातिष्ठसु

न्दरि । त्वयाऽद्यत्वयास्मिविशिष्टं कार्यमस्तिमे । विदायदेहिसम्प्रीत्या त्वयामांप्राणवल्लभे ॥ इतिब्रह्मवैवर्त्ते श्रीराधाप्रतिश्रीकृष्णवाक्यम् ॥

विदार : । पुं॰ जलोच्छ्वासे । याजौ । युधि ॥ दारणे ॥ विदार्यते । दृ॰ । कर्मणिघञ् ॥

विदारक : । पुं॰ शुष्कनद्यादौवार्यर्थंकृतगर्त्ते । कूपके ॥ नद्यादौस्रोतोद्रुधकारिणितरुशिलादौ । कूपके ॥ याचायोगान्तरे ॥ यथा । मार्गेश : शनिसयुत : सप्तमेऽन्तगतोयत्र : ॥ विदारकमिम मन्ये प्राहु : पत्नीविनाशकम् ॥ पुनश्च । मार्गेशात्सप्तमेभानु : पञ्चमेक्रूरखेचर : । विदारकाख्यएवासौभार्यामरिवशनयेत् ॥ न॰वज्जचारे ॥ विदार्यते । दृ॰वि दारणे । णिच् । बाहुलकात्कर्मणिण्वुल् ॥ यद्वा । विदार्यते । कर्मणिघञ् ॥ कुत्सितोविदार : । कुत्सायांक : ॥ त्रि॰विदारणकर्त्तरि ॥ विदृणाति । दृ॰ । ण्वुल् ॥

विदारकसमाख्य : । पुं॰ याचायानिशिवयोगान्तरे ॥ यथा । भार्येशोव्ययगोनीचयुतस्थानेशनेश्वर । विदारकसमाख्योयंयातु : पत्नींनिहन्तिवै ॥ विदारकेणसमाचाख्यायस्य : ॥

विदारण : । पुं॰ कर्णिकारवृक्षे ॥ न॰ विडम्बे । विडम्बने ॥ भेदे ॥ भेदने ॥ पुं॰ स्त्री॰ रणे । सम्पराये । समीके ॥ विदार्यतेऽनेन दृ॰ । णयन्त । ल्युट् ॥ विदारयतिवा ॥

विदारिका । स्त्री॰ शालपर्ण्याम् ॥ विदार्यर्थे ॥ विदार्येव । स्वार्थेक ॥

विदारिगन्धा । स्त्री॰ अंशुमत्याम् । शालपर्ण्याम् ॥ विदार्या गन्ध विदारिगन्ध . । ङ्यापोरितिह्रस्व : । सोऽस्त्यस्या : ॥

विदारिणी । स्त्री॰ काश्मर्याम् ॥

विदारित : । त्रि॰ भेदिते ॥ विदार्यतेस्म । दृ॰ । णयन्त : । क्त : ॥

विदारी । त्रि॰ विदारणकर्त्तरि ॥ विपूर्वाद्दृणातेः कर्त्तरिणिनि : ॥

विदारी । स्त्री॰ शालपर्ण्याम् । अष्टादशप्रकारकण्ठरोगान्तर्गतरोगविशेषे ॥ यथा । सदाहतोयश्वयथुंसुताम्रमन्तर्गलेपूतिविशीर्णमासम् । पित्तेनविद्याद्वदनेविदारींपार्श्वेविशेषात्सतुयेनशेते ॥ सपुरुषोयेनपार्श्वेन॰ विशेषाद्बाहुल्येनशेते॰ तस्मिन्पार्श्वेसाविदारीभवतीत्यर्थ : ॥ क्षुद्रगन्धायाम् । श्वेतभूकूष्माण्डे ॥ विदारीचोरशुक्लेक्षुगन्धाक्रोष्ट्रीचेत्यमर : ॥ अस्या: गुणास्तु । विदारीमधुरास्निग्धाबृंहणीस्तन्यशुक्रदा । शीतास्वर्यामूत्रलाचजीवनीबलवर्णदा ॥ गुरु पित्तापह

महार्दमन्तिरसायनीति ॥ विदारय ति । दृविदारणे० अयन् । पचा द्यच् । गौरादि:॥ विदारी . फलं मूलञ्च॰ विदारी । चनुदात्तादेश्च ख्वज ॰पुष्पमूलेषुबहुलमिति॰लु पि॰ युक्तवद्भाव : ॥

विदारु : । पुं॰ क्रकचपादे । कृक लासे ॥

विदाहि । न॰ परिणामेऽम्लपाकमु पयाति॰ दाहजनकद्रव्ये ॥ विदा हिद्रव्यमुद्गारमम्लं कुर्यात्तथादृषा म् । हृदिदाहञ्चजनयेत्पाकागच्छ तितच्चिरात् ॥

विदिक्चक्र : । पुं॰ हरिद्राङ्गप क्षिणि

विदित : । पुं॰ कवौ ॥ चि॰ बुधि ते । चवगते । ज्ञाते । विदिक्रिय यातिशयेनाप्ते । विदिक्रियाकर्म णते । यथा । तस्मिन्ब्रह्मणिवि दितेविश्वमशेषंभवेदिदविदितम् । कारणमृदिविदितायांघटकर्कोद्या- यथाऽवगम्यन्ते ॥ ७५ । श्रुते ॥ चर्थिते ॥ सत्तान्तज्ञानवति ॥ च म्युपगते ॥ व्याकृते ॥ विद्यतेस्म । विदज्ञाने । क्त : । यस्यविभाषेती ट् ॥ विदितवेदनमस्यास्तिवा । च र्शचाद्यच् ॥

विदिश् । स्त्री॰ चपदिशं । चपदिशि । दिशोर्मध्ये । चभिनिर्गतिया ख्यौशानकोणचतुष्टये ॥ दिग्भ्या विनिर्गता॰ प्रान्ताविदिक् ॥

विदिशा । स्त्री॰ नगरीविशेषे ॥

विदीर्णं । चि॰ कृतविदारणे । चौरा॰ फाडा इ॰ भा॰ ॥ दृ॰ । कर्मणिक्त : । ऋतइद्॰ रपर । रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु . । पुं॰ हस्तिकुम्भयोर्मध्यभागे ॥ कुम्भौतुपिण्डौशिरसस्तयोर्मध्ये विदु : पुमान् ॥ वेत्तिसञ्ज्ञामयचा तेन । विद॰ । बाहुलकात्कु ॥

विदुर . । पुं॰ नागरे ॥ धीरे ॥ धृत राष्ट्रानुजे । कौरवाणामन्त्रिणि ॥ चि॰ज्ञानशीले ॥ वेदनशील . । विदिभिदिच्छिदे : कुरच ॥

विदुल . । पुं॰ चम्बुवेतसे ॥ वेतसे ॥ गन्धरसे । वेत्ति ॥ वेत्तिविद्यतेवा । बाहुलकात्कुलच्॰गुणाभावश्च ॥ न म्रवेतसे ॥

विदुषी । स्त्री॰ पण्डितायांनार्याम् ॥ वेत्ति । विदे : शतुर्वसु : । उगित श्चेतिङीप् ॥

विदुष्मती । स्त्री॰ पण्डितवत्यांपु- र्याम् ॥

विदून : । चि॰ परितप्ते ॥ विदूयते स्म । टुदुउपतापे । क्त : । स्वादि भ्यश्चेतिनिष्ठानत्वम् ॥ विशेषेणादू नोवा ॥

विदरम् । न॰ देशविशेषे । बालवा

थे ॥ वालवायाद्रे · समीपवर्त्ति निनगरे ॥ त्रि॰ चतिदूरस्थदेशा दौ । विप्रक्रष्टे ॥

विदूरजम् । न॰ वैदूर्यमणौ ॥

विदूरथ. । पु॰ राजविशेषे ॥

विदूरभूमि · । स्त्री॰ विदूरदेशे ॥

विदूराद्रि. । पुं॰ रोहणपर्वते ॥

विदूषक: । पुं॰ क्रीडनीयेकपात्रे । षिङ्गे । विटे । व्यलीके । काम केलौ । चाटुवटौ । वासन्तिके । वैहासिके । प्रहासिनि । परनिन्दा कारे । खले । अभीरौ । सूचके । कण्टके । परदेषिणि ॥ नायकवि शेषे ॥

विदेश · । पु॰ परदेशे ॥ कोतिभा र · समर्थानांकिंदूरव्यवसायिना म् । कोविदेश सविद्यानाका . पर प्रियवादिनाम् ॥

विदेह. । पुं॰ जनकान्वयभूमिपे । मैथिले ॥ विदेहा : पु॰ भूम्नि । देशविशेषे । तीरभुक्तौ । तिरुहि त॰ इ॰ भा॰ प्र॰ ॥ यथा । गण्ड कोतोरमारभ्यचम्पारण्यान्तकशि वै । विदेहभूः समाख्याताताीरभु क्त्यभिध. सतु ॥ त्रि॰ कायशून्ये । निर्देहे ॥

विदेहमुक्ति: । स्त्री॰ मुक्तिविशेषे ॥ सायथा । तत. कालवशादेवप्रार ब्धेतुचयङ्गते । वैदेहींमामकोंमु क्तिं यातिनास्त्यत्रसंशयइति ॥ त तोजीवन्मुक्त्यनन्तरम् ॥

विदेहा । स्त्री॰ मिथिलायाम् ॥

विद्ध. । त्रि॰ वेधिते । क्रतच्छिद्रे ॥ क्षिप्ते ॥ सदृशे । बाधिते ॥ ताडि ते ॥ विध्यतेस्म । व्यधताडने । क्त: । ग्रहिज्येतिसम्प्रसारणम् ॥

विद्धकर्ण · । पुं॰ विद्धकर्ण्याम् ॥ त्रि॰ क्रतकर्णवेधे ॥ विद्धौकर्णौ यस्य ॥

विद्धकर्णा । ) विद्धकर्णिका । ) स्त्री॰ विद्धकर्ण्याम् ॥

विद्धकर्णी । स्त्री॰ पाठायाम् । अम्ब ष्ठायाम् ॥ विद्धौकर्णौयया॰ यस्या वा । पाककर्णेतिङीष् ॥

विध्यर्थ. । पं॰ विधिफले ॥ क्रति साध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वञ्च लिताकिंकाणादर्शनम् ॥ भाट्टमते विद्ध्यर्थस्तु॰ श्येनफलस्याभिचार स्यानर्थहेतुत्वादधर्मत्वम् ॰ श्येनस्य तुविहितस्यसमीहितसाधनस्यधर्म त्वमेव । अर्थपदव्यावर्त्यन्तु॰ काल ञ्जभक्षणादेर्निषिद्धस्यैवेति । फल तोऽनर्थहेतुत्वेनतु॰ शिष्टानांश्येना नौनधर्मत्वेनव्यवहार · । तदुक्त म । फलतोपिचयत्कर्मनानर्थे नानुवध्यते । केवलप्रीतिहेतुत्वात् तद्धर्मइतिकथ्यते ॥

विद्ध्वंस: । पु॰ विनाशे ॥ विशि

विद्या

ष्टोध्वंस . ॥

विद्यमान . । त्रि॰ वर्त्तमाने ॥

विद्या । स्त्री॰ उमायाम् । शिवायाम् । दुर्गायाम् ॥ मन्त्ररूपायाम् ॥ देवताज्ञाने । उपासनायाम् ॥ विज्ञाने ॥ श्रेयोविषयायाम् ब्रह्मविद्यायाम् ॥ अनावृतसच्चित्तादात्म्यापन्नार्थाब्रह्माकारान्त . करणवृत्तौ ॥ आत्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥ शास्त्रे ॥ आन्वीक्षिकीत्रयीवार्त्तादण्डाख्यासुचतसृषु ॥ यथा । आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिञ्च पार्थिव: । तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वित . ॥ आन्वीक्षिक्यात्मविज्ञानं॰धर्माधर्मौत्रयीस्थितौ । अर्थानर्थौतुवार्त्तायांदण्डनीत्यांनयानयौ ॥ विद्यास्वतस्रएवैतायोगर्च्चमायदेहिनाम् । विद्याविनीतोनृपतिर्न कृच्छ्रे व्यवसीदति ॥ इति ॥ पुराणादिचतुर्द्दशसु ॥ यथा । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता. । वेदा : स्थानानिविद्यानांधर्मस्यचचतुर्द्दश ॥ इति ॥ अष्टादशविद्यासु ॥ यथोक्तं विष्णुपुराणे । अङ्गानिवेदाश्चत्वारोमीमांसान्यायविस्तर : । धर्म्मशास्त्रंपुराणञ्चविद्याह्येताश्चतुर्द्दश । आयुर्वेदोधनुर्वेदोगान्धर्वश्चेतितेत्रय : । अर्थशास्त्रं चतुर्थञ्चविद्याह्यष्टादशैवता : ॥ इति ॥ तत्र

विद्या

ङ्गानिषट्॰यथा । शिक्षाकल्पोव्याकरणं निरुक्तं छन्दोज्योतिषमिति । ऋग्यजु ' सामाथर्वाख्या . वेदाश्चत्वारईरिता • । विचारोवेदवाक्यानामीमांसाप्रोच्यतेबुधै ॥ साचपूर्वोत्तरभेदाद्द्विधा । तथाहि । कर्मप्रतिपादनपराजैमिनिप्रणीताद्वादशाध्यायी॰पूर्वमीमांसा । ब्रह्मप्रतिपादनपराव्यासप्रणीताचतुरध्यायी॰उत्तरमीमांसेति । पदार्थनिर्णयपरंतर्कशास्त्रं न्याय: ॰अत्रैववैशेषिकं नयस्यान्तर्भाव : । मन्वत्रिविष्णुहारीतादिप्रणीतधर्मशास्त्रम् । कापिलपातञ्जलपाशुपतपाञ्चरात्रादीनामागमानामपिधर्मशास्त्रएवान्तर्भाव : । सर्गादिपञ्चलक्षणलक्षितम् ॰मत्स्यमार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवराहाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्कन्दभेदादष्टादशविधं पुराणम् । तदुक्तम् । मद्वयंभद्वयञ्चैव॰ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूस्कानिपुराणानिविदुर्बुधा . ॥ उपपुराणानामप्यत्रैवान्तर्भाव : । रोगोपशमपूर्वकानन्दफलकोऽष्टस्थानसंयुतआयुर्वेद : । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादकमन्त्रसहित : पादचतुष्टयात्मकोधनुर्वेद' । षड्जादिस्वरतानपरिच्छेदप्रयुक्तान्यथानिपृथक्पथक्जाति

स्वरसमुद्रायोगाथर्ववेद : । चतु :
षष्टिकलासङ्ग्राहकमीशनसादिशा
स्त्रमर्थशास्त्रमिति ॥ सर्वद्रव्येषु वि
द्यैवद्रव्यमाहुरनुत्तमम् । अहार्य्यं
त्वादनर्घ्यत्वादक्षयत्वाच्चसर्वदा ॥
विद्याददातिविनयं विनयाद्याति
पात्रताम् । पात्रत्वाद्धनमाप्नोति
धनाद्धर्मंततः सुखम्इतिविष्णु
शर्मा ॥ दानेनतपसायज्ञैरुपवास
व्रतैस्तथा । नतागतिमवाप्नोतिवि
द्ययायामवाप्नुयादितियम : ॥ वि
दन्त्यनया • अस्रामितिवा । विद-
ज्ञाने । सञ्ज्ञायांसमजनिषदनिपत
मनविदषुञ्शीङ्भृञिणइतिक्य
प् ॥ ब्रह्मविद्याहि • दृश्यमिथ्यात्वं
दृश्वस्तुन स्वकाशत्व बोधयति ॥ प
रापरविभेदेनविद्याद्वैविध्यमीरित
म् । ऋग्वेदाद्याऽपराविद्यापरात्व
क्षरतत्परा ॥ व्यवहारस्यदशयवि
द्याविद्येतिभेदपरिभाषा । नोक्षये
ततत्त्वदृष्ट्यातत्त्व ब्रह्मैवनान्यदस्य
स्मात् ॥ तत्त्वदृष्ट्या • ब्रह्मात्मैक
त्वविषयात्तदृष्ट्या । तत्त्वम् • यथार्थ
स्वरूपम् ॥ गणिकार्यामोषधी ॥

विद्यागुरु : । पुं • आचार्यातिरिक्तउ
पाध्यायादौ ॥

विद्यातीर्थम् । न • सन्ध्यातीर्थे ॥
विद्यादानपात्रे ॥

विद्यादल : । पुं • भूर्जवृक्षे ॥

विद्यादाता । त्रि • विद्यादानकर्त्त
रि ॥ यथा । अन्नदाताभयत्राताप
त्नीतातस्तथैवच । विद्यादाताज
न्मदातापञ्चैतेपितरोनृणाम् ॥

विद्यादानम् । न • अध्यापने ॥ पुस्त
कदाने ॥ अन्नदान महादान वि-
द्यादानं ततोधिकम् । अन्नेनक्ष-
णिकातृप्तिर्यावज्जीवन्तुविद्यया ॥
अपिच । वाजपेयसहस्रस्यसम्यगि
ष्टस्ययत्फलम् । तत्फलं समवा
प्नोतिविद्यादानोन्नसंशय : ॥ त
स्माद्वालयेनित्य धर्मशास्त्रस्यवा
श्रुतेः । पठन कारयेद्राजन्यदीच्छेद्ध
र्ममात्मन : ॥ गोभूहिरण्यवासा
सिशयनान्यासनानिच । प्रयच्छ तै
र्नदत्तानिभवन्तिनृपसत्तम ॥ ध
र्माधर्मंनजानातिलोकोयं विद्यया
विना । तस्मात्सदैवधर्मात्मन्वि
द्यादानरतोभव ॥ इतिवह्निपुराणे
विद्यादाननामाध्याय : ॥ अपिच
गारुडे ५१ अध्याये । विद्यांदत्त्वाब्रा
ह्मणायब्रह्मलोकेमहीयते । दद्याद
हरहस्तांतुयश्चयाब्रह्मचारिणे ॥ स
र्वपापविनिर्मुक्तोब्रह्मस्थानमवाप्नुया
त् इति ॥ यस्तुदेव्या गृहेनित्यविद्या
दानं प्रवर्त्तयेत् । सभवेत्सर्वलोका
नापूज्य : पूजापदंव्रजेत् ॥ धर्मा
र्थैधनस्यातांशुश्रूषावामितद्विधा
। तत्रविद्यानवप्नत्याशुभंबीजमिवो

षरे ॥ विद्ययैवसमंकाममर्त्तव्यन्ब्रह्मवादिना । आपद्यपिहिघोरायांनत्वेनामिरिणेवपेत् ॥ विद्याब्राह्मणमेत्याहशेवधिस्तेऽस्मिरचमाम् । असूयकायमामादास्तथास्यांवीर्य्यवत्तमा ॥ यमेवतुशुचिंविद्यान्नियतब्रह्मचारिणम् । तस्मैमाब्रूहिविप्रायनिधिपायाप्रमादिने ॥ इति मनुः ॥

विद्यादेवी । स्त्री॰ विद्याधिष्ठात्र्याम । सरस्वत्याम् ॥ जिनषोडशदेवीषु ॥ यथा । विद्यादेव्यस्तुषोडश ॥ १५२ ॥ रोहिणीप्रज्ञप्तीवज्रशृङ्खलाकुलिशाङ्कुशा । चक्रेश्वरीनरदत्ताकाल्यथोऽसौमहापरा ॥ गौरीगान्धारीसर्वास्त्रामहाज्वालाचमानवी । वैरोट्याच्छुप्तमानसीमहामानसिकेतिता : ॥ १५४ ॥ इ॰ हे॰ च॰ ॥

विद्याधनम् । न॰ विद्ययोपार्ज्जितवित्ते ॥ यथाहकात्यायन : । उपन्यस्तेतुयल्लब्धविद्ययापणपूर्व्वकम् । विद्याधनन्तुतद्विद्याद्विभागेननियोजयेत् ॥ शिष्यादार्त्विज्यत : प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् । स्वज्ञानशंसनाद्वादाल्लब्धंप्राध्ययनाच्चयत् । विद्याधनन्तुतत्प्राहुर्विभागेनप्रयोजयेत् । शिल्पेष्वपिहिधर्म्मोऽयं॰ मूल्याद्यच्चाधिकंभवेत्

साधारणस्वर्णादिकमादाय॰ कुण्डलादिकंनिर्माय॰ स्वर्णादिमूल्यात्॰ शिल्पगुणेनयदधिकमूल्यं स्यात्तदित्यर्थ. ॥ परनिरस्तयल्लब्धं विद्ययाद्यूतपूर्व्वकम् । विद्यातिशयनैपुण्येन॰द्यूतपूर्व्वंकंयल्लब्धमित्यर्थं ॥ विद्याधनन्तुतद्विद्यान्नविभाज्यंबृहस्पति : ॥ अस्यार्थंवचनत्रयांनुक्रमेणाह । यदीति । यदिभवान्भद्रमुपन्यस्यति॰ तदाभवते॰ एतमयैतद्देयमितिपणितंयच्चोपन्यासनिस्तीर्य्यंलभतेतन्नविभाज्यम् ॥ शिष्यादध्यापितात्॰ आर्त्विज्यत : ऋयजमानाद्दक्षिणयालब्धधनम्॰ दक्षिणाचनप्रतिग्रहेवेतनरूपत्वात्तथा ' तथायत्किञ्चिद्विद्ययाप्रश्ननिस्तीर्णे॰ अपणितमेवयदिकश्चित्परितोषाद्ददाति॰प्रश्ने निस्तीर्णे॰ प्रश्नश्चसम्यगुत्तरेदत्तइत्यर्थ: सन्दिग्धप्रश्ननिर्णयादितिव्याचष्टे । तथेति॰ तथायोऽस्मिन्शास्त्रार्थेममसंशयमपनयति॰ तस्मैसुवर्णमिदंददानीत्युपस्थितस्यसंशयमपनीययल्लब्धम्। तच्चैवविकल्पेनव्याख्यान्तरमाहयद्वेति । यद्वा॰ वादिनोर्व्वादसन्देहे॰न्यायकरणार्थमागतयो : सम्यङ्निरूपणेनयल्लब्धं षष्ठाशादिकम् । स्वज्ञानशंसनादितिव्याचष्टे॰ तथेति॰ तथाशास्त्रादिषुप्रक

ष्टज्ञानविभाज्यतत्प्रतिग्रहादिनालब्धम् । चोदादित्यस्यार्थमाह० तथेति । तथाद्वयो शास्त्रज्ञानविवादे० अन्यत्रापियत्रकुत्रचिदन्योन्यज्ञान-विवादे० निर्जित्ययल्लब्धम्० निर्जित्य० एककोटिव्यवस्थापनेनविवादमपनीय० लब्धम्० वादिपणितराज्ञावाप्रसाददत्तमित्यर्थ. प्राध्ययनादितिव्याचष्टे० तथेति० तथैकस्मिन्देयेबहूनामुपप्लवे० येन प्रकृष्टमधीत्य० यल्लब्धम् । शिल्पेष्वपीत्यस्यार्थमाह० तथेति० तथा शिल्पादिविद्यया० चित्रकारसुवर्णकारादिभिर्यल्लब्धम्० शिल्पगुणेन यदधिकंलब्धम् । तथाद्यूतेनापि परनिर्जित्ययल्लब्धं० तत्सर्वंविद्याधनमविभाज्यमितरैरित्यर्थ. । तस्माद्याथाकथाचविद्यायालब्धमर्जकस्यैवतन्नेतरेषामिति० प्रदर्शनार्थन्तुव्याख्यायनेनविस्तारितमितिदायभाग :॥ अथनारद :। कुटुम्बं बिभृयाद्भ्रातुर्योविद्यामधिगच्छत : । भागंविद्याधनात्तस्मात्सलभेताश्रुतोपिसन्निति ॥ विभृयादित्येकवचननिर्देशाद्बहव: । यदिविद्यामभ्यस्यतोभ्रातु : कुटुम्बमपरोभ्राताखधनव्ययशरीरायासाभ्यासं-वर्धयति० तदातद्विद्यार्जितधनेतस्याधिकार:० अश्रुतोमूर्ख : ।

विद्याधर । पुं० देवयोनिविशेषे । जीमूतवाहनपुष्पदन्तादौ० कामरूपिणि० खेचरे ॥ विद्यायागुटिकाञ्जनादिविषयिण्या:० धरोधारक ॥ रतिबन्धविशेषे ॥ यथा । नार्योरुयुगधृत्वाकराभ्याताडयेत्पुन: । कामयेन्निर्भयंकामीबन्धोविद्याधरोमत :॥ यन्त्रविशेषे ॥ यथा ॥

विद्याधरयन्त्रम् । न० डमरुयन्त्रे ॥

विद्याधार: । पुं० वर्णवृत्तान्तरे ॥ यथा । नागाधीशेनोक्तं वृत्तं विद्याधारम्० चक्रि : कर्णौ शेते पूर्णभूमौसारम् । स्यादस्मिन्विश्रामोवेदैर्वेदैर्वेदै० कृत्वायस्मात्पूर्णैधीर: कीर्त्यायुक्त. ॥ यथा । वन्देपादाम्भोजन्नित्य सीताभर्तु : कृत्वासिन्धौसेतुरक्षोनाथहन्तु. । पैत्र्यामाज्ञाज्ञात्वाप्राप्तंराज्यन्त्रातु: सौधै : सर्वैर्लोकै : सार्कंनाकंयातु : ॥ विद्यां धरति । धृञ्० । कर्मण्यण् ॥

विद्याधिकारी । त्रि० उपनिषद्भिर्वचनेनोक्तो ॥ विद्याया: ब्रह्मविद्याया : अधिकारी ॥ सद्विविध:० कृतोपास्तिरकृतोपास्तिश्च । तत्रोपास्तिमाक्षात्कारपर्यन्तामुपासनाकृत्वायोज्ञानेप्रवर्त्ततेसमुख्योविद्याधिकारी । इदानीन्तनस्तप्रायेणाकृतोपासनएवौत्सुक्यमात्रात्सहसा

विद्यायाप्रवर्त्ततेसतुगौणोधिकारी॰ तस्यज्ञानस्यसबातप्रदेशप्रदीपवत्स हसानिवर्त्तनात् । ननु सर्वेषाम पिविदुषामात्मनोनित्यप्राप्तिरूपो मुख्याधिकारः किन्नस्याद्विशेषा द्विद्यानिवर्त्तिरितिचेत्॰शृणु॰अ स्यायम्भाव'। यस्तूपास्यदेवतासा साक्षात्कारपर्यन्त सगुणोपासन वि धायविद्यायांप्रवृत्तस्तस्यविचारेणज्ञा नोत्पत्तौविघ्नपाभावात्॰आत्मधी र्नित्यप्राप्तैव। य' पुनरुपासनमक्व त्वाश्रवणाद्यनुष्ठायतस्य निश्चिनोति तस्यचित्तवशीकरणाभावेविघ्नपस म्भवात्तम्प्रतिनियमविधि.। नच तत्त्वज्ञानेमाज्ञानस्यनष्टत्वाद्विधिवै यर्थ्यमितिशङ्क्यम्॰वशीकरणा भावे॰शास्त्रेणनष्टोत्परमार्थबुद्धिरि त्यज्ञानेपरमार्थत्वांशनाशेपि॰जन्म हेत्वज्ञाननाशायोगात् । अन्यथा वेदान्तेषूपास्तिविधीनामेकाग्रत्वद्वा राऽद्वितीयब्रह्मपरत्त्व नस्यात् । अ तस्तेषांश्रुतिप्रसिद्धप्रणवोच्चारणपूर्व कमप्रतिबद्धसाक्षात्कारायनिरन्तर निर्गुणब्रह्मभावनाकार्या । अतएव शास्त्रे॰विदुषोविधिर्नास्तीत्युक्त्वा॰ पुनर्विज्ञानवद्विधिमर्हतीतिब्रह्म निष्ठाविधीयते॰इत्याद्युक्तिर्नविरु ध्यते । अधिकारिभेदेनव्यवस्थास म्भवात् ॥

विद्यानिधि । पुं॰ विद्यासम्प्रदाय प्रवर्त्तके ॥

विद्यानैपुण्यकाम' । त्रि॰ विद्याति शयमात्रार्थिनि ॥

विद्याप्रयोजनम् । न॰ आत्मान्तिक्यांस सारनिवृत्तौब्रह्मप्राप्तिलक्षणायाम्॥ विद्यायाः प्रयोजनम् ॥

विद्याभीप्सी । त्रि॰ विद्यार्थिनि ॥

विद्यारम्भः। पुं॰ प्राप्तेतुपञ्चमेवर्षे विद्यारम्भञ्चकारयेदितिवचनबोधि तेविद्यायाः प्रारम्भे ॥

विद्यार्थी । त्रि॰ विद्याभीप्सिनि ॥ विद्ययैवार्थ॰ सोस्यास्तीति॰इ- नि: ॥

विद्यावान् । त्रि॰ विद्याविशिष्टे ॥ पण्डिते ॥ विद्यास्यस्य । म- तुप् ॥

विद्याविषयः । पुं॰ परब्रह्मणि॰प्र त्यगात्मभूते ॥ विद्यायाः विष यः ॥

विद्युज्जिह्वः। पुं॰ राक्षसविशेषे ॥ त्रि॰तडिदाभजिह्वे ॥

विद्युज्ज्वाला । स्त्री॰ कलिकारीवृ- क्षे ॥ तडित्प्रभायाम् ॥

विद्युत् । स्त्री॰ मेघमुहर्ष्ये॰दीर्वाका रे॰ज्योतिषि । तडिति । सौदा मिन्याम । चञ्चलायाम् ॥ साचतु र्विधायथा। वातायकपिलाविद्युदा तपायह्नितोहिता। पीतावर्षायवि

स्त्रियाट्रभिर्वायासिताभवेत् ॥ स
म्यायाम् ॥ विशेषेणद्योतते । द्यु
तदीप्तौ । भ्वाजभासीतिक्विप् ॥
त्रि० निष्प्रभे ॥

विद्युत्केश : । पुं० राक्षसविशेषे ॥

विद्युत्प्रियम् । न० कांस्ये ॥

विद्युत्वान् । पुं० मेघे ॥ विद्युत :
सन्त्यस्मिन् । मतुप् ॥

विद्युन्माला । स्त्री० अनुष्टुप्छन्दोभे
दे ॥ यथा । मोमोगोगोविद्युन्मा
ला । वासीवन्नौविद्युन्मालावर्हश्रे
णीशाकूशाप : । यस्मिन्नास्तातापो
च्छित्त्यैगोमध्यस्थ : कृष्णाम्भोद : ॥
अपिच । उक्तायस्यामष्टौवर्णा : पा
देपादेसर्वेदीर्घा' । विश्राम : स्याद्वे
द्वैर्वेदै : साविद्युन्मालानिर्दिष्टा
॥ यथा । आगामिन्योनोयामिन्यो
यायायाताभूयोभूय : । अभच्छाया
बलारूढ्यमानेनानेनस्यात्किन्ते ॥

विद्युन्माली । पुं० राक्षसविशेषे ॥

विद्योपयोग : । पुं० विद्यायेष्टसिद्धौ ॥
चतुर्भिस्प्रकारैर्विद्योपयुक्ताभवति
। आगमकालेन० आगमकालस्थवि
द्याग्रहणकाल : । १ । स्वाध्यायका
लेन० स्वाध्यायकालस्थोभ्यासकाल :
। २ । प्रवचनकालेन० प्रवचनकालोऽ
ध्यापनकाल : । ३ । व्यवहारकालेन०
व्यवहारोयज्ञानुष्ठनकर्मणि । ४ ।
तत्राद्ययोर्विद्याध्ययबुद्धिमानित्वादि
रपूर्वकमन्नवस्त्रादिलाभरूपोपयोग
। तृतीयेप्रतिष्ठा० सच्छिष्यलाभद्वा
रार्थप्राप्ति सत्कारविशेषस्य । चतु
र्थे० यज्ञादानुष्ठानकालेऽपमन्त्रप्रयो
गप्रयुक्तप्रायश्चित्ताभाव . ० कर्म्म सा
द्गुता० दक्षिणालाभ . प्रतिष्ठाचेत्युप
योग ' ० तादृशस्योपयोग : सर्वाध्य
यनएवेतिमहाभाष्यकाराद्य : ॥

विद्रम् । न० छिद्रे ॥

विद्रधि . । पुं० रोगविशेषे । कुक्षान्थौ
। हृद्व्रणे ॥ अस्यसम्प्राप्तिपूर्व्वकसा
मान्य लक्षणंयथा । त्वयक्तमांसमेदां
सिप्रदुष्यास्थिसमाश्रिता ' । दोषा :
शोथंशनैर्घोरमनयन्त्यायताभ्यशम् ॥
महामूलरुजावन्तं वृत्त व्याप्ययवाय
तम् । सविद्रधिरितिख्यातोविज्ञे
य : षड्विधस्तु : ॥ पृथग्दोषै : स
मस्तैश्चक्षतेनाप्यसृजातथा । विद्रधि
: षड्विध: प्रोक्तोविशेषोभावसङ्ग्रहे ॥
जलौकापातनंशस्तसर्वस्मिन्नपिविद्र
धौ । मृदुर्विरेकोलघ्वन्न स्वेद : पित्तो
त्तर विना ॥ वेदनम् । विदेर्वहुल
मन्यत्रापिसञ्ज्ञाछन्दसोरितिवारक्
। यद्वा । विद्रातस्प्रपलायने । आ
तश्चोपसर्गइतिक: । विद्रधीयतेऽ
स्याम् । डुधाञ्० । कर्मण्यधिक
रणे चेतिकि : ॥ यद्वा । विद्रस्यधा
नम् । कृषाष्यादिभ्य : ॥

विद्रधिनाशन : । पुं० शोभाञ्जनवृक्षे ॥

विद्रव:। पुं० विद्रुतौ। पलायने॥ धि
थि। बुद्धौ॥ विद्रवणम्। द्रुगतौ।
क्षरणे॥ निन्दायाम्॥ चरणे॥
विद्रावित:। त्रि० पलायिते॥
विद्रुत:। त्रि० पलायिते॥ प्रचलिते
॥ द्रवीभूतेखत' प्राप्तद्रवीभावे।
विलीने। द्रुते॥ विद्रवतिस्म। द्रु
गतौ। गत्यर्थेतिक्त॥
विद्रुति'। स्त्री० पलायने। प्रद्रावे॥
विद्रुम:। पुं० रत्नवृक्षे॥ प्रवाले
॥ किशलये॥ विशिष्टोद्रुम॥ य
द्वा। विशिष्टेद्रौवृक्षेभव.। विशि
ष्टोद्रुमोस्यस्यवा। यु द्रुभ्यांम.
॥ त्रि०विगतद्रुमेभूमिपर्वतादौ॥
विद्रुमलता। स्त्री० नलीनामौषधौ॥
शुषिराविद्रुमलताकपोताङ्घ्रिर्नटी
नली॥ विद्रुमस्येवलता॥
विद्रुमलतिका। स्त्री० विद्रुमलतायो
म्॥
विद्वत्कल्प:। त्रि० ईषदूने विदुषि।
विद्वद्देशीये॥
विद्वत्संन्यास। पुं० सम्यगनुष्ठिते:
श्रवणमननिदिध्यासनै: परन्तत्त्वं
विदितवद्भि' सम्पाद्यमाने० ज्ञा
नफलभूतेचतुर्थाश्रमे॥ तच्चयाज्ञव
ल्क्यादय: सम्पादयामासु:॥
विद्वान्। त्रि० प्राज्ञे। दक्षे॥ पण्डि
ते॥ वेदविदि॥ विदितसकलवे
द्ये। आत्मविदि॥ व्युत्थोनमप

रिग्रहश्चे तिद्वयविविदिषुणामाध-
नत्वेनोक्तम्० तत्० विदुषाख
त: सिद्धमित्याह। लोकद्वयार्थेष
णाभ्योव्युत्थानम्परिग्रह।द्वय
वोश्रमश्चैवविदुषानतुयत्नत'॥
आनन्दे व्यक्षभावस्यमात्मानपश्य
त. कुत'। कोम परिग्रहोवा
स्यादृयोक्तामइतिश्रुति॥ वेत्ति
॥ विदज्ञाने। विदे शतुर्वसुरिति
पाणिनीयवसुरादेश॥ नशित्यादि
ज्ञानयुक्तेविद्वच्छब्द. प्रयुज्यते॥
विद्वत्त्वञ्चनृपत्वञ्चनैवतुल्यकदाच
नास्वदेशेपूज्यतेराजाविद्वान्सर्वत्रपू
ज्यते॥
विद्विट्। त्रि० शत्रौ॥
विद्वेष.। पुं० विद्वेषणे। द्विषप्र
प्रीतौ। घञ्॥
विद्वेषक:। त्रि० विद्वेष्टरि। द्वे
षकर्त्तरि॥ विद्वेष्टि। द्विष० ण्वु
ल्।
विद्वेषणम्। न० विद्वेषे। वैरे॥
अभिचारकर्मविशेषे॥ स्निग्धाना
द्वेषजननमिथोविद्वेषणमतम्॥
विद्वेषणी। स्त्री० स्त्रीविशेषे॥
विद्वेषी। त्रि० शत्रौ। वैरिणि॥
विद्वेषोस्यस्यास्मिन्वा। इनि:॥
विधनम्। त्रि० विनाशयति॥
विधवनम्। न० कम्पने॥
विधरण:। त्रि० विधारयितरि॥

विधवा । स्त्री० रण्डायाम् । मृतभर्तृकायाम् । विश्वस्तायाम् । पतिहीनाचयानारीकामंभवतुपुत्रिणी । धनधान्यसमृद्धापिविधवेत्युच्यतेबुधैः । विगतोधवोभर्त्ता यस्याः ॥

विधा । स्त्री० गजाशने । इभान्ने ॥ ऋद्धौ ॥ विधौ ॥ विधानम् । डु धाञ् धारणपोषणयोः ॥ आतङ्कः ॥ वेतने ॥ कर्मणिविधीयन्तेऽनया ॥ प्रकारे ॥ वेधने ॥

विधाता । पुं० वेधसि । द्रुहिणे ॥ स्मरे । कामदेवे ॥ दिशिदिग्रूपाति । डुधाञ्० । तृच् । विरन्यापसर्गनिवृत्त्यर्थः ॥ मदिरायामितिराजनिघण्टः ॥ भृगुमुनेः पुत्रे ॥ विष्णौ कर्माणिदर्शपूर्णमासादीनि० तत्फलानिस्वर्गादीनिचविदधातिसृजति । पूर्ववत्तृच् ॥

विधाभू । पुं० नारदमुनौ ॥

विधायुः । पुं० सूर्यशोभायाम् ॥ ब्रह्मणोवयसि ॥

विधाची । स्त्री० पिप्पल्याम् ॥ मद्ये ॥ विधानकल्याम् ॥

विधानम् । न० हस्तिकवले ॥ विधौ ॥ करणे ॥ अप्रवृत्तप्रवर्त्तने ॥ वेदे ॥ विधीयन्तेऽनेनकर्माण्यग्निहोत्रादीनि । डुधाञ्० । ल्युट् ॥

विधानगः । पुं० पण्डिते ॥ विधानं गायति । गै शब्दे । गापोष्टक् ॥

विधानोक्त । त्रि० विधिशास्त्रबोधिते ॥ विधानेनउक्तः ॥

विधाय । अ० कृत्वेत्यर्थे ॥

विधायक . । त्रि० विधेर्ज्ञापके । विधानस्यकर्त्तरि ॥ विपूर्वोधाञोण्वुल् ॥

विधायी । त्रि० विधानकर्त्तरि ॥

विधारक । पुं० विधरणे ॥

विधि . । पुं० ब्रह्मणि । परमेष्ठिनि । काले ॥ दैवे । नियतौ ॥ विधाने ॥ विधिवाक्ये ॥ प्रकारे ॥ कल्पे ॥ क्रमे ॥ नियोगे ॥ विष्णौ ॥ वैद्ये ॥ यागोपदेशग्रन्थे ॥ कर्मणि ॥ लिङाद्यर्थे ॥ वेदे । कुर्यात्क्रियेतकर्त्तव्यं भवेत्स्यादितिपञ्चमम् । एतत्स्यात सर्ववेदेषुनियतविधिलक्षणमितिन्यायविदास्मरणम् ॥ तथाच० पुरुषार्थमुद्दिश्य० कर्मोपासनाज्ञानात्मककाण्डत्रयविधायको वेदो० विधिरितिफलितोर्थः ॥ अज्ञातज्ञापकोवेदभागो० विधिरितिमीमांसकाः । सचताद्दशप्रयोजनवदर्थविधानेनार्थवान्० याद्दशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते । यथा० अग्निहोत्रं जुहुयात् स्वर्गकामइतिविधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते० अग्निहोत्रहोमेनस्वर्गंभावयेदितिवाक्यार्थबोध. । यत्रकर्ममानान्तरेणाप्राप्त०

तत्रतदुद्देशेनगुणमात्रं विधत्ते । यथादध्नाजुहोतीत्यत्र • होमस्याग्निहोत्रं जुहुयादित्यनेनप्राप्तत्वाद्धोमोद्देशेन • दधिमात्रविधान • दध्ना होमंभावयेदिति । यत्रतूभयमप्राप्त • तत्र विशिष्ट विधत्ते । यथा • सोमेनयजेतेत्यत्र • सोमयागयोरप्राप्तत्वात् • सोमविशिष्टयागविधानम् । सोमपदेमत्वर्थलक्षणया • सोमवतायागेनेष्ट भावयेदिति • वाक्यार्थ बोध । नचोभयविधानेवाक्यभेद • प्रत्येकमुभयस्याविधानात् • किन्तु • विशिष्टस्यैकस्यविधानात् ॥ विधिस्तुर्विध : नियोगविधिरधिकारविधि : प्रयोगविधिश्चेति ॥ विधिरत्यन्तमप्राप्तौनियम : पाक्षिकेसति । तत्रचान्यत्रचप्राप्तौ परिसङ्ख्याविधीयते ॥ अप्राप्तप्रापकोविधिरितिवैयाकरणा : ॥ न्यायमतेविधिर्यथा । प्रवृत्ति : कृतिरेवात्रसाचेच्छातोयतस्तसा । तज्ज्ञान विषयस्तस्यविधि • स्तज्ज्ञापकोथवा ॥ विधिजन्यज्ञानात् • प्रवृत्तिर्हृश्यते • सा • इच्छात : • चिकीर्षात : • चिकीर्षाचकृतिसाध्यत्वेष्टसाधनत्वज्ञानात् • तज्ज्ञानस्यविषय : कार्यत्वमिष्टसाधनत्वञ्चविधिरितिप्राचीनमतम् । स्वमतमाह • तज्ज्ञापकोथवेति । इष्टसाधनत्वानुमायकप्रामाभिप्रायोविधिप्रत्ययार्थ : । इ त

रिदासीयकुसुमाञ्जलि : ॥ विधिर्विधायकइतिन्यायसूत्रम् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यविधि : • अग्निहोत्रं जुहुयात् स्वर्गकामइत्यादि ॥ विधीयतेऽनेनसुखदु : खे । डुधाञ • उपसर्गेघो : कि • ॥ विधत्तइतिविधिर्वा । बाहुलकात् कर्त्तरिकि : ॥ ब्रह्मा । विधविधाने । इन् । इगुपधात्किदितिकित्त्वान्नगुण : ॥ विधानमनेनवा । पूर्ववत्कि : ॥

विधिगोचर . । त्रि॰ विधिकिङ्करे ॥

विधिज्ञ . । त्रि॰ शास्त्रज्ञे ॥

विधित्समान : । त्रि॰ विधातुमिच्छति ॥

विधित्सा । स्त्री॰ विधातुमिच्छायाम ॥ विपूर्वोड्धाञ . सनिमीमेत्यादिना • इकार : । अत्रलोपोभ्यासस्ये त्यभ्यासलोप : तत : स्त्रियामित्यनुवृत्तौ • अप्रत्ययादितिअप्रत्ययेटाप् ।

विधित्सित : । त्रि॰ विधातुमीप्सिते । कर्त्तुमिष्टे ॥

विधित्सु : । त्रि॰ विधातुमिच्छौ ॥ विपूर्वोड्धाते : सन्नन्तादुप्रत्यय : ॥

विधिदर्शी । पुं॰ सदस्ये । न्यूनाधिकविचारकेऋत्विग्विशेषे ॥ विधिदृष्टशीलमस्य । णिनि : ॥

विधिदृष्ट : । त्रि॰ यथाशास्त्रनिश्चिते ॥ विधिनादृष्ट . ॥

विधिदेशक : । पुं॰ सदस्ये । विधिद र्शिनि ॥

विधियज्ञ : । पुं॰ विधिनोनुष्ठीयमा नेवाह्ययज्ञे । दर्शपौर्णमासादौ ॥ विधिविषयोयज्ञ : ॥

विधिवत् । अ॰ यथाविधि । विध्यनु सारेणेत्यर्थे ॥

विधिविषय : । त्रि॰ विधिजन्यप्रय त्नभाव्ये ॥ विधेर्विषय : ॥

विधिहीन . । त्रि॰ यथाशास्त्रबोधित विपरीते ॥ विधिनाहीन : ॥

विधु : । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ । ब्रह्म णि ॥ राक्षसे ॥ विध्यतिविरहिणम् ॰विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्य : कु : । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षय : । पुं॰ अमावास्यायाम् ॥

विधुत : । त्रि॰ त्यक्ते ॥ निरस्ते ॥ क म्पिते ॥ विशेषेणधुत : ॥

विधुति : । स्त्री॰ कम्पने ॥

विधुन्तुद : । पुं॰ राहौ । सैंहिकेये । विधुंतुदति । तुद॰ । विध्वरुषोस्तु दइतिखश् । मुम् ॥

विधुपञ्जर : । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दा क्षायिण्योविधुप्रिया : ॰इतिकोषा न्तरम् ॥

विधुरम् । न॰ प्रविश्लेषे ॥ वैकल्ये त्रि॰विकले ॥ विगताधू : कार्यभा र : । ऋक्पूरित्यप् । धुरोविगतत्व तिप्रादिसमासोवा ॥ न॰प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् ॥ इ॰मे॰ ॥

विधुरित । त्रि॰ विश्लेषिते ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादि भ्यइतिङित्त्वाद्गुणाभाव . ॥

विधूत । त्रि॰ कम्पिते ॥ त्यक्ते ॥ वि धूयतेस्म । धूञ्कम्पने । क्त : । य स्यविभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादि । ल्युट् । धू ञ्प्रीयोर्नुग्वक्तव्य : ॥ अश्वादीना मुगाश्चकम्पने ॥

विधूनित : । त्रि॰ व्याहते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि॰क्त : ।धूञ् प्रीञोरितिनुगागम : ॥

विधूम्र : । पुं॰ धूसरे । कृष्णरक्तमिश्रि तवर्णे ॥ त्रि॰तद्वति ॥

विधृत : । त्रि॰ विधारिते ॥ विशेषेण धृते ॥ विष्टब्धे ॥

विधृति . । स्त्री॰ विधरणे ॥

विधेय : । पुं॰ मन्त्रे ॥ विधीयतेवि नियुज्यतेऽत्राज्ञापनवाक्येनकर्माङ्गत्वे नेतिहरिहरभाष्यम् ॥ त्रि॰विनय ग्राहिणि । वचनेस्थिते ॥ विधित्व स्याबोधविषये ॥ यथा । अनुवाद्यम

मुक्तात्तुनविधेयमुदीरयेत् । नह्यल
व्यास्यदकिञ्चित्क्वचित्प्रतितिष्ठति
॥ विधातु शक्य । अधीयत् । ईं
षति । । गुण : ॥ विधिगम्ये । अ
नुष्ठेये । कर्त्तव्ये ॥ वश्ये ॥

विधेयता । स्त्री॰ विधेयत्वे । विधिज
न्यबोधविषयत्वे ॥ यथा ॥ यथात्र
स्त्रवधादिषुपापस्यनिषितयोपयुक्त
ब्राह्मणादिवृत्तिनिर्देहगुण्य॰तथागङ्गा
स्नानादिषुपुण्यस्यविधेयतावच्छेदक
गङ्गादिस्नानिर्देहगुण्यमितिप्रायश्चित्त
त्त्वम् ॥

विधेयवर्त्ती । त्रि॰ वशवर्त्तिनि ॥ वि
धेयेवर्त्तते॰विधेयवर्त्तयतिवा । णि
नि ॥

विधेयात्मा । पुं॰ वशीकृतान्त : कर
णे ॥ विधेयआत्मायस्य ॥

विनत : । त्रि॰ प्रणते ॥ भुग्ने ॥ शि
क्षिते ॥ विनमतिस्म । नम॰ । क्त :
॥ विशेषेणनतोवा ॥

विनता । स्त्री॰ तार्क्ष्यजनन्याम् । सुप
र्णायाम् ॥ पिटकाभेदे ॥

विनतासूनु : । पुं॰ अरुणे । सूर्यसा
रथौ ॥ गरुडे । खगेश्वरे ॥ विनता
या : सूनु : ॥

विनति : । स्त्री॰ विनये ॥ विशिष्टान
ति ॥

विनद : । पुं॰ क्षपाकौ । शिलीन्ध्रे ॥

विनम्र : । त्रि॰ विनयिनि ॥ विशेषे
णनम्र : ॥

विनम्रकम् । न॰ तगरपुष्पे ॥

विनय । पु॰ शिक्षायाम् ॥ प्रणतौ
। विनीतत्वे । निरहङ्कारे । सौशी
ल्ये । अनौद्धत्ये । अवनतौ ॥ वि
नयप्रशंसायथा । विनयोपग्रहान्भू
त्यै कुर्वीतनृपति : सुतान् । अवि
नीतकुमारंहिकुलमाशुविशीर्यति ।
विनीतमौरसपुत्रयौवराज्येऽभिषेच
येत् ॥ अपिच । वृद्धांश्चनित्यंसेवेत
विप्रान्वेदविद: शुचिन् । वृद्धसे
वीहिसततं रक्षोभिरपिपूज्यते ॥ ते
भ्योधिगच्छेद्विनयविनीतात्मापिनि
त्यश : ॥ विनीतात्माहिनृपतिर्नवि
नश्यतिकर्हिचित् ॥ बहवोऽविनया
न्नष्टाराजान : सपरिच्छदा : । वन
स्थाअपिराज्यानिविनयात्प्रतिपेदि
रे ॥ वेणोविनष्टोऽविनयान्नहुषश्चैव
पार्थिव : । सुदास्सोयवनश्चैवसुमुखो
निमिरेवच ॥ पृथुस्तुविनयाद्राज्यंप्रा
प्तवान्मनुरेवच । कुवेरश्चधनैश्वर्यं
ब्राह्मण्यञ्चैवगाधिज : ॥ इतिमनु :
॥ द्विविधोविनय स्वाभाविक: कृ
त्रिमश्चेतिकौटिल्य । विशिष्टोन
य : ॥ दण्डे ॥ त्रि॰ क्षिप्ते ॥ क्षि
प्ते ॥ निभृते ॥ विजितेन्द्रिये ॥

विनयग्राही । त्रि॰ विधेये । वचनेस्थिते
। आश्रवे ॥ विनयंग्रहीतुंशीलमस्य
। सुपीतिणिनि : ॥

विनयस्थ ' । त्रि० विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । स्था० । क : ॥

विनया । स्त्री० बलौषधौ । बाट्यालकै ॥

विनयी । त्रि० विनयान्विते ॥ विनयो स्यास्ति । इनि : ॥

विनद्द । पु० ऋषभकूजितसमेस्वर विशेषे ॥ विशिष्टोनद्द : ॥

विनशनम् । न० तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्या प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्ट . । त्रि० अन्तर्हिते ॥ विनश्यति स्म । णश अदर्शने । गत्यर्थेतिक्त ॥ छिन्ने । भिन्ने ॥ नाशाश्रये । ध्वंस विशिष्टे ॥ पतिते ॥

विनष्टि ' । स्त्री० विनाशे ।। णशिभावेक्तिन् ॥

विनस : । त्रि० विघ्रे । गतनासिके ॥

विना । अ० वर्जने । पृथक् । अन्तरेण । ऋते । हिरुक् । विनञ्भ्यानानाञौनसहेति० निषेधार्थादिशब्दाना ॥

विनाकृत ' । त्रि० विरहिते । भिन्ने ।। कृ० त्रि० ॥

विनाम ' । पु० शरीरस्यनम्रतायाम् । व्यथयावपुषोनमने ।। विनमनम् । णम । घञ् ।

विनामक : । पु० अधिमासे ॥

विनायक ' । पु० विघ्नराजे । गजानने । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ ॥ जिने ॥ गुरौ ॥ विनयति हितमनुशास्ति । णीञ् ० । ण्वुल् ॥ विशिष्टोनायकइतिवा ॥ विगतोनायकोनियन्ताऽस्येतिवा ॥ त्रि० नायकवर्जिते ॥

विनायिका । स्त्री० तार्क्ष्यपत्न्याम ॥

विनारुहा । स्त्री० त्रिपर्णिकायाम् ॥

विनाश : । पु० अदर्शने । विनष्टे ॥ ध्वंसे ॥ विनशनम् । णश अदर्शने । । घञ् ॥

विनाशक : । त्रि० विनाशकर्त्तरि ॥ विनाशयतितच्छीलादि । णश० । विपूर्वोहेतुमण्ण्यन्त. । निन्दहिंसक्लिशखादविनाशपरिक्षिपेत्यादिनावुञ् ॥

विनाशी । त्रि० अनित्ये । देशकालवस्त्वात्मकत्रिविधपरिच्छेदवति ॥ विनष्टुंशीलमस्य । णिनि . ॥ विनाशकारणशीले ॥

विनाशोन्मुख । त्रि० पक्वे ॥ नाशोद्यते ॥ विनशनविनाश : । भावेघञ् । उद्गतंमुखमारम्भोऽस्य । विनाशेउन्मुख : ॥

विनासक । त्रि० अनासिके । गतनासिके ॥ विगतानासायस्यस : ॥

विनाह । पु० कूपाननपिधानके ॥ णहबन्धने । हलश्चेतिघञ् ॥

विनिगमक : । त्रि० विशेषेणनितरा बोधके । ज्ञापके ॥

विनिगमना । स्त्री० एकतरपक्षपातिन्यायुक्तौ । वैकल्पिकेषुवस्तुष्वेकस्मिन्नवधारणाशक्तौ ॥

विनिद्र । त्रि० उन्मीलिते । विकसिते । स्फुटिते । निद्रारहिते ॥ विगतानिद्राऽस्य ॥

विनिद्रत्वम् । न० निद्रारहितत्वे ॥ प्रबोधे ॥

विनिनीषु । त्रि० विनेतुमिच्छौ ॥

विनिपात : । पुं० निपाते । अपपाते । दैवादिव्यसने । दैविकामर्थे । विशिष्टोनिपात । ॥ अवमाने ॥

विनिमय । पुं० परिदाने । प्रतिदाने ॥ व्यतिहारे ॥ व्यत्यये । अन्यस्मिन्नन्याभासे ॥ बन्धके ॥ यथा । विक्रयैर्गोविनिमयैर्दत्त्वागोमांसखादके । व्रतंचान्द्रायणं कुर्यात्तथेसाचाकधीभवेत् ॥ इतिगोभिलवचनम् ॥ विशेषेणनिमीयते । मीञ् हिंसायाम् । एरच् ।

विनियोग : । पुं० विनियोजने ॥ अनेनेदन्तुकर्त्तव्यविनियोग : प्रकीर्त्तित ॥ विशिष्टोनियोग : ॥ विभजने । विनियोगोऽर्पणंफले० हे० हेमचन्द्र ॥

विनियोगविधि : । पुं० अङ्गप्रधानसम्बन्धबोधकेविधौ ॥ यथा । दध्नाजुहोतीति । सचितृतीयाप्रतिपन्नाङ्गभावस्यदध्नोहोमसम्बन्धंविधत्ते० दध्नाहोमं भावयेदिति । गुणविधौच धात्वर्थस्यसाध्यत्वेनैवान्वय । का चिदाश्रयत्वेनापि । यथादध्नेन्द्रियकामस्यजुहुयादित्यत्र० दधिकरणकेनेन्द्रियं भावयेत् । तच्चकिन्निष्ठमित्याकाङ्क्षायां० सन्निधिप्राप्तहोमआश्रयत्वेनान्वेति । एतस्य विधे : सहकारिभूतानि० श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणिषट्प्रमाणानि । एतत्सहकृतेनानेनविधिनाङ्गत्वंपरोद्देशसाध्यप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यापरपर्यायज्ञाप्यते ॥

विनियोजित : । त्रि० प्रवर्त्तिते । विनियुक्ते ॥

विनिर्णीत : । त्रि० विचार्यस्थापिते ॥ विशेषेणनिर्णीत : ॥

विनिर्देश्य : । त्रि० वक्तव्ये ॥

विनिर्धूत । त्रि० दुरवस्थयाचलिते ॥ विशेषेणनितराकम्पिते ॥ समुन्मूलिते ॥ परित्यक्ते ॥

विनिर्भय । पुं० साध्यगणविशेषे । त्रि०भयरहिते ॥

विनिर्मुक्त : । त्रि० वियुक्ते ॥

विनिर्मोक । पुं० विनिर्मुक्तौ ॥

विनिवृत्त । त्रि० निष्पन्ने । समाप्ते ।

विनिवृत्त । निवृत्तविशिष्टे । निरस्ते । शान्ते ॥

विनिवृत्तकाम '। त्रि॰ विवेकवैराग्यद्वारात्यक्तसर्वकामं यि ॥ विशेषेणनिवृत्त ' कामोऽस्य ॥

विनिवेशित :। त्रि॰ प्रतिष्ठापिते । स्थापिते ॥

विनिश्चित । त्रि॰ प्रमाणतोनिर्णीते ॥

विनिष्कल :। त्रि॰ निरवयवे ॥ विशेषेणनिर्गता कला यस्मात् ॥

विनिहत :। त्रि॰ विनष्टे ॥

विनीत '। पु॰ सुवहाश्वे । साधुवाहिनि ॥ वणिजि ॥ दमनकवृक्षे शिक्षितवृषभादौ ॥ त्रि॰ जितेन्द्रिये । अपनीते । हृते । निभृते ॥ विनयान्विते । अनुवृते । नम्रे ॥ शिक्षिते ॥ क्षिप्ते ॥ कृतदण्डे ॥ व्यनायि॰ विनीयतेस्मवा । णीञ् प्रापणे । क्त ' ॥

विनीतक । पुं॰ दमनकवृक्षे ॥ पुं॰ न॰ वैनीतके । परम्परावाहने ॥

विनीय :। पु॰ पिष्टओंआंभं्रशेव । कल्के ॥ कपटे । 'वनीयतेसिद्धिं प्राप्यत ॥ णीञ् । विपूर्वाद्वनीयेतिक्यप् ॥ पापे ॥

विनीयमान :। त्रि॰ शिक्ष्यमाणे ॥

विनेता । पुं॰ देशके । नियामके ॥ राजनि ॥ द्व॰ मे॰ ॥ विशिष्टोनेता ॥ देशिके ॥ द्व॰ हे॰ चन्द्र. ॥

विनेय :। त्रि॰ नेतव्ये ॥ विनेतुंयोग्य ' । णीञ् । अचोयत् ॥ दण्ड्ये ॥

विनेयक :। पु॰ आदेशके ॥ राज्ञि ॥

विनोक्ति '। स्त्री॰ अलङ्कारविशेषे ॥ यथा । विनोक्तिश्चेद्विनाकिञ्चित् प्रस्तुतंहीनमुच्यते । विद्याहृद्यापि सावद्याविनाविनयसम्पदम् ॥ किञ्चित्॰विनाप्रस्तुतस्यं हीनदुष्टमुच्यतेचेत्तदाविनोक्तिर्नामालङ्कारइत्यर्थ . ॥ प्रकारान्तरमपि । तच्च किञ्चिद्विनारम्यविनोक्ति सापि कथ्यते । विनाखलैर्विभात्येषाराजेन्द्रभवत :सभा ॥ तत्प्रस्तुतंकिञ्चिद्विनारम्यञ्चेत्सापिविनोक्तिर्नामालङ्कार . कथ्यते ॥

विनोद । पुं॰ क्रीडायाम् ॥ यथा । विनोदायचैतन्यमेकविभज्यद्विधादेवि॰जीवस्वरूपेतिनाम्ना । शिवस्याजीवत्त्वमापादयन्तीपुनर्जीवमेनशिवाकरोषीति ॥ कुतूहले ॥ चमत्कारविशेषे ॥ अपनोदे ॥ राजगृहविशेषे ॥ आलिङ्गनविशेषे ॥ तल्लक्षणयथा । नायकोनायिकायादक्षिणपादंवामपादवाखमध्यदेशे॰स्वदक्षिणपादवामपादवा॰नायिकामध्यदेशेनिधाय॰वक्षसिवक्ष . ॰ओष्ठेचोष्ठदत्त्वायदाश्लिष्यतितदितिकामशास्त्रम् ॥

विनोदित :। त्रि॰ अपनीते ॥ सज्जा

तदविभेदे ॥ तारकादित्वादितच् ॥

बिन्द । पुं० विजयाख्यमुहूर्त्ते ॥ विन्दति । विद्लृ लाभे । अनुपसर्गाल्लिम्पविन्दधारीत्यादिनाश । श्रीमुचाट्टीनामितिनुम् ॥

बिन्दुः । पुं० जलकणायाम । विप्रुषि । पृषती ॥ दन्तक्षतान्तरे ॥ भ्रुवोर्मध्ये ॥ रूपकार्यप्रकृतौ ॥ लवे ॥ अनुस्वारे ॥ नादोद्भवे ॥ त्रि० वेदितरि । ज्ञातरि । विज्ञानशीले ॥ विन्दति०विदिष्वबयवे । बाहुलकाद्रु । पवर्गीयादिः ॥ यथा । वेत्तितच्छील । विन्दुरिच्छुरितिसाधु ॥ दातरि ॥ वेदितरि ॥

बिन्दुचित्रकः । पुं० मृगविशेषे ॥ बिन्दुभिश्चित्र ०सप्तमः ॥

बिन्दुजालम् । न० बिन्दुजालके ॥

बिन्दुजालकम् । न० तारुण्याज्जायमानेगजमुखादिस्थबिन्दुसमूहे । पद्माके ॥ बिन्दूनांजालकमिव ॥

बिन्दुतन्त्रः । पुं० शारिफलके ॥ तुरङ्गके ॥

बिन्दुपत्रः । पुं० भूर्जवृक्षे ॥

बिन्दुरेखकः । पुं० पक्षिविशेषे ॥

बिन्दुसरः । न० हैमवते०सरोविशेषे ॥ यथा । अभ्युत्तरेणकैलासंशिवंसर्वौषधिं गिरिम् । गौरन्तुपर्वतश्रेष्ठं हरितालमयंप्रति ॥ हिरण्यशृङ्गः ०सुमहान्दिव्यौषधमयोगिरिः । तस्यपादेमहद्दिव्यं सरः काञ्चनसन्निभम् ॥ रम्यंबिन्दुसरोनामयत्रराजाभगीरथः । गङ्गार्थेसतुराजर्षिरुवासबहुलाः समाः ॥ दिवयास्यन्तिमेपूर्वगङ्गातीयपरिप्लुता । तत्रत्रिपथगादेवीप्रथमन्तुप्रतिष्ठिता ॥ सोमपादात्प्रसूतासासप्तधाप्रतिभज्यते । यूपामणिमयास्तत्रचितयश्च हिरण्मयाः ॥ तत्रेष्ट्वाक्रतुभिः सिद्धः शक्रः सुरगणैः सह । दिव्यच्छायापथस्तत्रनक्षत्राणान्तुमण्डलम् ॥ दृश्यतेभास्वरारात्रौदेवीत्रिपथगातुसा । अन्तरीक्षंदिवञ्चैवभावयित्वाभुवङ्गता । भवस्याङ्के पतितासंरुद्धायोगमायया । तस्याये बिन्दवः केचित्क्रुद्धायाः पतिता भुवि ॥ कृतस्तुतैर्बिन्दुसरस्ततो बिन्दुसरः स्मृतम् ॥ इतिमात्स्ये १०१ अध्याय ॥

विन्ध्यः । पुं० जलवालके । विन्ध्याचले ॥ व्याधे ॥ विरुद्धं ध्यायति । ध्यै चिन्तायाम् । आतश्चोपसर्गेइतिकः पृषोदरादिः ॥ यथा । विद्ध्यते । विद्ध्योदीप्तोऽयत् । अन्तर्भावितण्यर्थः । शकन्ध्वादिः । अघ्न्यादिर्वा ॥ नर्मदासुरसाद्याश्चनद्योविन्ध्यविनिर्गताः ॥

विन्ध्यकूटः । पुं० अगस्त्यमुनौ ॥ विन्ध्याद्रिशृङ्गे ॥

विन्ध्यवासिदेश: । पुं॰ विन्ध्यस्थदेशे षु ॥ यथा । मालवाश्चकरूषाश्चमे कलाश्चोत्कलैः सह । उत्तमार्णा दशार्णाश्चभोजाः किष्किन्धकैः सह ॥ तोषला कोशलाश्चैव त्रै पुरावैदिकास्तथा। तुमुरास्तुम्बु रा श्चैवपटू नाञ्चिषधैः सह ॥ अनूपा स्तुण्डिकेराश्चवीतिहोत्राअवन्तय । एतेजनपदा ख्याताविन्ध्यपृष्ठनिवा सिन ॥ इतिमत्स्यपुराणम् ॥

विन्ध्यवासी पुं॰ व्याडिमुनौ ॥

विन्ध्यवासिनी । स्त्री॰ विन्ध्याचलनि वासिन्यादुर्गायाम् ॥ विन्ध्येवतीर्थं देवार्थंवती चैरोमहाभट ' । अद्या पितत्रसावासातेनसाविन्ध्यवासि- नी ॥ इतिदेवीपुराणम् ॥

विन्ध्यस्थ: । पुं॰ व्याडिमुनौ ॥ त्रि॰ विन्ध्याचलस्थिते ॥ विन्ध्ये तिष्ठति स्था॰ । क: ॥

विन्ध्या । स्त्री॰ लवलीवृक्ष ॥ त्रुटौ । सूक्ष्मैलायां ॥

विन्ध्याचलनिवासिनी । स्त्री॰ विन्ध्य वासिन्याम् ॥ नन्दगोपगृहेजाता यशोदागर्भसम्भवा । ततस्तौनाश यिष्यामिविन्ध्याचलनिवासिनी ॥ विन्ध्याचलेतयापिगण्डगातीरेनि वासिनीतिबोध्यम् । अयमवता रोभगवत्याजातएवेतिपुराणे प्रसि द्धम् ॥

विन्ध्यावली । स्त्री॰ बलिपत्न्याम् । बाणराजमातरि ॥

विन्ध्यावलीपुत्र । पुं॰ बाणासुरे ॥

विन्ध्यावलीसुत ' । पुं॰ बाणराजे ॥

विन्न: । त्रि॰ विचारिते । लब्धे ॥ स्थिते ॥ ज्ञाते । विद्यतेस्म । विद विचारिणे । क्त. । नुदविदेतिवा नत्वम ॥

विन्यस्त ' । त्रि॰ क्रमेणस्थापिते । रचिते ॥ न्यस्तविन्यासे ॥ विशेषे णन्यस्तो ॥ विन्यस्यतेस्म । अस्॰ । क्त: ॥

विन्याक । पुं॰ छत्वाके ॥

विन्यास । पुं॰ विभज्यस्थापने ॥ यथा । गुप्तेगुणविविन्यासोविष्णु- योगमध्दण्डवत् । विगुणश्चोरवाम्या सोविधेय ' सद्भ्योपरि ॥ तैनस र्वाणिमधूनिवरिष्टानिमन्त्रोभुवा मितियुक्तिकल्पतरु: ॥ विन्य सनम् । असुक्षेपणे । विनिपू र्व . । ततोघञ् ॥ सन्निवेशे ॥ विशिष्टोन्यास ' ॥ रचने ॥

विपक्ष: । पुं॰ रिपौ । द्विषि । प्रति ते । शत्रौ ॥ साध्याभाववति । निश्चितसाध्याभाववति ॥ यथा॰ धूमवत्त्वेतोह्रद ' ॥ विरुद्ध: प क्षोस्य । विविध . पक्षोऽस्यवा ॥

विपञ्चिका । स्त्री॰ विपञ्च्याम् ॥

विपञ्ची । स्त्री वीणायाम् । वल्लक्यां

म् ॥ विपञ्चीषु सप्तस्वरान् वा
दयन्त्यस्तवद्वारिगायन्तिगन्धर्वक-
न्या ॰ । त्वया सावधानेनचित्तेनमा
त समाकर्णं शृत्वं मयाप्रार्थितासि
विप चपतिविस्तारयतिशब्द ॰ पचि
बिस्तारे । ण्यन्तादच् । गौरादि ॰
॥ केली । लीलायाम् ॥

विपण : । पुं॰ विक्रये । विक्रयक्रिया
याम् ॥ विपणनम् । पणव्यवहा
रे । घञ् । स ञ्चापूर्वकत्वान्नवृद्धि:
॥ खनोघचेतिघोवा ॥

विपणि : । पुं॰ स्त्री॰ विक्रयार्थं प्रसा
रितनानाद्रव्यायांवणिग्वीथ्याम् ।
पण्यवीथिकायाम् । वणिज् व्यवहा
र॰ बजार॰ बाणिज्यावीथी॰ इतिच
भाषाप्रसिद्धायाम् । पण्यवीथ्याम् ।
वणिजांविक्रयस्थाने ॥ विपण्यते॰
अस्यांवा । पण॰ । सर्वधातुभ्यइन् ॥
विपणन्तेऽनया । कृकृष्यादिभ्य. ॥

विपणी । पुं॰ वणिजि ॥ विपणोव्यव
हार . सोस्यास्ति । इनि : ॥ बुध
भेदे ॥

विपणी । स्त्री॰ पण्यवीथ्याम् ॥ कृदि
कारादितिङीष् ॥

विपण्यु : । त्रि॰ विगतव्यवहारे ॥

विपति : । पुं॰ खगेश्वरे । गरुडे ॥

विपत्ति : । स्त्री॰ यातनायाम् ॥ आ
पदि । विपदि ॥ मरणे । विनाशे
॥ यथा । यस्मिन्‌राशिगतेभानौविप
त्तिंयान्तिमानवा ॰ । तेषातत्रैवक
र्त्तव्यापिण्डदानोदकक्रिया ॥ विपद
नमनयावा ॥ पदगतौ । स्त्रियाक्तिन् ॥
पु ॰ विशिष्टपदातौ ॥

विपथ : । पुं॰ निन्दितपथे । व्यध्वे ।
दुरध्वे । कदध्वनि । कापथे ॥ वि
रुद्ध : पन्था : । प्रादयोगताद्यर्थेइ
तिसमास . । ऋक्पूरित्य : ॥

विपत्॰द् । स्त्री॰ विपत्तौ ॥ विपदनम
नयावा । सम्पदादित्वात्क्विप् ॥
तृतीयतारायाम् ॥

विपदम् । न॰ नभसि ॥ वीनांवयसां
पदविहारस्थानम् ॥ त्रि॰विगतप्र
तिष्ठे ॥

विपदा । स्त्री॰ विपदि ॥

विपन्न : । पुं॰ भुजङ्गमे॥ त्रि॰विपदा
क्रान्ते ॥ नष्टे ॥ विपद्यतेस्म । प
द॰ । क्त : । नत्वम् ॥

विपरिणाम : । पुं॰ विशिष्ट : परि-
णामे ॥

विपरिश्रम : । पुं॰ आयासेसत्यपिश्र
मरहिते ॥

विपरीत : । त्रि॰ तम : प्रकाशावि
वान्योन्यव्याहतरूपे । प्रतिकूले ।
उलटा॰इ॰भा॰ ॥ यथा॰धर्मविप
रीतोऽधर्म : ॥ पुं॰रतिबन्धविशेषे
॥ यथा । पादमेकमुत्क्षिप्त्वाद्वितो
यकटिसंस्थितम् । नारीषुरमते
कामीविपरीतस्तुबन्धक : ॥ अपिच

। पादमेकमुरौकृत्वा द्वितीयस्कन्धसं
स्थितम । कामिन्या : कामयेत्का
मौकस्य • स्याद्विपरीतक ॥
विपरीतभावना । स्त्री॰ अतस्मिंस्तद्
बी ॥ यद्यथावर्त्ततेतस्यतत्त्व हित्वा
ऽन्यथात्वधी : । विपरीताभावना
स्यात्पित्रादावरिधीर्यथा ॥
विपरीता । स्त्री॰ कामुक्याम् ॥
विपर्ण : । त्रि॰ पर्णरहिते ॥
विपर्णक : । पुं॰ पलाशवृक्षे ॥ त्रि॰
पत्ररहिते ॥
विपर्य्यय : । पुं॰ व्यतिक्रमे । व्यत्या
से । विपर्यासे । व्यत्यये ॥ मिथ्या
ज्ञाने । यथाशुक्तिंबिन्दुरजतमिति
॥ अन्यथाभावे । देहादिष्वात्माभि
मानलक्षणे । यथार्थानिश्चये । अ
तत्त्वज्ञाने ॥ विपर्ययादिष्यतेबन्ध .
। अविद्यास्मितारागद्वेषाभिनिवे
शा : यथासङ्ख्यतमोमोहमहामो
हतामिस्राअन्धतामिस्रसञ्ज्ञका ' पञ्च
विपर्ययभेदाभवन्ति ॥ लक्षणञ्चयथा
। किञ्चित्सामान्यतोन्यत्रमतिरन्या
विपर्ययः । किञ्चित्साधारण्यादन्य
स्मिन्नन्याहृयोबुद्धिर्विपर्यय ' । मरु
मरीचिकास्विवजलावगति ' । अ
पिच । विपर्ययस्तमोयोनिर्मिथ्या
रूपक्षयासच । सामान्यमात्रकाभा
सात्सत्त्वात्मेतिविनिश्चितः ॥ वि
पर्ययस्यमिथ्यारूपत्वात्तम प्रभ

बत्वम्॰ सचविपर्यय ' साधारण्य
मात्रप्रथनात्प्रकाशरूप ' सत्त्वात्म
कोपिनिश्चित : ॥ विपर्ययणम् । डु
ष्गतौ । एरच ॥
विपर्य्यस्त । त्रि॰ मिथ्याज्ञानविशि
ष्टे ॥ विपरीते ॥
विपर्य्याय । पुं॰ विपरीतमयने ।
अन्यस्यान्यरूपग्रहणे ॥
विपर्य्यास . । पुं॰ विपर्यये । व्यत्य
ये । व्यतिक्रमे । अतस्मिंस्तद्बौ
। अविवेके ॥ विपर्य्यसनम् । अ
सु॰ । घञ् ॥
विपव्य : । त्रि॰ शोधनीये ॥
विपश्चित् । त्रि॰ विदुषि । दोषज्ञे ।
पण्डिते । अत्यन्तविवेकिनि । मे
धाविनि ॥ सर्वज्ञे॰निरस्तभेदे॰अ
विपरिलुप्तचैतन्यस्वभावे ॥ परमात्म
नि ॥ विप्रकृष्ट निश्चिनोति॰चेतति॰
चिन्तयतिवा । पृषोदरादि : ॥
विपाक : । पुं॰ पचने ॥ स्वादे ॥
कर्मणोविसदृशफले ॥ कर्मणा :
परिणामे । दुर्गतौ ॥ जात्यायु
र्भोगात्मकेकर्मफले ॥ पचनंपा
क : विशिष्टपाक : विरुद्ध : पो
कोऽस्यवा ॥ विपच्यतेवा । घ
ञ ॥ विपाककटुयत्कर्मतत्कर्त्त
सन्निपण्डिता : ॥ जाठरेणा
ग्निनायोगात्यदुदेतिरसान्तरम् ।
रसानांपरिणामान्तेसविपाकइति

स्मृतद्भूतिसुश्रुत '॥ अपिच । मि
ष्ट ' कटुश्चमधुरमम्लेऽम्लं पच्य
ते रस '। कटुतिक्तकषायाणांपा
क स्यात्प्रायश. कटु '॥ तथा
चवाग्भट : । त्रिधारसानांपाक
स्यात्स्वाद्वम्लकटुकात्मक '। प्रा
य. पदेन० व्रीहि : स्वादुरम्लविपा
क ' शिवाकषायामधुपाका । शु
ण्ठीकटुकमधुरपाकीत्यादि ' ॥
विपाकानांगुणायथा । स्निग्धम्लम
धुर ' पाकौवातपित्तहरौमत. ।
कटुस्तुकुरुतेपित्त'वातश्लेष्मगदा-
पह : ॥ कटु : करोतिपवनंकफं
पित्तञ्चनाशयेत् । विशेषएवरसतो
विपाकानांनिदर्शित : ॥

विपाचनम् । न० नरके ॥

विपाट : । पुं० बाणे अस्त्रकण्टके
। शरे ॥ विपाटयति । पचाद्यच् ॥

विपाण्डु : । पुं० शुभ्रे ॥ अति
शुभ्रे ॥ त्रि० तद्वति ॥

विपादिका । स्त्री० । पादस्फोटे । वि
वाइ० इ० भा० ॥ प्रहेलिकायाम् ॥
वैपादिकपाणिपादेस्फुटनंतीव्रवेद
नम् । कण्डुमच्चि. सरागैश्च ग
ण्डै रलसकं वितम् ॥ विपादिका
वातश्लेष्मोद्भवेतिमाधव : । अयं कु
ष्ठरोग : ॥

विपाट् । स्त्री० विपाशायाम् ॥ पा
श विमोचयति । सत्यायपाशैस्त्वा
दिना० पाशान्मोचनद्भूतिक्विप् ।
क्षिप्वेतिक्षिप् ॥

विपाश' । त्रि० पाशरहिते ॥

विपाशा । स्त्री० नदीविशेषे । विपा
शि ॥ पाशं विमोचयति । सत्या
यपाशैस्त्वादिना० पाशान्मोचनद्भूति
क्विप् । तत : पचाद्यच् । पुत्र
शोकाद्वशिष्ठः पाशैर्बद्ध्वाप्रविष्टं वशिष्ठ
पाशच्छेदात्विपाशितवतीविमुक्त
पाशं कृतवतीतिविपाशा । अस्या
जलस्यगुणायथा । शतद्रौविपा
शायुज' सिन्धुनद्या ' सुशीत ल
घुस्वादुसर्वामयघ्नम् । जलं निर्मलं
दीपनं पाचनञ्चप्रदत्ते बलं बुद्धिमेधा
युषञ्चेतिराजनिर्घण्ट : ॥

विपिनम् । न० अरण्ये । गहने ।
वने ॥ वेपन्तेऽत्र । टुवेपृकम्पने ।
वेपितुक्षोह्रस्वश्चेतीनन् ॥ विशेषे
णपिपत्त्यत्रवा । पिगतौ । बाहुल
कान्नक् ॥

विपिनतिलकम् । न० अतिशर्करी
छन्द ' प्रभेदे ॥ तल्लक्षणं यथा ।
विपिनतिलकं नसनरेफयुग्मैर्भवे
त् । यथा । विपिनतिलकं विकासि
तं सिन्त्वागमे मधुकृतमदैर्मधुकरै '
क्वणन्निवृतम् । मलयमरुतारञ्चित
लास्यमालोकयन् व्रजयुवतिभिर्विह
रतिस्मसुधाहरि : ॥

विपीड : । त्रि० निर्बाधे ॥

विपुल । पु॰ मेरुपश्चिमभूधरे । मेरोः स्थैर्यायवेधसा स्तेषु चतुर्षु विष्कम्भशैलेषु॰ प्रतीच्यां विपुलो नाम विष्कम्भशैलो नीलवर्णः पञ्चाशत्सहस्रयोजनोच्छ्रायोऽस्ति॰ यश्च योजनसहस्रोन्नतिमानश्वत्थपादपोऽस्ति ॥ सुमेरौ ॥ हिमाचले ॥ त्रि॰ पृथुले । विशाले ॥ अगाधे । दक्षिणपश्चिमोत्तरद्वारगृहे ॥ विपोलति । पुलमहत्त्वे । इगुपधेति कः ॥ विशिष्टपुलके ॥

विपुलपुलिना । स्त्री॰ नद्याम् ॥

विपुलरसः । पुं॰ इक्षौ ॥

विपुला । स्त्री॰ वोरुयाम् । क्षितौ ॥ आर्याप्रभेदे ॥ यथा । पथ्याविपुला चपलामुखचपलाजघनचपलाच । गीत्युपगीत्युद्गीतयआर्यागीतिश्चनवधार्या ॥ संलङ्घ्यगणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तांपिङ्गलनागो विपुलामितिसमाख्याति ॥ पुंसांकालिकालव्यालस्तानानास्यपदतिरत्यापि । वीर्यं विपुलामुखेचेत्स्यादृगोशिन्द्राख्यमस्तोमि ॥

विपुलांस । त्रि॰ मांसलोन्नतभुजशिरस्के ॥

विपुलाखवा । स्त्री॰ गृहकुमार्याम् ॥

विपूय । पुं॰ रज्ज्वादिकरणाय शोधयितव्ये॰ मुञ्जे ॥ विपूयते । पूञ्पवने । विपूयविनीयेतिक्यप् । मुञ्जे ॥ यथा । वसाना वल्कलेश्शुद्धेविपूये कृतमेखलाम् । क्षामामञ्जनपिण्डाभादशिण्डनीमजिनान्तरामितिभट्टिः ॥

विपोथितः । त्रि॰ आघातेनाधःपातिते ॥ आमर्द्दिते ॥

विप्र । पुं॰ ब्राह्मणे ॥ तल्लक्षणं यथा । जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणमिति प्रायश्चित्तविवेकः ॥ विशेषेण प्राति पूरयति षट्कर्माणि । प्रा पूर्तौ । आतश्चोपसर्ग इतिकः ॥ उप्यते धर्मबीजमत्रवा । डुवप्॰ ऋज्रेन्द्रेतिसाधु ॥ विपाति वा॰ विपतिवा । विपर्वपे ॥ अश्वत्थे ॥

विप्रकर्ष । पुं॰ विशेषे ॥ विशिष्टः प्रकर्षः ॥

विप्रकार । पुं॰ अपकारे । निकारे ॥ विप्रकरणम् । कृञोभावेघञ् ॥ तिरस्कारे ॥

विप्रकाष्ठम् । न॰ तूलवृक्षे ॥

विप्रकृत । त्रि॰ तिरस्कृते । निकृते । यस्यापकारः कृतस्तस्मिन् ॥ विप्राकारि । क्त ॥ विप्रेणकृते ॥

विप्रकृतिः । स्त्री॰ विप्रकारे ।

विप्रक्लश्यम् । न॰ ब्राह्मणस्यकर्त्तव्ये ॥

यथा । अध्यापनमध्यायनस्वयाजन दानद्विजेस्युर्यजनप्रतिग्रह : । क र्माणिषड्ग्यजनापवर्जनेचिकर्मवा मध्ययनतथेतिराट ॥ वैश्य . सदा प्रापविक्षोक्षि जन्माद्विजन्मसेवारति रेतदीयम् । "कर्मस्यऽक्षव्यव्यवहार जानिकर्माध्यानेकान्यपरान्मजाना म् ॥ यद्यकर्माणितदेवक्षोसंसा धितान्येवहियज्ञिसिद्धिम् । तत्स्व स्वयंव्यवहारकालनयेन्मनीषीयुग पन्नयर्हिम् ॥ अथविप्रादीनांस्वभाव क्षत्यमाह । शमोदम : स्वमथा र्जवक्षमाशौच तपोज्ञानक्षथामराच नम् । तीर्थंतथास्तिक्यमभिन्नसङ्ग ति . स्वभावकर्मायजनेमंखन्नतम् ॥ शौर्यंबलंधैर्य्यंधृतिर्धृतिर्मृध विद्या सुदीर्घ्वरतापवर्ज्जनम् । क्षमा भृत ' कर्मनिसर्गजक्षिशावाणिज्य गोजीवनकर्षणन्त्विति ॥ द्विजाति सेवावनिदेवताज्ञयाधर्मोविधि :शू द्रनिसर्गकर्मच । स्वभावकर्मप्रविहा ययोन्यथास्वयम्बरेत्‌सोन्यजकर्मनमं भाक् ॥ इतिकालिदास . ॥

विप्रकृष्ट : ) विप्रकृष्टक : ) वि० दूरे ॥ विप्रकृष्य तेस्म । कृषि : क्त . । स्वार्थेकनिविप्र कृष्टकोपि ॥

विप्रचित्ति : । पुं० दनोर्गर्भकश्यपा ज्जातोऽसुरविशेषे ॥

विप्रतिपत्ति स्त्री० विरुद्धकोटिद्वयोप स्थापकेशब्दे ॥ विरुद्धाप्रतिपत्ति ॥ विरोधे ॥ विकृतौ ॥

विप्रतिपन्न: । वि० विरुद्धतयावगते ॥

विप्रतिषिद्ध ' । वि० निषिद्धे ॥

विप्रतिषेध : । पुं० तुल्यबलविरोधे ॥ परस्परविरोधे ॥ विप्रतिपूर्वात्‌कर्म व्यतिहारेवर्त्तमानात्‌सेधतेर्घञ्‌ ॥

विप्रतिसार : । पुं० पश्चात्तापे ॥ विप्र तिसरणम् । सृगतौ । घञ् । उप सर्गस्यघञीतिपाक्षिकोदीर्घाभाव: ॥

विप्रतीसार . । पुं० पश्चात्तापे । अ नुतापे । कौकृत्ये ॥ अनुशये ॥ रु षि । रोषे ॥ विप्रतिसरणम् । सृ० । घञ् । उपसर्गस्यघञीतिदीर्घ ॥

विप्रदेह' । पुं० फलमूलादिशुष्कद्रव्ये ॥ व्रा ह्मणतनौ ॥ विगत:प्रदेहो० विशेषेण प्रकृष्टोवादेहोस्य । विप्रस्यवादेह:॥

विप्रप्रिय : । पुं० पलाशे ॥ विप्राणां प्रिय:॥ विष्णौ ॥ श्रीरामचन्द्रे ॥ वि० ब्राह्मणवल्लभे ॥ विप्रा: प्रियायस्यम .॥

विप्रदास : । पुं० कायस्थे । मसीशे ॥

विप्रयाणम् । न० पलायने ॥

विप्रयुक्त : । वि० विभिन्ने । विश्लिष्टे ॥

विप्रयोग : । पुं० विरहे ॥ ब्राह्मणे : सहसङ्गमे ॥ विप्रयोजनम् । युजिर् योगे । घञ् ॥ विरुद्ध : प्रयोगो वा ॥ विशेषेणप्रकृष्टोवायोग : ॥ विप्राणांवायोग : ॥ विप्रलम्भे ॥

विरहोविसम्वादोवेतिस्वामी ॥ रागिणोर्विच्छेदे ॥ इतिसुभूति: ॥

विप्रलब्ध '। त्रि॰ वञ्चिते ॥ विप्रलभ्यतेस्म । डुलभष्प्राप्तौ । क्त '॥

विप्रलब्धा । स्त्री॰ स्वीयादिनायिकाभेदे ॥ सङ्केतनिकेतनेप्रियमनवलोक्य समाकुलहृदयाविप्रलब्धेतिलक्षणम् ॥

विप्रलब्धा । त्रि॰ प्रतारके ॥

विप्रलम्भ : । पुं॰ विसंवादे । अङ्गीकृतासम्पादने ॥ वञ्चने ॥ वियोगे । विरहे । रागिणोर्वियोजने ॥ विशेषेणप्रलम्भनम् । डुलभष् प्राप्तौ । घञ् । उपसर्गादितिनुम् ॥ विप्रलब्धि '। लभेर्घञ् वा ॥

विप्रलम्भक : । पुं॰ मिथ्यावचनै : परस्यवञ्चके । ठग१इ॰भा॰प्र॰ ॥

विप्रलाप : । पुं॰ विरोधोक्तौ । अन्योन्यविरुद्धवचने ॥ यथा॰एकोब्रूते॰ आगताकल्याणोति॰अन्योब्रूतेनयेति । तथाभ्युदाहारसर्वानन्द. । एक.स्मरन्मथ सरोजमवेतिवक्तुमन्य : सुधाकिरणविम्बमदोमृगाक्ष्या: । यूनोर्मुहुर्विवदतोर्वदनेवभूवु : सिद्धान्तयन्मधुपराजिगतागतानीति ॥ विकल्प . प्रलाप ' ॥ अनर्थकवाक्ये । अपार्थवचने ॥

विप्रलिप्सा '। स्त्री॰ वञ्चनेच्छायाम् ॥

विप्रलिप्सु . । त्रि॰ वञ्चके ॥

विप्रलुम्पक '। त्रि॰ अन्यायेनधनग्राहिणि ॥

विप्रलोभी । पुं॰ अशोकपादपे । किङ्किराते ॥

विप्रवसित : । त्रि॰ कृतदूरदेशगमने ॥

विप्रश्निका । स्त्री॰ जनानांलक्षणादिनाशुभाशुभनिरूपिण्याम् । ईक्षणिकायाम् । दैवज्ञायाम् ॥ विविध : प्रश्नोस्त्यस्या . । ठन् ॥

विप्रसृत : । त्रि॰ विक्षिप्ते ॥ विप्रसरतिस्म । सृगतौ । गत्यर्थेतिक्त : ॥

विप्रिय : । पुं॰ अपराधे । आगसि । त्रि॰ अप्रिये ॥

विप्रियकृत् । त्रि॰ शठे ॥

विप्रुट् । स्त्री॰ विन्दौ । जलकणे ॥ प्रुषुदाहे । सम्पदादित्वात्क्विप् । विगतापुषावाप्रुट्दाहोऽस्मात् ॥

विप्लव '। पुं॰ डिम्बे । धाकडलुट नादौ ॥ अयस्त्वकलङ्के ॥ विप्लवनम् । प्लुङ् गतौ । ऋदोरप् ॥ परचक्रादिभये ॥ राष्ट्राद्युपद्रवे ॥ नाशे ॥ मतिसम्मोहे ॥

विप्लाव . । पुं॰ अश्वस्यप्लुतगतौ ॥

विप्लुत : । त्रि॰ व्यसनार्त्ते । विप्लवे ॥ खण्डिते ॥ विप्लवनम् । प्लुङ् । क्त : ॥

विप्लुताक्ष : । त्रि॰ अश्रुपूर्णनयने ॥

विभ्रुति . । स्त्री० स्वभावच्युतौ ॥
विभ्रुष्ट । त्रि० निर्दग्धे ॥ विशेषेण भ्रुष्ट ॥
विफल । त्रि० निरर्थके । मोघे ॥ विगतं फलं यस्य ॥
विफला । स्त्री० केतक्याम ॥ ऋतुहीनायाम् ॥
विवध . । पु० पर्याहारे । उभयतोबद्धशिक्यस्कन्धवाह्यकाष्ठे ॥ अध्वनि ॥ भारे ॥ विगतोवधोऽस्मात् ॥
विवधिक : । त्रि० वैवधिके ॥ विवधेनहरति । विभाषाविवधादिति ष्ठन् । ङीषि० विवधकी ॥
विवन्ध : । पुं० आनाहे । आध्माने । मूत्रादिरोधे । यथाहचिकित्सा । तुल्यकारणकार्यत्वादुदावर्त्तहरीक्रियाम । अनाहेऽपिचकुर्वीतविशेषश्चाभिधीयते ॥ त्रिवृत्कृष्णाहरीतक्योद्विचतुष्पञ्चभागिका : । गुडेनतस्यावटिकाहरत्यानाहमुल्बणम् ॥ वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः । मधुनिगुडेनपक्वैर्निर्मिताङ्गुष्ठपरिमाणा ॥ वर्त्तिरियदृष्टफलाशनै : प्रणिहितागुदेघृताभ्यक्ते । आनाहोदावर्त्तौशमयतिजठरतथागुल्मम् ॥ त्रिकटुकाद्यावर्त्तिर्भावप्रकाशे ॥ विवन्धनम् । बन्धबन्धने । घञ् ॥ करणेवाघञ् ॥
विबाधा । स्त्री० विहिंठने ॥
विविध । त्रि० नानाप्रकारे ॥
विवुद्ध । त्रि० तत्त्वसाक्षात्कारवति ॥
विबुध । पु० ज्ञे । पण्डिते ॥ सुरे । देवे ॥ चन्द्रे ॥ विशिष्टोबोधोयस्य । विशेषणबुध्यतेनस्वपितीतिवा । बुधअवगमने । इगुपधेतिक ॥
विबुधान : । पु० आचार्ये ॥ पण्डिते ॥ देवे ॥
विबुधानुग : । पुं० किन्नरादिषु ॥
विबुभूषु । त्रि० विविधभवितुमिच्छौ ॥
विबोध : । पुं० प्रबोधे ॥
विबोधनम् । न० प्रबोधने । जागरणे० इ० भा० ॥
विभक्त . । त्रि० विभज्यस्थापिते । कृतविभागे ॥ विभिन्ने । परस्परव्यावृत्ते ॥ प्राप्तविभागे ॥ विभज्यतेस्म । भज० । कर्मणिक्त ॥ विभक्ताभ्रातरएत्यत्र तु० विभक्तमेषामस्तीतिमत्वर्थीयोऽर्शआद्यजित्यच् । नतुकर्त्तरिक्त । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ अथवोत्तरपदलोपोद्रष्टव्य : । विभक्तधनाविभक्ता . । गम्यार्थस्याप्रयोगएवलोपोभिमत . । तेनविभक्ताभ्रा

तरद्रव्यवधनस्यदविभक्तस्वंतत् आढ्यत्वारोप्यते ॥ विभक्तं पिधने यस्तुलोयाग्रप्रतिपादयेत् । पुनर्विभज्यतद्द्रव्यमप्राप्तांशायदापयेत् ॥

विभक्तज. । पुं॰ विभागानन्तरजाता पत्ये ॥ पुत्रे : सहविभक्तानपि चायतत्स्वयमर्जितम् । विभक्तजस्यतत् सर्वमनीशा . पूर्वजा. स्मृता . ॥

विभक्ति : । स्त्री॰ विभागे ॥ सुप्तिङो ॥ यथा । सङ्ख्यात्वव्याप्यसामान्ये शक्तिमान्प्रत्ययस्तुय । साविभक्तिर्द्विधाप्रोक्तासुप्तिङ्चेति प्रभेदत : ॥ सङ्ख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान्य प्रत्यय . साविभक्ति । सुप्तिङिति भेदात्साद्विधेतिशब्दशक्तिप्रकाशिका ॥ कारकशक्तौ ॥ विभज्यतेप्रातिपदिकार्थोऽनया । स्त्रियांक्तिन् ॥

विभजनीय । त्रि॰ विभाज्ये । विभागयोग्ये ॥ भजनार्हे ॥

विभज्य : । त्रि॰ विभक्तव्ये ॥ ऋहलोर्ण्यतिप्राप्ते॰ विवजनविभज्योपपदे॰ इतितदपवादोयन्निपात्यते । तेनविभाग्यमितिनभवति ॥

विभव : । पुं॰ राधि । धने ऐश्वर्ये ॥ विभवति । भू॰ । पचाद्यच् ॥ भिक्षाप्राप्तस्यरक्षार्थंकन्या शीतनिवारणी । अचलाविभवेभक्तिर्विभवे : किंप्रयोजनमितिसन्यासिधर्म : ॥ निहत्तौ ॥ मोक्षे ॥ विगत : भवोयस्मिन् ॥ षष्टिवत्सरान्तर्गतद्वितीयवत्सरे । यथाभविष्यभैरवउवाच । सुभिक्षं क्षेममारोग्य सर्वव्याधिविवर्जिता: । प्रशान्तामानवास्तत्रबहुशस्यावसुन्धरा । हृष्टास्तुष्टाजना: सर्वेविभवेवरानने । २ ॥

विभवी । त्रि॰ ऐश्वर्यवति ॥ विभवोस्यास्ति ॥ इनि : ॥

विभा । स्त्री॰ शोभायाम् ॥ प्रकाशे ॥ किरणे ॥ उदीच्यासीमसुपुर्याम ॥

विभाकर : । पुं॰ अग्नौ । वह्नौ ॥ सूर्ये ॥ विभांकरोति । दिवाविभानिशेतिटः ॥ अर्कवृक्षे । चित्रकवृक्षे ॥

विभाग : । पुं॰ अंशे । भागे ॥ विवेके । विविच्यप्रयोगे । संयोगनाशकेनवद्द्रव्यवृत्तिनिर्गुणे ॥ सत्वनिर्णयानुकूलेव्यापारे ॥ विभज्यते॰ विभजनंवा । भज॰ । भावेघञ् ॥

विभागी । त्रि॰ अंशिनि ॥ विभागोऽस्यास्ति । अतइनिठनावितीनि : ॥

विभाजित : । त्रि॰ विभागेनस्थापिते ॥

विभाज्य । त्रि० विभजनीये । विभागयोग्ये ॥ विपूर्वाद्भजधातोर्ण्यत् ॥
विभाण्डक । पुं० ऋष्यशृङ्गपितरि० मुनिविशेषे ॥
विभाण्डी । स्त्री० आवर्तकीलतायाम् ॥
विभान् । त्रि० भासमाने ॥ शत्रन्त ॥
विभातम् । न० प्रभाते । प्रत्यूषे ॥ विभातु प्रवृत्तम् । भा० । आदिकर्मणि क्तः ॥
विभातकम् । न० प्रत्यूषे ॥
विभाव : । पुं० परिचये ॥ रसस्योद्दीपनादौ ॥ रत्यादीनांकारणेषु । ललनोद्यानादिष्वालम्बनोद्दीपनकारणेषु ॥
विभावनम् । न० विभावनायाम ॥
विभावना । स्त्री० अलङ्कारविशेषे ॥ विभावनाविनापिस्यात्कारणंकार्यजन्मचेत् । अप्यलाक्षारसासिक्तरक्ततच्चरणद्वयम् ॥ अत्रलाक्षारसासेककारणाभावेपिरक्तिमाकथित : स्वाभाविकत्वेनविरोधपरिहार : ॥
विभावरी । स्त्री० तमस्विन्याम् । रजन्याम् । यामिन्याम् ॥ निशायाम् । हरिद्रायाम् । कुट्टन्याम् ॥ वक्रयोषिति ॥ विवादवत्स्त्रगुण्ठाम् ॥ विभातिनक्षत्रादिभि : । क्वनिप् । वनोरचेतिङीब्रौ ॥ मौखर्यनिरतस्त्रि याम् ॥ मेदाहृचे ॥
विभावसु : । पुं० ग्रहपतौ । सूर्ये ॥ अर्कवृक्षे ॥ पावके ॥ हारभेदे ॥ चित्रकवृक्षे ॥ चन्द्रे ॥ विभाप्रभावसुधनयस्य । असुरविशेषे ॥ मणौ ॥
विभावित । त्रि० अभ्यूहिते । ज्ञाते ॥ वि चन्तिते ॥ विशेषेणोत्पादिते ॥ विशेषेणप्रापिते ॥ विमिश्रयिते ॥ विशेषेणभावित . ॥
विभावि । त्रि० प्रभावसम्पन्ने ॥ विभावोस्यास्ति । इनि : ॥
विभाव्य : । त्रि० सलक्ष्ये ॥
विभाषा । स्त्री० विकल्पे ॥ विभाष्यते ० विकल्प्यते । भाषव्यक्तायांवाचि । गुरोश्चहलइत्यकार : । ततष्टाप् ॥
विभिन्न : । त्रि० मिश्रिते ॥ विदारिते ॥ विदीर्णे ॥ विभक्ते ॥ समालब्धे । पचिभिन्ने ॥ विकसिते ॥
विभीत : । त्रि० विभीतके ॥ विगतंभीतंरोगभयमस्मात् ॥ त्रि० निर्भये ॥
विभीतक । त्रि० कर्षफले । भूतवासे । कलिद्रुमे वहेडुके । वहेडा० इतिख्याते ॥ विभीतकस्वादुपाककषायकफपित्तनुत् । उष्णवीर्यंहिमस्पर्शंभेदनकासनाशनम ॥ रूक्षनेत्रहितंकेश्यंकृमिवैस्वर्यनाशनम् । विभीतमज्जात्टट्छर्दिंकफवातहरो

लघु.॥ अपायेीमद्धत्वाथवाऽल्प त्वाभितद्गत्या॥ विगतमीनरोगाभयमस्मात्॥ स्वार्थेक स्त्रियां॰जातेरितिङीप्॥

विभीषण । पु॰ रावणानुजे । नखदृर्थ ॥ त्रि॰भयानके॥विशेषेणभीषयते । ञिभीभये । नन्द्यादित्वाल्ल्यु'। भियोहेतुभयेषुक्॥ निरस्तावित्र्थे ॥विगतभीषणभयङ्करमस्मानयस्यसः ॥

विभीषिका । स्त्री॰ भयप्रदर्शने । यथा । कृत्वामस्त्वविभीषिकाकलिपयथामिष्टीना. प्रजा ॰मयूनो विटजल्पितैरुपहता 'क्षोणीभुजस्ते किल । विद्वासोपिवयपरंत्रिजगतां सर्गस्थितिव्यापदामीशस्तत्परिचर्यंयाभगणितोयैरेषनारायण ॥इति शिल्हणमिश्र.॥

विभुः । पुं॰ शङ्करे । सदाशिवे ॥ परमेश्वरे ॥ सर्वमूर्त्तसंयोगिनि । परममहत्त्ववति ॥ सतु॰आत्मादिर्थेषो । आत्मेन्द्रियाद्यधिष्ठाताकरण'हिसकर्तृकम् । विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तुविविधामतेतिभाषापरिच्छेद । विभुरिति॰विभुत्वपरममहत्त्वमितिसिद्धान्तमुक्तावली ॥ कालखात्मदिशांसर्वगतत्त्वं परमंमहदिति भाषापरिच्छेदः ॥प्रर्हति॥ नित्ये ॥ भृत्ये ॥ विष्णौ ॥ त्रि॰व्यापके ॥ प्रभौ ॥ सर्वगते । हठे ब्रह्मणि ॥ यथा । नित्यं . सर्वदु'खानामीशान प्रभुरव्यय । अद्वैत सर्वभावानादेवस्तुर्योविभु स्मृतइत्यागम ॥ विविधभवतिप्रकर्षात् । भू॰ । विप्रसम्भाद्दुतिडु ' ॥

विभुता । स्त्री॰ सामर्थ्ये ॥ भावेतल्॥

विभूतिः । स्त्री॰ भूतौ । ऐश्वर्ये । अणिमादिषु ॥ यथा । अणिमालघिमाप्राप्ति' प्राकाम्यंमहिमातथा । ईशितावशिताचैवतथाकामावशायितेति ॥ भस्मनि ॥ शिवधृतभस्मनि ॥ श्रियि ॥ विविधभवे । विशेषेणभवनम् । स्त्रियांक्तिन् ॥विभूतिरिति कथनमन्यप्रादिनिवृत्त्यर्थम् ॥

विभूतिद्वादशी । स्त्री॰ विष्णोर्व्रतविशेषे ॥

विभूतिमत् । त्रि॰ ऐश्वर्ययुक्ते ॥ विभूतिर्विद्यतेऽस्य । मतुप् ॥

विभूमा । त्रि॰ परिपूर्णे ॥ विगतोभूमायस्मात् । यस्यपेक्ष्यान्यत्महत्त्व नास्तीति ॥'

विभूषणम् । न॰ अलङ्कारे । आभरणे ॥ विशिष्ट भूषणम् । विभूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ पुं॰मञ्जुघोषे ॥

विभूषा । स्त्री॰ शोभायाम् ॥ आभरणे ॥

विभूषितः । त्रि॰ अलङ्कृते ॥

विभृत । त्रि॰ धृते ॥ पुष्टे ॥

विभ्यत् । त्रि॰ भयकुर्वति ॥

विभेद । पुं॰ विशेषे ॥

विभ्रंसः । पुं॰ नाशे ॥

विभ्रत् । त्रि॰ धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥

विभ्रम. । पुं॰ भ्रान्तौ ॥ संशये ॥ शोभायाम् ॥ भ्रमणे ॥ हावप्रभेदे । स्त्रीणांशृङ्गारभावजातक्रियाविशेषे ॥ तथाहि । मदरागहर्षजनितविपर्यासोविभ्रमः । यथा । अन्यनिमित्तमानसादुत्थायान्यवचनं • प्रियारब्धकथामाक्षिप्यसख्यासहालपनं • सुखेहसितक्रोधौ • पुष्पादीनायाञ्चा • सहसैवतत्परित्यागः । वस्त्राभरणमाल्यानामकारणात खण्डनमाननस्य । यदुक्तम् । क्रोध स्मितकुसुमाभरणादियाञ्चातद्ग्रहणसहसैवविखण्डनञ्च । आक्षिप्यकान्तवचनलपनसखीभिर्निष्कारणोत्थितगतश्चाविभ्रमतत् ॥ इति ॥ चित्तवृत्त्यनवस्थानंशृङ्गाराद्विभ्रमोमतः । इत्यन्यच ॥ अपिच । विभ्रमस्त्वरयाकालेभूषास्थानविपर्ययः । यथा । श्रुत्वायान्तंबहिःकान्तमसमापितभूषया । भालेऽञ्जनंदृशोर्लाक्षाकपोलेतिलकः कृत । इति ॥ योषितायौवनजोविकारोविभ्रमइत्यर्थः ॥ अपिच । वल्लभप्राप्तिवेलायांमदनावेशसम्भ्रमात् । विभ्रमोहारमाल्यादिभूषास्थानविपर्ययः ॥ विविधभ्रमणम् । अनवस्थाने । घञ् । नोदात्तोपदेशेतिनवृद्धिः ॥

विभ्रमा । स्त्री॰ विलासायाम् । जरायाम् । वार्द्धक्ये ॥

विभ्राट्॰ड । त्रि॰ भ्राजिष्णौ । रोचिष्णौ । अलङ्कारादिनाशोभमाने ॥ विशेषेणभ्राजते । भ्राजृदीप्तौ भ्राजभासेतिक्विप् ॥

विभ्रान्त । त्रि॰ विभ्रमयुक्ते । यथा । विभ्रान्तबुद्धेर्मनुजात्कार्याकार्यमजानत । त्वानिष्टमपरानिष्टमायतेस्मात्पदेपदे ॥ इतिमहानिर्वाणतन्त्रम् ॥

विभ्रान्ति । स्त्री॰ विभ्रमे ॥

विमत. । त्रि॰ विरुद्धमतिविशिष्टे ॥

विमति । स्त्री॰ नानामतौ ॥ विरुद्धमतौ ॥

विमत्सर । त्रि॰ मात्सर्यरहिते ॥ अहितेष्वात्मदर्शनेननिर्वैरबुद्धौ । विगतोमत्सरोयस्मात् ॥

विमना । त्रि॰ दुर्मनसि । अन्यमनसि । चिन्तादिनाव्याकुलचित्ते ॥

विमनस्क । त्रि॰ विमनसि ॥

विमनीकृत । त्रि॰ वैमनस्यं प्रापिते ॥ अविमना, विमना सम्पद्यमान कृत । अरुर्मनश्चक्षुश्चेतोरहोरजसांलोपश्चेतिच्विप्रत्ययसंलोपौ ।

अस्यचाविति्कार ॥

विमय । पु॰ परिवर्त्तने । विनिमये ॥ विमीयते । मीञ्॰ । एरच् ॥

विमर्द्द । पुं॰ कालकृतग्रहे । चक्रमर्द्दे ॥ युद्धे ॥ व्यालोडने ॥ सङ्घर्षे ॥

विमर्द्दक । पुं॰ चक्रमर्द्दे । कासौं॰दीतिप्रसिद्धक्षुपे ॥

विमर्द्दनम् । न॰ कुङ्कुमादिनामर्द्दने । परिमले । मृदक्षोदे । ल्युट् ॥

विमर्द्दना । स्त्री॰ कुङ्कुमादिमर्द्दे ॥

विमर्दोत्थ । पुं॰ परिमले । मर्द्दनाज्जातेसुगन्धादौ ॥ यथा । अथगन्धेपरिमलोविमर्द्दोत्थेमनोहरे । दूरगामीमनोहारीगन्धआमोदईरितइति शब्दरत्नावली ॥

विमर्श : । पुं॰ विचारे ॥ न्यायमार्गेणविचारे॥ संशयात्मिकायांवृत्तौ ॥

विमर्शनम् । न॰ परामर्शे । वितर्के ॥

विमर्शित : । त्रि॰ विचारिते ॥ विमर्श , सञ्जातोस्य । तारकादित्वादितच् ॥

विमर्ष । पुं॰ विचारणायाम् ॥ इति जटाधर ॥ विशिष्टार्थाक्षमायाम् ॥

विमर्षणम् । न॰ ज्ञाने ॥ कर्मणाकर्मनिर्हारोनह्यात्यन्तिकइष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तंविमर्षणम् ॥ इतिभागवतेषष्ठस्कन्ध : ॥

विमल : । पुं॰ सूर्यपरिवारे ॥ अर्हतिजिने ॥ न॰तारवैमधिधातौ॰उपरसविशेषे । निर्मले । स्वच्छधातुके ॥ त्रि॰निर्मले । वीध्रे ॥ विगतमलंयस्मात् ॥ प्रा॰ ॥ रागादिशून्ये ॥

विमलतीर्थम । न॰ तीर्थविशेषे ॥ यथा यापिमीवर्षराजतमत्स्यादश्यन्ते ॥

विमलदानम् । न॰ नित्यनैमित्तिककाम्यदाने ॥ यथोक्तंगरुडपुराणे । नित्यं नैमित्तिकंकाम्यविमलदानमीरितम् । चेतनासत्त्वयुक्तमदानंतद्विमलस्मृतमितिग॰पु॰ ॥ ईश्वरप्रीणनार्थदाने ॥

विमलमणि । पुं॰ स्फटिके ॥

विमला । स्त्री॰ शीतलायाम् । सप्तलायाम् । सौकृण्डप्रभेदे ॥ भुवप्रभेदे ॥ देवीप्रभेदे ॥ यथा । उत्कलेनाभिदेशस्तुविरजोक्षेत्रमुच्यते । विमलाममहादेवीजगन्नाथस्तुभैरव ॥

विमलात्मक । त्रि॰ वीध्रे । निर्मले । स्वभावनिर्मले ॥ विमलआत्मास्वभावोस्य ॥

विमलाद्रि । पुं॰ शत्रुञ्जयपर्वते ॥

विमलेश्वर । पुं॰ शिवे ॥ विश्वेशादेव्यधिष्ठितपुण्यस्थाने ॥

विमाता । त्रि॰ गणयितरि ॥

विमाता । स्त्री॰ मातु : सपत्नाम् ॥ विरुद्धामाता । प्रादयोगतेतिसमास : ॥

विमातृज । पुं॰ सापत्नभ्रातरि ।

वैमाचेये ॥ विमातुर्जात । पक्ष्व स्यामजाताद्धितिड : ॥

विमान । पु॰ न॰ देवतायाने । व्योमयाने ॥ सार्वभौमगृहे ॥ घोटके ॥ यानपात्रे ॥ विशिष्टं मानयन्त्यनेन । पुंसिसञ्ज्ञायामितिकरणे घ. ॥ विशेषेणमान्त्यस्मिन्निति वा । अधिकरणे ल्युट् ॥ विगतमानमुपमाऽस्येति वा ॥ त्रि॰ मानहीने ॥

विमानक । पु॰ विमाने ॥

विमानता । स्त्री॰ तिरस्कारे ॥

विमानित : । त्रि॰ अनादृते ॥

विमार्ग । पुं॰ कुपथे ॥

विमिश्र : । त्रि॰ विभिन्ने ।

विमुक्त । त्रि॰ विरहिते ॥ पृथग्भूते ॥ सर्वैषणाविनिर्मुक्ते ॥ नित्यमुक्ते चिदानन्दरसआत्मनि ॥ विशेषेण॰ अविद्याकामक्रोधादिभिर्मुक्त. परित्यक्त. ॥ त्रिषि ॥ जीवन्मुक्ते ॥ जीवन्नेवदृष्टबन्धात्कामादेर्विशेषेणमुक्त : सन् देहपातेभाविबन्धाद्विशेषेणमुच्यते । विमुक्तश्चविमुच्यतइतिश्रुते . ॥

विमुक्ति : । स्त्री॰ मोक्षे ॥ विमोचने । अनुध्यानरूपेऽनुग्रहे ।

विमुख । त्रि॰ पराङ्मुखे ॥ विगत मुख यस्य ॥

विमुद्र । त्रि॰ प्रस्फुटे । प्रफुल्ले ॥ मुद्रारहिते ।

विमूढ । त्रि॰ विक्षिप्ते ॥ अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारे । दृष्टादृष्टविषयभोगवासनाकृष्टचेतस्तयाऽऽत्मानात्मविवेकायोग्ये । अदूरदर्शिनि ॥ विगतमूढभावेऽतिचतुरे॰ सुक्ष्मार्थविवेचनकुशले ॥

विमूढभाव । पुं॰ व्याकुलचित्तत्वे ॥

विमूढात्मा । त्रि॰ रागद्वेषादिदूषितान्त करणे ॥ विमूढआत्मायस्य ॥

विमूढेन । त्रि॰ मूर्खशिरोमणौ । देहात्मवादिनि । सुखनादरकारिणि ॥ विमूढानामिन ॥

विमूल्य । त्रि॰ अमोलविमोलइतिभाषायांख्याते । महार्घे ॥

विमृत्यु । पुं॰ विगतकामाविद्ये । वेदान्तवेद्यआत्मनि ॥

विमृश । पुं॰ विमर्शे ॥

विमृष्ट । त्रि॰ विभाविते ॥

विमृष्य । त्रि॰ विचार्ये ॥ विमृषेऋदुपधाच्चाक्लृपिचृतेरितिक्यप् ॥

विमृष्यकारी । त्रि॰ विवेकिनि ॥ विमृष्यकरोति । णिनि ॥

विमोक्ष । पु॰ विमोचने ॥

विमोक्ष । पुं॰ मुक्तौ ॥

विमोक्षण । न॰ विमोचने । परित्यजने ॥

विमोचनम् । न॰ दूरीकरणे । विमुक्तौ । विपूर्वान्मुचेर्ल्युट् ॥ तीर्थविशेषे ॥

बिमोह । पुं० भ्रमपरम्परायाम् । विशिष्टोमोह: ॥

बिमोहनम् । न० आकुलीकरणे । वैचित्तीकरणे ॥

बिमोहित । त्रि० विविध मोह भ्रम परम्पराप्रापिते । मोहयुक्ते ।

बिम्ब । पुं० कृकलासे ॥ न०प्रतिबिम्बे ॥ बिम्बीफले ॥ वर्णवृत्तान्तरे ॥ नगणकरगणकर्णभवतिनवर्णपूर्णम् । फणिपतिभणितं यत्तदितिकिलबिम्बमेतत् ॥ यथा । कपटकृतगोपवेश: शयनवरभूतशेष । जयतिकृतनन्दहर्षोगिरिविधुतवातवर्ष: ॥ पुं० न०सूर्यचन्द्रमण्डले ॥ वेतिशोभते । बीगत्यादिषु । उल्वादयश्चेति०बन्न् ॥ मोगमञ्जखत्वानि ॥ बिम्बयोष्ठाइ अशान्॥जात्यन्तरे ॥

बिम्बकम् । न० मण्डले ॥ बिम्बीफले ॥

बिम्बजा । स्त्री० बिम्बिकायाम् ॥

बिम्बट । पुं० सर्षपे ॥

बिम्बभूत । त्रि० कारणभूते ॥

बिम्बा । स्त्री० बिम्बिकायाम् ॥

बिम्बिका । स्त्री० तुण्डिकेर्याम् । रक्तफलायाम् । पीलुपर्ण्याम् । कंदूरी०कुंदुरुइतिभाषा ॥ बिम्बीं कायति ॥ कैशब्दे । आतोनुपसर्गेक । ट्यापीरितिकृस्व: ॥

बिम्बी । स्त्री० बिम्बिकायाम् ॥ गौरादित्त्वानङीष् ॥

बिम्बीफलम् । न० बिम्बिकायाम् । कंदूरी०कु०प्र०फले । बिम्बीफलस्वादुशीतगुरुपित्तास्रवातजित् । स्तम्भन लेखन रुच्य विबन्धाध्मानकारकम् ॥

बिम्बु: । पुं० गुवाके ॥

बियच्चारी । पुं० चिल्लखगे ॥ त्रि०आकाशगामिनि ॥

बियत् । न० विष्णुपदे । गगने । आकाशे ॥ बिविशब्दतएतिव्याप्नोति । कृण शब्द ॥ यद्वा । बियच्छति० नविरमति । बिपूर्वाद्यमेरन्येभ्योपीतिक्विप् । क्वौचगमादीनामिति मलोपितुक ॥

बियद्गङ्गा । स्त्री० मन्दाकिन्याम् । स्वर्णद्याम् । सुरदीर्घिकायाम् ॥ बियति०बियतीवागङ्गा ॥

बियद्भूति: । स्त्री० तमसे । अन्धकारे ॥

बियन्मणि । पुं० सूर्ये । सहस्रांशौ ॥ बियतीमणिरिव ॥

बियम । पुं० सयमे ॥ विविधयमने ॥ बियमनम् । यम . समुपनिविषुचेतिपक्षे०अप् ॥

बियात: । पुं० धृष्टे । निर्लज्जे ॥ विरुद्धंयातचेष्टितंयस्य ॥ विरुद्धमयासोढा । गर्ह्यायैतिक्त: ॥

वियाम : । पुं॰ संयमे । विविधयमने ॥ वियमनम् । यम ' समुपनिविषु चेति॰ अवभावेघञ् ॥

वियुक्त । त्रि॰ वियोगविशिष्टे ॥

वियोग । पु॰ विच्छेदे । विप्रलम्भे । रागिणोर्वियोजने । विरहे ॥ स्मृ त्वावियोगजदु खमभ्यजनस्नेहप्रिये जने । अतिस्नेहपरिष्वङ्गाद्वर्तिरा र्द्रापिदह्यते ॥ वियोजनम् । युजि र्योगे । घञ् । वियुज्यतेऽनेनवा ॥

वियोगभाक् । त्रि॰ विच्छेदयुक्ते ।

वियोगी । पुं॰ चक्रवाके । कोके ॥ त्रि॰ विरहिणि । वियोगयुक्ते ॥ वि योगोऽस्यास्ति । इनि ॥

वियोगिनी । स्त्री॰ विरहिण्याम् ॥

वियोजित । त्रि॰ पृथक्कृते । वि योग प्रापिते

विरक्त : । त्रि॰ विरागवति ॥ सच॰ कुटीचकबहूदकहंसपरमहंसभेदाच्च तुर्विध ॥ विपूर्वाद्रञ्जे ' क्त ॥ अतिरक्तवर्णे ॥

विरक्ता । स्त्री॰ सांसारिकविषयेषुवि रागविशिष्टायाम् ॥ दुर्भगायाम ॥ अननुकूलायाम् ॥ याचिन्तया मिसततं मतिसाविरक्ता ।।

विरक्ति ' । स्त्री॰ वैतृष्ण्ये ॥ तीव्रातो व्रतराचेतिविरक्तिर्द्विविधामता । त त्रसत्यान्तुतीव्रायांन्यसेद्योगीकुटीच के । शक्तोबहूदकेतीव्रतरायाहंस

क्षिते । मुमुक्षु, परमेहंसेसाक्षाद्वि ज्ञानसाधने ।। रञ्जे क्तिन् ॥

विरङ्गम् । न॰ काङ्कुष्ठे ।।

विरचनम् । न॰ निर्माणे ।। विशेषे णरचनम् ।।

विरचित । त्रि॰ निर्मिते ॥ विशेषेणर चित ॥

विरजम् । न॰ तीर्थविशेषे ॥

विरजा : । त्रि॰ विगतधर्माधर्मे ॥ र जोगुणरहिते ॥ विगत रजोयस्य स ॥

विरजा ' । स्त्री॰ विगतार्त्तवायाम् ॥

विरजस्तमा । पु॰ दृष्यातिमे । निवृ त्तरजस्तमोगुणे ॥ रजस्तमोभ्याविग त । निरादयइतिसमास ॥ वि गतेरजस्तमसीयस्मादितिवा ॥

विरजा । स्त्री॰ कपित्थपर्ण्याम् ॥ दूर्वायाम् ।' ययातिमातरि ।। गोलोकेश्रीकृष्णसखीविशेषे ।। दौ र्गाविशेषे ।। देवयानपथवर्त्तिन्यां नद्याम् ॥ जगन्नाथक्षेत्रे ।। यथा । मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वय विधि । वर्जयित्वागयागङ्गाविशा लाविरजांतथा ।।

विरजाक्षेत्रम् । न॰ पुरुषोत्तमती र्थे । यथा । उत्कलेनाभिदेश न्तुविरजाक्षेत्रमुच्यते । विमलासा मदेवीजगन्नाथस्तुभैरव इति तन्त्रचूडामणीपीठनिर्णय . ।

शिरजाहोम । पुं॰ अवधूतत्वस्य न्यासकर्मणि । आगमप्रोक्तकर्मविशेषे ॥

विरञ्च । पु॰ द्रुहिणे । ब्रह्मणि ॥ विरचयति । रचप्रतियत्ने । पचाद्यच् । पृषोदरादित्वान्नुमागमः ॥

विरञ्चि । पुं॰ स्रष्टरि । ब्रह्मणि ॥ विरचयति । रच॰ । स्वार्थण्यन्तादचङ् । पृषोदरादित्वान्नुम् ॥

विरणम् । न॰ वीरणतृणे ॥

विरत । त्रि॰ निवृत्ते । विरक्ते ॥

विरतिः । स्त्री॰ व्यारतौ । उपरामे । निवृत्तौ ॥ विरमणम् । रमक्रीडायाम् । क्तिन् ॥

विरथः । त्रि॰ भग्नरथे ॥

विरमणम् । न॰ विरतौ ॥ विपूर्वाद्रमेर्ल्युट् ॥

विरमित । त्रि॰ निरस्ते ॥

विरलम् । न॰ दध्नि ॥ त्रि॰ अवकाशे । पेलवे । तनौ । सान्तरे ॥ विराति । रादाने । बाहुलकात्कलन् ॥ पुं॰ निर्जने ॥

विरलजानुकः । त्रि॰ वक्रजानुविशिष्टे । प्रज्ञौ । प्रज्ञे ॥ द्रु॰ हे॰ चन्द्रः ॥

विरलद्रवा । स्त्री॰ अन्नयवाग्वाम् ॥ यथा । यवागूरुष्णिकाश्राणा सैवसुद्रुतसिक्थिका । विलेपीत रलाचस्यात्साश्रव्याविरलद्रवा ॥

विरस । त्रि॰ रसहीने ॥ विगतोरसीयस्मात् ॥

विरह । पुं॰ विप्रलम्भे । वियोगे । विच्छेदे ॥

विरहिणी । स्त्री॰ वियोगिन्याम् ॥ विच्छेदविशिष्टायाम् ॥ नार्यामृभ्रतौ ॥ ङीप् ॥

विरहितः । त्रि॰ त्यक्ते । विशेषेणरहितः ॥

विरही । पु॰ वियोगिनि । विरहविशिष्टे ॥ विरहोस्यास्ति । अतइनि ॥ रहितेराभीक्ष्ण्येर्थेणिनिर्वा ॥

विरहोत्कण्ठिता । स्त्री॰ नायिकाविशेषे ॥ चिरमप्यागतेनाली विरहोत्कण्ठितोन्मनेतिलक्षणात् ॥

विराग । पु॰ वैराग्ये । रागप्रतिद्वन्द्विनि ॥ त्रि॰ गताभिलाषे ॥ विगत रागोस्य ॥

विरागार्ह । त्रि॰ विरागयोग्ये । वैरङ्गिके ॥ अर्हति । अर्ह॰ । पचाद्यच् । विशिष्टोराग विरागः । विरागस्यअर्हः । भवति ॥

विरागी । त्रि॰ विरक्तिमति ॥

विराट् । पुं॰ विविधराजमानत्वात्स्थूलसमष्ट्युपहितचैतन्येभगवत स्थूलरूपे ॥ यथा तत्कार्यंश्वविराड्देहः स्थूलदेहोयमात्मनइति । पञ्चीकृतभूतानांयत्कार्यंतत्का-

र्थंविराट्देहोभवतिसचदेह • प रमेश्वरस्यस्थूलदेह ॥आत्मनोममभ गवत्पाद्•दे•भो•॥ विराडात्माना म•स्थूलप्रपञ्चाभिमानीसूर्य्यमण्ड लात्मक समष्टिदेहचतुर्गोलकाद यानुग्राहकोहिरण्यगर्भ. चचत्रा ध्यामथान्तरमितिव्याख्यातार . ॥ विशेषेणराजते।राजृ दीप्तौ। विवि ध राजतेवा । सत्सूद्विषेतिक्विप् ॥ चत्रिये॥ स्त्री•दृशाचरायाश्रनी ॥

विराज । पुं• विराजि ॥

विराजमान : । त्रि० दीप्तिविशिष्टे । शोभमाने ॥

विराजित । त्रि० शोभिते। दीप्ते ॥

विराट '। पुं• मत्स्यदेशे ॥ वैदर्भदे शादूर्ध्वमिन्द्रप्रस्थाचदक्षिणे । म रुदेशात्पूर्व्वभागेविराट : परि कीर्त्तित : ॥ मत्स्यदेशाधिपे ॥ नगरविशेषे ॥

विराटक । पुं• राजपट्टे ॥ इति हेमचन्द्र • ।

विराटज : । पुं• विराटदेशीयहीर के । राजपट्टे । राजावर्त्ते ॥ त्रि• विराटराजजाते ॥

विरावी । पुं• हस्तिनि ॥ इतिश ब्दमाला ॥

विराद्ध : । त्रि• विप्रकृते ॥ राधेर निट • कर्मणिक्त : ॥

विराध : । पुं• रामायणप्रसिद्धेराच सविशेषे ॥

विराधनम् । न• पीडायां ॥

विराध्यन् । त्रि• अपकुर्वाणे ॥

विराम: । पुं• अवसाने ॥ वितर्कवि चारानन्दास्मितादिरूपचिन्तात्या गे। हस्वपरमे ॥ विपूर्व्वाद्रमेर्भावे घञ् ॥ विरमन्तेनिवर्त्तन्तेऽस्मि न्नितिवा ॥

विराव : । पुं• शब्दे । स्वाने । आ रावे ॥ विरवणम् । रु•उपसर्गेरु वइतिभावेघञ् ॥

विरिक्त . । त्रि• सञ्जातविरेके ॥

विरिञ्च '। पुं• वैकुण्ठे । विष्णौ ॥ परमेष्ठिनि ॥ शिवे ॥ इ•श•रत्ना वली ॥

विरिञ्चन : । पुं• विरञ्चने । द्रुहि णे ॥ इ•हे•चन्द्र ' ॥

विरिञ्चि : । पुं• शिवे । विष्णौ ॥ विधातरि । परमेष्ठिनि । सुरज्ये ष्ठे ॥ भूतानिविरचयति । रचप्र तियत्ने । स्वार्थण्यन्तादिचइ : । पृषोदरादित्वादकारस्येत्वंनुमाग मश्च ॥

विरिब्ध : । पुं• स्वरे ॥ रेभृशब्दे सौत्र • । क्त • । न्बब्धस्वान्तध्वान्ते त्यादिनानिपातित: ॥

विरिष्ट : । त्रि• विच्छिन्ने ॥

विरुद्ध :। पुं• हेत्वाभासान्तरे । सा ध्याभावव्याप्तहेतौ ॥ यथाशब्दोनि

स्य 'कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥ न्यायसूत्रञ्च 'सिद्धान्तमभ्युपेत्यतद्विरोधीविरुद्धः । अत्र चसिद्धान्तसाध्यम ०प्रतिज्ञार्थोहिप चस्यसिद्धस्यान्तेसाध्यमभिधीयते० तथाचसाध्यमभ्युपेत्यतद्विरुद्धप्रयुक्तस्तद्विरोधीसाध्याभावव्याप्तइतिफलितार्थ । यथावह्निमान्ह्रद-त्वादिति । एतच्चसाध्याभावानुमितिसामग्रीत्त्वेनसाध्यानुमिति प्रतिबन्धीदूषकतावीजम् । नच सत्प्रतिपक्षाविशेष' । तत्रहित्वन्तरंसाध्याऽभावसाधकम ०इहतु हे साध्याभावसाधक. साध्यसाधकत्त्वेनत्वयोपन्यस्तवस्यशक्तिविशेषोद्भावकत्तुनविशेषात् ॥ १ । ४६ इ० ॥ विपरीतधर्माक्रान्ते ॥ विरोधविशिष्टे ॥

विरूढः। त्रि० अङ्कुरिते । विरुहा० इतिख्याते ॥ विपूर्वाद्रुहेर्गत्यर्थेतिक्त । ढत्वधत्वष्टुत्वढलोपदीर्घा '॥ आरोहणविशिष्टे ॥

विरूपम् । न० पिप्पलीमूले ॥ त्रि० कुरूपे ॥ विरुद्धंरूपयस्य सः ॥

विरूपा । स्त्री० अतिविषायाम् ॥ दुरालभायाम् ॥ कुरूपायाम् ॥

विरूपाक्षः । पुं० त्रिलोचने । शम्भौ । ईशे । शिवे ॥ रुद्रविशेषे ॥ विविधानिरविचन्द्राग्निरूपाण्यक्षीणियस्य । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच ॥ विरूपेष्वपि० अचिन्त्यपाहॆष्वर्य्यैरूप्यक्षीणिवा ॥ विविधरूपाणि० विविधरूपेषु० अक्षाणीन्द्रियाण्यस्येतिवा ॥ असुर विशेषे ॥

विरूपिका । स्त्री० कुरूपायाम् ॥

विरूपी । पुं० जातके ॥ त्रि० कुरूपविशिष्टे ॥

विरेकः । पुं० मलभेदे । रेचने । रेके । रेचनायाम् । विरेचने ॥ पृथक्त्वे ॥ यथा । यच्चयद्ध्यासस्तविरेकाग्रहणनिबन्धनोभ्रमइतिभाष्यम् ॥

विरेचकः । त्रि० विरेककारके ॥ यथा । चूर्णमध्येचित्रकूर्णीस्तरसेकारवेल्लकम् । खेदैर्वोरण्डजतैलंफलैर्वाहरीतकीतिवाग्भटः ॥

विरेचनम् । न० विरेके ॥ तत्कारकौषधयथा । हरीतकीसमगुडामधुनासहपेषिता । विरेचनकरीहृद्भवतीतिनसंशयः ॥ त्रिफलाचित्रकंचिचतथाकटुकरोहिणी । जड़त्वप्रहरोक्षं षडत्तमन्नुविरेचनम् ॥ अपिच । त्रिफलाबदरद्राक्षापिप्पलीचविरेचकृत् । हरीतकीसोष्णनीराश्चवच्चविरेचकृत् । इतिगरुडपुराणे ॥ प० पीलुवृक्षे ॥

विरेफ : । पुं॰ नदमात्रे ॥ त्रि॰ रेफशून्ये ॥

विरेभित' । त्रि॰ शब्दिते ॥

विरोक : । पु॰ सूर्यकिरणे ॥ न॰ छिद्रे रन्ध्रे ॥ विरोचतेऽनेन । रुच॰ । घञ् । घञि कुत्विम्य तोरितिकुत्वम् । लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येतिनपुंसकत्वा- विरोध : ॥

विरोचनम् । न॰ स्फुरणे ॥

विरोचन । पु॰ प्रह्लादतनये ॥ अर्के । सूर्ये ॥ अग्नौ ॥ चन्द्रे ॥ अर्कवृक्षे ॥ रोहितकवृक्षे ॥ श्योनाकप्रभेदे । घृतकरञ्जे ॥ विशेषेणरोचते । रुचदीप्तौ ॥ अनुदात्तेतश्चहलादेरितियुच् ॥ त्रि॰ रोचके ।

विरोचनसुत : । पु॰ बलिराजाख्यदैत्ये ॥ विरोचनस्यसुत : ॥

विरोध । पुं॰ वैरे । विद्वेषे ॥ यथा । प्रधानस्यप्रधानेनसहविरोधेनतुदुर्बलेनेति ॥ विरोधकरणे दोषोयथा । अथपुनरेषांकासाञ्चित्वाद्वृत्तान्तृत्त्वमसि, तवाचकिञ्चिद्वचनपरिणामसुखावहम् ॥ अविरोधेभवान्त्येवसर्वमङ्गलमङ्गलम् । विरोधोनामबीजस्यसर्वोपद्रवकारणम् ॥ अकस्माद्योविरोधश्चदाकणे. स्तथिये : सह । प्रतिज्ञाचैषाकर्त्तव्या मदीयवचनंशृणु ॥ इति ॥ अपि च । नकुर्याद्गुरुभि . सार्द्धंविरोधंबन्धुभिस्तथा । आत्मन . प्रतिकूलानिपरेषानसमाचरेदिति ॥ विरोधनोसमैगर्च्छन्नाधर्मेसुसदाबुधइतिच ॥ विरोधनम् । रुधिर आवरणे । घञ् ॥ अलङ्कारविशेषे । यथा । विरोध : सोऽविरोधेपिविरुद्धत्वेनयद्वच । वस्तुनस्तेरविरुद्धेपिविरुद्धयोरिवयदभिधानंसविरोध : । जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रिभि : । क्रियाद्वाभ्यामपिद्रव्यद्रव्येणैवेति तेदश ॥ अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशि . । सुभगकुरङ्गदृशोस्याविधिवशतस्त्वद्वियोगपविपाते ॥ गिरयोप्यनुन्नतियुजोमरुदप्यचलोव्ययोप्यगभीरा । विश्वम्भराप्यतिलघुर्नरनाथतवान्तिकेतिनियतम् ॥ ( * ) येषांकण्ठपरिग्रहप्रणयितांसम्प्राप्यधाराधरस्तीक्ष्णा सोप्यनुरज्यतेचकमपिकमलहपरांप्रोतिच । तेषासङ्गरसङ्गसक्तमनसाराज्ञांत्वयाभूपतेपांशुनापटले . प्रसाधनविधिर्निर्वर्त्यतेकौतुकम् ॥ सृजतिचजगदिदमवतिचसंहरतिचहेलयैवयोनियतम् । अवसरवशत शफरोजनार्द्दन सोपिचित्रमिदम् ॥ सततमुसलासक्ताब

हुतरगृहकर्मघटनयान्नृपते । द्विजपत्नीनाकठिना . सतिभवतिकरासरोजकुसुमारा ॥ पेशलमपिखलवचन दहतितरांमानससुतत्त्वविदाम् । परुषमपिसुजनवाक्यमलयजरसवत्प्रमोदयति ॥ क्रौञ्चाद्रिरुद्धामहषट्ठोययथ्मार्गोनर्गलश्चातपाते । अभूनवाम्भोजदलाभिजात स भार्गव सत्यमपूर्वसर्ग · ॥ परिच्छेदातीत सकलवचनानामविषय: पुनर्जन्मन्यस्मिन्ननुभवपथ योनगतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनोविकार : कोप्यन्तर्जडयतिचतापञ्चकुरुते । अयवारामेकोनिलयइतिरत्नाकरइतिश्रितोऽस्माभिस्तृष्णातरलितमनोनिर्जलनिधि · । कएवजानीतेनिजकरपुटीकोटरगतक्षणादेनंताम्यत्तिमिमकरमापास्यतिमुनि . ॥ समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् । क्षितितिलकत्वयितटजुषिशङ्करचूडापगापिकालिन्दी ॥ इति ॥ अनैक्ये । विपरीतार्थे ॥ यथा । श्रुतिस्मृतिविरोधेतुश्रुतिरेवगरीयसी । अविरोधेसदाकार्यंस्मार्त्तंवैदिकवत्सता ॥ असामानाधिकरण्ये ॥ न्यायमते •साध्यव्यापकाभावप्रतियोगित्वमितिचिन्तामणि : । साध्यासमानाधिकरण्यमितिदीधिति : । अहिनकुलादेरन्यतरेणापरस्मरणे ॥ विरोधनाम्नवस्तुनि ॥

विरोधकृत् । पु० वत्सरविशेषे । तत्फलयथा । वासवोवर्षतेदेविदेशेचाखण्डमण्डले । अग्निच्छत्रेकान्यकुब्जे विरोधीक्षपिनाशकृत् ॥ ४५ ॥ त्रि० विरोधकर्त्तरि ॥

विरोधन : । पु० विग्रिपि । न० पर्यवस्थायाम् । विरोधे ॥ रुधिर् ० । ल्युट्‌ल्युड्वा ॥

विरोधी । पुं० शत्रौ ॥ विरोधोऽस्यास्य स्मिन्वा । इनि : ॥ वत्सरविशेषे ॥ यथा । अनग्निप्रबलालोकाधान्यौषधिप्रपीडनम् । जायतेमानुषेकष्टं विरोधिनिनसंशय ॥ त्रि० विवादिनि ॥ विरोधविशिष्टे ॥

विरोधिनी । स्त्री० विरोधकारिकायाम् ॥ विरोधविशिष्टायाम् ॥

विरोधोक्ति · । स्त्री० विप्रलापे । परवचनविरोधिवचने ॥ विरोधस्योक्ति ॥

विल । पुं० उच्चै · श्रवसि । इन्द्रस्य हये ॥ वेतसे ॥ न० छिद्रे । रन्ध्रे ॥ गुहायाम् ॥ विलतिभिनत्ति । विलभेदने० घोष्रादि : । इगुपधेतिक . ॥ विल्यतेवा । कस्यल्युटोवहुलमिति० इगुपधेतिक : । घञर्थे कोवा । खनोघचेतिघे० सञ्ज्ञापूर्वकत्वाद्गुणाभावोवा ।

विलकारक । पुं॰ मूषके ॥

विलकारी । पु॰ मूषिके ॥ गर्त्त कारके ॥

विलक्ष । त्रि॰ विस्मयान्विते । परकीयधर्मं शीलादौप्राप्ताश्चर्ये ॥ विशेषेणलक्षयति । लक्षआलोचने । पचाद्यच् ॥ लक्षाद्भ्रष्टे ॥ लज्जिते ॥ विलक्षणे ॥

विलक्षणम् । न॰ हेतुशून्यायांस्थितौ । निष्प्रयोजनस्थितौ ॥ यथा । विलक्षणा मत स्थान यद्भवेन्निष्प्रयोजनमितिभागुरि. ॥ त्रि॰भिन्ने । अन्यलक्षणे ॥ विशेषलक्षणयुक्ते ॥ विगत लक्षणमालोचनं यत्र ॥

विलक्षणा । स्त्री॰ शय्याविशेषे ॥

विलक्षित । त्रिक्ष्विते ॥ विशेषेणलक्षितः ॥

विलग्न । पुं॰ न॰ मध्ये ॥ न॰जन्मलग्ने ॥ मेषादिलग्नमार्गे ॥ त्रि॰ लग्ने । ससक्ते ॥ विशेषेणलग्न ॥ वियुक्ते ॥

विलङ्घनम् । न॰ अतिक्रमणे ॥

विलङ्घित । त्रि॰ अतिक्रान्ते ॥

विलङ्घ्य । त्रि॰ अतिक्रमणीये ॥

विलज्ज । त्रि॰ लज्जयाहीने ॥ विगतालज्जायस्य ॥

विलपनम् । न॰ विलापे ॥ भाषणे ॥

विलम्ब । पुं॰ उचितकालाधिकका ले ॥ लम्बने ॥ गौणे ॥ वत्सरविशेषे ॥ तत्फल यथा । तस्करैः पार्थिवैश्चैवअभिभूतमिदं जगत् । अर्घौभवतिसामान्योविलम्बेतुभयमहत् ॥ ३२ ॥

विलम्बनम् । न॰ अशीघ्रे ॥

विलम्बितम् । न॰ तत्ताख्यनृत्यादौ ॥ विशेषेणलम्बन्तेकारचरणाद्य. प्रत्यक्षमतिविशेषप्रदर्शनायात्र । लविचवस्रंसने॰ओष्ठोपध॰ क्तोधिकरणेचेतिक्त ॥ त्रि॰ आश्रिते । विलम्बमाने ॥

विलम्बी । त्रि॰ लम्बमाने ॥ विशेषेणलम्बमाने ॥

विलम्भ । पुं॰ अतिसर्जने । दाने ॥ विलम्भि : । डुलभष्प्राप्तौ । घञ् । उपसर्गात्खलघञोरितिनुम् ॥

विलय । पु॰ प्रलये ॥ विशेषेणलीयन्तेपदार्थाअस्मिन् । लीङ्श्लेषणे । एरच् ॥ यथालयणस्यतोये ॥

विलसा । स्त्री॰ श्वेतवचायाम् ॥ इ॰राजनि॰ ॥

विलवास । पुं॰ आश्वकजन्तौ ॥

विलवासी । पु॰ सर्पे ॥ विलेवसति । णिनि. ॥

विलशय । पु॰ विलेशये ॥

विलसन् । त्रि॰ विलासयुक्ते ॥

विलसितम् । न॰ चेष्टिते ॥ भावे क्त ॥ उद्भूते ॥

विलाप. । पुं॰ परिदेवने । अनुशोचनोक्तौ । शोकोक्तौ ॥ विलपनम् । उपेभाविघञ् ॥ दु. खजेवचसि ॥

विलापित: । त्रि॰ घृतवद्द्रवीकृते । विलीनताप्रापिते ॥

विलाल । पुं॰ यन्त्रे ॥

विलास । पुं॰ लीलायाम् ॥ हावभेदे । सयथा । प्रियसमीपगमनेय: स्थानासनगमनविलोकनेषुविकारोऽकस्माच्चक्रोधस्मितचमत्कारमुखविधूननं सविलास: । तथाहि । यौवनभावानुगतो विकारोगत्यासनस्थानविलोकनेषु । तथास्मितक्रोधचमत्कृतो यविधूननस्त्वागत विलास. ॥ अपिच । विलासोङ्गविशेषाय: प्रियाप्राप्त्यासनादिषु । इति । विलसनम् । लसश्लेषणे । घञ् । प्रकाशे ॥ शारीरिकसुखानुभवे ॥

विलासकाननम् । न॰ क्रीडावने ॥

विलासायुध । पु॰ कामदेवे ॥

विलासी । पु॰ भोगिनि ॥ व्यालेसर्पे ॥ विष्वक्सेने । हरौ ॥ अग्नौ ॥ चन्द्रे विलसनशीलः । विपूर्वात् लसेर्णिनिः । अजन्ते तच्चनुष्य ॥

विलासिनी । स्त्री॰ नार्याम् ॥ वेश्यायाम् ॥

विलिप्त । त्रि॰ श्लिष्टे ॥ विशेषेणलिप्त. ॥

विलिम्पन् । त्रि॰ उपदिहाने ॥ विलिम्पति । लिप॰ । शतृ ॥

विलीन: । त्रि॰ स्वत. प्राप्तद्रवीभावेघृतादौ । विद्रुते । द्रुते । श्लिष्टे । संसक्ते ॥ विलीयतेस्म । लीङ् श्लेषणे । गत्यर्थेतिक्त: । स्वादयओदितइतिनत्वम् ॥ विशेषेणलीनोवा ॥ विशेषेणलयङ्गते ॥ यथा । विलीनोवैवेतस्ततनगरकोलाहलभरो गतादूरादूरं क्वचिदपिपरेतान्मृगयितुम् । विमानानां व्राते विदलयति वीथीर्दिविषादो कथातेकल्याणीयदवधिमहीमण्डलमगात् ॥ विश्लिष्टे ॥

विलुप्त. । त्रि॰ संहृते ॥ चोरिते ॥

विलुप्ताब्द: । पु॰ लुप्तसंवत्सरे ॥ यथा । गोधाम्यकुम्भे तरमेऽलिचारगो मीनापूर्वेश्चिगुरुरेतिवक्रितः तदा विलुप्ताब्दइतीतिनिन्दित: शुभेषु देवासुरनिन्द्यमानरे ॥

विलुम्पक. । त्रि॰ अपहर्त्तरि ॥

विलुलित: । त्रि॰ आकुलिते । आकर्षआकुलिते ॥ विक्षुब्धे ॥

विलेखनम् । न॰ छेदने ॥ आकर्षे ॥ लेखने ॥

विलेप । पुं॰ लेपे ॥ लिपेर्भावे घञ् ॥

विलेपनम् । न॰ कुङ्कुमाद्यनुलेपने । समालम्भे ॥ गात्रानुलेपनयोग्ये पिष्टे घृष्टे वा सुगन्धिद्रव्ये । गात्रानुलेपन्याम ॥ घृष्टचन्दनादिलेपमात्रे । विलिप्यतेऽनेन । लिप उपदेहे । ल्युट् ॥

विलेपनी । स्त्री॰ यवाग्वाम् ॥ सुवेशस्त्रियाम् ॥

विलेपी । त्रि॰ विलेपनकर्त्तरि ॥

विलेपी । स्त्री॰ यवाग्वाम् । उष्णिकायाम् ॥ अस्याविधिर्गुणाश्च । चतुर्गुणाम्बुसंसिद्धा विलेपी घनसिक्थिका । पृथग्द्रवैर्वारहिता ख्याता शिथिलभक्तिका ॥ स सिद्धा॰ अतीवसिद्धा । विलेपीगिलहयो॰ कृतिलोक्तिः । विलेपी दीपनी बल्या हृद्या सङ्ग्राहिणी लघुः । व्रणाक्षिरोगिणां पथ्या तर्पणीहृड्ज्वरापहा ॥ विलिम्पति । लिप॰ । पचाद्यच् । गौरादि ॥

विलेवासी । पुं॰ सर्पे ॥

विलेशय । पुं॰ सर्पे ॥ मूषिके ॥ गोधादिषु ॥ यथा । गोधाशशभुजङ्गाखुशल्लक्याद्या विलेशयाः । विलेशया वातहरा मधुरा रसपाकयोः । दृंहणा बद्धविण्मूत्रा वीर्योष्णाश्चापि कीर्त्तिताः ॥ विलेशेते । अधिकरणे शेते॰ कृत्यच्

। शयवासेत्यलुक् ॥

विलोकनम् । न॰ दर्शने ॥ लोक दर्शने । ल्युट् ॥

विलोकित । त्रि॰ दृष्टे ॥ लोक॰ । क्तः ॥

विलोचनम् । न॰ चक्षुषि । विलोच्यतेऽनेन । लोचृ॰ । ल्युट् ॥ दर्शने ॥

विलोटक । पुं॰ नलमीने । वालियामाच॰ कू॰ गौ॰ भा॰ प्रसिद्धे ॥

विलोडनम् । न॰ मथने ॥ आलोडने । विलोवना॰ कू॰ भा॰ प्र॰ ॥

विलोडित । त्रि॰ आलोडिते । मथिते । विलोया॰ कू॰ भा॰ न॰ तक्रे ॥

विलोप । पुं॰ विशिष्टलोपे ॥

विलोभ । पु॰ विलोभने ॥ विलुभेर्घञ् ॥

विलोम । पु॰ सर्पे ॥ वरुणे ॥ शुनि ॥ न॰ अरघट्टके ॥ पिषणयन्त्रे । त्रि॰ प्रतीपे । विपरीते ॥

विलोमक । पु॰ प्रतिकूले । विपरीते ।

विलोमजिह्व : । पुं॰ अन्त स्वेदे । महामृगे । हस्तिनि विलोमा जिह्वायस्य स ॥

विलोमजिह्वक । पुं॰ पीलौ । सि

विल्वमूला । स्त्री० वाराहीकन्दे ॥

विल्वशुण्ठी । स्त्री० विल्वपत्र्याम् । वेलसूंठा० इ० गौ० दे० भा० प्र० ॥

विल्वसू । स्त्री० दशपुत्रायाम् ॥

विल्वा । स्त्री० हिङ्गुपत्र्याम् ॥

विव० । त्रि० पक्षिवाहने ॥ विनापक्षिणा वातिगच्छति । वा० । आतश्चेति क. ॥

विवक्षा । स्त्री० कथनेच्छायाम् ॥ अ स्त्री ॥

विवक्षित । त्रि० कथनेच्छाविषये । वक्तुमिष्टे ॥ अभ्यार्थे ॥

विवक्षु । त्रि० वक्तुमिच्छौ ॥

विवत्सा । स्त्री० नष्टापत्यायाम् ॥

विवदमान । त्रि० विवादकर्त्तरि ॥

विवध । पुं० पर्याहारे । वीवधे । पथिनि । भारे ॥ विविधो वधो हननं गमनं वा यानेन वा । प्रादिभ्यो धातुजस्येति समासोत्तरपदलोपौ ॥

विवन्ध । पुं० मलाप्रवृत्तौ ॥

विवरम् । न० दूषणे । गर्त्ते । छिद्रे ॥ अलक्ष्यस्थाने ॥ विवृणोति । वृञ् वरणे । पचाद्यच् ॥ यद्वा । विव्रियते । ग्रहवृदृनिश्चिगमश्च इत्यप् ॥ विगतो वरोऽस्माद्वा ॥ भौमापक्षिणां विवरं वा ॥ पुं० अतलादिविलेषु ॥ यथा । अतलं प्रथमं प्रोक्तं द्वितीयं वितलं तथा । तृतीयं सुतलं प्रोक्तं चतुर्थं वै तलातलम् । महातलं पञ्चमं षष्ठं प्रोक्तं रसातलम् । सप्तमं विप्र पातालं सप्तैते विवरा स्मृताः । एतेषु बिलस्वर्गेषु दिवोऽप्यधिकमेव च । कामभोगैश्वर्यसुखसमृद्धभवनेषु चेति देवीभागवतम् ॥

विवरणम् । न० व्याख्यायाम् । अर्थस्फुटीकरणे ॥ कथने ॥

विवरनालिका । स्त्री० वंश्याम् । वेणौ ।

विवरेसद् । त्रि० मध्यवर्त्तिनि ॥ विवरे सीदति । षद् ऌ० । सत्सूद्विषेत्यादिना क्विप् । तत्पुरुषे कृतीत्यादिना ऽलुक् ॥

विवर्ण । त्रि० पामरे । नीचे । क्रूरे ॥ विगतो वर्णो यस्मात् ॥ मलिने ॥

विवर्णवासा । त्रि० काषायवाससि ॥

विवर्त्त । पुं० समुदाये । सङ्घे ॥ अपावृत्तौ । अपवर्त्तने ॥ नर्त्तने । नृत्ये ॥ स्वरूपानुपमर्देनकार्यान्तरापत्तौ । अप्रच्युतपूर्वस्वरूपस्यासत्यनानाऽऽकारावभासे ॥ यथा । सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः । अतत्त्वतोऽन्यथाप्रथा । विवर्त्त इत्युदाहृतइति ॥ विवर्त्तनम् । वृतु० । घञ् ॥

विवर्त्तनम् । न० परिभ्रमणे ॥ प्रत्यावृत्तौ ॥ पराङ्मुखविलुण्ठने ॥

विवर्त्तवाद । पुं० वादविशेषे । असतोवा-नाद्यनिर्वचनीयाविद्यायमानोनात्म

येषविवर्त्तते । सुखमिवतसज्जाया जन्यनभेदादित्येवंनिर्धारिते ॥ तथाच । ततोनिरंशआनन्देविवर्त्तो जगदिष्यताम् । अवस्थान्तरभानन्तु विवर्त्तोरज्जुसर्पवत् ॥ मायाशक्ति कल्पिकाश्चादिन्द्रजालिकशक्तिवत् । शक्ति . शक्तात्पृथङ्नास्तितद्वद् ष्टेनचाभिदा । प्रतिबन्धस्यादृष्टत्वा च्छक्तत्यभावेतुकस्यस . । शक्ति कार्यानुमेयायाधर्मिवीच्यत्वसिध्यते ॥

विवर्त्तित : । त्रि॰ परिसमुल्लसिते ॥

विवर्द्धन । पुं॰ विशेषेणसम्बर्द्धिते ॥

विवश ' । त्रि॰ अस्ततन्त्रे । अवश्यात्मनि । अरिष्टदुष्टधीवि । आसन्नमरणसूचकलक्षणमदुष्टमतौ । विरुद्धं वष्टि॰कामयते । वश॰ । अच् ॥ कातरे ॥

विवसन : । पुं॰ अर्हति । जिने । बौद्धे ॥ त्रि॰ दिगम्बरे । विगतवसनयस्य स ॥

विवस्त्र । त्रि॰ नग्ने ॥

विवस्वान् । पु॰ सर्वचयिमंशबीजभूते॰आदित्ये । सूर्ये । विविधवस्ते॰आच्छादयति । वस॰ । क्विप् । विवोरश्मिरस्यास्ति । मतुप् । तस्मै मत्वर्थे इतिभत्वाद्रुत्वाभाव ' । वि वस्वानोत्रास्तीतिभ ॥ अर्कवृक्षे ॥ विबुधे । सुरे ॥ अरुणे । वैवस्वतमनौ ॥

विवस्वती । स्त्री॰ सूर्यनगर्याम् ॥

विवह । पु॰ दारपरिग्रहे । वायो : पञ्चमस्कन्धे । सयथा । सुस्त्राह गौदगन्धासुदूकप्रतिक्षिप्तसमुतो सम्भवस्थाद्ग्रहेभ्य पञ्चमोविवहो गण . । ५ ॥

विवाक । त्रि॰ विवेचनकर्त्तरि ॥ यथा । अर्थप्रत्यर्थिनोर्वचनविरुवाविरुद्धमध्ये सद्विविनक्तिविवेचयति वा॰विवाकइतिमिताक्षरा ॥

विवाद ' । पु॰ व्यवहारे । ऋणादिन्याये । सचधनविभागादिविषयन्यायादि ' । यथा । ऋणादिदाय कलहेद्वयोर्बहुतरस्यवा । विवादोव्यवहारश्चद्वयमेतन्निगद्यते । अष्टादशविवादस्थानानियथा । तेषामाद्यमृणादानंनि क्षेपोऽस्वामिविक्रय : । सम्भूयचसमुत्थानदत्तस्यानपकर्मच ॥ वेतनस्यैवचादानसंविद्व्यतिक्रम ' । क्रयविक्रयानुशयो विवाद स्वामिपालयो ॥ सीमाविवादधर्मश्चपारुष्येदण्डवाचिके । स्तेयञ्चसाहसञ्चैवस्त्रीसंग्रहणमेवच ॥ स्त्रीपुन्धर्मोविभागश्चद्यूतमाह्वयमेवच । पदान्यष्टादशैतानिव्यवहारस्थिताविहेतिमनु : । मिथोविरुद्धवादे । पक्षप्रतिपक्षपरिग्रहेणविरुद्धवदने ॥ विरुद्धोवादोविवाद : ॥

विवोढ़ानुगत ' । त्रि० विवादकर्त्तरि
विवादी त्रि० विवादयति ॥ मत्वर्थी यइनि ' ॥ विवादकर्त्तरि ॥
विबाधनम् । न० शाठ्ये । पीडायाम् ॥
विवाधा । स्त्री० पीडायाम् ॥
विवार । पु० वर्णोच्चारणप्रयत्नविशेषे ॥ विवारयतिविकासयत्यास्यमितिविवारइतिकैयट . ॥
विवास । पुं० समाप्तौ ॥
विवाह । पु० भार्याप्राप्तिहेतौ । दारपरिग्रहे । उपयमे । परिणये । उद्वाहे । उपयामे । पाणिपीडने ॥ धर्मप्रजात्यर्थोहिविवाह ॥ विवाहोऽष्टविध प्रोक्त स्मृतिशास्त्रेषुसूरिभि . । ब्राह्मणवर्णभेदेनकलौसद्विविधोमत । परिणीतास्तुयानार्यो ब्रह्मवर्णैवत्तमभि : । ता एवदारा विज्ञेयाअन्या सर्वा परस्त्रिय० इतिमहानिर्वाणतन्त्रम् ॥ विवाहानन्तरकन्यायाभर्तृगृहगमनकालेपिवादीनारोदनपुराणसिद्धम् । यथा दुर्वाससासहपौर्वकन्याया कन्दल्याविवाहे । कन्यासमर्पण कृत्वा मोहादुच्चैररोदच । मूर्च्छामवापस मुनि ' स्वकन्याविरहातुर ' ॥ च पश्चभेदशीकोच खोतमाराममनुस्मृति । सर्पनचेतनांप्राप्यवोधयामासकन्यकाम् ॥ मूर्च्छितांतात विच्छेदाद्रुदन्तींशोकसयुताम् ॥ इतिब्रह्मवैवर्त्तपुराणम् ॥ विशिष्टं वहनम् । वहप्रापणे । घञ् ॥
विवाहक । पुं० विवाहे । स्वार्थेक ॥
विवाहित ' । पु० स्त्री०कृतविवाहे ॥
विवाह्य : । त्रि० विवाहयोग्ये ॥
विविक्त । पुं० वसुनन्दने ॥ त्रि० असम्पृक्ते ॥ एकान्ते । रहसि ॥ जनसम्मर्दराहत्तदेशे ॥ पूते ॥ विवेकिनि ॥ विविक्तजनाश्च । विचिर्० । पौव्यार्थत्वाद्गत्यर्थत्वाद्वा ०क्तोधिकरणे चेतिक्त ॥ विविच्यते०विविच्यतेस्म । विचिरपृथगभावे०विचिर्विरेचनेवा । क्त ॥ एकार्थे ॥
विविक्तदेश: । पुं० जनसम्बन्धविवर्जितदेशे । स्वभावत : संस्कारतोवा ०शुद्ध०ऽशुचिभि सर्पव्याघ्रादिभिश्चरहिते०सुरधुनिपुलिनादौ०चित्तप्रसादकरेदेशे ॥ विविक्तश्चासौदेशश्च ॥
विविक्तसेवी । त्रि० एकान्तवासस्वभावे विवेकिनि ॥ विविक्त जनसम्मर्दरहित०पूतञ्च०यदरण्यगिरिगुहादि ०तत्सेवितु शीलयस्य ॥
विविक्ता । स्त्री० दुर्भगायाम् ॥
विविग्न ' । त्रि० भीते ॥
विवित्सा । स्त्री० वेदितुमिच्छायाम् ॥
विविक्षित ' । त्रि० ज्ञातुमिष्टे । स

असंयोग. । वासनचयस्यप्रतिकूलतया । सतोत्पादनमध्येवविविच्यनिश्चये ॥ पृथगात्मतायाम् । पृथग्भावे । प्रकृतिपुरुषादिभेदज्ञाने । व्यक्ताव्यक्तज्ञविज्ञानैर्विवेचनम् । विचिर्पृथग्भावे । घञ् ॥ तत्त्वावधारणे । विद्यामदधनमदकुलाचारमदादिमदानाविरोधिनि ॥ सच दुर्गमे सेजनकेन । चद्यैमदतांमूर्द्धि तेदिने निपतन्त्यध । इत्यपि त्समहत्तायांवैषाविरुद्धस्ततातत ॥ साधनानिमहोपालात्रास्मायां जगन्निवा । प्राकृतानप्रयातानिकोय विरुद्धस्ततातत ॥ कोटयोब्रह्मणांयातागतासर्गपरम्परा: । प्रयातापांशुवद्भूपा ' कोधृतभमजोविती ॥ येषानिमेषणोन्मेषौजगत: प्रलयोदयौ तादृशा: पुरुषायातामादृशागणनैवका ॥ इति ॥ जलद्रोण्याम् ॥ पृथग्भावविचारे ॥ विभागे ॥ एकान्ते ॥

विवेकिता । स्त्री॰ विवेकित्वे । कार्याकार्यविचारतायाम् ॥ मदमूढबुद्धिषुविवेकिताकुत: ॥

विवेकी । त्रि॰ मनीषिणि । गुरुशास्त्राद्युपदेशयुक्ते ॥ विवेकोऽस्यास्ति । अतइनि: ॥ शास्त्रदृष्टिर्विवेकिनाम् ॥ विचारकर्त्तरि ॥ पुं॰ देवसेनराजपुत्रे ॥

विवेचक । पुं॰ विवेचनस्यकर्त्तरि ॥ विवेचयति । विचिर् । ण्वुल् ॥

विवेचनम् । न॰ विवेके ॥

विवेचनीय । त्रि॰ विवेच्ये । विवेचितव्ये ॥

विवोढा । पुं॰ परिणेतरि । वरे । पत्यौ ॥

विव्रुवन् । त्रि॰ विरुद्धवक्तरि ॥

विव्वोक । पुं॰ हावविभेदे । स्त्रीणां शृङ्गारभावजायांक्रियायाम् ॥ यथोक्तम् । विव्वोकोऽभिमतप्राप्तावपिगर्वादनादरकृति ॥ विवानम् वागती । विवुगतिविशेष: । न्यगवादित्वात्कुप्रत्यय. । उच्यतेसमवैत्यच । उपसमवाये । इणवृति घञ् । घञर्थेकोवा । ओकउच: के॰ इतिनिपातित. । विवोरोक: स्थानम् ॥

विट । पुं॰ मनुजे ॥ वैश्ये ॥ प्रवेशे ॥ विशन्ति । विशप्रवेशने । क्विप् । व्रश्चेतिषत्वम् । जश्त्वचर्त्वे ॥

विशम् । न॰ विसे । मृणाले ॥

विशकण्ठी । स्त्री॰ बलाकायाम् ॥

विशङ्कः । त्रि॰ निश्शङ्के । शङ्कारहिते ॥

विशङ्कट । त्रि॰ पृथौ । विशाले ॥ विस्तृतार्थवृत्तेविशब्दात् । वे: शालच्छङ्कटचौ ॥ स्त्री॰ विशङ्कटी । बह्वादिभ्यश्चेतिङीष् ॥

विशदः । पुं० शुक्ले । शुभ्रे । श्वे ते । पाण्डरे । धवले ॥ त्रि० धवल वर्णयुक्ते ॥ प्रसन्ने ॥ विमले । व्यक्ते ॥ विविक्तावयवे । यथा० खरविशदमभ्यवहार्य्यंमच्यमिति ॥ विशीयते० शद्लृशातने । अच् ॥

विशदप्रभ. । त्रि० निर्म्मलकान्तौ ॥

विशब्दनम् । न० प्रतिज्ञाने ॥ शब्देनप्रकटीकृताभिप्राये ॥

विशम्वरा । स्त्री० पत्नराम् ॥ इतिराजनिर्घण्टः ॥

विशय : पुं० संशयेऽवयायमर्थोनवेतिसन्देहे ॥ विशिष्टंशयनम् । शीङ्स्वप्ने । एरच् ॥

विशयी । त्रि० संशयिनि ॥

विशरः । पुं० वधे । मारणे ॥ विशरणम् । शृहिंसायाम् । ऋदोरप् ॥

विशरणम् । न० अवयवानांविश्लेषे ॥ मारणे ॥ भेदने ॥

विशल्यः । त्रि० शल्यरहिते ॥

विशल्यकरणी । स्त्री० ओषधिविशेषे॥

विशल्यकृत् । पुं० अक्षोटके । भूपलाशे । हापरमालोति० गौ० दे० भा० प्र० वृक्षे ॥ त्रि० विशल्यकारिणि ॥ विशल्यंकरोति । डुकृञ्० । क्विप् ॥

विशल्या । स्त्री० अग्निशिखायाम् लाङ्गलिक्याम् ॥ लघुदन्त्याम् ॥ गुडूच्याम् ॥ त्रिपुटायाम् । शल्यनरहितायाम् । लक्ष्मणाख्यौषधौ ॥ अजमोदायाम् ॥ कलिकार्याम् ॥ विगताशल्यात् । विगतशल्यमनया० यस्माद्वा । तीर्थविशेषे ॥

विशल्यानदी । स्त्री० तीर्थविशेषे ॥

विशसन. । पुं० तरवारौ ॥ खड्गे । नरकान्तरे ॥ न० मारणे ॥ शसुहिंसायाम् । ल्युट् ॥

विशसित. । त्रि० मारिते ॥ विपूर्वाच्छसेः क्तः ॥

विशसिता । त्रि० पशोरङ्गानांकण्ठ्यादिनापृथक्पृथक्कारके ॥

विशस्तः । त्रि० अविनीते ॥ शसु० । क्तः । प्रविशस्तौवैयाख्ये । एतौनिपातावविनयएवानिटौस्तः ॥

विशस्ता । पुं० चाण्डाले ॥

विशाकारः । पुं० भद्रचूडे ॥

विशाख. । पुं० शिखिवाहने । कार्त्तिकेये । षडानने ॥ विशाखति । शाखृशाखृव्याप्तौ । पचाद्यच् ॥ विशाखायाजातइतिवा । सन्धिवेलादौ त्वण् । श्रविष्ठाफल्गुनीत्यादिनातस्यलुक् । लुक्तद्धितलुकि॥ धन्विनासमरकाले० वितस्त्यन्तरेणस्थितेपादद्वयेसतिविशाखाख्यस्थानभवति० तस्मिन् ॥ याचके । तर्कुके ॥ पुनर्नवायाम् ॥

विशाखलम् । न० योधानांपादविन्यासभेदे ॥

विशाखा । स्त्री० षोडशेनक्षत्रे । राधायाम् ॥ यस्यांजातस्तुफलयथा । सदानुरक्तोविविधक्रियायासुवर्णकारैरपिसख्यमेति । यस्यप्रसूतश्चौभवेद्विशाखासखानकस्यापिभयेत्प्रसूत . ॥ पाक्षिकमेकवचनम ॥ अजन्ताट्टाप् ॥ कठिल्लके ॥

विशाय : । पुं० उपशाये । यामिनांक्रमाच्छयने ॥ यथा । उपशायोविशायश्चपर्यायशयनार्थको ॥ विशयनम् । शीङ् स्वप्ने । व्युपयो : शेते . पर्यायइतिघञ् ॥

विशारणम् । न० मारणे ॥ इतिहेमचन्द्र . ॥

विशारद । पुं० सर्वज्ञे । ईश्वरे ॥ बकुले ॥ मद्यगन्धे ॥ त्रि० पण्डिते ॥ धृष्टे ॥ प्रगल्भे ॥ प्रसिद्धे ॥ श्रेष्ठे ॥ विशिष्टोविपरीतोवाशारद ' । प्रादयोगतेतिसमास : ॥ विशुद्धे ॥

विशारदा । स्त्री० क्षुद्रदुरालभायाम् ॥

विशाल . । पुं० मृगभेदे ॥ पक्षिविशेषे ॥ नृपान्तरे ॥ वृक्षविशेषे ॥ त्रि० पृथुले ॥ विस्तृतार्थस्तेर्विशब्दात् . वे . शालच्छङ्कटचाविति० शालच् ॥ यद्वा । विशति । विशप्रवेशने । तमिविशिविडीत्यादिनाकालन् ॥ विस्तीर्णे ॥

विशालता । स्त्री० पार्श्वविस्तारे । परिणाहे । पनहा० इ० भा० ॥

विशालस्यभाव । तस्यभावस्त्वतलाविति तल् ॥

विशालतैलगर्भ । पुं० अङ्कोठवृक्षे ॥

विशालत्वम । न० विशालतायाम ॥

विशालत्वक् । पुं० सप्तपर्णवृक्षे ॥ विशालात्वगस्य । बृहत्त्वचि ॥

विशालपत्र पुं० कासालौ । कोकणदेशप्रसिद्धोयम् । स्थूलताले । श्रीताले विशालानिपत्राण्यस्य ॥

विशालफलिका । स्त्री० निष्पाव्याम् ॥

विशाला । स्त्री० इन्द्रवारुण्याम् ॥ अन्येन्द्रवारुणीप्रोक्ताविशालातुमहाफला । विशालाकफवातघ्नी मेहकुष्ठहरासरा । उज्जयिन्याम ॥ विशलति । शलचलने । ज्वलितीतिण ' ॥ यद्वा । विशति । विश० । तमिविशिविडीतिकालन् । विशालशब्दात्स्त्रियामजाद्यतष्टाबितिटाप् ॥ उपोदक्याम् ॥ बदरिकाश्रमे ॥

विशालाक्ष : । पुं० हरे । महेश्वरे ॥ तार्क्ष्ये । गरुडे ॥ त्रि० विशालनयने । सुनेत्रे ॥ विशालेअक्षिणीयस्य । बहुव्रीहौसक्थ्यक्ष्णो स्वाङ्गात्षच् ॥

विशालाक्षी । स्त्री० वरस्त्रियाम् ॥ नागदन्त्याम् ॥ देवताविशेषे ॥ वाराणस्याम् विशालाक्षीविशाला-

यामपिश्चिता ॥ योगिनीविशेषे ॥ पित्वान्ङीष् ॥

विशालाया । स्त्री॰ पाटलायाम् ॥

विशाली । स्त्री॰ अजमोदायाम् । वनयवान्याम् । वस्तगन्धायाम् ॥ बह्वादिभ्यश्चेतिङीष् ॥

विशिख । पु॰ शरे । बाणे ॥ तोमरे ॥ शरवर्णे ॥ विशिष्टा शिखाग्रमस्य ॥ त्रि॰ शिखारहिते । यथा । विशिखोप्युपवीतीच यत्करोतिनतत्कृतमितिस्मृति ॥

विशिखा । स्त्री॰ खनित्याम् ॥ रथ्यायाम् ॥ नलिकायाम् ॥ विशेते ॥ शीङ् । शीङ्. विद्भ्रश्चेतिख । टाप् ॥

विशिपम् । न॰ गृहे । मन्दिरे । विशन्त्यत्र । विश॰ विटपविष्टपविशिपोलपादूति॰ विशे. कपन्॰ प्रत्ययोदेरित्वञ्च ॥

विशिष्ट । पु॰ विष्णौ ॥ त्रि॰ प्रकृष्टज्ञानवति ॥ अधिके ॥ युक्ते ॥ विशेषेणशिष्ट. ॥ यद्वा । विशिष्यतेसर्वज्ञत्वादिभि॰ सर्वेभ्योऽतिरिच्यते । विपूर्वात्॰ शिषऌ विशेषणाद्व्यत कर्मणिक्त ॥

विशिष्टाद्वैतवादी । त्रि॰ प्रकृतिपुरुषयोर्भिन्नत्वेपिमितयोस्तयोर्ब्रह्मत्ववादिनि ॥ तस्यमतयथा । पुरुषस्तदतिरिक्ताप्रकृति॰ किन्तु भयमितब्रह्म । चणकद्विदलवत् । द्वैत्वं ब्रह्मणएकत्वव्यवस्थितम् । चित्परमाणुस्वरूपोजीव॰ समस्तविश्वब्रह्मांश. । इतिमाधवभाष्यादि ॥

विशीर्ण । त्रि॰ विध्वस्ते ॥ गलिते ॥ विशीर्यतेस्म । शॄहिंसायाम् । क्त ऋहतद्धृपर: । रदाभ्यामितिन । णत्वम् ॥ विशीर्ण. प्रारब्धोवपुरपिजराव्याधिविधुरगतदूरेविप्रश्चजनभरणवाञ्छितमपि । इदानीन्नोमोहादहहविपरीतेहतविधौविधेयंयत्तत्त्वस्फुरतिमनसायापिहृदये । इतिशिक्षणमिश्र ॥

विशीर्णपर्ण: । पु॰ निम्बवृक्षे ॥

विशीर्णवाक् । त्रि॰ स्खलितवचने ॥

विशुद्धम् न॰ अज्ञानतत्कार्यमलरहितत्वान्निष्प्रपञ्चेवेदान्तप्रसिद्धेब्रह्मणिषट्चक्रान्तर्गतपञ्चमचक्रे कण्ठस्थे । विशुद्धिं तनुतेयस्मात्जीवस्यहंसलोकनात् । विशुद्धपद्ममाख्यातमाकाशाख्यं महाद्भुतम् ॥ जीवस्यहंसस्यपरमात्मनोवलोकनात्जीवस्यविशुद्धं तनुते॰ ततोविशुद्धमित्यन्वय ॥ त्रि॰ उज्ज्वले । विमले । शुद्धे ॥ केवले ॥ निभृते ॥ सत्ये ॥

विशेषविषयग्रहृध ॥ विषयोपराग शून्ये ॥

विशुद्धविज्ञानम् । न० कार्य्यकारणो पाधिविनिर्मुक्तेब्रह्मणि ॥

विशुद्धात्मा । चि० निर्मलाऽन्तःकरणे ॥ विशुद्धोरजस्तमोभ्यामकलुषितआत्माऽन्तःकरणरूपसत्त्वं यस्य सः ॥

विशुद्धिः । स्त्री० समे ॥ शोधने ॥ सर्वकर्मण्य,पादेयाविशुद्धिरन्ततारयोः ॥

विशृङ्खलः । चि० शृङ्खलारहिते । अबद्धे ॥ अप्रतिबन्धे ॥ विगताशृङ्खलायस्य ॥

विशेष. । पु० तिलके ॥ प्रभेदे ॥ अतिशये ॥ प्रकर्षे । इतरव्यावर्त्तके असाधारणधर्मे ॥ सप्तपदार्थान्तर्गतपदार्थभेदे ॥ विशेष निरूपयति । अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितइति । अन्तेअवसानेवर्त्तते०इतिअन्त्य । यदपेक्षयाविशेषोनास्तीत्यर्थः । घटपटादीनांद्व्यणुकपर्य्यन्तानांतत्तदवयवभेदात्परस्परभेदः । परमाणूनांभेदकोविशेषएव०सतुस्वतएवव्यावृत्तः । तेनतत्रविशेषान्तरापेक्षानास्तीत्यर्थः ॥ इतिमुक्तावली ॥ पञ्चतन्मात्रेभ्योयथासङ्ख्यमाकाशादीनि यानिपञ्चभूतानि । एतेस्मृताविशे



षाः कुतः शान्ताघोराश्चमूढाश्चेतिसाङ्ख्याः ॥ अलङ्कारप्रभेदे ॥ यथा । विशेष ख्यातमाधारं विनाप्याधेयवर्णनम् । गतेसूर्य्येपिदीपस्थास्तमश्छिन्दन्तितत्कराः ॥ १ ॥ विशेष सोपियद्येकं वस्त्वनेकत्रवर्ण्यते । अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपिसैवमे २ ॥ किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्चसः । त्वांपश्यतामयालब्धं कल्पवृक्षनिरीक्षणम ॥ ३ ॥ विशिष्यते । चि० मुख्यविशेषणे । घञ् ॥ चि० शेषशून्ये ॥

विशेषकम् । न० तमालपत्रे । ललाटकृततिलके ॥ अयाणांश्लोकानामन्वये ॥ पुं० तिलकवृक्षे ॥ पुं० न० तिलकविशेषे ॥ चि० विशेषयितरि । विशेषाधायके० प्रभेदे ॥ विशिनष्टि । शिष् स्त्र० । ण्वुल् ॥

विशेषकच्छेद्यम् । न० चतुःषष्टिकलान्तर्गतषष्ठकलायाम् ॥ सातुतिलकेषुनानाविच्छेदरचनेतिशैवतन्त्रम ॥

विशेषगुणः । पुं० बुद्ध्यादिषट्के ॥ रूपादिचतुष्टये ॥ स्नेहे ॥ स्वाभाविकद्रवत्त्वे ॥ अदृष्टे ॥ भावनायाम् ॥ शब्दे ॥ इतिभाषापरिच्छेद ॥

विशेषज्ञः । चि० सारविदि ॥

विश्रुत. । त्रि० ख्याते । प्रसिद्धे ॥ व्यश्राबि । श्रु० । क्त ॥ ज्ञाते ॥ हृष्टे ॥ विशेषेणाश्रुत ॥

विश्रुतात्मा । पु० विष्णौ ॥ अना द्यविद्यावशान्मनुष्योऽहंब्रह्माऽस्मीत्यह कर्त्ताऽहमेवकर्त्ताऽहमित्यन्ततायात्मनाप्रतीयमानोऽप्यन्तर्गतजडदुःखात्मकोऽयोदेशादिभ्योविशेषेणवेलक्षण्येनवेदान्तवाक्यैः सत्यज्ञानादिलक्षणः सन् श्रुतश्रवणादिनाऽवगतआत्माऽतो विशेषेणाश्रुतत्वाद्विश्रुतात्मा । सर्वचेतनः । "चेतनश्चापिमांविद्धी"तिभगवद्वचनात् ॥ ब्रह्मविदि । विशेषेणश्रुतआत्मायेन । ज्ञानीत्वात्मैवमेमतमितिभगवद्वचनादस्यविष्णुरूपत्वं सुप्रसिद्धमेव ॥

विश्रुति । स्त्री० कीर्त्तौ ॥ विख्यातौ ॥

विश्लथः । त्रि० शिथिले ॥

विश्लिष्टः । त्रि० शिथिले ॥

विश्लेषः । पुं० विधुरे ॥ वियोगे विभागे ॥

विश्व । पुं० विश्वरूपभगवति ॥ व्यष्टयुपहितचैतन्ये व्यष्टिस्थूलशरीरोपहितस्य० विश्वशब्दवाच्यत्वेहेतु. सूक्ष्मशरीरमपरित्यज्यस्थूलशरीरादिप्रविष्टत्वादिति । सूक्ष्मशरीरंकारणशरीरम्० तदपरित्यज्य० स्थूलशरीरादौ० तदपेक्षयास्थूलशरीरलिङ्गशरीरतदादियंस्यपरमस्थूलशरीरस्य तितदनुगुणसविज्ञानमीवहुश्रीहि । तस्मिन्प्रविष्टत्वात् । तथाहि । जीवस्यत्रयउपाधय सुषुप्त्यादौ बुद्ध्यादिसंस्कारोपरञ्जितमज्ञानमात्रमुपाधि । स्वप्ने जाग्रद्वासनामयलिङ्गशरीरमुपाधि । जाग्रदवस्थायान्तुसूक्ष्मशरीरसंसृष्टस्थूलशरीरमुपाधि । तथाचपूर्वंपूर्वोपाधिविशिष्टस्यैवोत्तरोपाधिप्रवेशात्सर्वशरीरप्रविष्टत्वेनैवस्थूलभोगायतनाभिमानिनोविश्वइतिसंज्ञा ॥ यद्वा । सूक्ष्मशरीरलिङ्गशरीरतदपरित्यज्य० स्थूलशरीरंविराट व्यष्टितदादियासांचक्षुरादिकानां० तत्तद्विषयाकारायाश्चतत् प्रविष्टत्वादितिहेतुयोजना विश्वशरीरवर्त्तित्वाद्विश्व. ॥ गणदेवताविशेषे ॥ तेयथा ॥ क्रतुर्दक्षोवसुसत्यः काल कामोधृति ' कुरुः । पुरूरवामाद्रवाश्चविश्वेदेवादशस्मृता : ॥ वृष्टिश्राद्धे क्रतुर्दक्ष : स सत्योनान्दीमुखेवसुः । नैमित्तिकेकालकामौकाम्ये चधुरिलोचनौ ॥ पुरूरवोमाद्रवाश्चपार्वणे समुदाहृतौ ॥ तेतु० धर्माद्दक्षकन्यायांविश्वायांजाता' ॥ विशति० कर्मक्षितिविश्व. । विशप्रवेशने । अशूप्रुषिलटिकणिखटिविशिभ्यः :

क्षितिक्षन् ॥ ब्रह्मणि ॥ विशन्ति सर्वाणिभूतान्यस्मिन •तत् । अनुप्र वेशश्रुत्या•विशतिसर्वमितिवा ॥ पञ्चीकृतपञ्चमहाभूततत्कार्यात्म कीवैराजशरीरे ॥ भुवने । जगति । सर्वस्मिन्प्रपञ्चजाले॥ विशतिसका रणमितिनिरुक्तेः ।अस्यकारणस्य रूपादिविषयैतर्कजालनकर्तव्यमा यामयत्वादिच्याःक्विमिदंकिमरूप कथमिदमभूदसुष्यकोहेतु । इति नकदापिविचिन्त्यचिन्त्य मायेतिधी मताविश्वम् ॥ दन्तिनिदारुविकारे दारुतिरोभवतिसोपितत्रैव । जग तितथापरमात्मापरमात्मन्यपिजग तृतिरोधत्ते ॥ ६४ ॥ इति । अपि च । मूलोच्छेदविनाकाप्यस्मिन्प्ररोह न्तिपुन पुन . । यथालतास्तथावि श्वमज्ञानप्रशमंविना ।अपिचाहु' । विश्वदर्पणदृश्यमाननगरीतुल्य निजान्तर्गतपश्यन्नात्मनिमाययाबहि रिवोद्भूतंयथानिद्रया । य ' साक्षा त्कुरुतेप्रबोधसमयेस्वात्मानमेवाद्व यतस्मैश्रीगुरुमूर्त्तयेनमइदंश्रीदक्षि णामूर्त्तये ॥ इति ॥ अपिचाहुर्गौड पादाचार्या । स्वप्नमायेयथादृष्टे ग न्धर्वनगरयथा । तथाविश्वमिदंदृष्ट वेदान्तेषुविचक्षणैरिति ॥ नागरे। शुण्ठ्याम् ॥ बोले ॥ त्रयोदशाङ्के ॥ त्रि•अखिले । कृत्स्ने ॥ विशतिस्व

कारणम् ॥ विश• । क्वन्त्रिक्षन् । अनन्ते ॥ विश्वशब्द सर्वशब्दसर्वमध्य यवाचकमितिभारतम् ॥ सर्वनाम सञ्ज्ञोयम् ॥ आधुनिकसञ्ज्ञाखेवसर्व नामत्वपर्युदासात् ॥

विश्वकद्रु' । पुं• आखेटशुनि । मृगा याकुशलकुक्कुरे ॥ ध्वनौ । ध्वाने ॥ त्रि•खले । पिशुने ॥ विश्वकसर्वंद्र वति । द्रुगतौ । मितद्र्वादित्वात् डु . ॥ यद्वा । विश्व कन्दते । कदि आह्वानादौ । अचादि ॥

विश्वकर्मजा । स्त्री• विश्वकर्मसुतायाम्॥

विश्वकर्मा । पुं• सर्वदर्शी । सूर्ये ॥ मुनिविशेषे ॥ देवशिल्पिनि । त्वष्ट रि । देववर्द्धकौ ॥ हौप्रोक्तोविश्वक र्माणोमयस्त्वष्टाऽथयोगवित् ॥ विश्व कर्माऽस्माटकवेति ॥

विश्वकर्मसुता । स्त्री• सूर्यभार्य्याया- म् । सञ्ज्ञायाम् ॥

विश्वका । स्त्री• गङ्गाचिल्लाम् ॥

विश्वकृत् । पुं• देवशिल्पिनि । विश्व कर्मणि ॥ ब्रह्मणि । परमेष्ठिनि ॥ विश्वकरोति । डुकृञ्• । क्विप् । तुक् ॥

विश्वकेतु . । पुं• कामे । मदने ॥ वि श्वस्मिन्•विश्वव्यापीवाकेतुर्य्यौति रस्य ॥ अनिरुद्धे ॥

विश्वगः । पुं• ब्रह्मणि ॥

विश्वगन्ध' । पुं• पलाण्डौ ॥ न•बो

ले ॥

विश्वगन्धा । स्त्री० भूमौ ॥ क्षितौ ॥ विश्वस्मिन्गन्धोऽस्याः ॥

विश्वग्रन्थि : । स्त्री० हंसपद्याम् ।

विश्वचक्रम् । न० महादानविशेषे ॥

विश्वचक्रात्मा । पुं० विष्णौ ॥

विश्वजन ' । पुं० सर्वसाधारणेवेश्यादौ । रामजनी०इ०भा०प्र० ॥

विश्वजनीन ' । त्रि० सर्व्वजनहिते ॥ विश्वश्चासौजनश्च०तस्मै हितम् । आत्मविश्वजनभोगोत्तरपदात्ख ' ॥

विश्वजनीय : । त्रि० विश्वजनहिते ॥ विश्वश्चजन:सर्वसाधारणोवेश्यादि' । विश्वोजनोऽस्येतिविग्रहेऽपि०सएवा। थ्यपदार्थ : । तस्मै हितम् । कर्मधारयादेवेष्यतइतीष्टेरयनख : किन्तु छएव ॥ विश्वंजनायहितोवा ॥

विश्वजित् । पुं० सर्वस्वदक्षिणे यज्ञविशेषे । सर्वमेधे ॥ त्रि०सर्वजेतरि ॥ विश्वंजयति । जि०क्विप् वे तिक्विप् । तुक ॥

विश्वत ' । अ० सर्वतइत्यर्थे । विश्वस्मात् । पञ्चम्यास्तसिल् ॥

विश्वतोमुख : । त्रि० सर्वतोमुखे ॥ विश्वतोमुखान्यस्य ॥

विश्वदेव : । पुं० गणदेवताविशेषे ॥ यथा । विश्वदेवौक्रतुदक्षौसर्वास्विष्टिषुविश्रुतौ । नित्यनान्दीमुखश्राद्धे वसुसत्यौचपैतृके ॥ नवान्नालम्भेदेवौकामकालौसदैवहि । अपि कन्यागतेसूर्येश्राद्धेचध्वनिरोचकौ ॥ पुरूरवामाद्रवाश्चविश्वदेवौचपर्वणि ॥ इ०वह्निपु० ॥ चक्षु रादिषुप्राणेषु ॥ देवसत्त्वये ॥ कृष्णगवेधुकायाम ॥

विश्वदेवा । स्त्री० कृष्णगवेधुकायाम् ॥ गोरक्षचाकुलिया०इ०गौ०दे०भा०प्र० ॥ नागबलायाम् ॥ अरुणपुष्पदण्डोत्पले ॥

विश्वधायो : । त्रि० विश्वस्यधारके ॥ विश्वदधाति । डु धाञ्० । वहि हाधाञ्भ्यश्छन्दसीत्यसुन्०णित् । आतोयुक् ॥ वैदिकोयम् ॥

विश्वधृक् । पुं० श्रीपतौ ॥ विश्व धृष्णोतिसत्त्वानैश्वर्यादिभिर्व्रह्मादीन् वाऽभिभवति । ञिधृषा० । क्विप् । कुत्वात्ववर्जमर्त्विगन्त : । ग : । क : ॥

विश्वनाथ : । पुं० विश्वेश्वरे । शिवे ॥ विश्वेषांनाथ ' ॥

विश्वनाथनगरी । स्त्री० काश्याम् ॥ यत्रदेहपतनेनदेहिनांमुक्तिरेवभवतीतिनिश्चितम् । पूर्वपुण्यनिचयेन लभ्यतेविश्वनाथनगरीगरीयसी ॥

विश्वप ' । पुं० अग्नौ ॥ विश्वपाति । पा० । आतोनुपसर्गेक: ॥

विश्वपा : । पुं० अग्नौ ॥ विधौ ॥ रवौ ॥ प्रजापतौ ॥ विश्वंपा-

ति । पा० । आतोनुपसर्गइतिकः प्राप्ते०वासरूपन्यायेन०आतोमनिन्क्वनिप्वनिपश्चेतिचेनविच् ॥ देवे ॥

विश्वपा । पुं० वह्नौ ॥ चन्द्रे ॥ सूर्ये ॥ समीरणे ॥ इतात्मे ॥ विश्वंपाति । पाभक्षणे । श्रु-श्नुघन्निति साधु: ॥

विश्वबोध: । पुं० धर्मकाये । बुद्धे ॥

विश्वभुक् । पुं० विष्णौ ॥ विश्वकृत्स्नं जगद्भुङ्क्ते स हरतिप्रलयकाले इति०भुनक्तिपालयतिस्थितिकाले इतिवाभुजो परिपालनाभ्यवहारणयोर्मण्. क्विप् ॥

विश्वभू । पुं० बुद्धप्रभेदे ॥

विश्वभेषजम् । न० शुण्ठ्याम् ॥ विश्वस्यदोषस्यभेषजम् ॥

विश्वभोजा: । पुं० इन्द्रे ॥ विश्वं भुङ्क्ते भुनक्तिवा । भुज० । विदिभुजिभ्यांविश्वे०इत्यसिप्रत्यय ॥

विश्वमदा । स्त्री० चर्मजिह्वाविशेषे ॥

विश्वम्भर: । पुं० अच्युते । विष्णौ ॥ विद्यौजसि । शक्रे ॥ विश्वंबिभर्त्ति । डुभृञ्० । संज्ञायाभृतॄवृजिधारिसहितपिदमइतिखच् । अरुर्द्विषदितिमुम् ॥ वह्नौ ॥ विश्वस्यभरणाद्विश्वम्भरो वह्निरितिभाष्यकारा: ॥ विश्वम्भरा०इ०भा०प्राणिविशेषे ॥

विश्वम्भरा । स्त्री० धरायाम् । स्थिरायाम् । पृथिव्याम् ॥ विश्वम्भरातद्धरणाच्चानन्तानन्तरूपत । इतिपुराणम् ॥ विश्वंबिभर्त्ति० डुभृञ्धारणपोषणयो: । संज्ञाया भित्यादिनाखच् । मुम् । टाप् ।

विश्वयोनि । पुं० भगवति ॥ विश्वस्ययोनि: कारणम्०निमित्तोपादानात्मकम् ॥

विश्वरूप: । पुं० विराजि । विष्णौ ॥ आदित्ये । सूर्ये ॥ विश्वानि बहूनिरूपाण्यस्य ॥ विश्वानिनानाविधानि० रूपाणिश्वेतपीतादिगुणात्मकानियस्य ॥ मणिविशेषे ॥ सवनानारूपोऽवभासते० उपाधिसन्निधानात्०नस्वतोनेकरूप. ॥ न० अगुरुणि ॥

विश्वरूपकम् । न० अगुरुणि ॥

विश्वरेता: । पुं० ब्रह्मणिविधातरि ॥ विश्वस्यरेत: कारणम् ॥ विश्वसर्वकार्यत्वेनाभिमतरेता कार्यंयस्यसविश्वरेता. परमेश्वर ॥

विश्वरोचन. । पुं० नाडीचशाके ॥

विश्ववेदा: । पुं० अग्नौ ॥ सर्वज्ञे ॥ विश्वंवेत्ति० विदन्तिवा । विद० । विदिभुजिभ्यांविश्वइति० असिप्रत्यय. ॥

विश्वसनम् । न० मुनिविश्रामदेशे ॥ मुनिविश्रामदेशीयस्तु विश्वसनस्मृतमितिवचनात् ।

विश्वसहा । स्त्री० वह्निजिह्वाविशेषे ।

विश्वसारम् । न० तन्त्रविशेषे ॥

विश्वसारकम् । न० विट्खदिरे । फणिमनसा० द्रू० गौ० भा० । नागयूहर० द्रू० भा० प्र० ॥

विश्वसित :। त्रि० विश्वस्ते । कृत विश्वासे ॥

विश्वसृट्०ड् । पुं० विधौ । ब्रह्मणि ॥ विश्वं सृजति । सृज० । क्विप् । क्विन्प्रत्ययस्येतिकुत्व न० र ज्जुसृड्भ्यामितिभाष्यप्रयोगात् । यद्यास्रजियज्यो . पदान्तत्वविधे : कुत्वापवादत्वात् ॥

विश्वस्त । त्रि० जातविश्वासे । अशङ्किते ॥

विश्वस्ता । स्त्री० विधवायाम् ॥ विफलश्वसिति । श्वसप्राणने । ग त्यर्थेतिक्त । आगमशास्त्रस्यानित्यत्वान्नेट् ॥

विश्वस्या । स्त्री० शतावर्याम् ॥

विश्वा । स्त्री० अतिविषायाम् ॥ शुण्ठ्याम् । शतावर्याम् ॥ विशति । विश० । अशूप्रुषीतिक्वन् । टाप् ॥ पिप्पल्याम् ॥

विश्वाकषाय :। पु० शुण्ठीक्वाथे ॥

विश्वाची । स्त्री० अप्सरोविशेषे ॥



विश्वात्मा । पुं० परमेश्वरे । विश्व मात्मनियस्य ॥ प्रतीचि ॥ विश्वस्मिन्पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकेस्थूलजगतिवैराजशरीरे० आगरितेच० आत्मा अहंममेत्यभिमानोऽस्य । विश्वस्थावरजङ्गमात्मकस्यप्राणिजातस्यात्माप्रत्यक्पीवा ॥

विश्वामित्र । पुं० ब्रह्मर्षिविशेषे । गाधिजे । विश्वकुयाजिनि । कौशिके ॥ विश्वेषांमित्र :। विश्वपर्ययोमैत्रीकस्मिन्निच्छतिधर्मत : । विश्वामित्र : सन्नतिभागवतेऽर्णे. ॥ आत्मनि ॥ विश्वस्यमित्रं मिरूपाधिप्रेमगोचरतयाप्रेयान् । आत्मानमेवप्रियमुपासीतेतिश्रुते : ॥ मित्रे चर्षाविति विश्वशब्दस्यदीर्घ : ॥ त्रि० सकलशात्रवे ॥ विश्वेषाममित्र :॥

विश्वामित्रतीर्थम् । न० तीर्थविशेषे ।

विश्वामित्रप्रिय । पुं० नारिकेले ॥

विश्वराट् । पु० विश्वस्मिन्राजमाने ॥

विश्वावसु :। पुं० गन्धर्वविशेषे ॥ विश्ववसुयस्य । विश्वस्यवसुराटोरितिपूर्वपदान्तस्यदीर्घ : ॥ वत्सरविशेषे ॥ तत्फलयथा । सर्वेचजायतेचमसबंशस्यमहार्घता । विश्वावसौवरारोहे कार्पासस्यमहार्घता ॥ स्त्री० रात्रौ ॥

विश्वास । पुं॰ विश्रम्भे । दृढमित्थमेवनान्यथेतिनिश्चये ॥ विश्वसनम् । श्वस॰ । घञ् ॥ लोभप्रमादविश्वासै पुरुषोनश्यतित्रिभि । तस्माल्लोभोनकर्त्तव्य . प्रमादोननविश्वसेत् ॥ सार्थोयानमदकुर्यात्सम्बोदृष्वायोज्झित । तन्निमित्त यस्य विश्वास ' पुरुष सजितेन्द्रिय .॥ अपिच। सौहार्द्दव्यवहारांश्चप्रवृत्ति प्रकृतिन्तथाम् । सहवासेनतर्कैश्च विदित्वाविश्वसेत्तत .॥

विश्वास्य । त्रि॰ श्रद्धेयवचने ॥

विश्वदेवा . । पुं॰ गणे ॥ श्राद्धदेवे ॥ क्रतुर्दक्षोवसु सत्य काम कालस्तथाध्वनि । रोचकश्चाद्रवाश्चैव तथाचान्य : पुरूरवा ' ॥ विश्वेदेवाभवन्त्येतेदशसर्वप्रपूजिता . ॥

विश्वेश । पुं॰ परमेश्वरे ॥ विश्वेषां सर्वेषामीशोनियन्ता ॥

विश्वेशा । स्त्री॰ विमलेश्वरेवस्त्रमानायादेव्याम् ॥

विश्वेश्वर । पुं॰ काशिस्थेशिवे। काशीनाथेलिङ्गविशेषे ॥ विश्वेषामीश्वर ॥ दृश्योविश्वेश्वरोदेवीस्नातव्यामणिकर्णिका ॥

विश्वौषधम् । न॰ शुण्ठ्याम् ॥ विश्वेषामौषधम् । विश्वस्यतदौषधञ्चेति वा ॥

विट् । स्त्री॰ विष्ठायाम् ॥ वेवेष्टि । विषत्यव्याप्नोति । क्विप् । अत्रत्वषत्वं ॥ दुष्टितरि ॥ विट्पतिशब्द निर्देशात् ॥ व्यापने ॥

विषम् । न॰ जले । तोये ॥ वत्सनाभाभिधे ॥ बोले ॥ सामान्यविषे ॥ पुं॰ न॰ क्ष्वेडे । गरले ॥ तद्भेदायथा । पुंसिक्लीवेचकाकोलकालकूटहलाहला : । सौराष्ट्रिक : शौक्लिकेयोब्रह्मपुत्र ' प्रदीपन ॥ दारदोवत्सनाभश्चविषभेदाअमीनव ॥ अपिच । विषतुगरलन्तद्भेदानुदाहरेत् । वत्सनाभ ' सहारिद्र सक्तुकश्चप्रदीपन ॥ सौराष्ट्रिक शृङ्गकश्चकालकूटस्तथैवच । हालाहलोब्रह्मपुत्रोविषभेदाअमीनव ॥ ब्राह्मण पाण्डरस्तेषुक्षत्रियोलोहितप्रभ । वैश्य . पीतोऽसित . शूद्रोविषउक्तश्चतुर्विध ॥ रसायनेविषविप्रं क्षत्रियदेहपुष्टये । वैश्यकुष्ठविनाशायशूद्रं दद्याद्धायहे ॥ अथास्यगुणा । विष प्राणहरप्रोक्त व्यवायिचविकासिच । आग्नेयवातकफहृद्योगवाहिमदावहम् ॥ व्यवायि॰ सकलकायगुणव्यापनपूर्वकपाकागमनशीलम् । विकासि॰ ओज . शोषणपूर्वकसन्धिबन्धशिथिलीकरणशीलम् । आग्नेयम्॰ अधिकाग्नेयम् । योगवाहि॰ स सर्गगुणग्राहकम् । मदावहम्॰ तमोगुणाधिक्येनबुद्धिविध्वंसकम् ॥

तदेवयुक्तियुक्तन्तु प्राणदायिरसायनम् । येगवाहिपरंवातश्लेष्मजित् सन्निपातहृत् ॥ योगवाहिचिदोषघ्नं बृंहणं वीर्यवर्द्धनम् । येदुर्गुणाविषेऽशुद्धेतेस्युर्हीनाविशोधनात् ॥ तस्माद्विषप्रयोगेषुशोधयित्वाप्रयोजयेत् । अथशोधनविधिः । गोमूत्रेत्रिदिनंस्थाप्यविषंतेनविशुद्ध्यति । रक्तसर्षपतैलाक्तंतथाधार्यंस्वयासति ॥ येगुणागरलेप्रोक्तास्तेस्युर्हीनाविशोधनात । तस्माद्विषप्रयोगेषुशोधयित्वाप्रयोजयेत् ॥ स्थावरजङ्गमञ्चैव द्विविधं विषमुच्यते । दशाधिष्ठानमाद्यन्तु द्वितीयंषोडशाश्रयम् ॥ विशेषोभावप्रकाशेद्रष्टव्यः ॥ वैवेष्टिकायम् । त्रि० । विषविप्रयोगेश्चा । द्युपधेतिक. ॥ छाछाब्लीनेव विषविघ रसापरजनाव्यस्थयमेवमन्वते । योगेनजागर्त्तिपिपीथतश्चिवः स्मरन्रमांमुह्यतिनिद्रयाहरिः ॥

विषकण्टकिनी । स्त्री० बन्ध्याकर्कोटक्याम् ॥

विषकन्दः । प० नीलकन्दे ॥

विषक्त. । त्रि० अतिश्लिष्टे । लग्ने ॥ आश्रिते ॥

विषघा । स्त्री० गुडूच्याम् ॥

विषघाती । प० शिरीषवृक्षे ॥ विषनाशके ॥ त्रि० ॥

विषघ्नः । पुं० शिरीषद्रुमे ॥ यवासे ॥ विभीतकी ॥ चम्पकवृक्षे ॥ त्रि० विषनाशके ॥ विषहन्ति । हन० । हस्तेरमनुष्यकर्तृकेघुचेतिठक् ॥ विषघ्नौषधानिमात्स्ये १८२ ऽध्यायेद्रष्टव्यानि ॥

विषघ्नधूपः । पुं० धूपविशेषे ॥ तथा । लक्षु सर्जरसोमेतः सर्षपाएलबालुकैः । सुवर्णातस्करतरोः कुसुमैरर्जुनस्यतु ॥ धूपोवासगृहेहन्तिविषस्थावरजङ्गमम् । नतत्रकीटाः सविषानदर्दुरसरीसृपाः । नकृत्याकर्मणस्तत्रधूपोयत्रप्रदह्यते ॥

विषघ्ना । स्त्री० चिह्नतायाम् ॥ गुडूच्याम् ॥

विषघ्नी । स्त्री० हिलमोचिकायाम् ॥ इन्द्रवारुण्याम् ॥ वनवर्वरिकायाम् ॥ स्वल्पफलायाम् ॥ भूम्यामल्याम् ॥ रक्तपुनर्नवायाम् ॥ हरिद्रायाम् ॥ वृश्चिकाल्याम् ॥ महाकारञ्जे । कुषायाम् ॥

विषक्तौ । त्रि० मिथःश्लिष्टे ॥

विषजिह्व. । पुं० देवताडवृक्षे ॥

विषज्वरः । पु० महिषे ॥ विषजज्वरे ॥

विषडुडुम । न० मृणाले ॥

विषण्णः । त्रि० विषादप्राप्ते ॥ भग्नोत्साहे ॥ दुःखिते ॥ विषीदतिस्म । षद्लृ० । गत्यर्थेतिक्तः । रदा

ष्यामितिनत्वम् ॥
विषलता । स्त्री॰ जडतायाम् ॥
विषतिन्दुः । पुं॰ कुपीलौ ॥ कारस्कररक्षे ॥
विषदम् । न॰ पुष्पकासीसे ॥ त्रि॰विषदातरि ॥ यथा । विषद . श्याव शुष्कास्योविलचोवीक्ष्यतेदिश । स्वेदवेपथुमांसक्षोभीत स्खलति जृम्भते ॥ विषददाति । ददातेः॰। आतङ्कतिकः ॥
विषदष्ट्रा । स्त्री॰ सर्पकङ्काल्याम् ॥
विषदन्तक । पुं॰ सर्पे ॥
विषदर्शनमृत्युक । पुं॰ चकोरपक्षिणि ॥ जीवञ्जीवस्तुगुन्द्रालीविषदर्शनमृत्युकश्चेतिहेमचन्द्रः ॥
विषद्रुमः । पुं॰ कारस्कररक्षे ॥
विषधरः । पुं॰ आशीविषे । सर्पे ॥ विषस्यधरः ॥
विषधर्मा । पुं॰ कुलक्षयायाम् । शूकशिम्ब्याम् ॥
विषधाची । स्त्री॰ विषक्ष्याम् ॥
विषनाशन . । पुं॰ शिरीषवृक्षे ॥ त्रि॰ विषनाशके ॥
विषनाशिनी । स्त्री॰ सर्पकङ्काल्याम् ॥ नाकुल्याम् ॥
विषनुत् । पुं॰ श्योनाकवृक्षे ॥
विषपुष्पः । पुं॰ मदनद्रुमे । मयनफलवृ॰ प्र॰ ॥ न॰ नीलपद्मे विषयुक्तपुष्पे ॥
विषपुष्पक . । पुं॰ मदनवृक्षे ॥ ज्वरे ॥ विषपुष्पभक्षणजन्यरोगे ॥ विषपुष्पैर्जनितः । कालप्रयोजनाद्रोगकृतिकन् ॥
विषभक्षणम् । न॰ विषखादने ॥ चन्द्रमुहूर्त्तमाह । चराचरेन्द्रङ्गुलपूरुषिकाविषध्निभानुकवीन्दुभौमान् । यश्चेहतेऽनेकविधानितावत्सकालकूटानिसहेतिवेत्ता ॥
विषभिषक् । पुं॰ विषवैद्ये ॥
विषम . । पुं॰ अलङ्कारविशेषे ॥ यथा । क्वचिद्यदतिवैधर्म्यान्नश्लेषोघटनामियात् । कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्चयद्भवेत् ॥ गुणक्रियाभ्यां कार्यस्यकारणस्यगुणक्रिये । क्रमेणचविरुद्धेयत्सएषविषमोमत ॥ द्वयोरत्यन्तविलक्षणतया॰यदनुपपद्यमानत्वेनयोगः प्रतीयते॰यच्चकिञ्चिदारभमाणः कर्त्ता॰क्रियायाः फलाप्राप्तिकेवलमभीष्टं तत्फलनलभेत॰यावदप्रार्थितमप्यनर्थं विषयमासादयेत्॰तथासत्यपिकार्यस्यकारणरूपाऽनुकारेयत्तयोर्गुणौक्रियेचपरस्परविरुद्धतांव्रजतः॰ससमविषयैयात्मा॰चतूरूपोविषमः । क्रमेणोदाहरणम् । शिरीषादपिमृद्वङ्गीकेयमायतलोचना । अयक्कचकुकूलाग्निकर्कशोमदनानलः ॥ सिंहिकासुतसन्त्रस्त शश शीतांशुमाश्रितः । जग्रसेसाश्रयतत्रतमन्य . सि

ष्विकासुत ' ॥ सद्य ' करकर्षमपा
घ्यविन रचि रचि यस्यक्षपापलेखा ।
तमालनीलाशरदिन्दु पाण्डुयर्शास्त्रि
लोक्याभरण प्रसूते ॥ आनन्दमम
न्दमिमकुवलयदललोचनेददासित्व
म् । विरहस्त्वयैवजनितस्तापयति
तरांशरीरमे ॥ अथानन्ददानशरीर
तापिनविरुद्धाते० एवम्०विपुलेनसा
गरशयस्यकुक्षिणा ।भुवनानियस्यप
पिरेयुगक्षये । मदविभ्रमासकलया
पपेपुन . सपुरस्त्रियैकातमयैकदशा
॥ कूत्यादावपिविषमत्व यथायोगम
वगतव्यम् ॥ तालविशेषे ॥ यथा ।
चतुर्विध : परिच्छेदस्ताल . कङ्कण
नामक . । पूर्ण खण्ड समश्च
विषमश्चैवकथ्यते ॥ सचतुष्कागणौ
पूर्णौ खण्डे बिन्दुद्वयगुरु . । यगण
स्तुसमेज्ञेयस्तगणोविषमेभवेदिति
॥ अयुग्मराशौ ॥ न०विषमाशने ॥
बहुस्तोकमकालेवभुक्त यद्विषमहि
तत् ॥ पद्यस्यत्रिविधवृत्तान्तर्गतवृत्त
विशेषे ॥ यथा । पद्यं चतुष्पदीतच्च
वृत्त जातिरितिद्विधा । वृत्तमक्षरस
ङ्ख्यात जातिर्मात्राकृताभवेत् ॥
सममर्द्धसम वृत्तविषमञ्चेतितत्त्रि
धा । समसमचतुष्पादभवत्यर्द्धसम
पुन : ॥ आदिस्तृतीयवद्यस्यपादस्तु
र्योद्वितीयवत् । भिन्नचिह्नचतुष्पा
दविषमंपरिकीर्त्तितम् ॥ स्पष्टे ।

उन्नतानते । उन्नीचस्थाने ॥ चि०
असमाने ॥ कोपने ॥ अयुग्मे ॥ वि
गत . सम सदृशोऽस्य । मुविनि
र्दैर्ध्य सुपिसूतिसमाङ्गतिषस्थम् ॥

विषमच्छद । पु० सप्तपर्णे । छतवि
नीतिप्रसिद्धे ॥ विषमाच्छदोयस्य
स : ॥

विषमज्वर । पुं० चतुर्थकादिज्वरवि
शेषे ॥ तस्यनिदानाद्याह । दोषे
भ्योऽहितसम्भूतो०ज्वरोत्सृष्टस्यवा
पुन ।धातुमन्यतमप्राप्यकरोतिवि
षमज्वरम् ॥ सन्ततरससङ्गस्थ स
ततरक्तधातुग . । दोष . क्रुद्धोज्वर
पुंसांसोऽन्येद्यु पिशितास्रित '
॥ मेदोगतस्तृतीयेऽह्नि अस्थिमज्जग
त पुन ' । कुर्याच्चतुर्थक घोरम
न्तकरोगसङ्करम् ॥ च . स्यादनिय
तात्कालाच्छीतोष्णाभ्यांतथैवच । वे
गतश्चापिविषमोज्वर :सविषम ' स्मृ
त ॥ अस्यभेदायथा । सन्तत स
ततोऽन्येद्युस्तृतीयकचतुर्थकावि
ति ॥

विषमनयन । पु० शिवे ॥ विषमो
निमयनानियस्य ॥

विषमस्थ : । पुं० आङ्क्यग्म् । विष
विद्यायाम् ॥

विषमर्दनिका । } स्त्री० गन्धनाकुल्या
विषमर्दनी । }
म् ॥

| विषय . | विषय . |
| --- | --- |

विषमस्थ : । त्रि॰ दरिद्रे ॥ विषमेतिष्ठति । ष्ठा॰ । सुपिस्थइतिकः ॥ उपप्लवदेशस्थे ॥

विषमाक्ष : । पुं॰ शिवे ॥ विषमाण्यक्षीणियस्यस ॥

विषमायुध . । पुं॰ कामे । पञ्चशरे ॥ विषमाण्यायुधानियस्य ॥

विषमाशनम् । न॰ अकालेबहुवाल्पंवाभुक्तन्तुविषमाशनमितिलक्षिते ॥ बहुस्तोकमकालेवाभुक्तं तद्विषमाशनम् ॥

विषमित । त्रि॰ विषमीकृते

विषमीयम् । त्रि॰ विषमदेशभवे ॥ गर्त्तादिभ्यश्छेतिछ ॥

विषमुष्टि । पु॰ महानिम्बे ॥ क्षुपविशेषे । सुमुष्याम् । वषमुष्टिके ॥ विषमुष्णाति । मुष॰ । क्तिच् ॥

विषमृत्यु । पुं॰ चकोरे ॥

विषमेषु । कामे ॥ विषमाइषवोयस्यस ॥

विषमोन्नत । त्रि॰ स्फुटे ॥

विषय : । पुं॰ चक्षुरादिग्राह्ये रूपादौन्द्रियार्थे । गोचरे ॥ न्यायमतेक्षित्यप्तेजोवायूनांविषया यथा । तत्र क्षितिर्गन्धहेतुर्नानारूपवतीमता । षड्विधस्तुरसस्तत्रगन्धोपिद्विविधोमत ॥ स्पर्शस्तस्यास्तुविज्ञेयोह्यनुष्णाशीतपाकजः। नित्यानित्याचसा द्वेधानित्यास्यादणुलक्षणा ॥ अनित्यातुतदन्यास्यात्सैवावयवयोगिनी साचत्रिधाभवेद्देहइन्द्रियविषयस्तथा ॥ योनिजादिर्भवेद्देहइन्द्रियघ्राणलक्षणम् । विषयोद्व्यणुकादिश्चब्रह्माण्डान्तउदाहृत : ॥ वर्णः शुक्लोरसस्पर्शौजलेमधुरशीतलौ । स्नेहस्तत्रद्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥ नित्यतादिप्रथमवत्किन्तुदेहमयोनिजम् । इन्द्रियंरसनंसिन्धुर्हिमादिर्विषयोमत ॥ स्पर्शउष्णस्तेजसस्तुस्याद्रूपशुक्लभास्वरम् । नैमित्तिकद्रवत्वन्तुनित्यतादिचपूर्ववत् ॥ इन्द्रियंनयनंवह्निस्वर्णादिर्विषयोमत ॥ अपाकजोऽनुष्णाशीत . स्पर्शस्तुपवनेमत । तिर्यग्गमनवानेषज्ञेय : स्पर्शादिलिङ्गक. ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमत : ॥ विषिण्वन्तिविषयिणमनुबध्नन्ति स्वेनरूपेणनिरूपणीयकुर्वन्ति॰ इतिविषयाः । षिञ् बन्धने । पचाद्यच् । परिनिवीतिषत्वम् । विषयणमनवा॰विषिणोतिवा । षिञएरच्॰ पुंसीतिघोवा॰ पचाद्यज्वा ॥ विषस्यविषयाणाञ्चदूरमत्यन्तमन्तरम् । उपभुक्तंविषंहन्तिविषया : स्मरणादपीतिविषयानुसन्धानस्यनिन्दितत्वादिन्द्रियार्थेषु

ष्टयादिभिर्विधेयेतिसतांमतम् ॥ यथोक्तम् । दोषैणतीव्रोविषय' कृष्णसर्पविषादपि । विषनिहन्तिभोक्तारद्रष्टारञ्चक्षुषाप्ययम् ॥ अपिच । विषयविषधराणांदोषदष्ट्रोत्कटानांविषाविषमविसर्पव्यक्तदुष्टेक्षितानाम् । विरमविरमचेत : सन्निधानादमीषाम्सुखकणमपिचेत्तो : साहसमासमकार्षी' ' ॥ इति ॥ नियामके यथा । विशब्दोहिविशेषार्थ . सिनोतिर्बन्धउच्यते । विशेषेणसिनोतीतिविषयोऽतोनियामक . ॥ इति ॥ प्रबन्धाद्यनुयोज्ञातस्तत्र ॥ यथाजीवब्रह्मैक्यशुद्धचैतन्य'प्रमेयवेदातानांविषय ॥ कुरुपञ्चालादिदेशे ॥ जनपदे ॥ अध्यन्ते ॥ शुक्रे ॥ आश्रये । आश्रये ॥ भोगसाधने ॥ सर्वमेवहिकार्यमदृष्टाधीनम् यत्कार्यंयदृष्टाधीनेतत्तदुपभोगसाक्षात्परम्परयाजनयत्येव • नहिबीज योजनाथ्याविनाकश्चिदुत्पत्तिरस्ति • तेनपरमाण्वादिब्रह्माण्डान्तसर्वमेवविषयोभवतीत्यर्थ . । इतिसिद्धान्तमुक्तावली ॥

विषयवित् । पुं॰ वात्स्यायनादिमुनिषु । तेचेत्थंकल्पयन्ति • शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमिति तदेतत्कल्पनतेषांविभ्रममात्रम् । विषस्यविषयाणाञ्चेतिविषयानुसन्धानस्यनिन्दितत्वात् ॥

विषयाज्ञानम् । न॰ तन्द्रायाम् ॥

विषयायी । पुं॰ राज्ञि ॥ वैषयिकजने ॥ इन्द्रिये ॥ कामदेवे ॥ विषयासक्तपुरुषे ॥

विषयी । पुं॰ नृपतौ ॥ कामदेवे ॥ वैषयिके ॥ ध्वनौ विषयोऽस्यास्ति । अतइनि ' ॥ देशे ॥ यस्यादित्वासिनिर्वृद्ध्यभाव ' षत्वञ्चनिपात्यते ॥ न॰ इन्द्रिये ॥ त्रि॰ विषयासक्ते ॥ आरोप्यमाणे ॥

विषयोग । पुं॰ तिथिवारयोर्योगविशेषे ॥ यथा । षष्ठीशशाङ्केनवमीचशुक्रेबुधेद्वितीयातपनेचतुर्थी । जीवेष्टमी • सौरिकुजेत्रिसप्तमीयोगाविषाख्या . कुलनाशका स्यु ॥ बुधवारेभद्रारूपेणसिद्धियोगस्तुसप्तमीवादश्योस्मरितार्थो • नतुद्वितीयायामिति । अन्यथात्वस्यस्यादिवाक्यविरोध . स्यादिति ॥

विषरूपा । स्त्री॰ अतिविषायाम् ॥

विषलम् । न॰ विषे ॥

विषलता । स्त्री॰ इन्द्रवारुण्याम् ॥

विषविद्या । स्त्री॰ विषघ्नमन्त्रे ॥

विषवैद्य ' । पुं॰ कथाप्रसङ्गे, गारुडिके । जाङ्गुलिके ॥ विद्यामधीते • वेत्तिवा । तदधीतेतद्वेदेत्यण् । विषस्यवैद्य ' ॥

विषवैरिणी । स्त्री॰ निर्विषायाम् ॥

विषशालूक । पुं॰ पद्मकन्दे ॥

विषशूक । ) पुं॰ भङ्गरोले ॥
विषशृङ्गी । )

विषसूचक । पुं॰ चकोरे ॥

विषहन्त्री । स्त्री॰ भृङ्गरोलि ।

विषहन्त्री । स्त्री॰ अपराजितायाम् ॥ निर्विषायाम् ।

विषहर । पुं॰ गरलनाशकौषधादौ ।

विषहरा । ) स्त्री॰ मनसादेव्याम् ॥
विषहरी )

विषहा । स्त्री॰ देवदालीलतायाम् ॥

विषा । अ॰ बुद्धौ ॥ विपूर्वात् स्यतेर्विंषाविहितस्यात्प्रत्यय . ॥

विषा । स्त्री॰ अतिविषायाम् ॥ विषा सोष्णा कटु तिक्ता पाचनी दीपनी हरेत् । कफपित्तातिसारामविषकासवमिक्रमीन् ॥ बुद्धौ ॥ वेवेष्टि । वि ष लु॰ । विषप्रयोगेवा । इगुपधेति क . ॥

विषाङ्कुर । पुं॰ शल्यास्त्रे ॥

विषाणम् । न॰ पशुशृङ्गे ॥ इभदन्ते ॥ कुष्ठनामौषधे ॥ कोलि ॥ व्यक्ति । असभुवि । आनश् असोरलोप . । उपसर्गप्रादुर्भ्यामितिषत्वम् ॥

विषाणिका । स्त्री॰ मेषशृङ्ग्याम् ॥ सातलायाम् ॥ कर्कटशृङ्ग्याम् । आवर्तक्याम् ॥

विषाणी । पुं॰ हस्तिनि ॥ शृङ्गिणि । ऋषभनामौषधे ॥ शृङ्गाटके ॥

विषाणी । स्त्री॰ क्षीरकाकोल्याम् ॥ अजशृङ्ग्याम् ॥ फलस्याजशृङ्गसदृशत्वात् । विषाणमस्त्यस्याः । अर्श आद्यच् । गौरादि ॥ तिन्तिड्याम् ॥ ऋषभौषधे ॥ वृश्चिकाल्याम् ॥

विषाद । पुं॰ अवसादे । उपतापे । खेदविषयीभूतस्वजनविच्छेदाशङ्कानिमित्ते शोकापरपर्याये चित्तस्याकुलीभावे ॥ इष्टनाशकृतेमनोभङ्गे ॥ तदुक्तम् । विषादश्चेतसोभङ्ग उपायाभावनाशयोरिति विषदनम् । षद्लृ॰ । घञ् । मोहे ॥ विषादात्मकस्तमोगुण ॥

विषादनी । स्त्री॰ पलाशीलतायाम् ।

विषादी । त्रि॰ सततमसन्तुष्टस्वभावस्वे मनोनुशोचनशीले ॥

विषानन । पुं॰ सर्पे ॥

विषान्तक । पुं॰ शिवे ॥ त्रि॰ विषनाशके ।

विषापह । पुं॰ पाटली । मुष्कके ॥

विषापहा । स्त्री॰ इन्द्रवारुण्याम् ॥ निर्विषायाम् ॥ नागदमन्याम् ॥ अर्कमूलायाम् ॥ सर्पकङ्कालिकायाम् ॥

विषाभावा । स्त्री॰ निर्विषायाम् ॥

विषायुध । पुं॰ सर्पे । न॰ विषयुक्तास्त्रे ॥

विषार: । पुं० सर्पे ॥
विषाराति । पुं० कृष्णधत्तूरके ॥
विषारि । पुं० घृतकरञ्जे ॥ महाचञ्चुशाके ॥
विषास्य । पुं० अहौ ॥ त्रि० विषयुक्तमुखे ॥
विषाख्या । स्त्री० भल्लातके ॥
विषीदन् । त्रि० विषादङ्कुर्वति । अतिदुःखिते ॥
विषु । अ० नानार्थे ॥ साम्ये ॥ सर्वतोऽर्थे ॥
विषुण । पुं० विषुवदाख्ये काले । विषुवे ॥ विषुनानारूपस्मिन्निति विष्वञ्चि । तान्यस्य सन्ति पामादिषु० विष्वगित्युत्तरलोपश्चाकृतसन्धिरितिगणसूत्रान्न प्रत्ययउत्तरपदलोपश्च । विषुवदाख्यकालस्थिनानागतानिदिनानि सन्ति० दिनान्तराणां न्यूनाधिकभावस्य तन्मूलकत्वात् ॥
विषुवम् । न० समरात्रिन्दिवेकाले । तुलामेषयोरर्कस्य सङ्क्रमे ॥ विषुसाम्यमस्यास्ति० तुलयामेषेषस्यवेत्यर्थे० वप्रकरणे अन्येभ्योपीत्युक्तेर्वः ॥
विषुवत् । न० विषुवे ॥ प्रथमे कृत्तिकाभागे यदा भास्वांस्तदा शशी । विशाखानां चतुर्थेंऽशे मुनेतिष्ठत्यसंशयम् ॥ विशाखायां यदा सूर्यः सरत्यंशं तृतीयकम । तदा चन्द्रं विजानीयात्कृत्तिकाशिरसि स्थितम् ॥ तदैव विषुवाख्योऽयं कालः पुण्योऽभिधीयते । तदा दानानि देयानि देवेभ्यः प्रयतात्मभिः ॥ इति विष्णुपुराणम् ॥ विषुसाम्यमस्यास्ति० तुलयामेषेषस्यवेत्यर्थे मतुप्प्रत्ययः ॥
विषूचि । स्त्री० नानागतौ ॥ पृथक्फले ॥
विषूचिका । स्त्री० प्रवाहिकायाम् ॥
विषूचीन । त्रि० सर्वतः प्रसृते ॥
विषौषधी । स्त्री० नागदन्त्याम् ॥
विष्क । पुं० विंशतिवर्षीयगजे ॥
विष्कम्भ: । पुं० योगविशेषे ॥ तत्रोत्पन्नस्य फलं यथा । विष्कम्भयोगीयदि जन्मकाले कार्येस्वतन्त्रो मनुजस्तदानीम् । सुहृत्कलत्रात्मजसौख्ययुक्तः गृहस्य निर्माणविधौ समर्थः ॥ विस्तारे ॥ प्रतिबन्धे । अर्गलायाम् । आगल० इति भाषा ॥ योगिनां बन्धभेदे ॥ विष्कभ्नाति । स्कम्भुः सौत्रो रोधनार्थः । कर्मण्यण् । वेः स्कभ्नातेरिति षत्वम् ॥
विष्कम्भक । पुं० पूर्वनटसङ्क्षेपपूर्वक तत्प्रतिपत्त्योक्तृ ष्टनटप्रवेशे ॥ यथा । वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः । विष्कम्भकइति ख्यातो हीनपात्रप्रयोजकइति ॥

विष्कम्भशैल ' । पुं० मेरोर्दाढ्यार्थं स्थि तेषुचतुर्षुपर्वतविशेषेषु ॥ यथा । विष्कम्भशैलाश्चत्वारोमेरो स्थैर्या यवेधसा । लचार्धोन्नतय . क्रमा त्सोर्वापूर्वेणमन्दर ' ॥ ख्यातोहरिद्रा चूर्णाभोयाम्यतोगन्धमादन । प्रती च्याविपुलोनील सुपार्श्व . सौम्य तोऽरुण : ॥ सहस्रयोजनोच्छ्राया स्तेषुकल्पद्रुमा स्थिता । कदम्बज म्बूअश्वत्थन्यग्रोधाश्चोत्तरान्तिका ॥

विष्कम्भि । न० अर्गलायाम् ॥ वि ष्कभ्नाति० क्याधि । स्कम्भु० । चा बध्यकोषिनि ॥

विष्कल । पु० ग्राम्यशूकरे ॥ द्रू० रा० नि० ॥

विष्किर । पुं० खगे । पक्षिणि ॥ पक्षिविशेषाणागणे ॥ यथा । वर्त-काखावविष्किरकपिञ्जलकतित्तिरा' । कुलिङ्गकुक्कुटाद्याश्चविष्किरा स मुदाहृता . ॥ विकीर्य्यभक्षयन्त्येते यस्मात्तस्माद्दिविष्किरा ' ॥ विष्कि रामधुरा ' शीता ' कषाया ' कटु पाकिन : । बल्याब्रृष्यास्त्रिदोषघ्ना' पथ्यास्तेलघव ' स्मृता ' ॥ विकि-रति । क्त० । ब्रुगुपधेतिक ' । वि-ष्किर . शकुनिर्विकिरोवेतिपक्षेसु ट् । परिनिविभ्यइतिषत्वम् ॥

विष्ट : । चि० प्रविष्टे ॥ सवढे ॥ विश ति । विश० । क्त ' ॥

विष्टपम् । न० पुं० विष्टपे । भुवने ॥ विशन्त्यस्मिन्सुकृतिन . । विशप्रवे शने । विटपविष्टपविशिपोलपा इतिविशेरौणादिक . कपन्प्रत्यय । प्रत्ययस्यतुट् । अस्येतिषत्वम् । सूत्रेविष्टपस्थानेपिष्टपइतिपकारादि पाठस्तूज्ज्वलदत्तरीत्योक्तइतिबोध्य म् । नाययुक्त . यत्त्रवधूस्थविष्टपमि त्यादौ० दन्त्योष्ठादिपाठस्यदर्शनात्

विष्टब्ध : । चि० विधृते ॥

विष्टम्भ . । पुं० प्रतिबन्धे ॥ आमयस्य प्रभेदे । आनाहरोगे ॥ तल्लक्षणन्तु । आमसकृद्वानिचितक्रमेणभूयोविब द्धन्निगुणानिलेन । प्रवर्त्तमानन्नयथा स्वमेनविकारमानाहमुदाहरन्ति ॥ आममपक्वमाहाररसारम्० शकृत्पु रीषवाक्रमेणनिचितसञ्चितम्० भू योविगुणानिलेनदुष्टवायुनाविबद्ध व्याससेविषितम्वाययास्वपूर्ववत्नप्र वर्तमानम्० एनंविकारमानाहमा-हु : ॥ उत्तरदेशगतिप्रतिबन्धे ॥ आक्रमे ॥

विष्टम्भी । चि० विष्टम्भरोगजनके ॥ विष्टम्भरोगवति ॥

विष्टर । पु० विटपिनि । महीरुहे ॥ दर्भमुष्टौ ॥ पीठाद्यासने ॥ आदि नाकुशासनादियह . ॥ समध्ययन्थि दर्भासने ॥ विष्टरलक्षणम् यथा । विष्टरस्तु० सार्द्धहितयवामावर्तवलि

विष्टियोग्यकालमाह । शुक्ले ऽष्टमी पौर्णमास्योः पूर्वार्द्धे विष्टिसम्भवः । एकादशीचतुर्थ्योश्चपरार्द्धे विष्टिरीरिता ॥ दशम्याश्चतृतीयाया प रार्द्धे कृष्णपक्षके । चतुर्द्दश्याश्च सप्तम्या 'पूर्वार्द्धेविष्टिरेवहि ॥ विष्टिस्तुसर्पाकृतिरेव । आननेपञ्चदण्डाः स्युर्वक्त्रे स्थानेचतुर्द्दश । मध्ये चाष्टौ विजानीयाद्विष्टिपुच्छेचयस्मृताः ॥ फलन्तु । आननेदिह नाश' स्याहृत्' स्थानेमहद्भयम् । मध्ये चमध्यम विद्याद्विष्टिपुच्छेध्रुवं जयः ॥ प्रकारान्तरस्यापि । मुखे पञ्चगलेत्वेकावक्षस्येकादशस्मृता । नाभौचतस्रः षटकट्यांतिस्रः पुच्छे तुनाडिका ॥ फलन्तु । मुखेकार्य्यध्वस्तिर्भवति गलके भरणाथगलके धननाशनिर्व्वक्ष्यथकटितटेवुद्धिविभ्रम' । कलिर्नाभौदेशे विजयमथपुच्छे चजगदु' शरीरभद्राया पृथगितिफलपूर्वमुनय' ॥ मनुवसुमुनितिथियुगदशशिवगुणसङ्ख्यासुतिथिषुपूर्वाद्याः १४ । ८ । ७ । १५ । ४ । १० । ११ । ० ३ । आयातिविष्टिरेषापृष्ठे शुभदापुरस्त्वशुभदा ॥ पूर्वाद्याः ० पूर्वाद्यादिदिङ्मुखीभवतीत्यर्थः ॥ दिवार्थविपरीद्राशिविष्टि सर्व्ववर्ज्जयेत् । विष्टिपुच्छे विदग्धे ऽपि

शिविकायंशुभावहम् ॥ वि० कर्मकरे ॥

विशतिक्रोशम् । विश०क्तिच ॥ यद्वा । विष्णाति । विषविप्रयोगे । क्तिच् ॥ यद्वा । विष्यतेकर्म्मणि । क्तिन् ॥

विष्टुति । स्त्री० सामगानांस्तुतिप्रकारविशेषे ॥ तस्याविष्टुतेरुद्यतीतिनाम । एवंपरिवर्त्तिनीकुलायिनीतिहेविष्टुती ॥

विष्ठा । स्त्री० उच्चारे । शमले गूथे । विषिपुरीषे ॥ विविधप्रकारेणतिष्ठतिउदरे०चनयावा०पुरुष । ष्ठा० । आ तद्वतिक । उपसर्गादितिष ॥

विष्ठारुहा । स्त्री० स्वर्णकेतक्याम् ॥

विष्णु । पु० नारायणे । देशकालवस्तुपरिच्छेदशून्येव्यापनशीलेपरमात्मनिवासुदेवे ॥ यथाविष्णुपुराणे । ज्यातींषिविष्णुर्भुवनानिविष्णुर्व्वनानिविष्णुर्गिरयोदिशश्चनद्यः समुद्राश्चसएवसर्व्वंयदस्तियन्नास्तिचविप्रवर्य्येति ॥ यथावा तत्रादिनीचेर्मुक्तानसत्त्वान्पापाचमद्दारुमयादिदेवान् । भजन्तियेमाधवनिन्दकास्तेपूर्णं . सदानन्दमयोहिविष्णुरिति ॥ अपिच । वेदेरामायणे चैव पुराणे भारतेतथा । आदावन्ते चमध्ये चविष्णु . सर्व्वत्रगीयतद्वति । अ कारातावेकवचनंवैाध्यम् ॥ द्वादशादित्यानांमध्येभगवतीवासुदेवस्यविभूतौ । आदित्यानामहविष्णुरित्यु

क्ते ॥ वेवेष्टिव्याप्नोतिविश्वम् ।
विष्लृव्याप्तौ । विषि किच्चेति॰नुः
। रथाभ्यामितिपाक्त्वम् ॥ वेषति॰
सिञ्चति॰आप्यायतेविश्वम्॰इति
वा । विष्णाति॰वियुङ्क्तेभक्तान्॰
मायापसारणेनसंसारादितिवा ।
पूर्ववन्नुः ॥ विशति॰भूतेन्द्रियम
नोजीवभावेनसर्वप्राणिनः॰विश
न्तिसर्वभूतान्यत्रेतिवा । यस्माद्वि
ष्टमिदंसर्वंतस्यशक्त्यामहात्मनः ।
तस्मादेवोच्यतेविष्णुर्विशधातोः प्र
वेशनात् ॥ यद्वा । रोदसीव्याप्यकां
न्तिरभ्यधिकास्थितास्येतितथा । व्या
प्ते मेरोदसीपार्थकान्तिरभ्यधिकास्थि
ता । विशेषेणक्रामति । क्रमु॰वि
पूर्वं । अस्मात्णुप्रत्ययोधातुलो
पश्चपृषोदरादित्वात् क्रमणाद्वाप्यहं
पार्थविष्णुरित्यभिधीयते ॥ यद्वा
वामने ॥ वेवेष्टिविभिर्विक्रमैरेवलो
कत्रयमितितथा ॥ बुधे ॥ वसुदेव
ताग्राम् ॥ वह्नौ ॥ धर्मशास्त्रकर्तृमु
निविशेषे ॥

विष्णुकवचम् । न॰ अवयवे ॥

विष्णुकन्दः । पुं॰ मूलविशेषे ॥ वि
ष्णुगुप्ते । जलवासे । वृहत्कन्दे ।
दीर्घपत्रे ॥

विष्णुक्रान्ता । स्त्री॰ अपराजिताया
म् ॥ अपराजितायाअन्याच्चलता
तिरपिविष्णुक्रान्ता । तत्पर्यायाः
। हरिक्रान्ता॰नीलपुष्पा॰अपराजि
ता॰नीलक्रान्ता॰सुनीला॰विक्रान्ता
॰इतिकेचिद्राजनिर्घण्टः ॥

विष्णुगुप्त । पुं॰ कौण्डिन्यमुनौ ॥

विष्णुगुप्तकम् । न॰ चाणक्यमूलके ॥

विष्णुगृहम् । न॰ विष्णुमन्दिरे । ता
म्रपुरे ॥

विष्णुचक्रम् । न॰ सुदर्शनचक्रे ॥ क
रस्थरेखामयचक्रे ॥ विष्णुचक्रंकरे
चिह्नं सर्वेषांचक्रवर्तिनाम् । भव
त्यस्याद्वितीयस्यप्रभावस्त्रिदशैरपि ॥

विष्णुतैलम् । न॰ भैषज्यरत्नावल्या
द्युक्ते लघुवृहद्भेदभिन्ने तैलविशेषे ॥

विष्णुदत्त । पुं॰ परिक्षिन्नृपतौ ॥

विष्णुदैवतम् । ) त्रि॰ विष्णुधिष्ठातृ
विष्णुदैवत्यम् । )
देवताके ॥ श्रवणे ॥

विष्णुदैवत्या । स्त्री॰ एकादश्याम् ॥
द्वादश्याम् ॥ एकादशीद्वादशीचप्रो
क्ताश्रीचक्रपाणिनः ॥

विष्णुधर्मः । पुं॰ शास्त्रविशेषे ॥ वि
द्याविशेषे ॥

विष्णुधर्मोत्तरम् । न॰ संहिताविशे
षे ॥ तत्रप्रश्नकर्ताजनमेजयसुतः
॰वक्तारः शौनकादयः ॥

विष्णुपञ्जरम् । न॰ विष्णुकवचविशे
षे ॥

विष्णुपदम् । न॰ वियति । आकाशे ॥
विष्णोः पदम्॰आस्पदत्वात् ॥

यज्ञे । विष्णोः स्थाने ॥ यथा । अपुण्यपुण्योपरमेक्षीणाशेषार्तिहेतवः । यद्गत्वानशोचन्तितद्विष्णोः परमंपदम् ॥ पुं॰ क्षीरोदे ॥

विष्णुपदी । स्त्री॰ गङ्गायाम ॥ विष्णुपदस्थानंयस्याः सा । गौरादित्वान्ङीष ॥ द्वारिकायाम् ॥ रवेः संक्रान्तिविशेषे । वृषालिघटसिंहेषु विष्णुपद्यर्कसङ्क्रमे ॥

विष्णुपुरम् । न॰ वैकुण्ठे ॥ विष्णोः पूः । ऋक्पूरित्यप्रत्ययः ॥

विष्णुभक्तः । त्रि॰ वैष्णवे । विष्णुभक्तिविशिष्टे ॥ तल्लक्षणं यथा । मत्कर्मकृन्मत्परमोमद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेतिपाण्डव ॥ नचलतिनिजवर्णधर्मतोयः सममतिरात्मसुहृद्विपक्षपक्षे नहरतिनचहन्तिकिञ्चिदुच्चैः सितमनसतमवेहिविष्णुभक्तम् ॥ विमलमतिरमत्सरः प्रशान्तः शुचिचरितोऽखिलसत्त्वमित्रभूतः । प्रियहितवचनोऽस्तमानमायोवसतिसदाहृदितस्यवासुदेवः ॥ सकलमिदमहञ्चवासुदेवः परमपुमान्परमेश्वरः सएकः । इतिमतिरचलाभवत्यनन्तेहृदयगतेव्रजतान्विहायदूरात् ॥ यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् । अपगतमदमानमत्सराणांव्रजभटदूरतरेण

मानवानामिति ॥

विष्णुभक्तिः । स्त्री॰ भगवत्सेवायाम् ॥

विष्णुमाया । स्त्री॰ दुर्गायाम् ॥ चित्शक्तौ ॥ अव्यक्तंव्यक्तरूपेणरजः सत्त्वतमोगुणैः । विभज्ययार्थं कुरुते विष्णुमायेतिसोच्यते ॥ विष्णोरेव माया । एकैवशक्तिः परमेश्वरस्य भिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णुः कोपेषुकाली समरेषुदुर्गा ॥ इत्यनेनविष्णुकालिकयोरेकमूर्तित्वप्रतिपादनात् ॥

विष्णुयशा । पुं॰ ब्रह्मयशःपुत्रे । कल्किपितरि ।

विष्णुरथः । पुं॰ नागान्तके । गरुडे ॥ विष्णोरथइव ॥ यद्वा । रथः पौरुषदेहयोरितिचिकाण्डशेषः । विष्णोरथः पौरुषदेहोवा ॥ विष्णोः स्यन्दने ॥

विष्णुरातः । पुं॰ अभिमन्युसुते । परीक्षिन्नृपतौ ॥ विष्णुनारातः ॥

विष्णुलिङ्गी । स्त्री॰ वर्तिकापक्षिणि ॥

विष्णुवल्लभा । स्त्री॰ तुलस्याम् ॥ लक्ष्म्याम् ॥ अग्निशिखायाम् ॥

विष्णुवाहनम् । न॰ अरुणावरजे । गरुडे ॥ विष्णोर्वाहनम् ॥ गरुडः शालमल्यरुणावरजोविष्णुवाहन इतिहेमचन्द्रः ॥

विष्णुवाह्यः । पुं॰ गरुडे

विष्णुस्थानम् । न॰ तीर्थविशेषे ॥
विष्यन्दन । पुं॰ रोचकरस त्वक्षरे । विष्यदे ॥ यथोक्त सूदशास्त्रे । दधि क्षीरे समेपक्वात्त्वर्द्धभागावशेषिते । अष्टमांशक्षिपेत्तत्रतण्डुलान्निस्तुष ब्लितान् ॥ प्रियालपनसाम्राणाम ब्जामाच समक्षिपेत् । क्षीरादर्द्धं प्र तस्त्वं वशर्वरांस्तथान्यसेत् ॥ सिद्ध क्षिकटुकोपेत 'कर्पूरैयाधिवासि त '। एष विष्यन्दनोनामदेवलोको पिदुर्लभ ॥ यस्मिन्पक्वे हिवलतस्य न्दतेसर्वतोमुखम् । तस्मात सूपवि धानज्ञै विष्यन्दनइतिस्मृत . ॥ वि ष्यन्दोवृंहणोहृद्य पित्तानिलहरो गुरु । कफोवहुतरंस्यादुर्बलस्यशुक्र कारोहिस : ॥ इति ॥
विष्य । त्रि॰ विषवधोचिते ॥ विषेण वध्य : । नौवयोधर्मविषेत्यादिना यत ॥ विषायहितोवा । उगवा दिभ्यायत् ॥
विष्व । त्रि॰ हिंस्रे ॥
विष्वक्पर्णी । स्त्री॰ भूम्यामलक्याम् ॥ विष्वक्षिप्तपर्णान्यस्य ॥
विष्वक्सेन । पुं॰ जनार्द्दने । वि ष्णौ ॥ विषुनानाअञ्चतिगच्छतीति । ऋत्विगादिनाक्विन् । उगितश्चेति ङीप् । विष्वचीसेनायस्य । गकार परत्वादेतिसञ्ज्ञायामगादितिणत्व त्वम् ॥ विष्वगञ्चतिपलायन्तेदैत्य सेनायद्दर्शनादेवेतिवा ॥ वि ष्णोर्निर्माल्यधारिणि ॥ यथाद्यौम नो ॥
विष्वक्सेनप्रिया । स्त्री॰ वाराह्यामोष धौ । आमारवालुं॰ह॰गौ॰दे॰भा॰ । लक्ष्म्याम् ॥ विष्वक्सेनस्यप्रिया ॥
विष्वक्सेना । स्त्री॰ प्रियङ्गौ । फलि न्याम् ॥ विष्वक्सेनेति । विष्व् वञ्चने । अस्यसौत्वादिनाम : ॥
विष्वक् । अ॰ परित : । समन्तादर्थे ॥ नानाविधगतौ ॥ तुल्याशेराव क्वाणि ॥ विषुअञ्चति । अञ्चु॰ । क्विन् ॥
विष्वङ् । पुं॰ पुरुषे । आत्मनि । सर्वज्ञे ॥ विविधंसृष्टञ्चति । अञ्चु ॰ । क्विन् ॥
विष्वाणनम् । न॰ भोजने ॥ शब्दकर णे ॥
विष्वद्र्यङ् । त्रि॰ सर्वतोगच्छति । वि ष्वग्गतिके ॥ विष्वगञ्चति । ऋत्वि गादिनाश्च क्विन् । विष्वग्देवयो रित्यद्र्यादेश । स्त्रियांविष्वद्रीची ॥
विष्वाण । पुं॰ भक्षणे ॥
विसंवाद : । पुं॰ विप्रलम्भे । अङ्गीकृ तासम्पादने ॥ विरुद्ध सम्यग्वदन म् । वदेर्भावेघञ् ॥
विसंवादि । त्रि॰ विलक्षणे ॥
विसम् । न॰ मृणाले । अब्जादीनां मू ले ॥ विसति । विसप्रेरणे । इगु

पधेतिक : ॥
विसकण्ठिका । स्त्री० बलाकायाम् ॥
विसकुसुमम् । न० कमले ॥
विसकण्ट : । पु० सिंहे । मृगेन्द्रे ॥ बृहद्दीहर्षे ॥
विसतन्तु । पु० मृणालसूत्रे
विसनाभि । पुं० पद्मिन्याम् ॥
विसपुष्पम् । न० नलिने ॥ विसप्रपुष्पम ॥
विसप्रसूनम । न० अम्भोरुहे । नलिने । पद्मे ॥ विसप्रसूनम् ॥
विसम्वाद् । पुं० विप्रलम्भे । मिथ्याख्यानेनवञ्चने । अङ्गीकृतासम्प दने ॥
विसर । पुं० सन्दोहे । व्रजे । समूहे । विसरति । सृगतौ । पचाद्यच् । प्रसरे ॥
विसर्ग । पु० दाने ॥ त्यागे ॥ मलनिर्गमे । पायूपस्थयोर्व्यापारे ॥ विभासोरयनभेदे ॥ विसर्जनीये ॥ यथा । शृङ्गवद्वालवत्सस्य बालिकाकुचयुग्मवत् । नेत्रवत्कृष्णसर्पस्य विसर्गोयमितिस्मृत : ॥ विशेषसृष्टौ ॥ यथा । पुरुषानुगृहीतानामेतेषांवासनामय : । विसर्गोयस माहारोबीजाद्बीजचराचरम् ॥ विसर्जनम् । सृज० । घञ् ॥ विविधसृज्यतेक्षिप्यतेवा० घञ् ।
विसर्जनम् । न० दाने ॥ परित्यागे ॥ सम्प्रेषणे ॥ सृजीविंपूर्वाद्भावे ल्युट ॥
विसर्जनीय : । पुं० विसर्गे । द्विविन्दुके ॥
विसर्प : । पुं० रोगविशेषे । सविषामये ॥ अस्यविप्रकृष्ट निदानंस हत्र्यांनिरुक्तिश्चाह । लवणाम्लकटूष्णादिसेवनाद्दोषकोपत : । विसर्पं सप्तधाज्ञेय सर्वत परिसर्पणात् ॥ आदिशब्दात्वरकोक्तह रितशाकशिण्डाकीप्रभृतीनांग्रहणम् ॥ सप्तधात्वविवृणोति । पृथकत्रयस्त्रिभिश्चैकोविसर्पोद्वन्द्वजा- स्त्रय । वातिक पैत्तिकश्चैवक फज सान्निपातिक । चत्वारएतेवीसर्पावक्ष्यन्तेद्वन्द्वजास्त्रय ॥ आग्नेयोवातपित्ताभ्यांग्रन्थ्याख्य कफवातज । यस्तुकर्दमकोघोर: सपित्तकफसम्भव ॥ एषालक्षणादिकग्रन्थान्तरादवधेयम् ॥
विसर्पणम् । न० प्रसरे । तत्तुप्रसादेर्विसर्पणे ॥ सृप्लृगतौ । ल्युट् ॥
विसर्पि । पु० विसर्पे ॥
विसलम् । न० किसलये । पल्लवे ॥
विसार । पुं० मत्स्ये ॥ विशेषेणसरति । सृगतौ । व्याधिमत्स्यबलेषुचेतिवाच्यमितिघञ् ॥

विसारिणी । स्त्री० माषपर्ण्याम् ॥
विसारित । त्रि० प्रसारिते ॥ विपू र्वात्सर्त्तेः क्तः ॥
विसारी । त्रि० प्रसरणशीले । प्रसा रिणि ॥ विसरणम् । सृ० । घञ् विसारोऽस्यास्ति । अतइनिः ॥ अ थोच्चा विसरतिवा । बहुलमाभी क्ष्ण्ये० इतिणिनिः ॥
विसिनी । स्त्री० पद्मिन्याम् ॥ मृ णाले ॥ बिसमस्त्यस्याः । पुष्करा दिभ्यइतिइनि ॥
विसूचिका । स्त्री० अजीर्णहेतुकेरो गविशेषे । विसूच्याम् ॥
विसूची । स्त्री० विसूचिकायाम् ॥ अस्यालक्षणन्तु । मूर्च्छातिसारौवम थुः पिपासाशूलभ्रमोद्वेष्टनजृम्भदा- हाः वैवर्ण्यकम्पौहृदयेरुजश्चभव- न्तितस्यांशिरसश्चभेदः ॥ अस्याउ पद्रवायथा । निद्रानाशोऽरति कम्पोमूत्राघातोविसञ्ज्ञता । अमी उपद्रवाघोरा विसूच्याः पञ्चदा रुणाइति ॥ निरुक्तिर्यथाहुः । सू चीभिरिवगात्राणितुदन्सन्तिष्ठतेऽ निलः । यत्राजीर्णेनसावैद्यैर्विसू चीतिनिगद्यते ॥ नतांपरिमिता- हारालभन्ते विदितागमाः । मू ढास्तामजितात्मानोलभन्तेऽशन लोलुपाः ॥ अस्याश्चिकित्सायथा । लशुनजीरकसैन्धवगन्धकत्रिकटुरा मठचूर्णमिदंसमम् । सपदिनिम्बु रसेनविसूचिकाहरतिभोरतिभोग विचक्षणइतिलोलिम्बराजः ॥
विसूरितम् । न० अनुतापे ॥ सूर० क्त० घ० ॥
विसृत । त्रि० विस्तृते ॥ विसर तिस्म । सृ० । गत्यर्थेतिक्तः ॥
विसृत्वरः । त्रि० विसृते ॥
विसृत्वरः । त्रि० प्रसारिणि प्रसरण शीले ॥ विसरतितच्छील । सृ० । इण्नशजिसर्तिभ्यःक्वरप् । हस्वस्येति तुक् ॥
विसृमत्वम् । न० विस्तृते ॥
विसृमर । त्रि० विसत्वरे ॥ वि सरतितच्छील । सृ० । घस्मरः कमरच् ॥
विसृष्ट । त्रि० निक्षिप्ते । उत्पादिते ॥ विपूर्वात्सृजेःक्तः ॥ मुक्ते- ॥ दत्ते ॥ विशेषेणसृष्टः ॥
विस । पुं० हेम्नोर्थे । सुवर्णे । हेम्न षोडशसुमासेषु । अशीतिर क्तिकापरिमिते । स्वर्णे ॥ विसति । विसउत्सर्गे । क्तः । आगमशास्त्र स्यानित्यत्वान्नेट् ॥
विस्तर । पुं० शब्दस्यविस्तारे । वा क्प्रपञ्चे ॥ विस्तारे ॥ प्रणये ॥ विस्तरणम् । स्तृञ् आच्छादने । ऋदोरप् ॥ पीठे ॥ समूहे ॥
विस्तारः । पुं० तिर्यगायतौ ।

विस्तृतौ । प्रसृतावयवेसमूहे ॥ विटपे ॥ शाखापल्लवादिसमुच्चये ॥ स्कन्धे ॥ विस्तीर्णतायाम् । विग्रहे । व्याप्तौ ॥ विस्तरणम् । स्तृञ्० । प्रथनेवावशब्दइतिघञ् ॥ विभूतौ ॥ यथा । विस्तारः सर्वभूतस्य विष्णोः सर्वमिदंजगत् । द्रष्टव्य मात्मवत्तस्मादभेदेनविचक्षणै रिति । सर्वभूतस्यसर्वात्मकस्य ॥

विस्तारित . । त्रि० विस्तृते ॥ प्राप्तविस्तारे ॥

विस्तीर्ण : । त्रि० विपुले । विशाले ॥ विस्तीर्यतेस्म । स्तृञ्० । क्तः । रदाभ्यामितिनः ॥

विस्तीर्णपर्ण : । पुं० न०मानकद्रुमे । महापर्णे ॥

विस्तृत । त्रि० विस्ते । तते । विस्तारिते । लब्धविस्तारे ॥ विस्तर्यते स्म । स्तृञ्० । गत्यर्थेतिक्तः ॥

विस्तृति : । स्त्री० विस्तारे । विस्तरणम् । क्तिन् ॥

विस्पष्ट . । त्रि० सुव्यक्ते । सुस्पष्टे ॥ न०प्रकटोदिते । प्रकटोक्ते ॥

विस्फार . । पुं० धनुषः स्वाने । ये धानाधनुर्गुणशब्दे । विस्फुरणम् । स्फुरस्फुरणे । घञ् । स्फुरतिस्फुलत्योर्घञीत्यात्वम् ॥ स्फारस्फुरणे वा ॥

विस्फारित : । त्रि० निर्घोषिते ॥ विघर्षिते ॥ प्रकाशिते ॥ विपूर्वात्स्फ्यन्तस्फुरतेः क्तः ॥

विस्फुरणम् । न० सर्वतप्रसरणे ॥

विस्फुरित : । त्रि० स्फूर्त्तिविशिष्टे ॥

विस्फुलिङ्ग : । पुं० विषप्रभेदे ॥ अग्निकणे ॥

विस्फूर्ज्थु । पुं० उद्रेके ॥ द्वितीयुच् ॥

विस्फूर्जित . । त्रि० सञ्जृम्भिते ॥

विस्फोट . । पुं० विरुद्धस्फोटके । पिटके । पिटकायाम् । पिडिया०फोड़ा०इ०भा० ॥ विस्फोटति । स्फुटिर्विशरणे । अच् ॥ करणेघञ् वा ॥

विस्फोटक . । पुं० व्रणविशेषे । विस्फोटे ॥ विस्फोटति । स्फुटिर्० ण्वुल् ॥

विस्मय : । पुं० अद्भुते । आश्चर्ये । अलौकिकचमत्कारविशेषे ॥ यथा । विविधेषुपदार्थेषुलोकसीमातिवर्त्तिषु । विस्फारश्चेतसोयस्तुसविस्मय उदाहृत ॥ गर्वे । दर्पे ॥ विस्मयनम् । ष्मिङ्ईषद्धसने । एरच् ॥ सन्देहे ॥

विस्मयान्वित । त्रि० विलक्षे ॥ विस्मयेनआश्चर्येणान्वितः ॥

विस्मयाविष्ट । त्रि० अद्भुतदर्शनजन्याश्चर्येणव्याप्ते । विस्मयेनआश्चर्यबुद्ध्याआविष्टोव्याप्तः ॥

विस्मरणम् । न० विस्मृतौ ॥ स्मृआध्याने । ल्युट् ॥

विस्मापन . पुं० कुहके । इन्द्रजाले ॥ गन्धर्व्वनगरे ॥ स्मरे । कामदेवे ॥

विस्मित । त्रि० विस्मयमाश्चर्य्यङ्गते । विस्मयान्विते ॥ ष्मिङ् । क्त ॥

विस्मृत । त्रि० अपगते । स्मरणाविषये ॥ विस्मर्य्यतेस्म । स्मृ० । क्तः ॥

विस्मृति । स्त्री० विस्मरणे ॥ विस्मरणम् । स्मृ० । क्तिन् ॥

विस्मेर । त्रि० विस्मयशीले ॥ विस्मयतेतच्छीलः । नमिकम्पीत्यादिना र. ॥

विस्रम् । न० आमगन्धिनि ॥

विस्रंसनम् । न० अवस्रंसने । अधः पतने ॥

विस्रंसमान: । त्रि० ध्वंसमाने ॥

विस्रगन्ध । पुं० हरिताले ॥ त्रि० दुर्गन्धिनि ॥ विस्रगन्धोस्य ॥

विस्रगन्धा । स्त्री० हवुषायाम् ॥

विस्रगन्धि: । पुं० हरिताले ॥

विस्रब्ध: । त्रि० अनुद्धटे ॥ गाढे ॥ विश्वस्ते ॥

विस्रम्भ: । पुं० केलिकलहे ॥ विश्वासे ॥ प्रणये ॥ प्रणय: परिचय: शृङ्गारप्रार्थनावेत्यमरमाला । क्रीडापारतन्त्र्यमितिकश्चित् ॥ वधे ॥ परिचये ॥ विप्रलब्धे ॥ विस्रम्भणम् । विस्रभ्यतेऽनेनवा । स्रम्भु विश्वासे । घञ् ॥

विस्रम्भित: । त्रि० विश्वासप्राप्ते ॥

विस्रम्भी । त्रि० प्रणयिनि ॥ विश्वासिनि ॥ अस्त्यर्थेइनि ॥

विस्रसा । स्त्री० जरायाम् । विस्रस्यतेऽनया । स्रंसु अध: पतने । भिदाद्यङ् ॥

विस्रस्त । त्रि० विच्युते ॥

विस्रा । स्त्री० हवुषायाम् ॥

विहग । त्रि० पक्षिणि ॥ अशुगेवाणे ॥ वहे ॥ विहायसा० विहायसिवा गच्छति । गम्लृ० । अन्यत्रापिदृश्यतइतिडः । डेचविहायसोविहादेशश्चेति वक्तव्य: ॥

विहङ्ग । त्रि० पक्षिणि ॥ आशुगे । वाणे ॥ पुं० चन्द्रे ॥ सूर्य्ये ॥ मेघे ॥ विहायसा० विहायसिवा गच्छति । विहायसोविहस्यगमे . सुपीतिखच् । खच्चडिद्वा ॥

विहङ्गम: । पुं० विहङ्गे । खगे ॥ विहायसागच्छति । गम्लृ० । विहायसोविहच०गमे सुपीतिखच् ॥

विहङ्गमा । स्त्री० भारयष्ट्याम् ॥

विहङ्गराज . । पुं० गरुडे ॥ विहङ्गानांराजा । टच् ॥

विहङ्गिका । स्त्री० भारयष्ट्याम् । वहंगी० हृ० भा० ॥ विहङ्गप्रतिकृति:

। हवेप्रतिकृताविति कन् ॥ विहा यसागच्छतिवा । गमश्चेतिखच् । विहायसोविहच । खचवाडिदाच्य । यावादित्वात् कन् । टाप् ॥

विहत । त्रि॰ विनष्टे । विशेषेणहत ॥

विहननम् । न॰ विघ्ने ॥ हिंसायाम् ॥ तूलपिञ्जले । तूलधनुषि ॥

विहर : । पुं॰ वियोगे ॥

विहरणम् । न॰ विहारे ॥ विपूर्वाद्धृञो ल्युट् ॥

विहरन् । त्रि॰ क्रीडति ॥

विहर्तुम् । अ॰ क्रीडितुमित्यर्थे ॥

विहसितम् । न॰ महत्त्वाल्पत्त्वहीने॰ मध्यहास्ये ॥ यथाहु : । आकुञ्चित कपोलाच सस्वनं निस्वनं तथा । प्रस्तावोत्थसानुरागमाहुर्विहसितंबुधा : ॥ हसितहसने । भावेक्त : ॥

विहस्त : । त्रि॰ पण्डिते ॥ विह्वले । व्याकुले ॥ करशून्ये ॥ विगतोविशिष्टोवाहस्तोऽस्य ॥

विहा । अ॰ स्वर्गे । विशेषेणजहाति । ओहाक्त्यागे । विपाविहेत्याप्रत्यय ॥ न्यायेनोपार्जितस्यधनादे : सत्पात्रे विनियोगे ॥

विहापितम् । न॰ दाने ॥ विहापनम् । ओहाक॰ । ण्यन्तात् क्त : ॥

विहाया : । पुं॰ खगे । शकुने ॥ पुं॰ न॰ गगने । आकाशे ॥ विशेषेणहाययति॰ गमयति॰ विमानादीन् । हयगतौ । ण्यन्तादसुन् ॥ विजहातिभुववा । ओहाक्॰ । वहिहाधाञ्भ्यश्छन्दसीत्यसुन् । णिद्वित्यस्यानुवृत्तेर्युक् । क्वचिच्छान्दसाअपि भाषायांप्रयुज्यन्ते तेनलोकेऽपि ॥

विहायसम् । न॰ व्योम्नि ॥

विहायसा । अ॰ नभसि ॥

विहार : । पुं॰ क्रीडार्थंपद्भ्यांसञ्चरणे । परिक्रमे । भ्रमणे ॥ स्कन्धे । लीलायाम् ॥ सुगतालये ॥ विहरणम् । हृञ्॰ । घञ् ॥ यानादौ ॥ विहरन्त्यनेन । करणे घञ् ॥ क्रीडास्थाने ॥ विहरन्त्यत्र । अधिकरणे घञ् ॥ बिन्दुरेखयो ॥ त्रि॰ हारवर्जिते ॥ विगतोहारोऽस्य ॥

विहारगृहम् । क्रीडागारे ॥

विहारवित् । पुं॰ श्रीकृष्णे । त्रि॰ विहारज्ञे ॥

विहारवेदिका । स्त्री॰ वितर्द्धाम् ॥

विहारस्थानम् । न॰ क्रीडाप्रदेशे ॥

विहारी । त्रि॰ परिक्रमिणि । विहारकर्त्तरि ॥ मत्वर्थीयइनि ॥

विहित : । त्रि॰ सृष्टे । निर्मिते ॥ विधेये । विध्यागतोचितकृत्ये ॥ विधीयतेस्म । डुधाञ्॰ । क्त । दधातेर्हि : ॥ अभिहिते । विपूर्वस्यदधाते 'क्रियासामान्यवाचित्वात्

विहिति । स्त्री॰ विधाने ॥

विहीन : । त्रि॰ विगते । विशेषेणहो

मे । त्यक्ते । वर्जिते । वोधविही नेश्रोतरिवक्तु,र्वाक्य'प्रयातिवैफल्यम् । नयनविहीनेभर्त्त'रिलावण्यमिव खञ्जनाक्षीणाम् ॥

विहृतम् । न० स्त्रीणांस्वाभाविकदशा लङ्कारान्तर्गताल'कारविशेषे ॥ यथा । लीलाबिलासोविच्छित्तिर्विब्बोकः किलकिञ्चितम् । मोट्टायितकुट्टमित ललित विहृत'तथा ॥ विभ्रमश्चे त्यलङ्कारा' ,स्त्रीणांस्वाभाविकाद शेतिहेमचन्द्र . ॥ तल्लक्षणं'यथा । वक्तव्याभाषणव्याजाद्विहृतदर्शितेङ्गि तम्॥ विहरणम्। हृञ्०।भावेक्त' ॥

विहृति :। स्त्री० सञ्चारे ॥ विहरणम् । हृञ्० । क्तिन् ॥ विशेषेणहरणे ॥

विहेठ . । पुं० विहेठने॥

विहेठनम् । न० हिंसायाम् ॥ मर्द्दने ॥ विडम्बने । हेठविबाधायाम् । ल्युट् ॥ दुःखे ॥

विहेडनम् । न० विहेठनार्थे ॥ हेडृ० । ल्युट् ॥

विह्वल :। त्रि० भीत्याद्यभिभूते । स्वा ङ्गान्यवधारयितुमशक्ते । विक्लवे ॥ विह्वलति । ह्वलचलने । अच् । मू र्च्छि'ते । विलीने ॥ विवशे ॥

वी :। पु० गमने । वेति । वीगत्या दौ । क्विप् ॥

वीक्ष :। पुं० वायौ । वाते । पक्षिणि । खगे ॥ अजति । अज० । अजिपु

धूनीभ्योदीर्घश्चेतिक्सन् ॥ मनसि ॥

वीकाश :। पुं० रहसि । विजने ॥ विकाशे । प्रकाशे ॥ विकाशनम्० अभिव्यक्तौ । काशृदीप्तौ । भावे०घ ञ्ञे व्यधिकरणे वाघञ् । इकः काशइतिदीर्घः ॥ यद्वा । विकश नमवधा । कशशब्दे । पूर्ववत्०घ ञ्दीर्घौ ॥

वीक्षणम् । न० विलोकने ॥ विशिष्ट मीक्षणम् ॥

वीक्षणीय :। त्रि० गुरुमुखादवगत्य विचारणीये ॥ वीक्षितु'योग्ये ॥ ईक्ष० । अनीयर् ॥

वीक्षापन्न :। त्रि० विस्मयान्विते ॥ वी क्षणम्०वीक्षातामापन्न : ॥

वीक्षित . । त्रि० अवलोकिते । दृष्टे ॥ विशेषणईक्षित : ॥

वीक्ष्य :। पुं० लासके ॥ वाजिनि । घोटके । न०विस्मये । दृश्ये ॥ त्रि० ईक्षणीये ॥ *

वीङ्खा । स्त्री० शूकशिम्बाम् ॥ ग तिभेदे ॥ नर्त्तने ॥ अश्वगतिभेदे ॥ सर्व्वौ ॥

वीचि :। पुं० स्त्री०स्वल्पतरङ्गे । ज ल्पीम् । अवकाशे । वीच०ङ०मा० ॥ सुखे ॥ वयति०जयतेवा ॥ वेञ् तन्तुसन्ताने । वेञोडिच्च ति०इंचि . ॥ अल्पे ॥ आल्याम् ॥

वीचिमाली । पुं० समुद्रे ॥ वीचीनां

माला॰सायस्तिषश्च।श्रीश्चादिस्वा
दिनि:॥

वीची। स्त्री॰ वीचिशब्दार्थे॥

वीचीतरङ्ग:। पुं॰ न्यायविशेषे॥ स
तुश्रोत्रेशब्दस्योत्पत्तिकारणरूप:।
यथा। वीचीतरङ्गन्यायेनतदुत्पत्ति
स्तुकीर्त्तिता। कदम्बगोलकन्याया
दुत्पत्ति. कस्यचिन्मते॥ भा॰
प॰।। ननुमृदङ्गाद्यवच्छेदेनोत्पन्ने
शब्दे॰श्रोत्रेकथमुत्पत्तिरित्यतआह
। वीचीति। आद्यशब्दस्य॰वहिर्दश
दिगवच्छिन्नोऽन्य:शब्दस्तेनैवशब्दे
नजन्यते॰तेनचापरस्तद्व्यापकएवंक्र
मेणश्रोत्रेोत्पन्नोगृह्यतइति। कदम्ब
इति। आद्यशब्दाद्दशदिक्षु दशश
ब्दाउत्पद्यन्ते॰तैस्तान्येदशशब्दाउत्प
द्यन्तइतिभाव:। अस्मिन्कल्पेगौ
रवादुक्त कस्यचिन्मतइति॥

वीजम्। न॰ यद्गुरवारणे॥ हेतौ।
तत्त्वे॥ आधाने॥ शुक्रे। रेतसि
। सर्वभूतानाम्प्ररोहकारणंवीजं त
न्मायोपाधिकचैतन्यभगवद्विभूति:
॥ विशेषिणजायतेऽनेन। उपसर्गे
चसञ्ज्ञायामितिड। अन्येषामपी
तिदीर्घ.॥ यद्वा। विशेषेण॰ईजते।
ईजगतिकुत्सनयो:। अच्। वीज्य
तेवा। घञ्। कुत्वन्तुनभवति॰च
जोरित्यत्रनिष्ठायामनिटइतिकथित
कत्वात्पूरितत्वात्। अस्यचनिष्ठा
यांसेट्त्वात्॥ यद्वा। वीजयति॰
वीज्यतेऽनेनवा। वीजव्यजने। प
च॰घञ्वा॥ मज्जनि॥ गणित
विशेषे॰अव्यक्तगणिते॥ मज्जे॥

वीजक:। पुं॰ मातुलुङ्गे॥ असनवृ
क्षे। पीतसारके। विजयसार॰इ॰
भा॰॥ वीजक: कुष्ठवीसर्पश्वित्र
मेहगुदक्रमीन्। हन्तिश्लेष्मास्रपि
त्तञ्चत्वच्य:केश्योरसायन.॥

वीजकृत्। न॰ वाजीकरणे॥

वीजकोश:। पुं॰ वीजकोषे॥

वीजकोशी। स्त्री॰ शिम्बायाम्॥

वीजकोष:। पुं॰ वराटके। कर्णिका
याम्॥ वीजस्यकोष: पात्रमाधार
इतियावत्॥ वीजाभिधाने॥

वीजगर्भ:। पुं॰ पटोले॥

वीजगुप्ति:। स्त्री॰ शिम्ब्याम्॥

वीजधर्म्मिणी। स्त्री॰ सर्वेषांमहदादी
नांविकाराणांवीजत्वेनावस्थितायां॰
प्रकृतौ॥

वीजधान्यम्। न॰ धान्याके॥

वीजनम्। व्यजने॥ चीकि। चक्रवा
के॥ चकोरे। वस्तुनि॥ विधूनने
॥ वीजव्यजने। चुरादि' 'ल्युट्॥

वीजपादप.। पुं॰ भल्लातके॥

वीजपुष्पम्। न॰ मरुवके॥ मदनद्रौ॰

वीजपूर.। पुं॰ फलपूरे। मातुलु
ङ्गे। टावालेबु॰इ॰वगी॰दे॰भा॰वङ्ग
भाषाच॥ गुणास्तु। वीजपूरफलं

स्वादुरसेऽम्ल दीपनंलघु। रक्तपित्तह रकण्ठजिह्वाहृदयशोधनम्॥ श्वासकासारुचिहरंहृद्यंतृष्णाहरंस्मृतम्॥ सैन्धवाद्र्ककसयुक्तं बीजपूरकमस्तिय.। त्राकिमोभिरिवाक्रष्ट विशल्यंदूरमोद्गनम्॥ केशरंमातुलुङ्गस्यलघुशेष्मानिलापहम्। रोचनदीपनहृद्यंगुल्मशूलाशंसांजयेतदूति॥ क्वाथिस्यमूलग्राह्यमिल्वादु:॥ बीजेनपूर्यते। पूरीत्र्याप्याय बे। इगुपधेतिक'। कर्मणिघञ्वा॥ देशभाषयाविजोरा०इतिप्रसिद्धोयम्॥

बीजपूर्णं.।पु॰ बीजपूरे॥ कोलके॥

बीजपेशिका। स्त्री॰ त्र्प्राण्डकोषे॥

बीजप्रद।पुं॰ पितरि। गर्भाधानस्यकर्त्तरि॥

बीजफलक:। पुं॰ बीजपूरे॥

बीजसू'। स्त्री॰ क्षितौ।

बीजमातृका। स्त्री॰ पद्मबीजे। पद्माचे॥

बीजरत्न:। पुं॰ माषकलाये॥

बीजरुह:। पुं॰ शाल्यादौ॥ यथा। कुरण्टाद्याश्चबीजामूलजास्तूत्पलादय'। पर्वयोनयइक्षुवाद्याःस्कन्धजा:॥ शल्लकीमुखा:॥ शाल्यादयोबीजरुहा: सम्मूर्च्छजास्तृणादय.। स्युर्वनस्पतिकायस्यषड्भेदामूलजातय:॥ है

मचन्द्र'॥

बीजरेचनम्'। न॰ जयपाले॥

बीजवपनम्। न॰ क्षेत्रेबीजक्षेपणे॥

बीजवृक्ष.। पुं॰ असनवृक्षे॥

बीजसंग्रह:। पुं॰ बीजसङ्ग्रहे॥

बीजसन्तान:। पुं॰ वपने। क्षेत्रे बीजानांविकिरणे॥ गर्भाधाने॥

बीजसू। स्त्री॰ भूमौ। पृथ्व्याम्॥

बीजाकृतम्। न॰ उप्तकृष्टे। सबीजकृष्टक्षेत्रे॥ बीजेनसहकृतकृष्टम्। कृञोद्वितीयेतिडाच्॥

बीजाम्लम्। न॰ वृक्षाम्ले।

बीजी। पुं॰ पितरि॥ त्रि॰ बीजविशिष्टे॥

बीजोदकम्। न॰ करकायाम्॥ बीजाकारंउदकम्। शाकपार्थिवादि॥

बीजोप्तिचक्रम्'। न॰ बीजवपनजन्यशुभाशुभज्ञानार्थंसर्पाकारचक्रे॥

बीज्य:। त्रि॰ कुलसम्भवे॥ बीज्यते। बीजव्यजनेऽदन्त'। त्र्प्रचोयत्॥ यद्वा। बीजमस्यास्ति। त्र्प्रन्येभ्योपिदृश्यतइतियप्। बीजेभव: साधुर्वा॥

बीटिका। स्त्री॰ सुसज्जीकृतताम्बूले॥ इतिकेचित्॥

बीणा। स्त्री॰ तडिति। विद्युति'। बल्लक्याम्। विपञ्च्याम्॥ वेतिगायतेस्वरोस्याम्। बीणत्यादिषु। राज्ञासाकाश्यूणाबीणाइति

नमस्त्वयोगत्वं गुणाभावश्चनिपातितः ॥ अस्या : प्रभेदायथा । विश्वावसोस्तुबृहतीतुम्बुरोस्तुकलावती । महतीनारदस्यस्यात्सरस्वत्यास्तुकच्छपी ॥ अपिच । विपञ्चीवीणानाल्वीसरस्वत्यास्तुकच्छपी । महतीनारदस्यस्यात्गणानाञ्चप्रभावती ॥ विश्वावसोस्तुबृहतीतुम्बुरोस्तुकलावती । चण्डालानाञ्चकण्डोलवीणाचाण्डालिकापिच ॥ तस्याचङ्गानांनामानियथा । काय : कोलम्बकस्तस्याउपनाहोनिबन्धनम् । दण्ड पुन प्रवाल : स्यात्ककुभस्तुप्रसेवक : ॥ मूलेवंशशलाकास्यात्कलिकाकूणिकापिचेति ॥ रत्ना० ऽ । ऽ० ॥

वीणादण्ड । पुं० वीणास्थितालाबूपरिकाष्ठे ॥ प्रवाले ॥ वीणाया दण्ड : ॥

वीणानुबन्ध : । पुं० उपनाहे ॥

वीणाल । त्रि० वीणावति ॥ पुं० नारदे ॥ वीणाअस्तियस्य । सिध्मादित्वाल्लच ॥

वीणावाद : । त्रि० वैणिके ॥ वीणावादति । वदेरण्यन्तात् कर्मण्यण् ॥

वीणावादक : । पुं० वैणिके ।

वीणास्य : । पुं० नारदे ॥ वीणाआस्यमिवप्रधानंयस्य ॥

वीतम् । न० असारगजे । युद्धाक्षमेहस्तिनि ॥ असारतुरगे । युद्धाक्षमेघोटके ॥ अङ्कुशकर्म्मणि । करिणः । पादाघातनखाङ्कुशवारके ॥ पादकर्मयतप्रोक्तं यातमङ्कुशवारणम् । उभयंवीतमाख्यातमितिहलायुध : ॥ वेति० अजतिम्मा० युद्धादिकर्मण्य वीगत्यादौ० अजगतौवा । गत्यर्थेतिक्त : ॥ अनुमानप्रभेदे । अन्वयमुखेनप्रवर्त्तमानेविधायकेऽनुमानविशेषे ॥ वीतानुमानञ्चद्वेधा । पूर्ववत्० सामान्यतोदृष्टञ्च । दृष्टस्वलक्षणसामान्यविषययत्तत्पूर्ववत् । पूर्वं प्रसिद्धम्० दृष्टस्वलक्षणसामान्यमितियावत् । तद्यस्यविषयत्वं नास्त्यनुमानज्ञानस्येतिपूर्ववत् । यथा धूमाद्वह्निस्त्वसामान्यविशेषपर्वतेऽनुमीयते । तस्यवह्नित्वसामान्यस्यस्वलक्षणंवह्निविशेषोदृष्टोरसवत्याम् । अपरञ्चवीतसामान्यतोदृष्टम्० अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम्० अत्ररूपादिज्ञानानांक्रियात्वेनकरणत्वमनुमीयतेयद्यपिचकरणत्वसामान्यस्यच्छिदादौवास्यादिस्वलक्षणमुपलब्धम्० तथापियज्जातीयरूपादिज्ञानेकरणमनुमीयतेतज्जातीयस्यकरणस्यनदृष्ट स्वलक्षणप्रत्यक्षेण

इन्द्रियजातीयं हितत्करणम् । नचेन्द्रियत्वस्य सामान्यस्य लक्षणमिन्द्रियविशेष । प्रत्यक्षगोचरो वा गृहणाम् । यथा वह्नित्वस्य सामान्यस्य लक्षण वह्निः सोयपूर्ववत. सामान्यतोदृष्टस्य सत्यपि वीतत्वे नतुल्यत्वे विशेष । अत्रपदृष्ट दर्शनम् । सामान्यस्य सार्वविभक्तिकस्तसिल् । अदृष्टस्वलक्षणसामान्यस्य । दर्शनमनुमानमित्यर्थं . ॥ त्रि० प्रान्ते ॥ निवृत्ते ॥ आच्छादिते ॥ विरहिते ॥ विशेषणकृत . ॥

वीतस' । पुं० मृगाणापक्षिणामपि बन्धनोपाये ॥ मृगाणापक्षिणाश्चवि श्वासहेतोः प्रावरणे ॥ वितन्वते । तसिअलङ्कारे । घञ् । उपसर्गस्येतिदीर्घ . ॥

वीतदम्भ' । त्रि० त्यक्तदम्भे ॥

वीतन . । पुं० कण्ठपार्श्वद्वये ॥ यथा । कण्ठस्तुकन्धरामध्यं कण्ठपार्श्वौतु वीतनौ । इतिहेमचन्द्रः ॥

वीतभय । त्रि० निर्भये ॥ वीतविगतभयंयस्य ॥

वीतमन्यु . । त्रि० विगतरोषे ॥

वीतराग. । पुं० बुद्धे । त्रि० निस्पृहे । रागशून्ये । विशेषकृत : गत० राग : प्रीतिर्मात्सर्यं वा० यस्य० यस्माद्वा ॥

वीतरागभयक्रोध । त्रि० मुनिसत्त्वे ॥ रागभयक्रोधाः० वीता : विवेकेन विगतायस्मात् ॥

वीतरागी । त्रि० इष्टामुत्रार्थफलमोगरहिते ॥

वीतशोक. । पुं० अशोकद्रुमे ॥ त्रि० आत्मज्ञे ॥ आत्मज्ञएववीतशोको भवतिनानात्मज्ञः ॥ शोकहीने ॥ वीत : विशेषेणगत : शोकोयस्य यस्माद्वा ॥

वीतस्पृह : । विरक्ते ॥

वीति . । पुं० अश्वे ॥ स्त्री० गतौ दीप्तौ ॥ प्रजने ॥ अशने ॥ धावने ॥ वेति । वीगत्यादौ । क्तिच् । भावेस्त्रियांक्तिनवा ॥ निवृत्तौ ॥

वीतिहोत्र : । पुं० धनञ्जये । अग्नौ ॥ वीयते । वीगतिप्रजनकान्त्यसनखादनेषु । कर्मणिक्तिन् । वीतिर्भक्ष्यं पुरोडाशादि० हूयतेऽस्मिन् । हुदानादनयोः । हुयामाश्रुभसिभ्यस्त्रन् । इतित्रन् ॥ वीतिरश्वो होत्रवहनमस्येतिवा ॥ अर्के । सूर्ये ॥

वीन : । त्रि० विशेषेणदत्ते ॥ विदोयतेस्म । डुदाञ् । क्तः । अव उपसर्गात्तकृतितादेश : द्स्तीति दीर्घ : ॥

वीथि : । स्त्री० वीथ्याम् । अश्वस्थारस्थाने ॥ ताण्डव । यथा । सि

रे ॥ मार्गे ॥ धान्यादिप्राप्तौ ॥ वि विधेःवधोहननगमनवाऽत्रानेनवा । प्रादिभ्योधातुजस्येतिसमासोत्त रपदस्थेपौ अन्येषामपीतिदीर्घ ॥

वीवधिक : । त्रि० वार्त्तांवहे ॥ वीव धेनहरति । एकदेशविकृतस्यान न्यत्वात्० विभाषाविवधादितिष्ठ न् । षाडोषर्थः ॥

वीर । पुं० शूरे । विक्रान्ते ॥ वि ष्णौ ॥ जिने ॥ शृङ्गाराद्यष्टरसा न्तर्गतरसविशेषे । उत्साहवर्द्धने ॥ उत्तमप्रकृतिर्वीरउत्साहस्थायि भावकः । महेन्द्रदैवतोहेमवर्णो ऽयंसमुदाहृतः ॥ ककुभद्रुमे ॥ ब्राह्मणे ॥ भावविशेषे ॥ न० अग्नौ ॥ तण्डुलीये ॥ वराहकन्दे ॥ लताकरञ्जे ॥ करवीरे ॥ शृङ्गा म् ॥ नले ॥ मरिचे ॥ पुष्करमूले ॥ काञ्जिके ॥ उशीरे ॥ आरुके ॥ त्रि० उत्तमे । श्रेष्ठे ॥ वीराचारविशिष्टेयथा । कुलाचाररतोवीरः कुलसङ्गीसदा भवेत् । सविद्यासेवनकुर्यात्सोमपा नमहेश्वरि ॥ सर्वदाकुरुतेदेविवीर स्रोवतमानस ॥ पुं० वीरयति । शूर वीरविक्रान्तौचुरादिः । पचाद्यच् ॥ यद्वा । विशेषेण० ईर्ते० ईरयतिवा । ईरगतौ । वाऽज्वा ॥ यद्वा । अज ति । अजगतिक्षेपणयोः । स्फायि तञ्चीतिरक् । अजेर्वी ॥ विविधानां अपूर्वामीरयितावा ॥ यद्वा । ईरण म् । ईरगतौकम्पनेच । भावेघञ् । ईरः पलायन कम्पनञ्च० तदुभये परवीरप्रयुक्तं विगतमस्येतिवीरः ॥

वीरक । पुं० करवीरे ॥

वीरकुलम् । न० ब्राह्मणानागणे ॥

वीरगतिः । पुं० स्वर्गे ॥

वीरजयन्तिका । स्त्री० रणेवीराणां नृत्ये ॥

वीरणम् । न० उशीरस्यतृणे । वीरत रे । बहुमूलके । गाँडरइतिख्याते तृणे ॥ वीरणं पाचनं शीतलंवान्तिल घुतिक्तकम् । मधुरंज्वरनुद्वान्तिम दविनुत्कफपित्तहृत् ॥ तृष्णासृग्विष वीसर्पकृच्छ्रदाहव्रणापहम् ॥ कुशा दीनांगणे ॥ यथा । कुश काशश्च दर्भश्चकत्तृणं भूतृणं तथा । श्वेतदू र्वानीलदूर्वागण्डदूर्वेतिवीरणम् ॥ विपक्षिणमीरयति । ईरगतौकम्प नेच । ल्युट् वा ॥

वीरतर । पुं० वीरश्रेष्ठे ॥ शरे ॥ न० वीरणे ॥ अतिशयितोवीरः । द्विवचनविभज्येतितरप् ॥

वीरतरु । पुं० अर्जुनवृक्षे ॥ वीरस्था नेतरुश्च ॥ कोकिलाक्षवृक्षे ॥ बि ल्वान्तरवृक्षे ॥ भल्लातके ॥

वीरपर्णम् । न० सुरपर्णे ॥

वीरपत्नी । स्त्री० वीरभार्यायाम् ॥ वी रः पतिर्यस्याइति विग्रहे० नित्य स

मत्स्यादिष्विति । पतिशब्दस्यनकारा न्तादेशे । वल्लभ्यवङ्कतिङीप् ॥ नहि वीरपत्नीनामलभ्यनामकिञ्चिदस्ति ॥

वीरपत्ना । स्त्री० विजयायाम् ॥

वीरपाणम् । न० वीराणांसमयविशेषे क्रियमाणेमद्यपाने ॥ यथा । वीरपा नस्तुयत्पानंवृत्तेभाविनिवारणे ॥ वीराणांपानम् । णत्वम् ॥ बाभावकरणयो रितिणत्वम् ॥

वीरपुरुष । पुं० परैरपराजिते ॥

वीरपुष्पी । स्त्री० सिन्दूरपुष्प्याम् ॥

वीरप्रमोक्ष: । पुं० तीर्थविशेषे ॥

वीरभद्र । पुं० अश्वमेधाश्वे ॥ वीर श्रेष्ठे ॥ वीरणे ॥ दक्षाध्वरध्वंसि नि शिवगणविशेषे ॥

वीरभद्रकम् । न० वीरणे ॥

वीरभार्य्या । स्त्री० वीरपत्न्याम् ॥ वीरस्यभार्य्या ॥

वीरमाता । स्त्री० वीरस्वाम् ॥ वीरस्य माता ॥

वीररज: । न० सिन्दूरे ॥

वीररात्रि । स्त्री० निशाविशेषे ॥ यथा । दीपावल्याममायांवैग्रहणंयदि लभ्यते । वीररात्रिमहेशानीत्याग म ॥

वीररेणु: । पुं० भीमसेने । नागवले ।

वीरवती । स्त्री० मांसरोहिण्याम् ॥ वीरजनन्याम् ॥

वीरवत्सला । स्त्री० श्वश्र्वाम् ॥

वीरवत्सा । स्त्री० वीरजनन्याम् ॥

वीरविन्नावक: । पु० शूद्रद्रव्येणहोम कर्त्तरि ॥ यथा । वीरविन्नावकोजु ह्वन्ते: शूद्रसमर्पितैरितिहेमच न्द्र ॥

वीरवृक्ष । पुं० भल्लातके ॥ ककुभद्रु मे ॥ बिल्वान्तरे ॥ देवधान्ये । अश्म रीहरे ॥ वीरवृक्षच्छ दुस्पर्शत्त्वा त् ॥

वीरव्रत: । पुं० दृढव्रते ॥ नैष्ठिके ॥

वीरसू । स्त्री० वीरमातरि ॥ वीरसू ते । पूङ्प्राणिगर्भविमोचने । स त्सूद्विषेतिक्विप् ॥

वीरसेन । पुं० नलाभिधभूपपित रि ॥ न० आरुकवृक्षे ॥ आलुके ॥

वीरसेनज: । पुं० नलाभिधनृपे ॥

वीरहा । पुं० त्यक्तयज्ञाग्नौ । नष्टा ग्नौ । प्रमादादिनायस्याग्निश्छेदवि शेषोऽग्निर्नष्टोनिर्वाण:शान्तस्तस्मि न् ॥ वीरोऽग्निस्तंहन्ति । हन० । क्विप् ॥ हरौ ॥ वीरान्असुरभटा न्० हिरण्यकशिपुप्रभृतीन्वाहन्ती तितथा ॥

वीरा । स्त्री० सुरायाम् । मदिराया म् ॥ क्षीरकाकोल्याम् ॥ तामल क्याम् ॥ एलवालुके ॥ पतिपुत्रव त्याम् । पत्यासुतेनचयुक्तायाम् ॥ रम्भायाम् ॥ विदार्याम् ॥ विदा रीस्थानेगम्भारीतिपाठान्तरम् ॥

कान्तील्याम् ॥ मद्याश्रतावर्याम् ॥ गृहकन्यायाम् ॥ ब्राह्म्याम् ॥ अतिविषायाम् ॥ शिंशपाभेदे ॥

वीराध्वा । पुं॰ शूराणांवर्त्मनि ॥ वीराणांसङ्ग्रामेष्वनिवर्त्तिनां॰गो ब्राह्मणबालस्त्र्याद्यर्थं॰कण्टकद्विकसर्पसिंहव्याघ्राद्यभीतानामध्वा ॥

वीरारुकम् । न॰ आरूकी ॥

वीराशंसनम् । न॰ अतिभयप्रदायां युद्धभूमौ ॥ साबीराशंसन युद्धभूमिर्यातभयप्रदा ॥ वीरा 'श'स्यन्तेऽत्र । आङ्. शंसिदृच्छायाम् । ल्युट् ॥

वीराश्रमः । पुं॰ तीर्थविशेषे ॥ यत्र कार्त्तिकेयस्तिष्ठति ॥

वीरासनम् । न॰ रात्रौखड्गहस्तस्य तिष्ठतोजागरणे ॥ अर्द्धवस्थाने ॥ वीराणामासनम् । योगिनामासनविशेषे ॥ तदुक्तं योगशास्त्रे वसिष्ठेन । एकंपादमथैकस्मिन्विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथावाहुं वीरासनमिदं स्मृतम् । इति ॥ अपिच । एकं पादमधःकृत्वा विन्यस्योरौतथेतरम् । ऋजुकायोविशेन्मन्त्री वीरासनमितीरितमित्यत्र शास्त्रम् ॥ श्रीभागवतेपि । कृत्वोरौदक्षिणेसव्यं पादपद्मञ्चजानुनि । बाहुंप्रकोष्ठेक्षमालामासीनंतर्कमुद्रया ॥ इति ॥

वीरिणी । स्त्री॰ दक्षप्रजापतेः पत्न्याम् ॥

वीरुत् । स्त्री॰ शाखापत्रप्रचयवल्लौ लतायाम् । गुल्मिन्याम् । छिन्नविटपे ॥ विरुधि । रुधिर्॰ । क्विप् । अन्येषामपीतिदीर्घः ॥

वीरुधा । स्त्री॰ वीरुधि ॥ भागुरिमतेनटाप् ॥

वीरेशः । पुं॰ शिवे ॥

वीरेश्वरः । पुं॰ सदाशिवे ॥ वीराणामीश्वरः ॥

वीरोज्झी । पुं॰ होमाकर्त्तरि ॥ यथा । अग्निदिवाभिनिर्मुक्तोवीरोज्झोवलुहोतिच ॥ इतिहेमचन्द्रः ॥

वीरोपजीविकः । पुं॰ जीविकार्थम् अग्निहोत्रिणि ॥ यथा । अग्निहोत्रच्छलाद्यःस्यात्परोवीरोपजीविकइति हेमचन्द्रः ॥

वीर्य्यम् । न॰ शुक्रे । रेतसि । यथा । हरितालं हरेर्वीर्यं लक्ष्मीवीर्यं मनःशिला । पारदं शिववीर्य्यं स्यात्गन्धकं पार्वतीरजः ॥ इति । प्रभावे ॥ तेजसि ॥ इन्द्रियसामर्थ्ये ॥ अतिशयशक्तिभाजिद्रव्याद्यैः शक्तौ ॥ सा चपञ्चविध्याद्यैर्गमः सारभागसदतिशयरूपा । साक्षिविधायिन्यायाक्रियाहेतुत्वेन । तत्रचिन्त्यक्रियाहेतुर्यद्द्रव्यरसादीनां

स्वस्वकार्य्यं षिस्वभावसिद्धाशक्ति । अचिन्त्यक्रियाहेतुश्चप्रभावापरपर्याय द्रव्याणांरसाद्यनुरूपकार्यंकरणशक्ति । उक्तञ्च । भूतप्रभावातिशयोद्रव्ये पाकेरसेस्थित । चिन्त्याऽचिन्त्यक्रियाहेतुर्वीर्यंधन्वन्तरेर्मतमिति ॥ अस्यावधिमाह । यामकल्ककषायवीर्यमखिलचूर्णंस्वपञ्चत्रयषण्मासान्घृतमोदकौसहगुडौमासत्रयगुग्गुलौ । सिद्धानारसभस्मनासुविपुलवीर्यंचवर्षत्रयम्- किञ्चिद्गन्धविवर्जितगुणपरतैलपुराणमहर्दितनारायणदासकृतापरिभाषा ॥ वीरि॰ असौवेसाधु । तत्रसाधुरितियत् ॥ यद्वा । वीर्यतेऽनेन । वीरविक्रान्तौ । अचोयत् । अघ्न्यादिर्वा ॥ अवि ॥

वीर्य्यवान् । त्रि॰ मांसले ॥ वीर्यमस्यअस्मिन्वा । मतुप् ॥

वीर्य्यवृद्धिकरम् । न॰ वृष्ये । वाजीकरणे । शुक्रवृद्धिकारकौषधादौ ॥

वीर्य्या । स्त्री॰ अतिशयशक्तौ ॥

वीसर्प्प । पुं॰ विसर्पे ॥

वीहार : । पुं॰ बुद्धमन्दिरे । महालये ॥

वुक । पुं॰ बकपादपे । शिवमल्ल्याम् ॥ वाति । वा॰ बाहुलकात्कुक । कुगोकारस्योत्त्वं वा ॥

वृंहण । पुं॰ यावकाख्ये॰ खाद्य

भेदे ॥ सयावोवृंहणोगुरु ॥ त्रि॰ पुष्टिकारके ॥

वृंहितम् । न॰ करिगर्जिते ॥ वृंहणम । वृंहिध्वनौ । नपुंसकेत्तिः ॥

वृक । को॰ ॥ ईहामृगी । हुंडार॰ हु॰ भेडिया॰ हु॰ चभाषा॰ प्र॰ ॥ वर्कंते । वृकआदाने । इगुपधेतिक : ॥ यद्वा । वृणोति । वृञ्॰ स्वभूशुषिमुषिभ्य॰ कक् ॥ शृगाले ॥ कृत्रिमधूपे ॥

वृकदंश । पुं॰ कुक्कुरे ॥ वृकान् दंशयति । दंश॰ । कर्मण्यण् ॥

वृकधूप । पुं॰ नानासुगन्धिद्रव्यकृतधूपविशेषे । कृत्रिमधूपे ॥ सरलद्रवे । वृकधूपे । श्रीवेष्टे ॥ वृकइवधूप ॥ धूप्यतेऽनेन । धूपसन्तापे । घञ् । वृकनामाधूप शाकपार्थिवादिर्वा ॥

वृकधूर्त्त : । पुं॰ शृगाले ॥

वृका । स्त्री॰ अम्बष्ठायाम् । पाठायाम् ॥

वृकाणी । स्त्री॰ चिवृति ॥

वृकाराति : । पुं॰ कुक्कुरे ॥

वृकारि । पुं॰ कुक्कुरे ॥

वृकी । स्त्री॰ पाठायाम ॥

वृकोदर । पुं॰ भीमाख्यपाण्डवे । भीमसेने ॥ यस्यतीव्रोवृकोनाम जठरेहव्यवाहन । मयोदत्त : स

धर्मात्मातिनयासौवृकोदर' ॥ द्व० मल्लपु० ॥ वृकवदुदरयस्यस ॥

वृक्ण । त्रि० छिन्ने ॥ वृश्चयतेस्म । ओव्रश्चूछेदने । क्त ॥

वृक्ष' । पुं० महीरुहे । शाखिनि । विटपिनि । पादपे ॥ पुष्पिणः फलिनस्तैवृक्षास्तूभयतः स्मृताः ॥ वृक्षतिवृक्षवरणे । पचाद्यच् । यद्वा । वृश्च्यत्यम्० वृश्चयतेश । ओव्रश्चू० । स्नुवृश्चिकृत्यृषिभ्यः कित्‌इतिसः ॥

वृक्षक' । पुं० कुटजवृक्षे ॥ ह्रस्वोवृक्षः । ह्रस्वइतिकः ॥

वृक्षखण्ड' । पुं० वृक्षाणांसमूहे ॥ वृक्षादिभ्यः खण्डः ॥

वृक्षचर । पुं० वानरे ॥

वृक्षधूपः । पुं० श्रीवासे । सरलद्रवे ॥

वृक्षनाथः । पुं० वटवृक्षे ॥

वृक्षपञ्चकम् । न० क्षीरिवृक्षपञ्चके ॥

वृक्षनाकः । पुं० वटद्रुमे ॥

वृक्षभक्षा । स्त्री० वन्दायाम् ॥

वृक्षभवनम् । न० वृक्षकोटरे ॥

वृक्षभित्‌० ह्र । स्त्री० वृक्षभेदिनि । वासाम् ॥ वृक्ष भिनत्ति । भिदिर्० । क्विप् ॥

वृक्षभेदी । पुं० कुठारविशेषे । वृक्षादने ॥ वृक्ष भेत्तुंशीलमस्य । भिदिर् विदारणे । सुप्यजातौणिनि ॥

वृक्षमर्कटिका । स्त्री० कश्चिद्वृतिप्रसिद्धेपर्णमृगजातौ ॥

वृक्षमार्जार । पुं० वृक्षविडाले । गिलहरी० टिक्षरी० इ० भा० ॥

वृक्षरुह' । पुं० जलवेतसे ॥

वृक्षराज । पुं० अम्लवेतसे ॥

वृक्षरुहा । स्त्री० वन्दायाम् ॥ वृक्षेरोहतिरुहेर्मूलविभुजादित्वात्क' ॥ अमृतस्रवायाम् ॥

वृक्षवाटिका । स्त्री० अमात्यस्य० गणिकायाश्च० गेहस्थोपवने ॥ वल्यते । वटवेष्टने । सञ्ज्ञायामितिण्वुल् । टाप् । प्रत्ययस्थादितीत्वम् । वृक्षाणांवाटिका ॥

वृक्षादनः । पुं० वृक्षभेदिनि० कुठारविशेषे ॥ वृक्षमत्ति । अद० । कृत्यल्युटइतिल्युट् ॥ अलदृशे ॥ मधुच्छदे ॥ पियाले ॥

वृक्षादनी । स्त्री० वन्दायाम् ॥ विदारीकन्दे ॥ विदारीगन्धिकौषधौ ॥ टित्त्वान्ङीप् ॥

वृक्षादिरुहकम् । ) न० आलिङ्गने ॥
वृक्षादिरूढकम् । )

वृक्षामयः । पुं० लाक्षायाम् ॥

वृक्षाम्ल । पुं० आम्रातके ॥ न० आम्रके । तिन्तिडीके । चुक्रे ॥ अस्यगुणाः । वृक्षाम्लमामम्लोष्णवातघ्नंकफपित्तलम् । पक्वन्तुगुरुसङ्ग्राहिकटुकतुवरंलघु । अम्लोष्ण

रोचनरुचदीपनकफशातकृत् । तृ
ष्णार्शोयक्ष्मगुल्मशूलछर्द्रोगजन्तुजि
त् ॥ वृक्षशाऽम्लम ॥ वृक्षेच्छलो
वा ॥

वृक्षायुर्वेदः । पुं० महीरुहाणांचिकि
त्सायाम् ॥ सा चाग्निपुराणे ५३
अध्याये । यथा । तत्रादौ प्रथोजनप्र
दर्शनार्थमाह । प्रातश्छायाविनि
र्मुक्तानमनोज्ञाञ्जलाशया : । तस्मा
द्दिाजलप्रान्ते चारामान् विनिवेशये
त् ॥ १ ॥ तत्रभूलक्षणम् । मृ
द्वीभू : सर्ववृक्षाणांहितातस्यांति
लान्वपेत् । पुष्पितांस्तांश्चमर्दनी
यात्तत्कर्मप्रथमंभुव । ॥ प्रथम
रोप्यावृक्षा : । अरिष्टाशोकपुन्नाग
शिरीषा सप्रियङ्गव । मङ्गल्या :
पूर्वमारामेरोपणीयागृहेषुवा ॥ ३ ॥
कागडरोप्याणांविधानमाह । पन
साशोककदलीजम्बूवकुलदाडिमा ।
द्राक्षापालीवलाश्चैवबीजपूरातिमु
क्तका : ॥ एतेद्रुमा काण्डरोप्या
गोमयेनप्रलेपिता । मूलोच्छेदेथ
वास्कन्धेरोपणीयास्तत परम् ॥ ५ ॥
कालनियमार्थमाह । अजातशा
खान्शिशिरेजातशाखान्हिमागमे
। वर्षागमेचसुस्कन्धान्यथादिक
स्थान्प्ररोपयेत् ॥ घृतोशीरतिल
क्षौद्रविडङ्गक्षीरगोमयै : । आमूल
स्कन्धलिप्तानासङ्क्रामणविरोपण

म् ॥ ७ ॥ रोपणविधानम् । शुचि
र्भूत्वातरो : पूजांकृत्वास्नानानुले
पनै । रोपयेद्रोपितश्चैवपत्रैस्त
स्यजायते ॥ ८ ॥ रोपितानासेक
विधानम् । सायंप्रातश्चघर्मर्तौशी
तकालेदिनान्तरे । वर्षासुचभुव
शोषेसेक्तव्यारोपितद्रुमा ॥ ९ ॥
अनूपजानाह । जम्बूवेतसवानीरक
दम्बोदुम्बरार्जुना : । बीजपूर
कमृद्वीकालकुचाश्चदाडिमा ।
वञ्जुलोनक्तमालश्चतिलक पनस
स्तथा । तिमिराम्रातकौचेतिषोड
शानूपजा स्मृता ॥ ११ ॥ रोपि
तानांवृक्षाणां० क्रिमःमाणमन्तरका
र्यमित्याह । उत्तमं विंशतिर्हस्ता
मध्यमं षोडशान्तरम् । स्थानात्
स्थानान्तरंकार्यंवृक्षाणांद्वादशावर
म् ॥ १२ ॥ किमर्थमन्तरंकार्यंत
दाह । अभ्यासजातास्तरव : स
स्पृशन्त परस्परम् । मिश्रैर्मूलैश्च
नफलं सम्यग्यच्छन्तिपीडिता
॥ २३ ॥ तेषांरोगज्ञानमाह । शी
तवातातपै रोगोजायतेपाण्डुपत्र
ता । अवृद्धिश्चप्रवालानांशाखाशो
षोरसस्रुति ॥ १४ ॥ एतेषांचि
कित्सामाह । चिकित्सितमथैतेषां
शस्त्रेणादौविशोधनम् ॥ विडङ्गघृ
तपङ्काक्तान सेचयेत्क्षीरवारिणा ॥
फलनाशेचिकित्सितमाह ॥ फल

नाग्निकुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः । शृतशीतपयःसेकः फलपुष्पसमृद्धये ॥ १६ ॥ वृद्ध्यर्थं प्रयोग । आविकाजशकृच्चूर्णस्याढके द्वे तिलाढकम् । सक्तुप्रस्थो जलद्रोणो गोमांसतुलया सह ॥ सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः । वल्लीगुल्मलतानाञ्च फलपुष्पाय सर्वदा ॥ १८ ॥ अथ बीजानां वापनविधानम् । वासरान् दश दुग्धभावितं बीजमाज्ययुतहस्तयोजितम् । गोमयेन बहुशो विरूक्षितं क्रौडमार्गपिशितैश्च धूपितम् ॥ मांससूकरवसासमन्वितं रोपितञ्च परिकल्पितावनौ । क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥ अथ तिन्तिडीविधानम् । तिन्तिडी ह्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः । पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥ अथ कपित्थबीजरोपणम् । कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधववासिकानाम् । पलाशिनी वेतससूर्यवल्लीश्यामातिमुक्तैः सहिताष्टमूली ॥ क्षीरे शृते चाप्यनया सुशीते तालशतं स्थाप्य कपित्थबीजम् । दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम् ॥ हस्तायतं तद्द्विगुणं गभीरं खात्वा च वटं प्रोक्तजलावपूर्णम् । शुष्कं प्रदग्धं मधुसर्पिषा तत् प्रलेपयेद्भस्मसमन्वितेन ॥ चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः । मत्स्यामिषाम्भःसहितञ्च हन्याद्यावद्घनत्वं समुपागतं तत् ॥ उप्तञ्च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम् । वल्ली भवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति ॥ २६ ॥ अथान्येषां रोपणम् । शतशोऽङ्कोठसम्भूतफलकल्केन भावितम् । एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ वापितं करकाम्भश्च मृदितं तत्क्षणजन्मकम् । फलभारान्विता शाखा भवतीति किमद्भुतम् ॥ २८ ॥ श्लेष्मातकरोपणम् । श्लेष्मातकस्य बीजानि निष्कुलीकृत्य भावयेत् प्राज्ञः । अङ्कोलविज्जलाद्भिश्छायायां सप्तकृत्व एव ॥ माहिषगोमयपिष्टान्यस्य करीषे च तानि निक्षिप्य । करकाजलमृद्योगेन्युप्तान्यह्नाफलकराणि ॥ वृक्षाणां रोपणानक्षत्राणि । ध्रुवमृदुमूलविशाखागुरुभश्रवणास्तथाश्विनी हस्तम् । उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ३१ ॥ इति ॥

वृक्षारुहा । स्त्री० वृक्षरुहायाम् । वृक्षमारोहतीति तथा ॥

वृक्षारोपकः । त्रि० वृक्षाणामारोप-

खितरि ॥

वृक्षार्द्री । स्त्री॰ महामेदायाम् ॥

वृक्षालय । पुं॰ खगे । पक्षिणि ॥

वृक्षाश्रयी । पुं॰ क्षुद्रोलूके ॥

वृक्षेशय । पुं॰ विहगे ॥ वृक्षे शेते । शीङ॰ । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥

वृक्षोत्पल । पुं॰ कर्णिकारे ॥

वृजन । पुं॰ केशे ॥ न॰ पापे ॥ आकाशे ॥ वृणक्ति॰ वृज्यतेवा । वृजीवर्जने । कृपृवृजीत्यादिना क्यु ॥

वृजिन । पुं॰ केशे ॥ न॰ कल्मषे । अघे ॥ रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपेसंसारफलेकर्मणि ॥ पापवत्पुण्यस्याप्यनिष्टफलत्वात् ॥ त्रि॰ कुटिले । वक्रे ॥ वृज्यते । वृजी॰ । वृजेःकिच्चेति॰ इनच् ॥

वृजिनच्छित्॰ द्व । त्रि॰ दुःखहर्त्तरि ॥

वृत । त्रि॰ वृत्ते । व्यावृत्ते । कृतवरणे ॥ स्वयंवरादौस्वीकृतवरादौ ॥ व्रियतेस्म । वृञ् वरणे । क्तः ॥ आवृते ॥

वृतकौशा । स्त्री॰ देवदाल्याम् ॥

वृतपत्रा । स्त्री॰ पुत्रदात्र्यामोषधौ ॥

वृतपुत्रा । स्त्री॰ वृतपत्रायाम् ॥

वृतिः । स्त्री॰ वरणे । वेष्टने । वाटे । आवड़इतिग्रामीणप्रसिद्धविविधवेष्टकण्टकशाखावरणे ॥ वरणम् । वृञ्॰ । क्तिन् ॥ गोपने ॥

वृतिङ्करः । पुं॰ विकङ्कतवृक्षे ॥ त्रि॰ वृतिकारके ॥

वृतिस्थ । पुं॰ सरटे ॥ त्रि॰ वृतौतिष्ठति ॥

वृत्त । पुं॰ कूर्मे पुं॰ न॰ पद्ये ॥ यथा । पद्यंचतुष्पदीतच्चवृत्तंजातिरितिद्विधा । वृत्तमक्षरसङ्ख्यातंजातिर्मात्राकृताभवेत् ॥ वृत्तौ ॥ चारित्रे ॥ वेदबोधिताचारस्यपरिपालने ॥ छन्दसि ॥ कृतिच्छन्दोभेदे ॥ यथा । वृत्तमीदृगनुनामतोरजौरजौरजौगुरुर्लघुश्च । यथा । चित्तवृत्तलीलयानिसर्गरम्यदेहरूपविभ्रमेणराजमानसद्वयोविलाससम्पदाकलाकुतूहलेन । यः समंव्रजाङ्गनाजनैः सुराङ्गनाभिभैः लुब्धमानसोबभौकलाकलासचित्तपद्मकोषषट्पदः सनोसदास्तु ॥ त्रि॰ अधीते ॥ येनध्ययनेवृत्तमितिनिपातितः । वृत्तंव्याकरणम्॰ अधीतमित्यर्थः ॥ अतीते ॥ अतिवर्त्तुले । वृते ॥ मृते ॥ दृढे ॥ वर्त्ततेस्म॰ वृत्यतेस्मवा । वृतुवर्त्तने । गत्यर्थेतिक्तः ॥ वर्त्तनम् । वृतुवर्त्तनेवरणेवा । भावेक्तोवा ॥

वृत्तकम् । न॰ गद्यप्रभेदे ॥ तल्लक्षणोदाहरणे यथा । अकठोराऽक्षरंस्वल्पसमासंवृत्तकंमतम् ॥ यथा । अस्तिश्रयाश्रामिवजगतांगतिः परमपुरुषः पुरुषोत्तमोदृप्तदानवभरेणभग्न

राज्ञीमवनिमवलोक्यकरुणार्द्रहृद
यस्तस्याभारमवतारयितु रामकृष्ण
स्वरूपेणाश्वतीयदुवंशेऽवततारयस्तुप्र
सङ्गेनापिस्मृतोवागृहीतनामापुंसा
संसारपारमवलोकयति ॥

वृत्तकर्कटिका। स्त्री॰ वृत्तकर्कट्याम् ॥

वृत्तकर्कटी। स्त्री॰ वृत्तोर्वारौ। षड्भु
जायाम् ॥

वृत्तगन्धि। न॰ गद्यप्रभेदे ॥ तल्लक्षणं
यथा। भवेदुत्कलिकाप्रायंसमासा
ढ्य दृढाक्षरम्। वृत्तैकदेशसम्बन्धा
द्वृत्तगन्धिपुन: स्मृतम्। तदुदा
हरणंयथा। जयजयजयजनार्द्दनसु
कृतिमनस्तडागविकस्वरचरणपद्मप
द्मपत्रनयनपद्मापद्मिनीविनोदराज
हंसाभभास्वरयश: पटलपरिपूरि
तभुवनकुहर। हरकमलासनादिवृं
दारकवृन्दवन्दनीयपादारविन्दद्वन्द्व
द्वन्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिराधि
ष्कृतनिरञ्जनज्योति: स्वरूपनीर
दरूपविरूपजननाथनाथजगन्नाथमा
मनवधिभवदु:खव्याकुलरक्षरक्ष
रक्ष ॥

वृत्तगुण्ड:। पुं॰ तृणविशेषे। दीर्घ
नाले। जलाश्रये ॥ सयद्विधा। ल
घुस्थूलभेदात्। तत्रस्थूलोऽधिकगु
ण: ॥

वृत्ततण्डुल:। पुं॰ यावनाले ॥

वृत्तत:। अ॰ वृत्तेनेत्यर्थे ॥

वृत्तनिष्पावी। स्त्री॰ वृत्तनिष्पाविकाया
म्। नखनिष्पावे ॥

वृत्तपर्णी। स्त्री॰ महाशणपुष्पिकाया
म् ॥ पाठायाम् ॥

वृत्तपुष्प:। पुं॰ कदम्बे ॥ शिरीषे ॥
बानीरे ॥ कुब्जके ॥ मुद्गरे ॥

वृत्तफल:। पुं॰ दाडिमे ॥ बदरे ॥
न॰ मरिचे ॥

वृत्तफला। स्त्री॰ आमलक्याम् ॥ वा
र्त्ताक्याम् ॥ शशाण्डुल्याम् ॥

वृत्तमल्लिका। स्त्री॰ श्वेतार्के ॥ मोदि
न्याम् ॥

वृत्तबीज:। पुं॰ भिण्डायाम् ॥

वृत्तबीजका। स्त्री॰ पाण्डुरफल्याम् ॥

वृत्तबीजा। स्त्री॰ आढक्याम् ॥

वृत्तसम्पन्न:। त्रि॰ सदाचारवति ॥

वृत्ता। स्त्री॰ भिञ्भिरिष्टायाम् ॥ प्रि
यङ्गौ। रेणुकायाम् ॥ मांसरोहि
ण्याम् ॥

वृत्ताध्ययनर्द्धि:। स्त्री॰ ब्रह्मवर्चसे ॥
वृत्तस्थाचार: अध्ययनस्यगुरुमुखा
द्दादरग्रहणम्, तयोर्ऋद्धि: ॥

वृत्तानन्दम्। न॰ मात्रावृत्तान्तरे ॥
तल्लक्षणोदाहरणं यथा। एकादश
विश्रामि सप्तविरामि यदिहसात्र
त्तं भवति। छन्दोवृत्तानन्दमिहपा
नन्दकारिफणिन्द्रपतिरितिवदति ॥
यथा। मधुरस्मितनवशालियदिव
नमालिवदनकमलमवलोकये। क

धरसुधारसधामपरमभिरामसवलम्बे जीवितमये ॥

वृत्तान्त । पुं॰ वार्त्तायाम् । प्रवृत्तौ । उदन्ते । समाचारे ॥ यथा । अतीतजन्मवृत्तान्तं बाल्ये प्रायेणपश्यति । ऐहिकं यौवनेऽन्ते तु तत्त्वीभाविबोध्यते ॥ वार्त्ताजनस्रुतिराख्यायिका चेति स्वामी ॥ प्रभेदे । विशेषे ॥ प्रक्रियायाम् ॥ कार्त्स्न्ये । प्रस्तावे । अवसरे ॥ वृत्तोऽनुवर्त्तनीयोगवेषणीयोऽन्तः समाप्तिर्यस्य । वृत्तोऽन्तोऽस्य वृत्तस्यान्त इति वा ॥ भावे ॥

वृत्तावृत्तम् । न॰ मात्रावृत्ताभेदे ॥ तस्य लक्षणोदाहरणे यथा । द्वादशचतुष्कलगणनिर्मितपद्यं चलघुविरामं भवतियदि । नागाधिपपिङ्गलभणितसुमङ्गलवृत्तावृत्तमिदं हि पदि ॥ यथा । हृदितावदनेकः स्फुरति विवेकस्तपसि मनो नियतं भवति । यावन्नवहरिणीनयनातरुणी स्मितसुभगं न विलोकयति ॥

वृत्ति । स्त्री॰ व्याख्यानग्रन्थविशेषे । विवरणे ॥ आजीवे । वर्त्तने । कृष्यादिजीवने । अनुष्ठे व्यायाजीविकायाम् ॥ कैशिक्यादौ ॥ यथा । भारतीसात्वतीचैवकैशिक्यारभटीतथा । चतस्रोवृत्तयश्चैतायासु नाट्यप्रतिष्ठितमितिभरतः ॥ शृङ्गारेकैशिकीवीरेसात्त्वत्यारभटीपुनः । रसेरौद्रे चबीभत्से वृत्तिःसर्वत्र भारती । चतस्रोवृत्तयो ह्येताः सर्वनाट्यस्यमातृकाः ॥ प्रवर्त्तने ॥ विवृतौ ॥ व्यवहारे ॥ वर्त्ततेऽनया । वृतुवर्त्तने । स्त्रियांक्तिन् ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतिषु पञ्चविधासु ॥ लज्जादिवृत्तीनामपिपञ्चस्वेवान्तर्भावः ॥ अर्थसन्निकृष्टेन्द्रिये ॥ इन्द्रियाणांव्यापारे । विषयाकारवृत्तिपरिणामे ॥ वृत्तीनामानन्त्यादर्थवृत्तीःसूत्रयतिपतञ्जलिः । वृत्तयः पञ्चतय्यःक्लिष्टाक्लिष्टाइति । वृत्तयश्चित्तस्यपरिणामविशेषाः । रागद्वेषादिक्लेशरूपाः । आसुरवृत्तयः क्लिष्टाः । रागादिरहिता दैववृत्तयोऽक्लिष्टाः । यद्यपिपञ्चस्वेवक्लिष्टानामक्लिष्टानामन्तर्भावः तथापिक्लिष्टा एवनिरोद्धव्या इतिमन्दबुद्धिवारयितुं ताभिः सहाक्लिष्टाउदाहृताः । नामधेयलक्षणाभ्यांवृत्तीर्निर्दशयितुं सूत्रषट्कमाह । प्रमाणविपर्ययविकल्पनिद्रास्मृतयः । प्रत्यक्षानुमानागमाः प्रमाणानि । विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम् । अतद्रूपप्रतिष्ठम् तस्यार्थस्य यद्रूपं न तस्मिन् रूपेप्रतिष्ठति तस्यार्थस्य यत्पारमार्थिकरूपं न तत् प्रतिभा

सवतीतियावत् । स अर्थोप्यतद्रूप प्रतिष्ठत्वान्मिथ्याज्ञानम ॰यथाश्वा श्वावीपुरुषोवेति । शब्दज्ञानानुपाती वस्तुशून्योविकल्प ' । अभावप्रत्ययालम्बनावृत्तिर्निद्रा । अनुभूतविषयाऽसम्प्रमोष स्मृति ' ॥ तत्रप्रमाणविपर्ययविकल्पाजाग्रदवस्था ॰ तएवयदानुभववलात प्रख्यायमाणा . साखप्न . ॰निद्रात्ववसविद्यमानविषया ॰स्मृतिश्चप्रमाणविपर्ययविकल्पनिद्रानिमित्त तिव्याख्याताबृत्तय ' ॥ अत्तक्तिसमासैक शेषसनाद्यन्तधातुरूपासुपञ्चसु ॥ विच्छिन्नप्रतिविधाने ॥ अप्रतिबन्धे ॥

वृत्तिम्लान : । त्रि॰ वृत्तिक्षीणे ॥

वृत्तिज्ञानम् । न॰ घटाकारज्ञाने ॥ यद्यपिवृत्तिज्ञानमपिस्वरूपज्ञानमेव ॰तथापि ॰ अन्त करणोपाधित्वात्तथातथाभातीतितयोर्भेद ॥

वृत्तिनिरोध ' । पुं॰ वृत्तीनांप्रतिहनने ॥ तत्साधन सूचयतिभगवान् पतञ्जलि । अभ्यासवैराग्याभ्यांतन्निरोध ॰वृत्ति । प्रकाशप्रवृत्तिनियमरूपाणांचित्तवृत्तीनामभ्यासवैराग्याभ्यांप्रतिहनन सनिरोध यथातीव्रवेगेपतित नदीप्रवाह सेतुबन्धेननिवार्यकुल्याप्रणयनेनक्षेत्राभिमुखं तिर्यक्प्रवाहान्तरमुत्पाद्यते॰तथावैराग्येणचित्तनद्याविषयप्रवाहनिवार्य॰समाध्यभ्यासेन॰प्रशान्तप्रवाह सम्पाद्यते । एतदुक्तं भवति । तासांविनिवृत्तवाह्याभिनिवेशानामन्तर्मुखतयास्वकारणएवचित्तेशक्तिरूपतयावस्थानम् । तत्र विषयदोषदर्शनजेनवैराग्येण॰तद्वैमुख्यमुत्पाद्यते॰अभ्यासेनचसुखजनकशान्तप्रत्ययप्रवाहप्रदर्शनद्वारेण दृढ स्थैर्यमुत्पाद्यतइत्याभ्यांभवतिचित्तवृत्तिनिरोध . ॥

वृत्तिभेद . । पुं॰ प्रवृत्तिनिमित्तभेदे ॥

वृत्तिमान् । त्रि॰ वार्ते ॥ वृत्तिरस्यास्मिन्वास्ति । मतुप् ॥

वृत्तिविषय । पुं॰ वृत्तिव्याप्ये ॥ आत्मनि ॥

वृत्तिविस्मरणम् । न॰ ध्यातृध्येयाकारवृत्तिशून्ये । द्वैताननुसन्धाने ॥

वृत्तिव्याप्यत्वम् । न॰ विशिष्टशब्दादिप्रमाणवशात् ॰तत्तद्विषयाकाराधीसमुन्मेषाभिव्यक्तत्वे ॥ ब्रह्मज्ञाननाशायवृत्तिव्याप्तिरपेक्षिता ॥

वृत्य : । त्रि॰ वरणीये ॥ वरणं ॰ क्रियतेवा । वृञ् वरणे । एतिस्तुशास् वृदृजुष : क्यप् ॥

वृत्त्यनुप्रास : । पुं॰ शब्दालङ्कारोभेदे । यथा । एकस्याप्यसकृत्पर : । ए

कस्य॰ अपिशब्दादनेकव्यञ्जनस्य॰ द्वि
र्वंहुकृत्वोवासोहश्यं इत्यनुप्रासः
। यथा । युधिष्ठिरदैतवनेवनेचरदृ
स्यव॰ इयो: स्वरव्यञ्जनसमुदाययो
रेकदैवावृत्तिः ॥

वृत्र. । पु॰ ध्वान्ते । अन्धकारे ॥ अ
रौ । शत्रौ ॥ त्वष्टृ पुत्रे दानवबि
शेषे ॥ वृजिनात्त्रातुमधुनायस्मा
च्छत्रोसिपुत्रक । तस्माद्वृत्रइति
ख्याततवनामभविष्यति ॥ घने ॥
शैलविशेषे ॥ वासवे । इन्द्रे ॥ वृ
णोति । वृञ्॰ । बाहुलकात्त्र
॥ वर्त्तते । वृतुवर्त्तने । स्फायित
ञ्चीत्यादिनारक्‌वा ॥

वृत्रद्विट् । पुं॰ इन्द्रे ॥ वृत्रं द्वेष्टि ।
द्विषअप्रीतौ । सत्सूद्विषेत्यादिना
क्विप् ॥

वृत्रभोजन: । पुं॰ गण्डीरे । समष्ठि
लायाम् । समठ॰ इ॰ गौ॰ दि॰ भा॰॥

वृत्रहा । पुं॰ इन्द्रे ॥ वृत्रं हतवान् ।
ब्रह्मभ्रूणवृत्रेषुक्विप् ॥

वृत्रारि: । पु॰ शक्र । इन्द्रे ॥

वृथा । अ॰ वन्ध्ये । मुधा । अविधौ ।
निरर्थके ॥ यथा । वृथावृष्टिः समु
द्रस्यतृप्तस्यभोजनवृथा । वृथादान
समर्थस्यनीचस्यसुकृतवृथा ॥ नि
ष्कारणे ॥

वृथाजन्म । न॰ निरर्थकजनने ॥ *

वृथादानम् । न॰ परिहासनिमित्तं
पण्डादिभ्योदेये ॥ धूर्त्तेबन्दिनिम
ल्ले चकुवैद्ये कितवेशठे । चारचार
णचौरेषुदत्तं भवतिनिष्फलम् ॥

वृथामांसम् । न॰ देवतादिकमनुद्दि
श्यकृतेमांसे ॥ तद्भक्षणे प्रतत्त्व भव
तीत्युक्तं वह्निपुराणे । यथा । वृथा
रतावृथामांसोवृथावादीवृथामतिः
। निन्दकोद्विजदेवानांसप्रेतोजाय
तेनरइति ॥

वृद्ध: । पुं॰ वृद्धदारके ॥ न॰ गन्धद्रव्य
विशेषे । शैलजे । शैलेये । अश्मपुष्पे
। रन्दूच॰ छरीला॰ इत्यादिभाषाप्र
सिद्धे ॥ रूढे ॥ त्रि॰ जीर्णे । प्रवय
सि । स्थविरे । जीने । गतयौवने
॥ सप्ततिवर्षानन्तरवृद्धउच्यते । य
था । वृद्धोजनोदु:खशतानिभुङ्क्ते
। इ॰ ॥ नतेनवृद्धोभवतियेनास्यप
लितशिर: । योवैयुवाप्यधीयानस्तं
देवा: स्थविरंविदुरितिमनु: । वृ
द्धस्यप्रत्युत्थायाभिवादनंकार्य्यम् ॥
ज्ञे । पण्डिते ॥ वर्द्धतेस्म । वृधुवृ
द्धौ । गत्यर्थेतिक्त: । यस्यविभाषे
तिनेट् ॥

वृद्धकाक: । पुं॰ काकोले । द्रोणका
के ॥

वृद्धगङ्गा । स्त्री॰ कामरूपपीठस्थनदी
विशेषे ॥

वृद्धत्वम् । न॰ स्थाविरे । वार्द्धक्ये ॥
वृद्धस्यभाव: । तस्यभावस्त्वतलौ ॥

वृद्धदारक.। पुं॰ छगलान्त्राम्। विधारा॰ इ॰ भा॥ वृद्धोदारकोऽस्मात्॥ वृद्धत्वं दारयतिवा। ण्वुल्॥

वृद्धदारु। न॰ वृद्धदारके। विधारा॰ इ॰ भा॰ प्रसिद्धे॥ यथा। वृद्धदारुद्वयगोल्य पिच्छिलकफवातनुत्। वल्यंकासामदोषघ्न द्वितीयस्त्वपरोयंदम्॥

वृद्धनाभि.। त्रि॰ उन्नतनाभौ। तुण्डिले॥ वृद्धाउन्नतानाभिरस्य॥

वृद्धप्रपितामह:। पुं॰ प्रपितामहस्यजनके॥

वृद्धप्रपितामही। स्त्री॰ प्रपितामहस्यजनन्याम्॥

वृद्धबला। स्त्री॰ महासमङ्गायाम्॥

वृद्धवाहन। पुं॰ आम्रवृक्षे॥ सुपक्वोवृद्धवाहनइतिकेचित्॥

वृद्धविभीतक:। पुं॰ आम्रातके॥

वृद्धश्रवा.। पुं॰ सुनासीरे। इन्द्रे॥ वृद्धेभ्य श्रृणोति। श्रुश्रवणे। असुन्॥ वृद्धैश्रवसीयस्येतिवा। वृद्धेषु पण्डितेषुश्रवोयशोयस्येतिवा।। वृद्धात्वृहस्पतेश्रृणोतिवा॥

वृद्धश्रावक:। पुं॰ कापालिनि॥

वृद्धसङ्घ.। पुं॰ वार्द्धके॥ वृद्धानां सङ्घ:॥

वृद्धसूत्रकम्। न॰ इन्द्रतूले। योषाहासे। मरुद्ध्वजे। वुटियाकास॰ त॰ इ॰ भा॰॥

वृद्धा। स्त्री॰ गतयौवनायाम्। पलिक्न्याम्। जरत्याम्॥ तदवस्थाकालोयथा। आषोडशाद्भवेद्बाला तरुणीत्रिंशतामता। पञ्चपञ्चाशत: प्रौढावृद्धाभवतितत्परम्॥ महाश्रावणिकायाम्॥ अङ्गुष्ठे॥

वृद्धाङ्गुलि। स्त्री॰ अङ्गुष्ठे॥

वृद्धि स्त्री॰ वर्द्धने। स्फात्याम्॥ विष्कम्भादिष्वेकादशेयोगे॥ तत्रजातस्यफलयथा। प्रसूतिकालेयदिवृद्धियोगोनर: सुभोगीविनयान्वितश्च। धनप्रयोगग्रहणे सुदक्षोविचक्षण: स्यात्क्रयविक्रयाभ्यामिति॥ अष्टवर्गौषधान्तरे। योग्यायाम्। ऋद्धौ। सिद्धौ। लक्ष्म्याम्॥ अस्यागुणायथा। ऋद्धिर्वृद्धिश्चमधुरासुस्निग्धातिक्तशीतला। क्रिमिमेधाकरीश्लेष्मकृच्छ्रमिहरापरा॥ प्रयोगेष्वनयोरेकयथालाभप्रयोजयेत्। यत्रयद्दातुमिष्टि: स्याद्द्वयमप्यत्रयोजयेदितिराजनिर्घण्ट.॥ ऋद्धिवृद्ध्योरुत्पत्तिलक्षणानामगुणायथा। ऋद्धिर्वृद्धिश्चकन्दौद्वौभवत: कोषयामले। श्वेतलोमान्वित: कन्दोलताजात. सरन्ध्रक.॥ सएवऋद्धिर्वृद्धिश्चभे

द्रमप्ये तयोः ब्रुवे । तूलग्रन्थिसमोऋ
द्धिर्वामावर्तफलाचसा ॥ वृद्धि
स्तुद्धिणावर्तफलाप्रोक्ता महर्षि-
भिः । ऋद्धिर्योग्य सिद्धिलक्ष्मी
वृद्धेरप्याह्वयाह्वये ॥ ऋद्धिर्बल्या
विदोषघ्नी शुक्रला मधुरा गुरुः । प्रा
णैश्वर्यकरी मूर्च्छारक्तपित्तविनाशि
नी॥ वृद्धिर्गर्भप्रदा शीतावृंहणी मधु
रास्मृता । वृष्यापित्तास्रशमनी-
क्षतकासक्षयापहा ॥ राज्ञामप्यष्ट
वर्गस्तु यतोयमतिदुर्लभः । तस्मा
द्स्यप्रतिनिधिग्रहणीयात्तद्गुणभि
षक् ॥ मूलग्रहश्च . प्रतिनिधि ॥
प्रतिनिधिमाह । मेदाजीवककाको
कोलीऋद्धिवृद्धे पिचासति । व
रीविदार्यश्वगन्धावाराहीश्चक्रमात्-
क्षिपेत् ॥ मेदामहामेदास्थानेशता
वरीमूलम्० जीवकर्षभकस्थाने
विदारीमूलम्० काकोलीक्षीरका
कोलीस्थानेऽश्वगन्धामूलम्० ऋ-
द्धिवृद्धिस्थानेवाराहीकन्दगुणै-
स्तुल्यंक्षिपेत ॥ कालान्तरे । वृद्धौ
। लाभे । सूद० व्याज० हू० भा०
॥ अभ्युदये ॥ समृद्धौ ॥ हर्षे ॥
मुष्कवृद्धौ । कुरण्डरोगे । श्रे
णिये ॥ धने ॥ समूहे ॥ नीतिवेदि
नांक्षयादिक्षिवर्गान्तर्गतवर्गविशेषे
॥ ह्रासाभावे ॥ वर्द्धनम् । वृधु ह
द्धौ क्तिन् । वर्द्धतेऽनयावा ॥ उक्त

कर्णौ नमूलधनातिरिक्तेग्राह्यधने ॥
वृद्धिका । स्त्री० ऋद्धिनामौषधौ ॥
वृद्धिजीविका । स्त्री० अर्थप्रयोगे ।
कुसीदे । ऋणदानजीविकायाम् ॥
वृद्ध्याजीविका ॥
वृद्धिजीवी । त्रि० कुसीदिके ॥ वृ
द्ध्यर्थं द्रव्यवृद्धि । तयाजीवितु
शीलमस्य । णिनि ॥
वृद्धिद । पुं० जीवके ॥ शूकरक-
न्दे । त्रि० वृद्धिदायिनि ॥
वृद्धिश्राद्धम । न० आभ्युदयिकश्रा
द्धे ॥ नान्दीमुखश्राद्धे ॥
वृद्धोक्ष । पुं० जरद्गवे । वृद्धवृ-
षे । वृद्धश्चासावुक्षाच । अचतुरे
तिसाधु ॥
वृद्ध्याजीव । त्रि० वृद्धिजीविनि ।
कुसीदिके ॥ वृद्धिराजीवोजीवि
काऽस्य ॥
वृधसान । पुं० मनुष्ये ॥ अर्द्धते ।
वृधु० । ऋञ्जिवृधमन्दिसहिभ्यः
किदित्यसानच् ॥
वृन्तम् । न० फलपत्रादिर्येनधार्यते
तत्र । प्रसवबन्धने । बैंटा॰ढेंटा॰
हू॰भा॰ ॥ वृणोति । वृञ्० । बा
हुलकाद्विधृणोतिक्तोनुमच ॥ घ
टोधारायाम् ॥ कुचाग्रे । स्तन
मुखे ॥
वृन्ताकम् । न० वार्ताकौ । अस्यगु
णाअथा । वृन्ताकंकफपित्तकृत् ॥ अ

पिच। वृन्ताकस्वादुतीक्ष्णोष्णंकटु, पाकमपित्तलम्। ज्वरवातबला सघ्न दीपन शुक्रलघु॥ तद्बलक फपित्तघ्न वृद्धपित्तकरगुरु॥ वृन्ताकंपित्तलकिञ्चिदङ्गारपरिपाचितम्। कफमेदोनिलामघ्नमत्यर्थं लघुदीपनम। तदेवहिगुरुस्निग्ध सतैललवणान्वितम्॥ अपरश्वेतवृन्ताककुक्कुटाण्डसम भवेत्। तदर्शःसु विशेषेणहितहीनञ्चपूर्वत॥ पूर्वत. कृष्णात्॥ भोजनधिगवृन्ताकवृन्ताकधिगवृन्तकम्। सवृन्तधिगतेलाढ्य सतैलधिगरामठम्॥ सर्वासांशाकजातीनांवृन्ताकंशाकनायकम्॥

वृन्ताकी। स्त्री॰ वार्ताक्याम्॥

वृन्तिका। स्त्री॰ वृन्तितायाम। कटुक्याम्॥

वृन्दः। पु॰ दशार्बुदे। शतकोटौ। महार्बुदे। अजे॥ न॰ समूहे॥ वृण्यते वृणभक्ते। वृन्दादयश्चेतिसाधुः॥

वृन्दा। स्त्री॰ तुलस्याम्॥ जलन्धरस्य पत्न्याम्॥ केदारराजकन्यायाम्॥ राधाषोडशनामान्तर्गतनामविशेषे॥

वृन्दारः। त्रि॰ मनोज्ञे॥

वृन्दारकः। पुं॰ अमरे। देवतायाम्। सुरे। प्रशस्तंवृन्दंयस्य सः। शृङ्गवृन्दाभ्यामारकन्। स्त्रियांसुत कापुत्रिकावृन्दारकाणावेतिवक्तव्यमिति॰वृन्दारका॰वृन्दारिकेत्युभयम्॥ यूथपतौ॥ यथा। वृन्दारक' सुरश्रेष्ठे मनोज्ञे यूथपातरीतिव्याडिः॥ त्रि॰मनोज्ञे॥ श्रेष्ठे॥

वृन्दावनम्। न॰ स्वनामप्रसिद्धे तीर्थविशेषे॥ वृन्दावनेकेशजालसुमानास्तीचदेवता। भूतेशोभैरवस्तत्रसर्वसिद्धिप्रदायक॥ इत्यागमः॥ वृन्दायत्रतपस्तेपेतत्तु वृन्दावन स्मृतम्। वृन्दयाचकृताक्रीडातेनवामुनिसत्तम॥ इतिपुराणम्॥ वृन्दायावनम्॥

वृन्दावनेश्वरः। पु॰ श्रीकृष्णे॥

वृन्दावनेश्वरी। स्त्री॰ राधायाम्॥

वृन्दिष्ठ'। त्रि॰ अतिवृन्दारके॥ अयमेषामतिशयेनवृन्दारकः। इष्ठन्। प्रियस्थिरेतिसाधुः॥

वृन्दीयान्। त्रि॰ वृन्दारकतरे॥ अयमनयोरतिशयेनवृन्दारक'। ईयसुनि॰प्रियस्थिरेतिवृन्दारकस्यवृन्दादेश'॥

वृषः। पु॰ आर्द्रके॥ मूले॥ वृणोति॥ वृञ्॰। जनिदस्यादिनाशक्॥ उन्दुरौ॥

वृषा। स्त्री॰ औषधीविशेषे॥

वृश्चिकः। पुं॰ अली। द्रुणे। विच्छू॰ इ॰भा॰प्र॰॥ वृश्चिकविषस्यलक्षण

यथा । दृश्यग्निरिवादीचभिन-
ती॰ वोर्ड्माशुच । वृश्चिकस्यविषं
यातिपश्चाद् शोऽवतिष्ठति ॥ औषध
न्तु । जीरकस्यकृत : कल्कोघृतसै
न्धवस युत ।। सुखोष्णोमधुनालेपा
द्वृश्चिकस्यविष हरेत् ॥ गन्धमाघ्राय
मृदितसूर्यावर्त्तदलस्यतु । वृश्चिकै
ननरोविद्ध क्षणाद्भवतिनिर्विष
॥ अष्टमराशौ ॥ तज्जन्मजातस्यफ
ल यथा । वृश्चिकोदयसञ्जात शौ
र्य्यवानतिदुष्टधी । भवेद्विज्ञानस
म्पन्नोविग्रहीसुभग सुधी ।॥ शू
ककीटे । शुयपोका॰ इ॰भा॰प्र॰
॥ ओषधीविशेषे ॥ वृश्चति । चोत्र
सूर्च्छेदने । व्रश्चिकृषो : किकन् ।
ग्रहिज्येतिसम्प्रसारणम् ॥

वृश्चिकप्रिया । स्त्री॰ पूतिकायाम् ॥

वृश्चिकर्णी । स्त्री॰ आखुकर्ण्याम् ॥

वृश्चिका । स्त्री॰ क्षुद्रक्षुपविशेषे ।
नखपर्ण्याम् । पिच्छिलायाम् । अ
लिप्रियायाम् ॥

वृश्चिकाधिप ।। पुं॰ मङ्गले ॥

वृश्चिकाली । स्त्री॰ क्षुपविशेषे ।
वृश्चिपत्र्याम् । विषघ्न्याम् ।
सर्पदंष्ट्रायाम् । भूरिदुग्धायाम् ।
भासुरपुष्पायाम । विछाटी॰इ॰
गो॰भा॰ ॥ वृश्चिकालीविषघ्नी
तुवासमारुतनाशिनी ॥

वृश्चिपत्री । स्त्री॰ वृश्चिकाल्याम॥

वृश्चीर । पुं॰ श्वेतमूलपुनर्नवा-
याम ॥

वृष । पुं॰ धर्म्मे ॥ वर्षतिफलम् । वृ
षुसेचनेच । इगुपधेतिका ॥
वर्षयात्सर्वकामानाधर्मोवृष ॥
इतिशङ्करभाष्यम् ॥ बलीवर्द्दे ।
उक्षणि । भद्रे । ऋषभे । वृषभे ।
अनडुहि । सौरभेये । गवि ॥ शि
ववाहनवृषस्यस्वरूप यथा । शृङ्गायु
ध । शुक्लकायश्चतुष्पादसितश्चु र
। वृहत्ककुत्कृष्णपुच्छ श्यामस्क
न्धोवृष स्मृतइति ॥ वृषोत्सर्ग
वृषि ॥ तल्लक्षण यथा । चरणानिमु
ख पुच्छ यस्यश्वेतानिगोपते ।
लाक्षारससवर्णश्चतम नीलमितिनि
र्द्दिशेत् ॥ एव विधवृषाभावेऽन्यो
वृषभोयोयस्तोपादेय सोप्युक्त ।
वर्णतस्ताम्रकपिलोव्राह्मणस्यप्रशस्य
ते । तथा । श्वेतोदर कृष्णपृष्ठो
व्राह्मणस्यप्रशस्यते ॥ स्निग्धरक्तेन व
र्णेनक्षत्रियस्यप्रशस्यते ॥ काञ्चना
भेनवैश्यस्यकृष्णेनाप्यन्त्यजन्मन ॥
इति । वृषोत्सर्गकालस्तुअश्वोयान्त
द्वितीयदिनम् । कार्त्तिकोचैत्रोरे
वतीयुताश्विनपूर्णिमाचेति ॥ स्तृ
ङ्गयाम् ॥ चतुर्विधपुरुषमध्येपुरु
षविशेषे ॥ तल्लक्षणन्तु । बहुगुण
बहुवस्त्र : शीघ्रकामोनताङ्ग सक
लरुचिरदेह : सत्यवादीवृषोयमि

ति । तावुरिसच्चे द्वितीयराशौ एतद्राशिजातफलं यथा । स्थिरमतिसुमतिकमनीयताञ्च शलताञ्चिन्तयामुपभोगताम् । वृषगतोऽहिमगुर्भृशमादिशेत्सुकृतिनः कृतिनश्च सुखान्यपि ॥ तल्लग्नजातस्य फलन्तु । वृषलग्ने भवेज्जातो गुरुभक्तः प्रियंवदः । सुखी कृती धनी लुब्धः शूरः सर्वजनप्रियः इति ॥ उत्तरपदस्थः श्रेष्ठे ॥ वासि । वासके । षटरूषे ॥ मूषिके ॥ शुक्रे । वास्तुस्थानभेदे ॥ रिपौ ॥ कामे ॥ बलवति ॥ ऋषभनामौषधे ॥ वर्षति फलमधुकामादीन् । वृषु० । इगुपधेति कः ॥ वृष्यप्रयोगे । श्रीकृष्णे ॥ पुण्ये ॥ वत्सरविशेषे ॥ यथा । कोद्रवाः शालिमुद्गाश्च सक्तुमाषास्तथैव च । महार्घं जायते सर्वं वृषे च सुरवन्दिते ॥ १५ ॥ न० अघि ॥ पिच्छे ॥ वेतसे ॥ त्रि० पुष्यवति ॥

वृषकर्णी । स्त्री० सुदर्शनायाम् । सुदर्शनगुलुच्छ० कृ० गौ० भा० ॥

वृषकर्म्मा । पु० भगवति । वृषोधर्म्मः स च यस्य कर्म्मास्य ॥

वृषकेतु । पुं० कर्णस्य पुत्रे ॥

वृषगन्धा । स्त्री० अजान्त्र्याम् ॥

वृषचक्रम् । न० कृषिकर्मोक्ते वृषाकारचक्रे ॥

वृषण । पुं० मुष्के । अण्डकोषे । वृषणौ भवत सारौ कफाण्डमासमेदसाम् । वीर्यवाहिशिराधारौ वृषणौ पुरुषावहौ ॥ स्थूललिङ्गो दरिद्रः स्याद् एकवृषणो भवेत् विषमैर्वृषणैर्लोलो नृपः स्याद्वृषणैः समैः ॥ प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यो मणिभिर्भवेत् ॥ वर्षति । वृषु सेचने । बाहुलकात् ल्युः । बहुलमन्यत्रेति युज्वा । सम्प्रापूर्वं कत्वा कृष्णाभाव ॥

वृषणश्व । पु० इन्द्रस्याश्वे । उच्चैःश्रवसि । श्वेतहये ।

वृषणवसु । न० इन्द्रस्यवने । नन्दने । कान्दसारे ।

वृषदंशक । पुं० आखुभुजि । बिडाले । वृषान् मूषिकान् दशति । दंश० । अच् । स्वार्थे कन् ॥

वृषध्वजः । पुं० वृषाङ्के । शिवे ॥ वृषो ध्वजचिह्नमस्य ॥ हेरम्बे ॥ पुण्यकर्मणि ॥

वृषा । पुं० कर्णे ॥ महेन्द्रे ॥ वृषभे ॥ तुरगे ॥ वर्षति । वृषु० । कनिन् युवृषितक्षिराजिध्यादिना० कनिन् ॥

वृषनाशनः । पुं० विडङ्गे ॥

वृषपतिः । पुं० शिवे ॥ षण्डे ॥

वृषपत्रिका । स्त्री० वस्तान्त्र्याम् । अजान्त्र्याम् ॥

वृषपर्णी । स्त्री० वृक्षविशेषे । दध्या

स्याम् । चक्राङ्ग्याम् । सुदर्शनायाम् । पुराती॰ इ॰ गौ॰ भा॰ ॥ चाखुपर्ण्याम् ॥

वृषपर्व्वा । पुं॰ अन्धकसूदने । शम्भौ । ईशे ॥ दैत्यप्रभेदे ॥ शृङ्गारिषि ॥ कशेरौ ॥ वृषरूपाणिपर्वाण्यस्य ॥

वृषभ । पुं॰ श्रेष्ठे ॥ गवि । वृषे ॥ औषधीभेदे । शृङ्ग्याम् ॥ वर्षति सूचयभूमिसिञ्चति । वृषु॰ । ऋषिवृषिभ्यांकिदित्यभच् । आदिजिने ॥ कर्णरन्ध्रे ॥

वृषभगति : । पुं॰ हरिहारे । शम्भौ । वृषभेणगतिर्यस्य ॥

वृषभध्वज : । पुं॰ महेश्वरे । शिवे ॥ वृषभोध्वजश्चिह्नमस्य ॥

वृषभाक्ष । पुं॰ श्रीकृष्णे ॥ सर्वकामाभिवर्षकेषश्रियोयस्य । वहुव्रीहाविति षच् । वृषभोधर्मोहष्टिरस्यवा ॥

वृषभाक्षी । स्त्री॰ इन्द्रवारुण्याम् ॥

वृषभानु । पुं॰ सुरभानुपुर्वे । राधिकापितरि ॥

वृषभासा । स्त्री॰ अमरावत्याम् ॥

वृषय । पुं॰ आश्रये ॥ वृषोति । वृञ् वरणे । वृञो षुकदुकौचेतिकयन् ॰ धाती : षुगागमश्च ॥

वृषल : । पुं॰ राजभ्रमे ॥ शूद्रे । चन्द्रगुप्तनृपे ॥ वाजिनि । तुरगे ॥ अधार्मिके ॥ वृष्यति॰ वर्षतिवा । वृषु॰ । वृषादिभ्यश्चिदितिकल । वृषधर्म्मंलुनातिवा । लूञ्॰ । अन्येभ्योपीतिड ॥ वृषलातिवा । ला॰ । क ॥ वृषोहिभगवान्धर्मस्तस्य यः कुरुतेह्यलम् । वृषलंतंविदुर्देवा स्तस्माद्धर्मंनलोपयेत् ॥

वृषलपति । पुं॰ शूद्रे॰ चौराणाराज्ञि ॥

वृषलवृत्ति । पुं॰ शूद्रोपकृप्रवृत्तौ ॥

वृषली । स्त्री॰ शूद्रायाम् ॥ जातित्वान्ङीष् ॥ कौमार्ये ॥ निरुक्तमस्कुर्वन्ति । वृषस्यन्तीचपलयतिभर्त्तारमिति॰ वृषली॰ ब्राह्मणस्यपरिणीताब्राह्मण्यपिवृषलीति॰ श्राद्धभुग् वृषलीतल्पमित्यत्रकुल्लूकभट्ट . ॥ वन्ध्यातुवृषलीज्ञेया॰ वृषलीतुमृतप्रजा । अपरावृषलीज्ञेयाकुमारी- यारजस्वला ॥ पितृगृहेपविवाहितायांरजस्वलायांकन्यायां ॥ यथाऽ विवाह्यपी । पितुर्गेहेचयाकन्यारज : पश्यत्यसस्कृता । भ्रूणहत्यापितुस्तस्या : साकन्यावृषलीस्मृता ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्तेयतंविद्याद्वृषलीपतिमिति ॥ स्वपतिपरित्यज्यपरपतिगामिन्याम् । यथा । स्वपतियापरित्यज्यपरंभृषे॰ वृषायती । वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेदिति ॥

वृषलीपति : । पुं॰ सवर्णामपरिणीय कृतशूद्राविवाहे ॥ वृषल्या पति ॥ यस्तुतावरयेत्कन्याब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपांक्त्यंतंवि द्याद्वृषलीपतिम् ॥ यदिशूद्रांव्रजेद्विप्रोवृषलीपतिरेवस । तापितुर्व्हेसञ्जातरजस्काम् ॥

वृषलीफेन . । पुं॰ शूद्रायाअधररसे ॥

वृषलोचन । पुं॰ मूषिके ॥ त्रि॰ वृषनयने ॥

वृषवाहन : । पुं॰ शिवे ॥

वृषशत्रु : । पुं॰ विष्णौ ॥ त्रि॰ त्रि॰ष: ॥ बिडाले ॥

वृषस्कंधौ । पुं॰भृङ्गरोले ॥

वृषस्यन्ती । स्त्री॰ कामुक्याम् । मैथुनेच्छावत्याम् ॥ वृषनर॰शुक्रलवा॰त्रुक्कल्यात्मन : । सुपयात्मन : क्यच् । अश्वक्षीरवृषलवणानामात्मप्रीतोक्यचौतिसुक् । लट . शतृ । उगितश्चेतिङीप् ॥

वृषा । स्त्री॰ मूषिकपर्ण्याम् ॥ कपिकच्छ्वाम् ॥ वर्षति । वृषिरिगुपधेतिक : । टाप् ॥

वृषाकपायी । स्त्री॰ श्रियाम् ॥ गौर्य्याम् ॥ वृषाकपि स्त्रीतिपुंयोगार्थे॰ वृषाकप्यग्निकुसितकुसिदानामुदात्तइत्यैकारादेशोङीप्च ॥ वर्याम् । शतावर्याम् ॥ जीवन्त्याम् ॥ श्याम् ॥ स्वाहायाम ।

वृषाकपि : । पुं॰ हरे । स्मरहरे ॥ कृष्णे । वासुदेवे ॥ वर्षयात्सर्वकामानांधर्मोवृष । कात्तोयात्भूमिमपादितिकपिर्वराह . । वृषत्वात्कपिरूपत्वाद्वृषाकपि : । कपिर्वराहश्रेष्ठश्चधर्मश्चवृषउच्यते । तस्माद्वृषाकपिप्राहकश्यपोमांप्रजापतिरितिमहाभारतम् ॥ जातवेदसि । अग्नौ ॥ वृषधर्मेनकम्पयति । कंपांकम्पिसलने । कुत्सिड्कम्प्यानंलोपश्चेति॰कृ : । वृषाद्धर्माद्राकम्पयतिदुष्टानितिवा ॥ यद्वा । वर्षतिकामान् । वृषु॰ । इगुपधेतिक । आकम्पयतिपापानि । पूर्ववत्ति । वृषश्चासावाकपिश्च ॥ यद्वा । वृषाइन्द्रेण आम्यते॰आकम्पतेवाऽस्मात् ॥ यद्वा । वृषोधर्मो॰वृषाइन्द्रोवा॰कपिरिवबश्रेयस्य ॥ यद्वा । वृषश्चास : कपिर्वराह . । शाकपार्थिवादि : । अन्येषामपीतिदीर्घ . ॥ यद्वा । वृषाइन्द्रस्य॰अकम् वृषाकम्पिय-ति॰पिबती । अन्तर्भावितण्यर्थो-वा । इन्द्रद्रु . सुप्राप्नोति॰प्रापयतिवादैत्यान्॰रक्षकत्वात् । विष्णिसृष्टापूर्वकत्वान्नत्रुण : । किंपितु आगमशास्त्रज्ञानित्यत्वाद्गुक् ॥

वृषाकर . । पुं॰ माषे ॥

वृषाकृति : । पुं॰ विष्णौ । नारायणे ।

भू० । भुव : सत्तान्तरयोरिति-
क्विप् ॥

वृष्णि . पुं० यादवे ॥ मेषे ॥ श्रीकृ
ष्णे ॥ वर्षति । वृषु० । सृवृषि
भ्यांकिदितिनि ॥ त्रि०पाषण्डे ॥
चण्डे ॥

वृष्णिगर्भ : । पुं० श्रीकृष्णे ॥ वृष्णे
र्गर्भो यस्य स : ॥

वृष्य : । पुं० माषे ॥ न०वाजीकर
णे ॥ त्रि०शुक्रवृद्धिकारकौषधा
दौ ॥ वृष्यति । वृषु० । विभाषाकृ
वृषोरितिक्यप् । पक्षे ख्यतितु०व
र्ष्यम् ॥ वृषायहिते ॥ वृषायका
मुकायहितम् । खलयवमाषेति-
यत् ॥

वृष्यकन्दा । स्त्री० विदार्याम् ॥

वृष्यगन्धा । स्त्री० वृद्धदारके ॥

वृष्यगन्धिका । स्त्री० अतिबलायाम् ॥

वृष्यवल्लिका । स्त्री० विदार्याम् ॥

वृष्या । स्त्री० ऋद्धिनामौषधे ॥ शता
वर्याम् ॥ आमलक्याम् ॥

वृसी । स्त्री० व्रतिनामासने ॥ ब्रह्म
चार्याद्यासने ॥ व्रुवन्त : सीदन्त्य
स्याम् ॥ पृषोदरादित्वाद्व्रुवच्छ
ब्दस्य०वृ०आदेश : । अन्येत्वपीत्य
धिकरणे ड : ॥

वृहच्चक्षु : । पुं० महाचक्षुःशाकेपक्षि
विशेषे । दीर्घपादे । कुलङ्ग०-
भा० ॥

वृहच्चित्त : । पुं० बीजपूरे ॥

वृहच्छल्क । पुं० चिङ्गटमत्स्ये ॥

वृहच्छुक . । पुं० दार्वाघाटे । काठ
कोरवा०इतिख्यातेखगे ॥

वैकट . । पुं० वैकटिके । मणिकारे ।
मणिआरा०ड़०भा०प्र०भेकटी०ड़०
गौ०देशभाषाप्रसिद्धमत्स्ये ॥ यू
नि । जाततारुण्ये ॥ विदूषके ॥

वेग : । पुं० जवे । रंहसि । रये ।
स्यदे ॥ प्रवाहे । ओघे । धारायो
म् ॥ किम्पाके । महाकालफले ॥
रेतसि ॥ मूत्रादिप्रवृत्तौ ॥ यथा ।
वेगान्नधारयेज्जातुर्विणमूत्रयवलट्
च्छ धाम् ॥ अपिच । वेगरोधेन
र्व्योद्धव्यवल्कोधवेगत : ॥ पुन
श्च । स्वभावत : प्रवृत्तानांमलादी
नांजिजीविषु : । नवेगान्धारयेद्वी
र कामादीनाञ्चधारयेदिति ।
पृथिव्यादिचतुष्टयमनोवृत्तौसंस्का
रे । वेजनम् । ओविजीभयचलन
यो : । घञ् ॥

वेगनाशन : । पुं० श्लेष्मणि ॥

वेगवान् । पु० ईश्वरे ॥ त्रि० वेगि
नि ॥ वेगोजवोऽस्यास्ति । मतुप् ॥

वेगवती । स्त्री० अर्द्धसमवृत्तभेदे ॥
यथा । विषमेप्रथमाकरहीनदोध
कमेवद्दिवेगवतीस्यात् ॥ यथा ।
स्मरवेगवतीव्रजरामाकेशववंशरवै
रतिमुग्धा । रभसाद्गुरुमृगवाय

न्तोकेलिनिकुञ्जगेहायनगाम ॥
वेगसर । पु० वेगिहये ॥
वेगित । त्रि० सञ्जातवेगे । वेगविशिष्टे ॥ वेगः सञ्जातोऽस्य । तारकादित्वादितच् ॥
वेगी । पुं० श्येनपक्षिणि ॥ त्रि०वेगवति । तरस्विनि । जाङ्घिके ॥ अतिशयितोवेगोऽस्य । अतइनि ॥
वेगिहरिण । पुं० स्रीकारीमृगे ॥
वेङ्कट । पुं० द्रविडदेशस्थेऽचलविशेषे ॥
वेचा । स्त्री० मूल्ये ॥ विचिर्० । अच् । टाप् ॥ वेचामूल्यञ्चवेतनमितिहलायुध. ॥
वेजानी । स्त्री० सोमराज्याम् ॥
वेजित : त्रि० भीते ॥
वेडम् । न० सान्द्रविच्छिन्नचन्दने ॥
वेडा । ) स्त्री० नौकायाम् ॥
वेडी । )
वेण । पुं० अङ्गात्सुनीथायामुत्पन्ने पृथो पितरि. ॥ सतपूर्वेणतुजातिनवेणोपिविद्विषयौ । पुन्नाम्नोनरकात्पात. सतेनसुमहात्मनेतिविष्णुपुराणम् ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वैदेहकेनत्वम्बष्ठामुत्पन्नोवेणउच्यतइतिमनु : ॥
वेणा । स्त्री० भारतवर्षस्थनदीविशेषे ॥
वेणि । स्त्री० वेण्याम ॥ वेति० वीयतेवा । वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु । वीज्याज्वरिभ्योनि । बाहुलकात्सुत्वम् ॥ यद्वा । वेणति । वेणृ० । इन् ॥
वेणिवेधिनी । स्त्री० जलौकायाम् ॥
वेणी । स्त्री० केशबन्धे । प्रवेण्याम् । प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे ॥ यथा । जटानेयवेणीकृतकचकलापोनगरलंगलेकस्तूरीयशिरसिशशिरेखानतिलकम. । इयभूतिर्नाङ्गेप्रियविरहजन्माधवलिमापुरारातिर्भ्रान्त्याकुसुमशरकिमाव्यथयसि ॥ देवताडे ॥ नद्यादेरन्तरे ॥ सेतौ ॥ प्रवाहे ॥ मेष्याम् ॥ नदीविशेषे ॥ वेणति । वेणृगतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ इन् । कृदिकारादितिङीष् ॥
वेणीर. । पुं० अरिष्टवृक्षे ॥
वेणु : । पुं० नृपविशेषे ॥ त्वक्सारे । वंशे ॥ वंशवाद्ये ॥ यथा । महानन्दस्तथानन्दोविजयोयजयस्तथा । चत्वारउत्तमावंशामतङ्गमुनिसम्मता ॥ दशाङ्गुलोमहानन्दोनन्दएकादशाङ्गुल । द्वादशाङ्गुलमानस्तुविजय परिकीर्त्तित । चतुर्दशाङ्गुलिमितोजयइत्यभिधीयते ॥ वेणति । वेणृगत्यादौ । बाहुलकादु ॥ यद्वा । अ

अति । अजिवृरीभ्योनित्त्य तिगुः । अजीनी ॥

वेणुकम् । न० तोत्रे । गजस्येदमर्द्दे । वेणुनानिर्वृत्तम् । निर्वृत्ते घद्यूताद्भिम्यश्चेतिठक् । इसुसुक्तान्तात्कः । संज्ञापूर्वकत्वान्नवृद्धिः ॥

वेणुकर्कर : । पुं० करीरवृक्षे ॥

वेणुज . । पुं० वेणुयवे ॥

वेणुदारी । पुं० नरकासुरे ॥ बाणासुरासुरे ॥

वेणुध्म । पुं० वैणविकी । वंशीवादके ॥ वेणुधमति । ध्मा० । आतोनुपसर्गेकः ॥

वेणुपत्री । स्त्री० वंशपत्रीतृणे ॥

वेणुयव । पुं० वंशतण्डुले । वंशयवे ॥

वेणुवाद्य । पुं० वैणवे ॥

वेणुबीजम् । न० वंशयवे ॥

वेण्वा । स्त्री० तीर्थविशेषे ॥

वेण्वासङ्गम : । पुं० तीर्थविशेषे ॥

वेत । पुं० वेत्रे ॥ श०रा०नि० ॥

वेतनम् । न० कर्मकरस्य०भृतौ । कर्मण्यायाम् । विधायाम् । भृत्याकाम् । निर्वेशे । कामकराङ्क०इ०भा० ॥ जीवनोपाये । आजीवे ॥ रूप्ये ॥ वीयतेऽनेन । वीगत्यादौ । वीपतिभ्यांतनन् ॥

वेतस : । पुं० लताविशेषे । रथे । अम्बुपुष्पे । विदुले । शीते । वानीरे । वञ्जुले । वेत०श०भा० ॥ अवभावप्रकाशे । वेतसोविदुलोनम्रोवञ्जुलोदीर्घपत्रकः । मादेयोगम्भपत्रगलताम्लौकसम्भूतस्तथा ॥ नदीकूलप्रियस्त्वन्य सुशीतोघनपुष्पकः । जलजातस्तोयकामोविदुलोजलवेतसः ॥ वेतस ' शीतलोदाहशोथार्शोयोनिरुग्व्रणान् । हन्तिवीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान् ॥ अयनम् । कृत्० । नपुंसकृकृतिम : । वाभिकल्पस्य०वृतस्यार्त०मरिति । प्रोअन्तकर्मणि । अतोनुपेतिकः ॥ यदा । अयते । वेञ् । वेञ्सुट्चेत्यसच् । वाङ्गुलकादाखम ॥

वेतसाम्ल . । पुं० अम्लवेतसे ॥

वेतसी । स्त्री० वेतसे ॥

वेतसीका । स्त्री० तीर्थविशेषे ॥

वेतस्वान् । त्रि० बहुवेतसदेशे ॥ वेतसा . सन्त्यत्र । कुमुदनडवेतसेभ्योड्मतुप् । मादुपधायाश्चेतिवः ॥

वेताल : । पुं० द्वारपाले ॥ भूताधिष्ठितशवे ॥ अकस्मान्नभस्याभासमानभूतविशेषे ॥ शिवगणाधिपविशेषे ॥

वेत्ता । त्रि० वेदितरि । ज्ञातरि ॥ वेत्ति । विद० । तृच् ॥

वेत्र : । पुं० वेते । योगिदण्डे । सुदण्डे ॥ वीयते । वीगत्यादिषु । गुधृवीपचिवचीत्यादिना०त्र : ॥ वं

षे ॥ फलिन्याम् ॥ पुं॰ असुरविशे
षे ॥
वेत्रधर . । पुं॰ द्वारपाले ॥
वेत्रधारकः । पुं॰ द्वा स्थिते ॥
वेत्रवान् । त्रि॰ वेत्रधारके ॥
वेत्रवती । स्त्री॰ नदीविशेषे ॥ सा तु मा
लवदेशात् कालपीसमीपे यमुनायां
मिलिता ॥ वेत्रासुरमालवि ॥ वेत्रा
णिसन्त्यस्याम् ' मतुप् । ङीप् ॥
वेत्रावती । स्त्री॰ वेत्रवत्यानद्याम् ॥
वेत्रासनम् । न॰ वेत्रनिर्मितासने ।
आसन्द्याम् ॥ स्याद्वेत्रासनमासन्दी
ति हेमचन्द्रः ॥
वेत्रासुर । पुं॰ असुरविशेषे ॥
वेत्री । पुं॰ द्वारपाले ॥ त्रि॰ वेत्रयुक्ते ॥
वेद । पुं॰ आम्नाये । श्रुतौ । अनो
पगृहीतवर्णात्मकापौरुषेयवाक्ये ॥
वेदयति बोधयति आत्मानम् । विद
ज्ञाने । कृत्यतोऽस्मात् घञ्
॥ नार्थं बुद्ध्वा वेदसृष्टिः . कालिदासा
दिवाक्यवत् । किन्तु व्यासबुद्धा यत्नो
तृस्यादतोऽपौरुषेयता ॥ यथाहुरा
र्यायामाचार्याः । वेदोऽनादितया
वा यद्वा परमेश्वरप्रणीततया । भवति
परमप्रमाणं बोधेनास्तित तस्य परतो
वा ॥ नापेक्षते यदन्यद्यदपेक्षन्तेऽ
खिलानिमानानि । वाक्यतल्लिंग
मानोमानत्र स्यात्यतीन्द्रियावगतौ ॥
मानं प्रबोधयन् बोधमानेनयेत् भुक्त्वा

न्तं । एभोभिर्वेदहनदग्धं वाञ्छन्ति
तेमहात्मानः ॥ ४६ ॥ वेदोनादिर
मुष्यव्यञ्जकईशः स्वयंप्रकाशात्मा ।
तदभिव्यक्तिमुदीक्ष्यप्रोक्तोसौसूरि
भिः प्रमाणमिति ॥ रूपाणामव
लोकेचक्षुरिवान्यत्प्रकारणद्दृष्टम् । त
द्वदहष्टावगतौ वेदवदन्योनवेदको हे
तुः ॥ निगमेषु निश्चितार्थं तन्त्रं क
श्चिद्यदिप्रकाशयति । तदिदमनुवा
दमात्रप्रामाण्य तस्य सिद्धांति न कि
ञ्चित् ॥ अग्रहयवतिनिगमे साधयति
द्वैतमेवएकोंश । अद्वैतमेववस्तुप्र
तिपादयति प्रसिद्धमपरोंश ॥ ५० ॥
स च वेदा मन्त्रब्राह्मणभेदाद् द्विविधः ।
विधिमन्त्रनामधेयनिषेधार्थवादभेदा
त्पञ्चविधश्च भवति ॥ अज्ञातज्ञा
पको वेद इति प्रमाणविदः ॥ अ
तो वेदार्थज्ञानप्रशंसामाह कूर्मपुराण
म् । नवेदपाठमात्रेण सन्तोषंका
रयेद्बुधः । पाठमात्रावसानस्तु पङ्के
गौरिवसीदति ॥ योऽधीत्यविधिव
द्विप्रो वेदार्थं न विचारयेत् । स सान्व
यः शूद्रसमः पात्रतां न प्रपद्यते ॥
व्यासश्च । वेदस्याध्ययनं सर्वं धर्म शा
स्त्रस्य वापि यत् । अजानतार्थं तत्स
र्वं तुषाणां कण्डनं यथा ॥ यथा पशुभी
रवाहीनतस्य भजते फलम् । द्विजस्त
थार्थानभिज्ञो न वेदफलमश्नुते ॥ पा
ठमात्रवतो नित्यं द्विजातेः स्वार्थवर्जि

तान् । पशून्निबध्नतान्प्राप्नोत्याद्य
माचे चापिनार्चयेत् ॥ श्रुतहीनम
धीतयन्नेहनः सुचतन्नवेत् । श्रुतन्तु
केवलमपिसमुद्धारायकल्पते । यो
धीतेनार्थंतत्त्वज्ञस्तस्यतद्धारणाहथा
। भारवाहीसभृतकः केवलंशुभा
गभवेत् ॥ तस्मादर्थंपरिज्ञानेयत्नः
कार्योविजानता । ज्ञानकर्मसमु
च्चयुक्तार्थंकथितमया ॥ अधीतश्रुत
संयुक्तं तथाश्रेष्ठंनकेवलम् । अधीत्य
यत्किञ्चिदपितदर्थमवबुध्यच । स्व
र्गलोकमवाप्नोतिधर्मानुष्ठानविद्द्वि
जः इति । अपिच । वेदार्थज्ञोऽज
पजप्त्वातथैवाध्ययनंद्विजः । कुर्व
न्स्वर्गमवाप्नोतिनरकान्तुविपर्यये । इ
तिव्यासः ॥ मनुः । वेदशास्त्रा
र्थतत्त्वज्ञोयत्रतत्राश्रमेवसेत् । इहै
वलोकेतिष्ठन्सब्रह्मलोकायकल्पते
इति । व्यासः । समुच्चितस्तोक
मपिश्रुताधीतविशिष्यते । चतुर्णा
मपिवेदानांकेवलाध्ययनाद्द्विजाः ॥
अज्ञेभ्योग्रन्थिनः श्रेष्ठाग्रन्थिभ्योधा
रिणोवराः । धारिभ्यस्त्वर्थतत्त्वज्ञा
स्तेभ्योप्यध्यात्मचिन्तकाः ॥ पुस्त
केवेदलिखननिषेधः पाद्मोत्तरख
ण्डे ११० अध्यायेयथा । वेदस्यलेख
नंकृत्वायः पठेद्ब्रह्महाभवेत् । पुस्त
कंवाप्यहेस्थाप्यवज्रपातोभवेद्ध्रुवमि
ति ॥ विदज्ञानेनधर्मम् । विदन्ता

ने । इलर्थे तिघञ् ॥ वेदार्थेवेदम
हेतुत्वाद्व्याकरणे ॥ व्याकरणेऽपि
पदादिविभागशक्त्यावेदादयोज्ञाय
न्ते ॥ अनुभवे । भावेघञ् ॥ कुशो
॥ कोशे ॥ इन्द्रियादिदेवताप्रकाश
के ॥ सौनशरीरावच्छेदेनभगवद्व्या
क्यमितिन्यायशास्त्रम् ॥

वेदगर्भः । पु० अजयोनौ । ब्रह्मणि
॥ ब्राह्मणे ॥ वेदोगर्भेयस्यसः ॥

वेदगर्भा । स्त्री० दुर्गायाम् । वेदजन
यित्र्याम् ॥ अस्यमहतोभूतस्यनिश्व
सितमेतदृग्वेद इत्यादिश्रुतेः । म
मैवाज्ञापराशक्तिर्वेदसंज्ञापुरातनी
। ऋग्यजुःसामरूपेणसर्गादौसंप्रव
र्तते इतिकूर्मपुराणे द्वादशाध्याये श्री
भगवद्वाक्यम् । तथाचचत्वारोवेदाः
साङ्गाः सरहस्याबहुधाभिन्नाः । ए
कशतमध्वर्युशाखा । सहस्रवर्त्मा
सामवेदः । एकविंशतिधाबाह्वृच्य
म् । नवधाथर्वणोवेद इतिमहाभाष्य
म् ॥

वेदज्ञ । त्रि० वेदपारगे ॥ वेदंजानाति
। ज्ञा० । आतोनुपसर्गेकइतिकः ॥

वेदनम् । न० अनुभूतौ । संवेदने ॥
विज्ञाने । ल्युट् चेति० ल्युट् इति
त्वम् ॥ विवाहे ॥

वेदना । स्त्री० ज्ञाने ॥ दुःखे । पी
डायाम् ॥ विदवेदनाख्यानानिवा
सेषुचुरादिः । आसेतियुच् ॥ व

दृ। विद्वान्। वस्त्रिवन्दिविदिभ्य श्चेतिवाच्यमितियुच्॥

वेदनास्कन्ध। प० विषयज्ञानप्रपञ्चे। विज्ञानस्कन्धजन्ययो सुखदुःखयो याप्रियाप्रियानुभवविषयस्पर्शेसुख दुःखतदुभयितविशेषावस्थाचित्तस्य जायते० सवेदनास्कन्धइतिवाचस्पतिः। सुखादिप्रत्ययोवेदनास्कन्ध इत्यानन्दगिरि।

वेदनिन्दकः। पु० नास्तिके। वेदनिन्दाकरे॥ वेदमिन्दति। णिदिकुत्सायाम्। ण्वुल्॥

वेदपारग। पु० मन्त्रब्राह्मणात्मकशाखाध्यायिनि॥ त्रि० अवगतवेदार्थतत्त्वे० ज्ञानिनि० सन्न्यासिनि॥ वेदस्यपारगच्छति। गम्लृ०। अन्तात्यन्तेतिगमेर्डः॥

वेदभाग। पुं० मन्त्रब्राह्मणयो॥ पूर्वैरुदाहृतेषुहेत्वादिषु। तेयथा। हेतुनिर्वचननिन्दाप्रशंसासंशयोविधि। परकृतिः पुराकल्पोव्यवधारणकल्पनेतिहेत्वादय॥

वेदमाता। स्त्री० गायत्र्याम्॥ सर्वेशास्त्रादिजाः प्रोक्तान्नमेवानवेष्णवा। उपासतेद्यादिदेवींगायत्रींवेदमातरम्॥ अपिच। योधीतेऽहन्यहन्येतांसावित्रींवेदमातरम्। विज्ञायार्थंब्रह्मचारीसयातिपरमांगतिमिति॥ दुर्गायाम्॥

वेदमार्ग। पुं० वेदबोधितेपथि॥ यथा। कलौचैनिरभिद्यन्तेसितबोधवर्त्तोश्वरे। पाखण्डिनामसद्वादैर्वेदमार्गाः कलौयथेतिश्री०। अपिच। एतस्माद्वेदमार्गाद्वियदन्यदिहजायते। तत्सर्वंदुष्कर्मविज्ञेयरौद्रमेव विवर्जितमितिव०पु०॥

वेदवती। स्त्री० कुशध्वजराजकन्यायाम्॥ विवेकस्यप्रतीहार्याम्। वेदविद्याभिमानिन्यांदेवतायाम्॥

वेदवदनम्। न० व्याकरणे॥ यथा। योवेदवेदवदनसदनंहिसम्यग्ब्राह्म्याः सवेदमपिवेदकिमन्यशास्त्रम्। यस्मादतः प्रथममेतदधीत्यधीमान्शास्त्रान्तरस्यभवतिश्रवणाधिकारीतिसिद्धान्तशिरोमणिः॥ योगिनोतत्त्वेप्रथमेवपाठ॥

वेदवादरत। त्रि० वेदेयेसन्तिवादाः अर्थवादाः। अक्षय्यंहवैचातुर्मास्ययाजिनः सुकृतंभवतीत्येवमादयस्तेष्वेवरते। वेदार्थसत्यत्वेनैवमेवैतदितिमिथ्याविश्वासेमसन्तुष्टे॥

वेदवास। पुं० ब्राह्मणे। वेदस्यवासोयस्मिन्॥

वेदवित्। पुं० कर्मब्रह्माख्यवेदार्थविदि। कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकसर्ववेदार्थविदि॥ वेदज्ञे॥ कर्म्वेदादयोवेदाश्चत्वारस्तत्त्वानीतिवेदविदुदति॥ वेदवेदार्थ

ऋवेत्ति•विद्यते•विन्ते वा । विद
ज्ञाने•विद्सत्तायाम्•विद्विचार
णे वा । सत्खिति•क्विप् ॥
वेदव्यास '। पु• शुकदेवस्यपितरि ।
माठरे । द्वैपायने । पाराशर्य्ये ।
बादरायणे ॥ वेद व्यस्यति । असु•
। अण् ॥ यथा । वेदमेकंचतुर्भेदंकृ
त्वाशाखाशतैर्विभु ।करोतिबहु
लभूयेवेदव्यासस्वरूपधृक् । द्वापरे
तुयुगेविष्णुर्व्यासरूपीमहामुने । वे
दमेकंसबहुधाकुरुतेजगतोहित ॥
यथासुकुरुतेतन्वावेदमेकंपृथक्प्रभु.
। वेदव्यासाभिधानातुमासामूर्त्ति
र्मधुद्विषइतिविष्णुपुराणम् ॥
वेद: । न० धने ॥ विद्यते•लभ्यते ।
विद्लृलाभे । असुन् ॥
वेदसार '। पुं• श्रीदेवीभागवते ॥
वेदसन्न्यासी । पुं• वेदविहिताग्निहो
त्रादिकर्मत्यागिनि ॥
वेदस्वामी । पुं• आगमपे । आगमा
धिपतौ ॥ यथा । कालिदास '। सु
कृशनोज्ञारकराजपुत्राज्ञो य: क्रमे
णागमपा ' प्रवीणे .। निजागमे
शास्त्रनिमेखलायामभ्यस्तदाचारकरो
निरुक्त . ॥ इति ॥ सदाचारकर :
•तेषांविप्रादीनामाचारकृत्•उक्त
म् ॥
वेदायणी । स्त्री• सरस्वत्याम् ॥
वेदाङ्गम् । न० शिक्षाकल्पोव्याकरणं
निरुक्तंछन्दोज्योतिषमितिस्मृतिषो
धितेषुषट्सु ॥ तत्राकारादिवर्णा
नामुच्चारणप्रयत्नबोधिकाअकुहवि
सर्जनीयानांकण्ठइत्यादिकाशिक्षा
। यागक्रियाणामुपदेश . कल्प .।
साधुशब्दान्वाख्यानव्याकरणम् ।
वर्णागमोवर्णविपर्ययश्चेत्यादिनानि
र्वचनोक्तं निरुक्तम् । श्रुतिच्छन्दसा
प्रत्यायकछन्द '। यज्ञादिगणन
शास्त्रंज्योतिषमितिसङ्क्षेप ॥
वेदस्यअङ्गम् ॥ पुं• परमेश्वरे ॥
वेदाअङ्गभूतायस्य ॥
वेदादि । न० प्रणवे ॥
वेदानुवचनम् । न• नित्यस्वाध्यायल
क्षणे मन्त्रब्राह्मणाध्ययने ॥ वेदस्यअ
नुवचनम् ॥ वेदोऽनूच्यतेगुरूच्चार
णानन्तरपठ्यतेइति ॥ अथवा । वे
दस्यअनुपश्चात्गुरूपासनाऽनन्तरम्
वचनम्•पठनम् ॥
वेदान्त '। पुं• उपनिषदि ॥ तदुपका
रिशारीरकसूत्रादौ ॥ तथाचवेदाना
मन्तोऽवसानभागोवेदान्तइतिव्युत्प
त्तियोगात्मुख्योवेदान्तशब्दोवेदशि
रोभागोत्तरभेदेषूपनिषत्सु•शारीरका
दौतूपचरितइति ॥ वेदानामन्ते
निर्णये । प्रस्थानत्रयात्मकेशास्त्रे
॥ आसुप्तेरामृते 'कालंनयेद्वेदान्त
चिन्तयेतिसन्न्यासिनोयावज्जीवाग्नि
होत्रप्रयोगवन्नित्यत्वंमविहितंश्रवणं

मचन्द्र ॥

वेदित । त्रि० ज्ञापिते ।

वेदितव्य । त्रि० विदुरे । ज्ञातरि ॥ इ० ह० चन्द्र ॥

वेदी । पु० पण्डिते ॥

वेदी । स्त्री० सरस्वत्याम् ॥ वेदिश ब्दार्थे ॥

वेदीतीर्थम् । न० तीर्थविशेषे ॥

वेदीश । पु० द्रुहिणे । विधौ । ब्रह्मणि ॥

वेदोदय । पु० रवौ । सूर्ये ॥

वेदोदित । त्रि० वेदोक्ते ॥

वेदोपकरणम् । न० शिक्षादिवेदाङ्गे ॥ वेदस्योपकरणम् ॥

वेद्धव्य । त्रि० ताडयितव्ये ॥

वेद्य । त्रि० वेदितव्यवस्तुनि । ज्ञेये । सविद्विषयभूते ॥ वेदितु योग्य: । विदेर्ज्ञानार्थात्कर्मणियत् । सचार्हकृत्यतृचश्चेत्यर्थे । इत्याहभगवान शङ्कराभाष्ये । नि: श्रेयसार्थिभिर्वेदनार्हत्वाद्वेद्यइति ।

वेध: । पु० व्यधे । वेधने ॥ वेधनम् । विधविधाने । घञ् ॥ घेपणे ॥ गभीरतायाम् । गहरा० इति भाषाप्र० ॥

वेधक । पु० अम्लवेतसे ॥ कर्पूरे । न० धान्याके ॥ त्रि० वेधकर्त्तरि ॥

वेधनम् । न० वेधे । बींधना० इ० भा० ॥ विध० ल्युट् ॥ वेधसाधने ॥ विध्यतेऽनेन । करणेति ल्युट् ।

वेधनिका । स्त्री० मणिशङ्खादिवेधनोपकरणे । आस्फोटन्याम् । भौरी० वर्मी० इ० भा० ॥ विध्यतेऽनया । विधविधाने । ल्युट् । स्वार्थेक ॥

वेधमुख्य । पु० कर्चूरे । वेधिमुख्य ॥

वेधमुख्यक । पु० कर्चूरके ॥ द्राविडके । काल्यके॥ स्वार्थेकन् ॥

वेधमुख्या । स्त्री० कस्तूर्याम् वेधिमुख्या ॥

वेधा । पु० परमेष्ठिनि । धातरि ॥ बुधे ॥ विष्णौ । हृषीकेशे ॥ रवौ ॥ श्वेतार्के ॥ विदधाति । डुधाञ् । विधाञोवेधचेतिविधांदेशोऽसिप्रत्ययस्य ॥ विधति । विधविधाने । असुन्वा ॥

वेधसम् । न० ब्रह्मतीर्थे । अङ्गुष्ठमूले । इ० श० च० का० ॥

वेधित: । छिद्रिते । विद्धे । विंधा० बींधा० इ० भा० ॥ वेध्यतेस्म । विध० ण्यन्तोऽनेकार्थ । क्त: ॥

वेधी । पु० अम्लवेतसे ॥ त्रि० वेधकर्त्तरि ॥ वेधविशिष्टे ॥

वेधिनी । स्त्री० रक्तपायाम् ॥ मेथिकायाम् ॥

वेध्यम् । न० लक्ष्ये ॥ त्रि० वेधनीये ॥

वेन । पु० प्रजापतौ ॥ वनति ।

अज० । धापूवस्थ्यतिभ्योम । अजेर्वी ॥

वेन्ना । स्त्री० नद्याम् ॥ वनति । वन शब्दे सम्भक्तौ वा । वनेरिच्चोपधाया वृति० न । लघूपधगुण ॥

वेपथु । पुं० कम्पे ॥ वेपनम् । टुवेपृ कम्पने । ट्वितोऽथुच् ।

वेपनम् । न० कम्पने । टुवेपृ० । ल्युट् ॥

वेप । न० धनमद्ये ॥

वेपमान । त्रि० भयेनकम्पमाने ॥

वेम । पुं० वायदण्डे ॥ यथा । वायदण्ड पुंसिवेमावेमोनाविमनट्ट योरितिश०र०अ०ली० ॥

वेमा । पु० न० वायदण्डे । तन्तुवायदण्डोवेयु०ड०गौ०भा ॥ वयति० अनेन । वेञ्० । वेञ सर्वेञ्चति०डुमनिच् । अर्द्धर्चादि । सामनी०वेमनी०इतिक्लीप्रयोगात् ॥

वेमन । त्रि० वेमवति ॥ वेमाऽस्यास्ति । पामादित्वात्०न : ॥

वेरम् । न० कलेवरे । शरीरे ॥ वार्त्ताकौ । वृन्ताके ॥ कुङ्कुमे । घुसृणे ॥

वेरकम् । न० कर्पूरे ॥

वेरट । पु० नीचे ॥ न०बदरीफले ॥ त्रि०मिश्रीकृते ॥

वेलम् । न० आरामे । उपवने । क्षिमवने ॥

वेला । स्त्री० काले समये ॥ मर्यादायाम् । सीमायाम ॥ होरायाम् ॥ यथा । चतुर्विंशतिवेलाभिरहोरात्र प्रचक्षते । पश्चिमाद्दर्हरान्वाश्चिहोरा याविद्यातेऽभवू० वह्निपुराणम अब्धे कूले ॥ अश्वेर्विकारे । अव्यास्यविकृती ॥ अक्लिष्टमरणे ॥ रागे ॥ ईश्वरस्यभोजने ॥ बुधस्यभार्यायाम् ॥ वाचि ॥ वेलति । वेल्ल गतौ । पचाद्यच् ॥ वेल्यते०अनया वा । वेलकालोपदेशे । गुरोश्चहल इत्य० । टाप् ॥

वेलाकूलम् । न० ताम्रलिप्तदेशे ॥

वेलायाम् । अ० कालपरिमाणे ॥

वेल्लम् । न० पुं०विडङ्गे ॥ वेल्लति । वेल्लचलने । पचाद्यच् ॥ अभ्यनुज्ञाने ॥

वेल्लजम । न० मरिचे ॥ वेलनम् । वेल्ल० । घञ् ॥ वेल्ल जायते । जनौ० । अन्तर्भावितण्यर्थ० । अन्ये ष्वपीतिड ॥

वेल्लनम् । न० भूमौवश्वस्यलुठने । लुठने । अश्वपरिवर्त्तने ॥ बलनड० प्र०रोटिकानिर्माणार्थकाष्ठे ॥

वेल्लनी । स्त्री० मालादूर्वायाम् ॥

वेल्लन्तर । पुं० सकलदेशप्रसिद्धवृक्ष विशेषे । वीरतरौ । तथा । वेल्लन्तरोऽभवतिवीरतरु . प्रसिद्ध श्वेतासितारुणविलोहितनीलपुष्प : ।

आज्जातितुल्यकुसुम भमिसूक्ष्म पत्र स्रोतुकाटकोषजलदेशजएष स्रग . ॥ वेल्लन्तरोरसिपाकेतितक्तस्तू आकफापह । मूत्रोघातश्मजि दृग्याशेथेनिसूत्रानिलार्त्तिजित् ॥

वेल्लहल . । पुं॰ कौशिनागरे ॥

वेल्लि । स्त्री॰ लतायाम् ॥

वेल्लिकाख्या । स्त्री॰ वृक्षविशेषे । मरु न्मालायाम । विल्वपत्र्याम् ॥

वेल्लितम् । न॰ चेष्टिते ॥ गमने ॥ त्रि॰ कुटिले ॥ विधते । कम्पिते ॥ वेल्लितस्म । वेल्ल॰ । गत्यर्थेतिक्त ॥

वेश '। पु॰ वेश्यागृहे ॥ गृहमात्रे ॥ नेपथ्ये । अलङ्कारादिकृतशोभाया म् ॥ विशन्त्यत्र । विशप्रवेशने । इ लश्चेतिघञ ॥ विशति॰वेशनम्॰ विश्यतेवा । विश॰ । पदरुजविश स्पृशोघञ ॰अज्वा ॥ पण्यस्त्रिया . भृतौ ॥ प्रवेशे ॥

वेशक : । पुं॰ गृहे ॥ वेशएव । स्वा र्थेका : ॥

वेशजोवी । त्रि॰ वेशवति ॥

वेशदान '। पु॰ सूर्य्यशोभायाम् ॥

वेशधारी । पुं॰ कललपक्षिनि ॥ त्रि॰ वेशधारके ॥

वेशनम् । न॰ चणकचूर्णे । वेसण॰ हू॰भा॰प्र॰ ॥ यथा । दोलयञ्चणका नाम्तुनिस्तुषायन्त्रपेषिता '। तञ्चू र्णेवेशनप्रोक्तपाकशास्त्रविशारदैः ॥

वेशनमोदक '। पु॰ बुंदियाकालाडू॰ इतिख्यातेखाद्यप्रभेदे ॥ यथा मुक्तामोदकवत्कार्य्योवेशनस्यचमो दका , । तेवल्याल्लघव : शीतो : किञ्चिद्वातकरास्तथा । विष्टम्भिनो ज्वरघ्नाश्चपित्तरक्तकफापहा : ॥ *

वेशनवटिका स्त्री॰ पकौरो॰इ॰प्र॰ खाद्यद्रव्ये वटिकावेधनस्यापिक थितावानिमज्जिता । रुच्याविष्टम्भ जननीबल्यापुष्टिकरीस्मृता ॥

वेशन्त । पु॰ पल्वले । अल्पसरसि ॥ विशन्त्यत्रभेकादय '। विश॰ । जृविशिभ्याझच् ॥ वन्हौ ॥

वेशर : । पुं॰ अश्वतरे ॥

वेशवार ' । पुं॰ वेगर॰ हू॰भा॰प्र॰ मां सादिसाधकद्रव्य ॥ यथा । द्रव्या णिवेशवारस्यनागरंजीदलानिहि । तडुलाश्चलवङ्गानिमरिचानिसमा सत . ॥

वेशि '। पुं॰ जन्मकालेसूर्याक्रान्तरा शेर्द्वितीयेराशौ ॥ यथा । सूर्याद्द्वितो यगृहवर्त्तिस्थानप्रकीर्त्तितंवबुधैरा लि ॥

वेशोभाता । स्त्री॰ पुचदालीलता- याम् ॥

वेश्मकलिङ्ग '। पुं॰ चटके ॥

वेश्मकूल : । पु॰ चचेण्डायाम् ॥

वेश्म । न॰ गृहे । सद्मनि ॥ विशन्त्य त्र । विश॰ । मनिम् ॥

वेश्मनकुल । पुं॰ गन्धमूषिके ॥

वेश्मभू । स्त्री॰ गृहरचनावच्छिन्नभूमौ । वास्तुनि ॥ वेश्मनोभूः ॥

वेश्यम् । न॰ वेश्यालये ॥ वेशेभव । दिगादित्वाद्यत् ॥

वेश्या । स्त्री॰ वारस्त्रियाम् । गणिकायाम् । रूपाजीवायाम् ॥ वेशेनशैपण्येनसम्पद्यते । कर्मवेशाद्यत् ॥ वेशेवेश्यागृहेभवावा । दिगादित्वाद्यत् ॥ वेश प्रवेशे । सत्यस्यवा । धन्येभ्योपीतियत् ॥ पाठायाम् ॥

वेश्यागण : । पुं॰ वेश्यावारे । वेश्यासमूहे ॥

वेश्याचार्य्य । पुं॰ पीठमर्दे ॥

वेश्याजनसमाश्रय । पुं॰ । गणिकागृहे । वेशे ॥ वेश्याजनस्यसमाश्रयोवासस्थानम् ॥

वेश्यालय : । पुं॰ वेशे ॥

वेष । पुं॰ वेशे । प्रसाधने । अलङ्कारेरचनादिकृतशोभायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । घञ् ।

वेषण । पुं॰ कासमर्दे । पचोपस्करे ।

वेषणा । स्त्री॰ वितुन्नके । धन्याके ॥

वेष्ट : । पुं॰ वेष्टने ॥ निर्यासे ॥ श्रीवेष्टे । सरलरसे । वेष्टते । वेष्टवेष्टने । घञ् ॥

वेष्टक । पुं॰ कुष्माण्डे । पुष्पफले ॥ प्राचीरे । वृतौ ॥ न॰ उष्णीषे ॥ निर्यासे ॥ श्रीवेष्टे ॥ त्रि॰ वेष्टनकारके संवेष्टके ॥

वेष्टनम् । न॰ कर्णशष्कुल्याम् ॥ उष्णीषे ॥ मुकुटे ॥ वृतौ ॥ गुग्गुलौ ॥ व्यावर्तने । वेठन॰ लपेटन॰ इ॰ भा॰ प्र॰ ॥

वेष्टनक । पुं॰ रतिबन्धविशेषे ॥ यथा । ऊर्द्धगपादमेकस्मभुजान्तरैर्वेष्टयेद्यदि । कान्तकण्ठाश्रितानारीबन्धोवेष्टनक स्मृत ॥

वेष्टनवेष्टक । पुं॰ रतिबन्धविशेषे ॥ यथा । ऊर्द्ध्वपादद्वयनार्याभुजाभ्यां वेष्टयेद्यदि । कराभ्यांकण्ठमालिङ्ग्यबन्धोवेष्टनवेष्टक ॥

वेष्टनिका । स्त्री॰ वेढमिकायाम् ॥

वेष्टवंश । पुं॰ कण्टकिनि ॥

वेष्टसार । पुं॰ श्रीवेष्टे ॥

वेष्टित । त्रि॰ वलयिते । संवीते । रुद्धे । आवृते ॥ न॰ लासके ॥ स्त्रीणांकरणान्तरे ॥ वेष्ट्यतेस्म । वेष्टवेष्टने । क्त ॥

वेष्प । पुं॰ जले । नीरे । पानीये ॥ विवेष्टि । विष्लृ॰ । पानीविषिभ्यः प । कुतिप ॥

वेष्य । पुं॰ नडे ॥ विषिणाक्षविभाकारेणसम्पद्यते ॥

वेष्या । स्त्री॰ गणिकायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । अघ्न्यादित्वाद्यत् ॥

वेसनम् । न॰ चणकदालिचूर्णे । वेशने ॥

वेसर । पुं॰ सङ्कराश्वे । अश्वतरे ॥

वेसवार । पुं॰ व्यञ्जनादौसंस्कारार्थं दीयमानेहिङ्ग्वादौ । उपस्करे ॥ द्रव्याणिवेसवारस्तुनागवल्लीदलानि हि । तण्डुलाश्चलवङ्गानिमरिचानि समासत. ॥ सर्वव्यञ्जनपरिभाषायान्तु । हिङ्ग्वार्द्रंमरिचजीरहरिद्राधान्यकतथा । क्रमेणद्विगुणंसर्वंवेसवारमिमंजगुः । स्तोकेनवारिणासर्वंद्विलक्षणगालितम् । मात्रयाव्यञ्जनेदेयकासमर्दंचतत्स्मृतम् ॥ वेसनम् । विसर्पणे । घञ् । वेसर्पणवारयति॰ वृणोतिवा । वृञ्॰ । कर्मण्यण् ॥

वेहत् । स्त्री॰गर्भोपघातिन्यांगवि ॥ विहन्तिगर्भम् । सम्यत्तृपन्हहन्दित्यतिप्रत्ययेनसाधु. ॥

वेहार । पु॰ स्वनामख्यातेदेशविशेषे ॥ यथा । वेहारेचैवश्रीहट्टे कीशलेशवकर्णिके । अष्टादशभुजाकार्यामाहेन्द्रेचहिमालये॰ इतिमत्स्यसूक्ते ५॰ पटल ॥ माहिषासुरमर्दिनीतिशेष: ॥

वै । अ॰ हेतौ ॥ पादपूरणे ॥ सम्बोधने ॥ विशेषे ॥ स्मरणार्थे ॥ अनुनये ॥ प्रसिद्धौ ॥ निश्चये ॥ वाति । वागतिगन्धनयो । ॰बोगव्यादौवा । डे. ॥

वैशतिक: । त्रि॰ विंशत्याक्रीते ॥

वैकक्षम् । न॰ तिर्यग्वक्षोलम्बिमाल्ये ॥

वैकक्षकम् । न॰ उरस्युपवीतवत्तिर्यक्क्षिप्तमाल्ये । विशिष्ट कक्षो यस्मात्॰ विकक्षमुरस्तत्रभवम् । तत्रभवइत्यण् । स्वार्थेकन् ॥

वैकङ्कत. । पु॰ विकङ्कते ॥ विकङ्कतस्यावयवोविकारोवा । पलाशादित्वादञ् ॥

वैकटिक. । पु॰ मणिकारे ॥

वैकर्ण: । पुं॰ वात्स्ये ॥ विकर्णस्यापत्यम् । विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिष्विति्यण् ॥

वैकर्णेय । पुं॰ काश्यपे ॥ विकर्णस्यापत्यम् । विकर्णकुषीतकात्काश्यपइतिढक ॥

वैकल्पिक । त्रि॰ विकल्पेनभवे ॥

वैकल्यम् । न॰ विकलतायाम् ॥ अविवेके ॥ विकलस्यभाव । ष्यञ् ॥

वैकारिक . । पु॰ देवःसाहङ्कारेणसात्त्विकाहङ्कारे ॥ देवतावर्गे ॥ मन्त्रविशेषे ॥ सप्तवन्यस्तेषा॰ येविकारानेवभूतेन्द्रियाहङ्कारबुद्धिरूपान॰ पुरुषबुद्ध्यापासते । तान्प्रतीदमुच्यते॰ दशमन्वन्तराणीहतिष्ठन्तीन्द्रियचिन्तका. । भौतिकास्तुशतपूर्णंसहस्रन्त्वाभिमानिका. ॥ बौद्धादशसहस्राणितिष्ठन्तिविगतज्वरा । पुरुषनिर्गुणप्राप्यकालसङ्ख्यानिवर्त्तते ॥ तेखल्वमीविदेहायेषांवैकृति

कोऽयम् ॥

वैकुण्ठः । पुं॰ विष्णौ । कृष्णे । वि
ष्टरश्रवसि ॥ विकुण्ठाया अपत्यम् ।
शिवाद्यण् । यथोक्तं विष्णुपुराणे ।
चाक्षुषस्यान्तरे देवो वैकुण्ठः पुरुषो
त्तमः । विकुण्ठायामसौ जज्ञे वैकु
ण्ठैर्दैवतैः सहेति ॥ अपि च । कु
ण्ठजडस्य विष्णोर्व विशिष्टं करोति
या । विकुण्ठां प्रकृतिं वेदाश्चत्वारस्त
वदन्ति ताम् ॥ गुणाश्रयेण भगवान्
तस्यां जातः स्वसृष्टये । परिपूर्णत
मतेन वैकुण्ठं विदुर्बुधाः ॥ विग
ता कुण्ठा नाशो यस्य स विकुण्ठः । वि
कुण्ठस्यानन्तनाशस्य स्वरूपत्वेन
चाश्रयत्वेन वाऽस्त्यस्य । ज्योत्स्नादि
त्वादण् ॥ यद्वा । विविधा कुण्ठा
माया विद्यतेऽस्य ॥ अण् ॥ यद्वा ।
विकुण्ठानां जीवानामयं नियन्ता
ज्ञाता वा । तस्येदमिति शेषद्वतिवा
अण् ॥ विगता कुण्ठाऽस्मात् प्रज्ञा
द्यण् ॥ क्लीं तद्रूपाभिधे विष्णोर्धाम
विशेषे । तद्वर्णनं यथा । उपरिष्टा
त्क्षितेरष्टौ कोटयः सत्यमीरितम्
। सत्यादुपरि वैकुण्ठो योजनानां प्रमा
णतः ॥ भूलोकात् परिसङ्ख्यातः
कोटिरष्टादशप्रभो । यत्रास्ते श्रीप
तिः साक्षात् सर्वेषामभयप्रदः ॥
वैकुण्ठादुत्तरे शैवो लोकः षोडश
कोटयः । तिर्यगेव महाराजकैला
साख्यस्तु पर्वतः ॥ पार्वत्या सहितः
शम्भुर्यत्रास्ते स्वगणैर्वृतः । इति
पाद्मे स्वर्गखण्डे ६ अध्यायः ॥
अपि च । अमृतं शाश्वतं नित्यमनन्तं
परमं पदम् । हिरण्मयं मोक्षपदं ब्र
ह्मानन्दसुखाश्रयम् ॥ एवमादिगु
णोपेतं तद्विष्णोः परमं पदम् । यद्ग
त्वा न निवर्त्तन्ते तद्धाम परमं हरेः ॥
न हि वर्णयितुं शक्यं कल्पकोटिशते
रपि । अपि द्रष्टुमशक्यं तद्ब्रह्मरुद्रा
दिदैवतैः ॥ ज्ञानेन शास्त्रमार्गेण
द्रक्ष्यते योगिपुङ्गवैः । तत्स्थानमु
पभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥
श्रीमदङ्घ्रिभक्तिसेवैकरसभोगविव
र्जिताः । महात्मानो महाभागा भ
गवत्पदसेवकाः ॥ तद्विष्णोः प
रमं धाम याति ब्रह्मसुखप्रदम् । ना
नाजनपदाकीर्णं वैकुण्ठं तद्धरेः प
दम् ॥ प्राकारैश्च विमानैश्च सौधैर
त्नमयैर्युतम् । तन्मध्ये नगरी दिव्या
सायोध्येति प्रकीर्त्तिता ॥ चतुर्द्वार
समायुक्ता हेमगोपुरसंयुता । च
ण्डादिद्वारपालैस्तु कुमुदाद्यैः सु
रक्षिता ॥ चण्डप्रचण्डौ प्राग्द्वारे
याम्ये भद्रसुभद्रकौ । वारुण्यां जय
विजयौ सौम्ये धातृविधातरौ । कु
मुदः कुमुदाक्षश्च पुण्डरीकोऽथ वाम
नः । शङ्कुकर्णः सर्वनिद्रः सुमु
खः सुप्रतिष्ठितः । तस्मिन्नवस्थि

निर्मुक्ताः प्राप्नुवन्ति सुखं परम्। यत् प्राप्य न निवर्त्तन्ते तस्मान्मोक्ष उदाहृतः॥ मोक्षं परं पदं लिङ्गममृतं विष्णुमन्दिरम्। अक्षरं परमं धाम वैकुण्ठं शाश्वतं परम्॥ नित्यञ्च परमं व्योम सर्व्वोत्कृष्टं सनातनम्। पर्य्यायवाचकान्यस्य परधाम्नोऽच्युतस्य हि॥ इति पाद्मे उत्तरखण्डे २८ अध्यायः॥ विकुण्ठस्य तन्नामसाहस्रे भाष्यकारैः विविधा कुण्ठा गतिः प्रतिहतिर्विकुण्ठा। तस्याः विकुण्ठायाः कर्त्ता वैकुण्ठः। तस्येदमित्यण्। जगदारम्भे विश्लिष्टानि भूतानि परस्परसंश्लेषयन् तेषां गतिप्रतिबध्नाति। यथासंश्लेषिता भूमिरद्भिर्व्योम च वायुना। वायुस्तेजसा सार्द्धं वैकुण्ठत्वं ततो मम इति शान्तिपर्व्वणीति॥ भूमिरद्भिः सार्द्धं मया संश्लेषिता परस्पराधारेण स्थापिता पृथिव्यादीनि भूतानि उत्तरैः संगुणैर्विकुण्ठयामीति विकुण्ठः विकुण्ठ एव वैकुण्ठः। इति विकुण्ठायाः कर्त्तेति वेति श्लोकार्थः॥ शक्रे। वासवे। सिताजके॥

वैकृतं। त्रि। सात्त्विके। न। वैकृत्ये। बीभत्सरसे॥ विकृतमेव। प्रज्ञादित्वादण्॥ त्रि। बीभत्सरसालम्ब मांसशोणितादौ। दुर्निमित्ते॥

वैकृतालङ्कारः। पुं। सात्त्विकाभिमानि॥

वैकृत्यम्। न। बीभत्सरसे॥ त्रि। तदालम्बने

वैक्रान्तम्। न। मणिविशेषे। तत्पर्य्यायगुणौ यथा। वैक्रान्तश्च विक्रान्तं नीचवज्रं कुवज्रकम्। गोनासः क्षुद्रकुलिशं चौर्य्यवज्रश्च गोनसः॥ वज्राभावे च वैक्रान्तं रसवीर्य्यादिकं समम्। क्षयकुष्ठविषघ्नञ्च पुष्टिदं सुरसायनम्॥ वैक्रान्तं वज्रसादृश्यं वज्रवद्रसवीर्य्यकम्। अथाप्यभावे वज्रस्य वैक्रान्तमुत्तमम्॥ व्याकारतयैव प्रसह्य हरणाय सर्व्वरोगाणाम्। तद्विक्रान्तिधरं तद्वैक्रान्तं बुधैरिदं कथितम्॥

वैक्लव्यम्। न। वैवश्यं। व्याकुलतायाम्॥

वैखरी। स्त्री। बुद्ध्युत्थितकण्ठगतनादरूपवर्णे॥ यथा। मूलाधारात् प्रथममुदितो यस्तु तारः पराख्यः पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः। वक्त्रे वैखर्य्यथ रुरुदिषोरस्य जन्तोः सुषुम्णा बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः॥ इत्यलङ्कारकौस्तुभे प्रथमकिरणः। अस्यार्थः। यस्तु तारो नादो वर्णरूपः स नाभिरूपमूलाधारात् प्रथममुदयप्राप्तः सन् पराख्या संज्ञा यस्य तथाभूतो भवति। अथानन्तरं सए

वहृदयस्थितगतञ्चेतुरीदनसमये-
मासिक्याद्वारायथाकथञ्चिद्ध्वनात् ।
करादिषाञ्जन्तोर्नासामध्यस्थितसुषु
म्णानाड्यावस्त । तथोपनासाद्वारे
वयथाकथञ्चिन्नाद्स्वरूप प्रत्यक्षो
भवतीत्यर्थः । तस्माद्वैखरीदशा
पन्नाद्वाहात्पवनप्रेरितावर्णसमू
होवक्ति सर्वेषांप्रत्यक्षविषयोभव
तीत्यर्थः । परापश्यन्तीदशापन्न
स्तुयोगिनामेवप्रत्यक्षोनतुसर्वेषामि
त्यपिबोध्यमितितट्टीका ॥ हरिर
प्याह । वैखर्यामध्यमायाश्चपश्य
न्त्याश्चैतदद्भुतम् । अनेकतीर्थभे
दायास्त्रय्यावाच . परंपदमिति ।
तत्रश्रोत्रविषयावैखरीमध्यामाहृद
यदेशस्थापदप्रत्यक्षानुपपत्त्याव्यव-
हारकारणम् । पश्यन्तीतुलोकव्य
वहारातीतायोगिनान्तुतत्रापिप्रकृ
तिप्रत्ययविभागावगतिरस्ति । प
रायान्तुनेतिव्याकृत्युक्तम् । स्वरू
व्यातिरेकान्त . परावागनपायि
नी । तस्यांदृष्टस्वरूपायामधिका
रोनिवर्ततइत्युक्तं । अनेकती
र्थभेदाया नामाख्यातादितीर्था-
वेणुमृदङ्गशब्दादिरूपानेकभेदाया
। आह्वस्तिपिचत्वारिवाक्परिमि
तानीतिछन्दस्ययमितद्व्याख्या
तारः ॥

वैखानस . । पु० तपोविशेषाश्रमसं
ज्ञे तापसविशेषे । वानप्रस्थे ॥ ब्र
ह्मणोनखाज्जात · । येनखास्तेवै
खानसाइतिश्रुतेः । यद्वा । विख
नसमुनिप्रोक्तसूत्रमधिकृत्यतन्मा
र्गानुसारीवैखानस . ॥

वैगुण्यम् ।न० विगुणत्वे ॥

वैचक्षण्यम् । न० विचक्षणत्वे ॥

वैचित्त्यम् । न० अविवेके ॥

वैचित्र्यम् । न० विचित्रतायाम् ॥*

वैजनन . । पु० सूतिमासि ॥ विजा
यतेऽस्मिन् । जनी० करणेतिल्यु
ट् । विजननएव । प्रज्ञाद्यण् ॥
यद्वा । विजननस्यगर्भमोचनस्या
यम् । तस्येदमित्यण् ॥ नवमेदश
मेवापिप्रबलैः सूतिमारुतैः ।
निस्सार्यतेबाणइवजन्तुश्छिद्रेणस-
ज्वर . ॥

वैजपायन . । पु० व्यासशिष्ये ॥

वैजयन्त . । पु० गृहे ॥ शक्रध्वजे ॥
शक्रप्रासादे ॥ वैजयन्त्य पताका.
सन्त्यस्य अर्शआद्यच् ॥

वैजयन्तिक . । पु० धृतपताके । पता
किनि ॥ वैजयन्त्यस्यास्ति । व्रीह्या
दित्वाट्ठन् ॥ यद्वा । वैजयन्त्या
पताकयाचरति । चरतीतिठक् ॥

वैजयन्तिका । स्त्री० पताकायाम् ॥
जयन्तीवृक्षे । जाहीतिप्रसिद्धे ॥ अ
ग्निमन्थे ॥ विजयन्तस्यायम् । तस्ये
दमित्यण् । स्वार्थेकन् ॥ यद्वा ।

वैजयन्तीशब्दाद्विवेप्रतिकृततात्विति
कन्॥

वैजयन्ती। स्त्री॰ पताकायाम्॥ ज
यन्तीपादपे॥ अग्निमन्थे॥ विज
यते। जिअभिभवे। तृभूवहीतिझच्
विजयन्तस्येयम्। तस्येदमित्य
ण्॥ पञ्चवर्णमय्याआजानुपर्यन्तल
म्बितायामालायाम्॥ साचोक्ता-
विष्णुपुराणे। पञ्चरूपायामा-
लावैजयन्तीगदाभृत। साभूतहे
तुसङ्घातभूतमालाचवैद्विजेति।
पञ्चरूपामुक्तामाणिक्यमरकतेन्द्र
नीलवज्रसमानवर्णाहरेर्याबैजयन्त्या
ख्यामाला। साभूतहेतूनापञ्चतन्मा
त्राणांसङ्घात पङ्क्ति भूत
मालाचमहाभूतपङ्क्तिरितिसूक्ष्म
स्थूलभूतमयीत्यर्थः॥

वैजयि। पु॰ अर्जुनात्मजे॥ विज
यस्यापत्यम्। इञ्॥ जिनचक्रव
र्त्तिविशेषे। मघवति॥

वैजयिक। त्रि॰ विजयस्यनिमित्ते॰
विजयस्यनिमित्त॰ सयोग उत्पा
तोवा। तस्यनिमित्तमितिठञ्॥

वैजवाप। पु॰ गृह्यभेदे॥

वैजिकः। पु॰ सद्योऽङ्कुरे॥ न॰ शि-
ग्रुतैले॥ हेतौ। कारणे॥ त्रि॰
बीजसम्बन्धे॥ प्रतिषिद्धमैथुनसङ्क
ल्पादिनाचपैतृकरेतोदोषजेपापि॥

वैज्ञानिकः। त्रि॰ प्रवीणे। निपु
णे। शिल्पिनि। ज्ञातसुखे। कुश
ले॥ विज्ञानजनिते॥ विज्ञानबु
द्धि। विज्ञानेनयुक्त। तत्रनियु
क्तइतिठक्। यद्वा। विज्ञानेनजय
ति। तेनदीव्यतिखनतिजयतिजि
तमितिठक्॥

वैडाल। त्रि॰ विडालसम्बन्धिनि॥

वैडालव्रतम्। न॰ दुष्टाचारविशेषे॥
यथा। यस्यधर्मध्वजोनित्य सुराध्व
जइवोच्छ्रितः। प्रच्छन्नानिचपापा
निवैडालनामतद्व्रतम्॥

वैडालव्रतिक। पुं॰ छद्मतापसे। स
र्वाभिसन्धिनि॥ यथामनुः। ध
र्मध्वजीसदालुब्धश्छाद्मिकोलोकद
म्भकः। वैडालव्रतिकोज्ञेयोहिंस्र
सर्वाभिसन्धकः। इति॥ विडाल
व्रतेनचरतीतिवैडालव्रतिकः। वि
डालोहिप्रायेणमूषिकादिहिंसार्थि
तयाध्याननिष्ठइवविनीतः सन्नव
तिष्ठतइत्युपचरितोयंशब्दः॥

वैडालव्रती। पुं॰ भण्डतापसे॥ वै
डालव्रतिन. पापाः सर्वधर्मवि
नाशकाः। सद्यः पतन्तिपापेषुक
र्मणस्तस्यतत्फलम्॥

वैणवम्। न॰ वेणुफले॥ वेणोः फ
लम्। बिल्वादिभ्योणविधिर्नाणोलु
क्। त्रि॰ वेणोर्विकारे॰ दण्डादौ
॥ वेणोर्विकारः। पूर्ववदण्॥ पुं॰
राज्ञि। उपनयनेवैणवदण्डे॥

वैणविकः । त्रि० वेणुवादे । वैणवो ॥ वेणोर्विकारः । पे, रज् । वेणव शिल्पमस्य । शिल्पमितिठक् ॥

वैणवी । स्त्री० यष्ट्यादौ । वंशरोचनायाम् । वेणोर्विकारः । बिल्वादण् । ङीप् ॥

वैणिकः । त्रि० वीणावादे वीणा० तज्ज्ञगायातद्वादनशिल्पमस्य । शिल्पमितिठक् ॥

वैणुकः । पु० वेणुवादिनि ॥ न० तोत्रे । गजस्यतोदनदण्डे । हस्तिचालनार्थे तीक्ष्णमुखे वंशदण्डे ॥ वेणुनाभिहन्तम् । निर्वृत्तेऽक्षद्यूतादिभ्यष्ठक् । कुसुमानतानृणः ॥ साध्वर्थे० गुडादिभ्यष्ठञ् ॥

वैण्य । पु० पृथुनामधराधीशे ॥ यथा । वेणस्यमथितेपाणौसम्भूतमहामुने । वैण्योनाममहीपालोय पृथुः परिकीर्त्तितः ॥

वैतंसिकः । त्रि० कौटिके । मांसिके । मांसविक्रेतरि ॥ वीतंसेनमृगपक्ष्यादिबन्धनोपायेनचरति । चरतीतिठक् ॥

वैतण्डिकः । त्रि० वितण्डावादिनि ॥

वैतत्यम् । न० महत्त्वे ॥ विततस्यभावः । ष्यञ् ॥

वैतथ्यम् । न० वितथस्यभावे । असत्यत्वे ॥ वैतथ्यं सर्वभावानांस्वप्नआहुर्मनीषिणः । भावेष्यञ् ॥

वैतनिकः । त्रि० भृतके । भृतिभुजि । वेतनेनकर्म्मकरोति ॥ वेतनेनजीवति । वेतनादिभ्योजीवतीतिठक् ॥

वैतरणि । स्त्री० वैतरण्याम् । इतिरुद्रः

वैतरणी । स्त्री० वातुमातरि । राक्षसानांजनन्याम् ॥ तीर्थविशेषे ॥ नरकनद्याम् । विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसादिव्याप्तितनद्याम् ॥ यथा । नदीवैतरणीनामदुर्गन्धारुधिरावहा । उष्णतोयामहावेगाअस्थिकेशतरङ्गिणीति यमद्वारे ॥ विगतस्तरणिर्यत्र० तत्रभवा । तत्रभवइत्यण् ॥ विगतातरणिर्नौर्यत्रवा । प्रज्ञाद्यण् ॥ वितरणेनदानेनलङ्घ्यते० इतिवा । शेषइत्यण् । ङीप् ॥ यमद्वारेमहाघोरेतप्तावैतरणीनदी, तांसन्तर्त्तुंददाम्येनांकृष्णांवैतरणींगामितिवैतरणीगोदानान्तरप्रार्थनामन्त्रः ॥

वैतसः । पु० अम्लवेतसे ॥

वैतानम् । न० श्रौतकर्म्मणि । गार्हपत्यकुण्डस्थानग्नीन्० आहवनीयादिकुण्डेषुवितत्यक्रियतइति ।

वैतानिकः । पुं० श्रौतहोमे । अग्निहोत्रे । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारोवितानम्० तद्भव । ठक् । कर्म्मयोगिनि ॥

वैतालिकः । पुं० बोधकरे ॥

शुकउवाच । सन्देहोवर्त्ततेचित्ते नहिगच्छतिमेक्कचित् । भवताकथितयत्तच्छृखतेमेनराधिप ॥ वेदधर्मेषुहिंसास्यादधर्मवहुलाहिंसा । कथं मुक्तिप्रदोधर्मोवेदोक्तोवतभूपते ॥ प्रत्यक्षेयत्त्वनाचार . सोमपाननराधिप । पशूनांहिंसनतद्वत्तथा चाभिषस्यतु ॥ सौत्रामणौतथाप्रोक्त ' प्रत्यक्षेणसुरायह ' । द्यूतक्रीडातथाप्रोक्ताव्रतानिविविधानिच ॥ - व्रतानि • ब्रह्मचारिपुंस्त्योर्मैथुनादीनि - ॥ श्रूयतेस्मपुरासीच्छशविन्दुर्नृपोत्तम । यज्वाधर्मपरोनित्य वदान्य सत्यसागर । गोप्ताधर्मसेतूनांशास्ताचोत्पथगामिनाम् । यज्ञास्सविहितास्तेनवहवोभूरिदक्षिणा ' ॥ चर्मणांपर्वतोजातोविन्ध्याचलसम ' पुन ' । मेदाम्बुसम्भवाज्जातानदीचर्मण्वतीशुभा ॥ सोपिराजादिवयात : कीर्त्तिरस्याचलाभुवि । एवंधर्मेषुवेदेषुनभेबुद्धि ' प्रवर्त्तते ॥ - स्वर्गाद्यनित्यफलकत्वाद्दोषाक्रान्तकर्मणा - ॥ स्त्रीसङ्गेनसदाभोगेसुखमाप्नोतिमानव । अलाभेदु खमत्यन्तंजीवन्मुक्त ' कथंभवेत् ॥ जनकउवाच । हिंसायज्ञेषुप्रत्यक्षासाऽहिंसापरिकीर्त्तिता । उपाधियोगतोहिंसानान्यथेतिविनिर्णय . ॥ - अहिंसेतिच्छेद :

अहिंसन सर्वभूतान्यन्यत्रतीर्थेभ्यइतिश्रुते । उपाधियोगत इति । रागरूपोपाधिनाकृतातुहिंसैवभवति - ॥ यथाचेन्धनसयोगादग्नौधूम ' प्रवर्त्तते । तद्वियोगेतथातस्मिन निर्धूमस्त्व विभातिवै ॥ अहिंसाखतथाविद्धिवेदोक्तामुनिसत्तम । रागिणासापिहिंसैवनिस्पृहाणानसामता ॥ आर्द्रेन्धनोपाधिनावह्ने . सधूमत्वमन्यथानिर्धूमत्वम् । तथा रागाद्युपाधिनापश्वालम्भस्याहिंसात्वमन्यथाहिंसात्वाभावइति - ॥ अरागेणचयत्कर्मतथाहङ्कारवर्जितम् । अकृतवेदविद्वांस प्रवदन्ति मनीषिण ॥ गृहस्थानान्तुहिंसैवयायज्ञे द्विजसत्तम । -गृहस्थानांरागिणामित्यर्थ ' । - । अरागेणचयत्कर्मतथाहङ्कारवर्जितम् ॥ साहिंसैवमहाभागमुमुक्षूणाजितात्मनामित्यष्टादशोध्याय . प्रथमस्कन्धे ॥ वेदेभव । अध्यात्मादित्वाट्ठञ् ॥ न । वेदार्थज्ञाने ॥

वैदिकदर्शनम् । न॰ वैदिकानांसिद्धान्ते । यथा । अन्योविज्ञानमयतआनन्दमयआन्तर ' । अस्तीत्येवोपलब्धव्यइतिवैदिकदर्शनमिति ॥

वैदुष्यम् । न॰ विद्वत्तायाम् ॥ यथा । वाग्वैखरीशब्दझरीशास्त्रव्याख्यानकौशलम् । वैदुष्यविदुषांतद्वद्भु

कर्येमचमुत्तायेद्भूति ॥ विदुर कर्म
भावोवा । ब्राह्मणादित्वात्ष्यञ् ।
वैदूर्य्यम् । न० लसुनिया॰इतिख्याते
कृष्णपीतवर्णमणौ । बालवायजे ।
बालसूर्य्ये । केतुरत्ने ॥ तच्छायाल
क्षणंयथा । एकवेणुपलाशकोमलरु
चामायूरकण्ठत्विषामार्जारेक्षणपि
ङ्गलच्छविजुषाञ्ज्ञेयंत्रिधाछायया ।
यद्गात्रं गुरुतांदधातिनितरांस्निग्ध
न्तुदोषोज्झितवैदूर्यंविशदंवदन्तिसु
धियः स्वच्छंस्वतच्छोभनम् ॥ तस्य
कुलक्षणं यथा । विच्छायंमृच्छिलाग
र्भंलघुरूक्षञ्चसक्षतम् । सत्रासंपरुषं
कृष्णं वैदूर्यंदूरतांनयेत् ॥ तत्परी
क्षायथा । घृष्टं यदात्मनास्वच्छं स्व
च्छायांनिकषाश्मनि । स्फुटप्रदर्श
येदेतद्वैदूर्य्यंजात्यमुच्यते ॥ विशेषो
गारुडे॰युक्तिकल्पतरौचद्रष्टव्यः ॥
विदूरात्प्रभवति । विदूरात्ञ्य
नन्वर्थासङ्गतिः॰बालवायाद्रसौ
प्रभवतिविदूरेतुसंस्क्रियते । सत्यम्
। बालवायस्यापिविदूरमितिसंज्ञा ।
अथवा । बालवायस्य॰विदूरत्वादेश
। अतएवभाष्ये॰बालवायोविदूरञ्च
प्रकृत्यन्तरमेववेतिसमाहितम् ॥
वैदूर्य्यभूमि । स्त्री॰ बालवायप्रभव
स्थाने ॥ उरगेन्द्रमूर्द्धन्यरत्नाङ्कुरैः
सहोदितमेघध्वनेर्विदूरभूमिरुद्भिन्ना
ङ्कुराभवतीतिप्रसिद्धिः । उरगमू
र्द्धन्यरत्नसन्निधानात्कालेपिमेघागर्ज
न्तीतिवार्त्ता । केचित्तुयत्रैवोरगर
त्न॰मेघरसितञ्च॰तत्रैववैदूर्यभूमि
रित्याहुः ॥
वैदेह । पु॰ वणिजि ॥ निमिराज
पुत्रे । जनके ॥ वैश्याद्ब्राह्मण्यामु
त्पन्नेसङ्करजात्यन्तरे ॥ त्रि॰विदेहदे
शजाते ॥
वैदेहक । पु॰ वाणिजके ॥ शूद्राद्वै
श्यासुते ॥ विदेहेषुभवः । धूमादि
भ्यश्चेतिवुञ् ॥ विदेग्धवा । दि
ह॰ । ण्वुल् । प्रज्ञाद्यण् ॥ वैनि
श्चित देहउपचयोयस्येतिवा । वि
देहेषुभवः । तत्रभवइत्यण् वि
देहस्यापत्यंवा । जनपदेभ्यञ् । क
स्वार्थे ॥
वैदेही । स्त्री॰ रोचनायाम् ॥ सीता
याम् । जानक्याम् ॥ वणिक्स्त्रि
याम् । वैदेहनार्याम् ॥ पिप्पल्या
म् ॥ विदेहेषुभवा । अण् । ङीप् ॥
वैद्यः । पुं॰ भिषजि । रोगहारिणि
। अगदङ्कारे । चिकित्सके ॥ सचतु
र्विधः । रोगहरः १ । विषहरः
२ । शल्यहरः ३ । कृत्याहर ४
। इतिभेदात् ॥ सत्वयस्त्वप्रकोपस्त्वप्र
सरस्थानमेवच । दोषाणांवेत्तियोवैद्य
सभवेद्भिषगुत्तमः ॥ व्याधेस्तत्त्वपरि
ज्ञानवेदनायाश्चनिग्रहः । एतद्वैद्य
स्यवैद्यत्वंनवैद्यःप्रभुरायुषः ॥

कुचेल : कर्कशोदीन : कुग्रामीस्थ समागत : । पश्चाद्वैद्यानपूज्यन्ते धन्वन्तरिसमाअपि ॥ सुश्रुतनश्रुतयेन हारीतयेनहारितम् । नाशीक्रिचरकयेनसवैद्योवैद्यनिन्दित . ॥ हितौलिङ्ग प्रशमनेरोगाणामपुनर्भवे । ज्ञानचतुर्विधयस्यसराजार्होभिषक्तम ॥ अपिच । एकशास्त्रमधीयानोनविद्याच्छास्त्रनिश्चयम् । तस्माद्बहुश्रुत शास्त्रविजानीयाच्चिकित्सक ' ॥ शास्त्र गुरुमुखोद्गीर्णमादायोपास्यचासकृत् य कर्म कुरुतेवैद्य सवैद्योऽन्येतुतस्करा. ॥ इतिसुश्रुत विद्यामधीते । तदधीतेतद्वेत्तिवा ॥ वासकवृक्षे ॥ पण्डिते ॥

वैद्यकम् । न॰ आयुर्वेदे । चिकित्साशास्त्रे ॥

वैद्यनाथ : । पु॰ देशविशेषे ॥ शिवे । महालिङ्गविशेषे ॥ यथा । भारखण्ड वैद्यनाथोवक्रेश्वरस्तथैवच । वीरभूमौसिद्धिनाथोराढेवतारकेश्वर ॥ भैरवविशेषे ॥ यथा । हार्दपीठ वैद्यनाथेवैद्यनाथस्तुभैरव ' । देवताजयदुर्गाख्या॰नैपालेजानुनीमम ॥ इति ॥

वैद्यबन्धु . । पु॰ आरग्वधवृक्षे ॥ ॥

वैद्यमाता । स्त्री॰ अटरूषे । वासके ॥ वैद्यस्यमातेव ॥

वैद्यसिंही । स्त्री॰ वासकवृक्षे ॥

वैद्या । स्त्री॰ काकोल्याम् ॥

वैद्यी । स्त्री॰ वैद्यपत्न्याम् ॥

वैध : । त्रि॰ विधिबोधिते ।

वैधहिंसा । स्त्री॰ वेदबोधितप्राणिवधे ॥ साचाहिंसैव । यथाहमनु । या वेदविहिताहिंसानियतास्मिँश्चराचरे । अहिंसामेवतांविद्याद्वेदाद्धर्मोहिनिर्बभाविति ॥

वैधात्र . । पु॰ सनत्कुमारे ॥ विधातुरपत्यम् । अण् ॥ त्रि॰विधातृसम्बन्धिनि ॥ यथाहु . । कालञ्च वैधात्र कतिकतिभजन्तेनकनय श्रियोदेव्या . कोवानभवति॰ति . केरपिधने . । महादेव हित्वातवसतिसतीनामचरमेकुचाभ्यामासङ्ग . कुरवकतरोरप्यसुलभइति ॥

वैधात्री । स्त्री॰ ब्राह्म्यामोषधौ ॥

वैधृति : । पु॰ विष्कम्भादिषुयोगेषु योगे ॥ तत्रजातस्यफलयथा । मैत्रीविहीन . कुटिल खलश्चमूर्खोदरिद्र ' परवञ्चकश्च । कुकर्मकर्त्ता परदारभर्त्ताभवेन्नरोवैधृतिलब्धजन्मा ॥

वैधेय । त्रि॰ मूर्खे ॥ विधेय॰विधानम् । तस्यायमधिकारी॰अविद्यावद्विषयत्वाच्छास्त्राणाम् । तस्येदमित्यण् । स्त्रियां॰वैधेयी ॥

वैध्यत : । पु॰ यमप्रतीहारे ॥

वैनतेयः। पुं॰ खगेश्वरे। गरुडे॥ पक्षिणामध्ये गरुडे भगवद्विभूतिः। वैनतेयश्चपक्षिणामित्युक्तेः। विनतायाअपत्यम्। स्त्रीभ्योढक्॥ अरुणे। सूरसूते॥

वैनयिकः। पुं॰ शस्त्राभ्यासरथे। योग्यरथे॥ गुणविशेषे॥ यथा। लोकधीगुरुशास्त्रेभ्योभातिवैनयिकोगुणः। यस्तुसद्यथावज्जितलोकवृद्धगुरुकृतशास्त्राद्वा॰समर्जित सवैनयिको भाति। समर्ज्जितोवैनयिकोमनोवाक्तनुचेष्टया। योमनोवाक्तनुचेष्टयाशुद्धव्यापारेणार्ज्जित सवैनयिकोवोद्धव्य॥ त्रि॰ विनयान्विते॥ विनयादिभ्यष्ठगितिस्वार्थेठक्॥

वैनायिक। पु॰ बौद्धे॥ सर्वक्षणिकत्वबादिनिपुणवैनाशिके॥

वैनाशिकः। त्रि॰ क्षणिके। परतन्त्रे। परायत्ते॥ बौद्धे। असद्वादिनि॥ पु॰ ऊर्णनाभे॥ न॰नाडीनक्षत्रविशेषे॥ निधनतारायाम्॥

वैनीतकः। पु॰ न॰परम्परावाहने॥ वोढृपरम्परया॰यद्वाह्य॰वहवोसुषानराश्ववहन्ति॰शकटशिबिकादि यथा॰तद्वैनीतकम्। विनीतकानामिदम्। तस्येदमित्यण्॥ यद्वा। विनीयतेऽस्मात्। स्वार्थेकन्॥

वैपरीत्यम्। न॰ व्यत्यासे। विपर्यासे। विपर्यये। व्यत्यये॥ हृ॰छि॰न्द्र॥ विपरीतस्य। भाव.। ष्यञ्॥

वैपरीत्यलज्जालु। पुं॰ स्त्री॰स्वल्पक्षुपश्वत्फलायालज्जालौ॥ यथा। लज्जालुर्वैपरीत्योन्यास्वल्पक्षुपश्वत्फला। वैपरीत्याचलज्जालुश्चाभिधानेप्रयोजयेत्। लज्जालुर्वैपरीत्याम्ला कटुरुष्णा कफापनुत। रसेनियामकासैवमानोविज्ञानकारक॥ हृ॰रा॰नि॰वट॥

वैवधिक। त्रि॰ वार्त्तावहे। कांवडिया॰हृ॰भा॰प्र॰॥ विवधेन॰वीवधेनवा॰हरति। विभाषाविवधादिति पक्षेठक। एकदेशविकृतस्याऽनन्यत्वात्॰वीवधादपिठक्॥

वैवोधिक.। पुं॰ वैतालिके। विबोधः शीलमस्य। शीलमितिठक्॥

वैभवः। पु॰ विभवस्वरूपे॥ न॰ऐश्वर्ये॥

वैभाजित्रम्। न॰ विभाजयितुर्धर्म्ये॥ तस्यधर्म्यमित्यधिकारेविभाजयितुर्णिलोपस्राञ्वक्तव्यइत्यञ्णिलोपश्च॥

वैभ्राजम्। न॰ सुराणामुद्यानविशेषे॥ विपुलाख्यस्याद्रेर्मूले॰वैभ्राजाख्यंनामवनमस्ति। यथा। वैभ्राजवैपुलेमूलेसितोदस्यकदोत्तम। देवैर्निषेव्यतेछन्न. कामरश्मत प्रभै:॥

वैमात्र : । पुं॰ विमातृजे ॥ विमातु रपत्यम् । अण् ॥

वैमात्री । स्त्री॰ विमातु : कन्यायाम् ॥

वैमात्रेय । पुं॰ वैमात्रे ॥ विमातु रपत्यम् । शुभ्रादिभ्यश्चेति ढक् स्त्रीभ्यो ढगित्यत्र॰ स्त्रीप्रत्ययान्तस्य ग्रहणात् ॥

वैमात्रेयी । स्त्री॰ विमातु कन्यायाम् ॥

वैमानिक । त्रि॰ विमानयायिनि देवादौ ॥ विमानेन चरतीत्यर्थे ठक् ॥

वैमेय । पुं॰ विनिमये ॥

वैयासकि : । पुं॰ विस्वात्मजे ॥ विम्बस्यात्यन्तरस्यापत्यम । व्यासवरुडेत्यादिनेञ् ॰प्रकृतेरकङादेश

वैयाकरण । त्रि॰ व्याकरणशास्त्राभिज्ञे ॥ व्याकरणमधीते॰ वेदवा॰ तदधीतेतद्वेदेत्यण् । ऐजागम ॥ व्याकरणस्यव्याख्यान व्याकरणेभवोवावैयाकरण । अण् त्रगयनादिभ्यश्चेत्यण् ॥ स्त्री वैयाकरणी ॥

वैयाघ्र । त्रि॰ व्याघ्रचर्मावृतस्यन्दने । द्वैपि ॥ व्याघ्रस्य विकार : । प्राण्यारजतादिभ्योञ् । वैयाघ्रेण चर्मणापरिवृतोरथ । द्वैपवैयाघ्रादञ् ॥

वैयाघ्रपद्य । पुं॰ गोत्रमुनौ॰ मुनिविशेषे ॥ व्याघ्रपदोऽपत्यम । आङ् । कुन्द्रद्युम्नसुनौ ॥ व्याघ्रपदो गोत्रापत्यत्वात् ॥ यद्वा । व्याघ्रस्येवपादावस्येतिबहुव्रीहौ पादस्यलोपकृतिलोपिगर्गादित्वात्यञिपाद् । पदितिपद्भावेनव्याघ्र्याभित्येव ॥

वैयात्यम् । न॰ अविनीततायाम् ॥ विरूपयातंगमनम्॰ चेष्टनंयस्य । वियातस्यभाव : । दृढादित्वात्ष्यञ् ॥

वैयासम् । न॰ व्यासोपन्यस्तवचसि ॥ शैषिकत्वण् ॥

वैयासकि । पुं॰ शुकदेवे ॥ व्यासस्यापत्यम् । व्यासवरुडनिषादचण्डालविम्बानाम्चेतिवक्तव्यमितिवार्त्तिकादिञ्॰ चकङादेशश्च । नव्याभ्यामित्यैजागम ॥

वैरम् । न॰ विरोधे ॥ तच्चसमुत्थानपञ्चविधम् । स्त्रीकृतम् १ यथाकृष्णशिशुपालयो । वास्तुजम २ यथाकौरवपाण्डवानाम् । वागुजम् ३ यथाद्रोणद्रुपदयो । सापत्नम् ४ यथामूषिकमार्जारयो । अपराधजम् ५ यथापूजनीब्रह्मदत्तयो ॥ वीरस्यकर्म । वैरमैथुनिकयोरितिनिर्देशात्॰ युवादित्वादण् ॥ अतिवादांस्तितिक्षेतनावमन्येतकञ्चन । नचेमंदेहमाश्रित्यवैरं कुर्वीतकेनचित् ॥

वैरङ्गिक । त्रि॰ विरागयोग्ये ॥ विरागं नित्यमर्हति । छेदादिभ्यो॰ वि

रागविरक्तमितिपाठात्ष्यञ् • विरक्तादेश्च ॥

वैरञ्च्य पुं॰ सनकादिषु ॥

वैरदूता । स्त्री॰ देव्यर्थे ॥

वैरनिर्यातनम् । न॰ वैरशुद्धौ । प्रतीकारे । कृतापकारस्यप्रत्यपकारे । वैरस्यनिर्यातनम् । यतनिकारादौचुरादि । । ल्युट् ॥

वैरप्रातक्रिया । स्त्री॰ वैरनियातने ॥

वैरशुद्धिः । स्त्री॰ वैरनिर्यातने ॥ वैरस्यशुद्धिः ॥

वैरस्यम् । न॰ विरसत्वे ॥

वैरागी । त्रि॰ विषयेच्छारहिते । वैराग्ययुक्ते ॥ यथा । सनकश्चसनन्दश्चषष्ठतोयश्चसनातनः । सनत्कुमारोवैरागीचतुर्थः, पुत्रएवच ॥

वैराग्यम । न॰ विषयेषुतुच्छत्वबुद्ध्यारागाभावे ॥ तत्रच॰ यतमानसज्ञा॰ व्यतिरेकसज्ञा॰ एकेन्द्रियसज्ञा॰ वशीकारसञ्ज्ञेतिचतस्रःसञ्ज्ञाभवन्ति । तत्रैव द्रष्टव्यम्॰ विषयास्वयक्तमयक्तवतोपिसम्यगेच्छात्यागचाद्यवैराग्यम् । ततोविषयाणांमध्येलवणादिव्यतिरेकेणापिहृत्सिद्धितीयम् । तथाद्रुतावपिमनसिरागमेथिल्पेन॰ बाह्येन्द्रियैरेवविषयसेवनंहतीयम् । तथायोदासीन्यचतुर्थम् । यथाहुः । वैराग्यमाद्य यतमानसञ्ज्ञकंचिद्धिरागोव्यतिरेकसञ्ज्ञम । एकेन्द्रियाख्य-हृदिरागमेव्यस्तस्याप्यभावस्तुवशीकृताख्यमिति ॥ विषयेषुवयित्वादिदोषदर्शनेन॰ वैतृष्ण्ये ॥ तद्वैराग्यञ्जुपसायादर्शनश्रवणादिभिः ॥ देहादिब्रह्मपर्यन्तेह्यनित्येभोग्यवस्तुनि ॥ विषयेष्वौदासीन्यभावे ॥ ब्रह्मादिस्थावरान्तेषुवैराग्यविषयेष्वनु । यथैवकाकविष्ठायावैराग्यतद्धिनिर्मलम ॥ त्यागेच्छायाम् ॥ दोषदृष्टिर्जिहासाचपुनर्भोगेष्वदीनता । हेतुस्वरूपकार्याणिवैराग्यस्यविदुः क्रमात् ॥ परमपरञ्चेतिद्विविधवैराग्यम् ॥ दृष्टेष्वानुश्रविकेषुच॰ भोगेषु॰ रागविरोधिन्यामस्पृहात्मिकायाम्चित्तवृत्तौ दृष्टादृष्टविषयेषु॰ स्पृहाविरोधिचित्तपरिणामे ॥ वैराग्यात्प्रकृतिलय. ॥ यथाच्चौ॰ नवनीलनीरजदृशोपाङ्गातिमुग्धीतनुलङ्गमाक्रान्तिता-मिर्माथदिपुनर्नैवप्रजानांपतिः । प्रत्ययचरद्सिन्धुपिशितयासयाङ्गप्रभृत्यप्रभ्याच्युतकान्तनौनिपततकोवाकथवारयेत् ॥ अपिच । स्त्रियोदोलालोलाविषयजरसाःप्रान्तविरसाःविपद्गहंदेहमहदपिधनभूरिनिधनम् । दृष्णोकीलोकाः सततमबलाऽनर्थःकुलातयाप्यस्मिन्धीरेपथि

वसरतानात्मनिरता ॥ विराग एव। स्वार्थेष्यञ् ॥
वैराजम्। न॰ सामविशेषे ॥ पुं॰ भाण्डरूपेविराजोदेहे ॥
वैराज्यम्। न॰ अणिमादिसिद्धिविभाजे ॥ विराजोभाव, । ष्यञ् ॥
वैराट :। पुं॰ विराटतनये ॥ इन्द्रगोपकीटे ॥
वैराटी। स्त्री॰ उत्तरायाम्। अभिमन्युपत्न्याम् ॥ विराटस्यापत्यं स्त्री। अण्, ङीप् ॥
वैरातङ्क। पुं॰ अर्जुनवृक्षे ॥
वैरिञ्च :। पु॰ सनकादिषु ॥ त्रि॰ विरिञ्चसम्बन्धिनि ॥
वैरी। पुं॰ रिपौ। अस्त्री वैरमस्यास्ति। इनि ॥ षष्ठभवने ॥
वैरूपम्। न॰ सामविशेषे ॥
वैरूप्यम्। न॰ विरूपतायाम् ॥
वैरोचन। पुं॰ रवेस्तनये ॥ विष्णुपुत्रे ॥ बलिदानवे ॥ सिद्धगणे बुद्धे ॥ अग्निपुत्रे ॥ त्रि॰ सवितु, सम्बन्धिनि ॥ विरोचनस्यायम्। अण् ॥
वैरोचननिकेतनम्। न॰ पाताले ॥
वैरोचनि। पु॰ अर्कपुत्रे ॥ बलिदैत्ये ॥ सुगते ॥ विरोचनस्यापत्यम्। अतइञ् ॥
वैरोचि :। पु॰ बाणासुरे ॥
वैरोद्धार। पु॰ कृतापकारस्यप्रत्यपकारे। प्रतीकारे। वैरनिर्यातने ॥
वैलक्षण्यम्। न॰ विलक्षणत्वे ॥
वैलक्ष्यम्। न॰ व्यलीके ॥ विलक्षणस्यविस्मयव्यञ्जभाव। ष्यञ् ॥
वैल्व :। पुं॰ बिल्वस्यकाण्डे। बिल्वविकारे ॥ बिल्वस्यावयवोविकारोवा, बिल्वादिभ्योण्। वैल्व : स्यादिरोत्राय॒प स्यात् ॥ न॰ बिल्वशाके ॥ बिल्वफले ॥ त्रि॰ बिल्वसम्बन्धिनि ॥
वैवधिक। पु॰ वार्त्तावहे ॥ प्रसोरी॰ इ॰ भा॰ प्र॰ विवधेनधान्यतण्डुलादिनाव्यवहरति। ठक् ॥ कृषिवृद्ध्यादिजीवे ॥
वैवर्ण्यम्। न॰ विवर्णतायाम् ॥
वैवस्वत :। पु॰ श्राद्धदेवे। अन्तके। यमे ॥ सप्तमेमनौ ॥ विवस्वतोऽपत्यम्। अण् ॥ रुद्रविशेषे ॥ शनैश्चरे ॥
वैवस्वती। स्त्री॰ दक्षिणस्यांदिशि।
वैवाहिकम्। न॰ धनविशेषे ॥ यथा। वैवाहिकन्तुतद्विद्याद्भार्यायायत् समागतम्। भार्याप्रासिकालेलब्धमित्यर्थ ॥ त्रि॰ विवाहसम्बन्धिन्यग्न्यादौविवाहेभव। अध्यात्मादेठञ् इष्यते ॥
वैवाह्य। त्रि॰ सम्बन्धिनि ॥
वैशम्पायन। पुं॰ यजुर्वेदधरे॰ व्यासशिष्येमुनौ ॥ विशम्पस्यगोत्रापत्यम्

त्यम् । अश्वादिभ्यः फञ् ॥

वैशसम् । न० हिंसायाम् ॥ यथा । वरहुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः । नचैरिचिन्ताविमुखजनसंवासवैशसमिति व्याख्यान । शौरिचिन्ताविमुखेषु तन्निन्दापरेषु जनेषु सवास सएववैशसंहिंसातन्नवरमित्यर्थः ॥ नरकविशेषे ॥

वैशस्त्रम् । न० विशसितुर्धर्म्ये ॥ विशसितुरिड लोपश्चाञ् वक्तव्य. ॥

वैशाख. । पुं० मासविशेषे । माधवे । राधे ॥ वैशाखीपौर्णमास्यस्मिन् सास्मिन्पौर्णमासीत्यण ॥ खजके । मन्थानदण्डे । रत्न० हृ० भा० प्र० ॥ विशाखाप्रयोजनमस्य । विशाखाषाढादित्यण् ॥ न० धन्विनांस्थानभेदे । वितस्त्यन्तरेवस्थितेपादद्वयेविशाखाख्यस्थानंभवति । विशाखएव । स्वार्थेऽण् ॥

वैशाखी । स्त्री० वैशाखपूर्णिमायाम् ॥ विशाखयायुक्तापौर्णमासी । नक्षत्रेणयुक्तः कालइत्यण् । ततोङीप् ॥ रक्तपुनर्नवायाम् ॥

वैशारदी । स्त्री० मायायाम् ॥ विशारदईश्वरः । तस्येयम् । अण् ङीप् ॥

वैशारद्यम् । न० विशुद्धौ ॥ विशारदस्यभावः । दृढादिषु ० पठितत्वात् भमतिमनःशारदानामितिष्यञ् ॥

वैशिकः । पुं० विविधनायकान्तर्गतनायकविशेषे ॥ बहुवेश्याभोगीरसिकोवैशिकइतितल्लक्षणम् ॥

वैशिष्ट्यम् । न० विशिष्टत्वे । सम्बन्धपदार्थे । विशिष्टधीनियामके ॥

वैशेषिक । पु० कणादमुनिकृतदर्शनविशेषे । परमाणुतोद्रव्यादिसमवायान्तषट्पदार्थवादिनि । यथात्मनोद्रव्यत्वंतस्यगुणाबुद्ध्यादयोनव । वासनात्वेनवेदोक्ताकृतिवैशेषिकादयः बुद्ध्यादिधर्मिणामन्तः । करणमेवात्मेतिमन्यमिमत्वा० आत्मगुणाएववासनात्वेन० यथा । महारजनमित्यादिसूत्रोच्यतद्वृतिवर्द्धमानादाक्कथः ॥ अथवैशेषिकग्रन्थविवरणम् । सतुविशेषपदार्थनिरूपकग्रन्थः । अस्यमतन्यायदर्शनमततुल्यम् । अस्यजगत . कारणपरमाणुपर्यन्तंनिरूपितम् ॥ इहखलुनिखलप्राणिनांनिसर्गप्रतिकूलवेदनीयतयानिखिलात्मसंवेदनसिद्धं दुःखं जिहासतस्तद्धानोपाय जिज्ञासु ' परमेश्वरसाक्षात्कारमुपायमाकलयति । यदाचर्मवदाकाशं वेष्टयिष्यन्ति मानवा. । तदाशिवमविज्ञाय दु.खस्यान्तोभविष्यतीत्यादिवचन०निचयप्रामाण्यात् । परमेश्वरस्यसाक्षात्कारश्च०श्रवणमननभावनाभिर्भा

वैशेषिक :

वनीय :। यदाह । आगमेनानु मानेनध्यानाभ्यासरसेनच। त्रिधा प्रकल्पयन्प्रज्ञांलभतेयोगमुत्तममिति। तत्रमननमनुमानाधीनम्। अनुमानञ्चव्याप्तिज्ञानाधीनम्॰। व्याप्तिज्ञानञ्चपदार्थविवेकसापेक्षम्। अत. पदार्थषट्कम्॥ अथातो धर्मंव्याख्यास्याम. । इत्यादिका यादशलक्षण्यांकणभक्ष भगवता व्यवस्थायि। तत्राह्निकद्वयात्मके प्रथमेध्याये॰ समवेताशेषपदार्थकथनमकारि। तत्रापिप्रथमाह्निके जातिमन्निरूपणम्द्वितीयाह्निकेजातिविशेषयोर्निरूपणम्। आह्निकद्वयात्मकेद्वितीयेभूतविशेषलक्षणम्। तत्रापिप्रथमाह्निकेभूतविशेषलक्षणम्। द्वितीयेदिक्कालप्रतिपादनम्। आह्निकद्वयात्मकेतृतीये॰ आत्मान्त:करणलक्षणम्। तत्रा प्यात्मलक्षणप्रथमे। द्वितीयेऽन्तःकरणलक्षणम। आह्निकद्वययुक्ते चतुर्थे॰ शरीरतदुपयोगिविवेचनम। तत्रापिप्रथमेतदुपयोगिविवेचनम्। द्वितीयेशरीरविवेचनम्। आह्निकद्वयवतिपञ्चमे॰ कर्मप्रतिपादनम्। तत्रापिप्रथमेशरीरसम्बन्धिकर्मचिन्तनम्। आह्निकद्वयशालिनिषष्ठे॰ श्रौतधर्मनिरूपणम्। तत्रापिप्रथमेदानपरिग्रहधर्म

वैश्य :

विवेक :। द्वितीयेचातुराश्रम्योचितधर्मनिरूपणम्। तथाविधेसप्तमे गुणसमवायप्रतिपादनम्। तत्रापिप्रथमेबुद्धिनिरपेक्षगुणप्रतिपादनम्। द्वितीयेतत्सापेक्षगुणप्रतिपादनम्॰समवायप्रतिपादनञ्च॰। अष्टमेनिर्विकल्पकसविकल्पकप्रत्यक्षप्रमाणचिन्तनम्। नवमेबुद्धिविशेषप्रतिपादनम्। दशमेअनुमानप्रतिपादनम्। तदोद्देशोलक्षणपरीक्षाचेतित्रिविधास्यशास्त्रस्यप्रवृत्तिरितिवैशेषिकग्रन्थविवरणम्॥ काणादमुनिकृतदर्शनशास्त्रविशेषे। औलूक्ये॥ विनयादिभ्योत्स्वार्थे ठक्॥ त्रि॰ विशेषविदि॥

वैशेष्यम्, न॰ भागाधिक्ये॥ भावे ष्यञ्॥

वैश्य : पु॰ ऊरव्ये। ऊरुजे। भूस्पृशि। तमउपसर्जनरज प्रधानेतृतीयवर्णे॥ तच्च कृष्यादीनतादृशानिकर्माणिभवन्ति॥ तानि चवर्णाश्रमशब्दे द्रष्टव्यानि। निषिद्धानितथा। वैश्यानांधनलोभेनभिथ्यामूल्यप्रकाशनम्। अपालनपशूनाञ्चनिन्द्यांभवेसतीतिपाद्मे स्वर्गखण्डे २७ अध्याय॥ तत्र यातु। विशत्याशुपशुभ्यश्चकृष्यादानरुचि शुचि.। वेदाध्ययनसम्पन्न: सवैश्यइतिसंज्ञित॥ विशति।

विश० क्विप्। स्वार्थे० ष्यञ् ॥

वैश्यकर्म। न० कृषिगोरक्ष्यवाणिज्यादौ०

वैश्या। स्त्री० वर्णाख्याम्। भार्यायाम्। बुद्धशक्त्यन्तरे॥ तारायाम् ॥

वैश्रवण। पु० कुवेरे॥ विश्रवसोऽपत्यम्। शिवादित्वणविश्रवसो विश्रवणरवणावादेशौ निपातितौ० अण्च ॥

वैश्रवणालय। पुं० वैश्रवणावासे ॥ वटवृक्षे ॥

वैश्रवणावासः। पुं० वटद्रुमे ॥ कुवेरपुर्याम ।

वैश्रवणोदय। पुं० वटवृक्षे ॥

वैश्व। पुं० उत्तराषाढनक्षत्रे ।

वैश्वदेव। पुं० अन्नसाध्ये होमवलिदानातिथिभोजनात्मकेसाधम्मात-र्गहस्यप्रतिनियतेकर्मविशेषे ॥ विश्वेदेवादेवताअस्य। सास्यदेवतेत्यण्। न० उत्तराषाढाम० ॥

वैश्वदेवी। स्त्री० आमिक्षायाम् ॥ जगतीछन्दःप्रभेदे ॥ तल्लक्षणादि यथा। बाणाश्वैश्छिन्नावैश्वदेवीममौयौ। यथा। अर्चामन्येषांत्व-विहायामराणामद्वैतेनैकंविष्णुमभ्यर्च्यभक्त्या। तत्राशेषात्मन्यर्चितेभाविन्यौतेभात सम्पन्नाराधनावैश्वदेवी ॥

वैश्वदेव्यम्। न० सामविशेषे ॥

वैश्वानर। पु० अग्नौ। वह्नौ॥ चन्द्राभिमानिन्यांदेवतायाम् ॥ जाठरान्नौ ॥ चित्रकवृक्षे। विश्वेनराअस्य। नरेसंज्ञायामितिविश्वशब्दस्य दीर्घं ॥ विश्वानरस्यापत्यम्। ऋष्यण्। गोत्रापत्ये० विदादित्वादञ् वा॥ विश्वेषानराणाकर्त्तरि॥ ब्रह्मणि। जीवे ॥ विश्वनराभिमानित्वात्० स्थूलसमष्ट्युपहितचैतन्ये ॥ विश्वेषतेनरास्य० विश्वानराः। पूर्वपदस्यदीर्घः। विश्वानराम् भोक्तृत्वेनव्यवस्थितानप्रति० अनेकधाधर्माधर्मकर्मानुसारेण०सुखदुःखादिप्रापणात्० अथपरमात्माकर्मणांफलदाता०वैश्वानरशब्देनोभवति ॥ अथवा। विश्वश्चासौनरश्च० विश्वानरः। नरेसंज्ञायाम्। विश्वानरएव। वैश्वानर। स्वार्थेऽण् ॥

वैश्वानरमार्गः। पुं० दक्षिणवीथ्याम्। पूर्वोत्तराषाढयोः समीपे।

वैश्वानरीवीथी। स्त्री० दक्षिणमार्गनक्षत्रविशेषाणासंज्ञाविशेषे ॥ यथा। शतभिषक्तथा। वैश्वानरी भाद्रपदेरेवतीचैवकीर्त्तिता। एतास्तुवीथयस्तिस्त्रोदक्षिणोमार्गउच्यतइति ॥

वैश्वी। स्त्री० उत्तराषाढानक्षत्रे ॥

वैषम्यम्। न० विषमत्वे ॥ भावे०ब्राह्मणादित्वात्ष्यञ् ॥

वैषयम्। न० विषयाणांसमूहे भि

ष्णायण ॥

वैषयिक । त्रि॰ विषयसम्बन्धिनि ॥

वैष्टुतम् । न॰ हीमभस्मनि ॥

वैष्टम् । न॰ विष्णौ ॥ विष्टपे ॥ वेवेष्टि । विश॰ असुजिगमिनमिहनि विश्यशात्वहिस्ये तिष्टुन ॥ दिवि ॥ वायौ ॥

वैष्णव । त्रि॰ विष्णूपासके । विष्णुमन्त्रदीक्षिते । कार्ष्णे । हारे ॥ तल्लक्षणमाहात्म्यादि यथा । फलसन्धानरहिता विष्णुभक्तास्तु वैष्णवा । मत्प्रीतिभक्तिकामास्ते सर्वदा सर्वकर्मसु ॥ गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे प्रविश्यते । जीवन्मुक्त वैष्णव तवेदा सर्वे वदन्ति च ॥ पुरुषाणां शतपूर्वं पैत्रकं शतपरम । मातामहस्य च शतमातरमात्ममातरम् भगिनीं भ्रातरञ्चैव भागिनेयञ्च मातुलम् । श्वश्रूं श्वशुरञ्चैव गुरुपत्नीं गुरोः सुतम् ॥ गुरुञ्ज्ञानदातारमिष्टञ्च सहचारिणम् । भृत्य शिष्य तथा चेटीं प्रजा स्वाश्रमसन्निधौ ॥ उद्धरेदात्मना सार्द्धं मन्त्रग्रहणमात्रत । मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नर । तस्य संस्पर्शमात्रेण पूत तीर्थञ्च भारतम् । तस्यैव पादरजसा सद्य पूता वसुन्धरा ॥ पादोदकात्तत्स्थानं तीर्थमेव भवेद्ध्रुवम् । इ॰ ब्र॰ वै॰ ब॰ पुराणम् । येकण्ठलग्नतुलसीमयकाष्ठमाला येद्वादशाङ्ग हरिनामकृतोर्द्ध्वपुण्ड्रा । ये कृष्णभक्तिसुदृढा धृतशङ्खचक्रास्ते वैष्णवा भुवनमाशुपवित्रयन्ति ॥ अपि च । पशुर्मनुष्य पक्षी वा ये च वैष्णवसंश्रया । तेनैव ते प्रयास्यन्ति तद्विष्णो: परमं पदमिति ॥ अस्याचारश्च । सर्वान् कामान् परित्यज्य दृढभक्तिञ्च साधयेत् । स एव वैष्णवाचार कामसङ्कल्पवर्जित ॥ विष्णोरयम् । अण् ॥ न॰ विष्णुपुराणे ॥ यथा । त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतमिति ॥

वैष्णवी । स्त्री॰ विष्णोः शक्तौ ॥ यथा । एषा चिच्छक्तिरुद्दिष्टा नर्यासिद्धान्तगामिनी । एषा श्वेता परा सृष्टि सात्त्विकी ब्रह्मसंस्थिता ॥ एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता । एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता । अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते । या विष्णो राजसी शक्ति पालनी चैव वैष्णवी ॥ इति वाराहपुराणम् ॥ दुर्गायाम ॥ यथा । शङ्खचक्रगदाधारि विष्णुमाता तथा रिहा । विष्णुरूपा च या देवी वैष्णवीति नगीयते ॥ इति देवीपुराणम् ॥ गङ्गायाम ॥ तुलस्याम् ॥ अपराजितायाम ॥ शतावर्याम ॥

वैसादृश्यम । न॰ विसदृशत्वे ॥

वेला॰ यशसापूरितभुवनभुवनर सनासनवेला ॥

वैज्ञाव'। पु॰ अस्त्रविशेषे ॥ यथा वैज्ञावस्त्वयमेश्वरात्पाण्डुवेगर-बाणधि.॥ इ॰ ह॰ न्द्र॰:॥

वैहित्यम्। न॰ यानपात्रे। पोते। अहाज॰ इ॰ भा॰ प्र॰ ॥ इ॰ ह॰ न्द्र:॥

वौषट्। अ॰ देवहविर्दानमन्त्रे ॥ स्वाहादेवहविर्दानेश्रौषट्वौषटवषट्स्व धेत्यमर ॥ उच्यतेऽनेन। वह॰। बाहुलकात्॰ डौषट् ॥

व्यंशक.। पु॰ पर्वते ॥ इ॰ मुद्राङ्कितशेष चन्द्र.॥

व्यंसक.। पुं॰ धूर्त्ते ॥

व्यसित ।त्रि॰ वञ्चिते ॥

व्यक्त'। त्रि॰ स्फुटे ॥ मनीषिणि ॥ प्रत्यक्षे । हेतुमदनित्यमव्यापिस क्रियमनेकमाश्रितंलिङ्गम्। सावय वपरतन्त्र व्यक्तम् । इतिलक्षिते ॥ स्थूले ॥ यथा। अव्यक्तोव्यक्तकारणमिति ॥ व्यज्यतेस्म। अञ्जूव्यक्त्यादौ। क्त:। विपूर्वोदञ्चतेक्तेतु॰ अञ्चेर्नत्वे व्यक्तप्रतिषेधइति निष्ठातञ्चक्षेनपादानइतिमनत्वम् ॥

व्यक्तकाल:। पुं॰ स्थितिकाले ॥

व्यक्तदृष्टार्थः। पुं॰ प्रत्यक्षिणि ॥ साक्षिणि। इ॰ त्रि॰ शेष ॥

व्यक्तविशेष। पुं॰ बुद्धे ॥

व्यक्ति। स्त्री॰ पृथगात्मताम्॥ प्रत्यक्षे। स्पष्टतायाम्। शरीरविषयादिरूपायांभोगभूमौ॥ प्रभावे॥ व्यक्तिलक्षणमाहगोतम। यथा।व्यक्तिर्गुणविशेषाश्रयोमूर्त्तिरिति। अस्यार्थ.। यद्यपिजात्यादेरपिव्यक्तित्वात्प्रमेयत्वमेवव्यक्तित्वम्॰ तथापिजात्याकृतिशक्तिविषयव्यक्तेरिदलक्षणम्। तथाच॰ गुणविशेषोजात्याकृतिसमानाधिकरणोगुण॰ सङ्ख्यादिभिन्नस्तदाश्रय'॰ मूर्त्तिर्व्यक्तिरितिसमानार्थकमित्यर्थ'। परेतु॰ गुणारूपादय॰ विशेषाविशेषका॰ उत्क्षेपणादयस्तेषामाश्रयोद्रव्यम्॰ तेन जात्याश्रयोव्यक्तिरित्याशय.। विशेषलक्षणमाहमूर्त्तिरिति। मूर्त्ति: सस्थानविशेषस्तद्वानित्याहु.। अपकृष्टमध्यमपदलोपीसमासइत्याशय। अन्येतु॰ व्यक्तेर्लक्षणमूर्त्तिरिति॰ सैवेत्याह। गुणविशेषाश्रयइति। गुणविशेषस्य॰ अवच्छिन्नपरिमाणस्याश्रयइत्यर्थइत्याहु:॥ १३२॥ व्यज्यतेऽनया। अञ्जू॰। क्तिन्॥ जने॥ इ॰ ह॰ न्द्र:॥

व्यग्र। त्रि॰ व्याहते। व्याकुले॥ अग्रवर्जिते॥ सोद्यमे। व्यासक्ते॥

त्रिविध० विविधेवाव्ययमव्ययद्वा। विरुद्धमगतिर्वा अग० ऋज्येन्द्रे तिसाधु ॥

व्यङ्कट । पुं० अद्रिप्रभेदे ॥

व्यङ्ग । पुं० भेके ॥ मुखरोगविशेषे ॥ तल्लक्षणयथा । क्रोधायासप्रकुपितोवायुः पित्तेनसंयुतः । मुखमागम्यसहसामण्डलंविसृजत्यतः ॥ नीरुजंतनुकंश्यावंमुखेव्यङ्गंतमादिशेत् ॥ त्रि० हीनाङ्गे० छिन्ननासिकादौ ॥ विगतानि०विगतानि वाअङ्गान्यस्य ॥ विकले ॥ विगतमङ्गमस्य ॥

व्याङ्गा । पुं० शैले । पर्वते इ० त्रि० शेषः ॥

व्याङ्गाङ्गः । त्रि० विकलाङ्गे । व्यङ्गमङ्गयस्य ॥

व्याङ्ग्य: । त्रि० व्यञ्जनयाबोध्येऽर्थे ॥ यथा । वाच्योऽर्थोभिधयाबोध्यो० लक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्युस्तिस्रः शब्दस्यशक्तय ॥ प्रकाश्ये । आन्तरेशब्दे ॥

व्यजः । पुं० तालवृन्ते । व्याजन्त्यनेन । अज०गोचरसञ्चरेतिघप्रत्ययान्तोनिपातितः ॥

व्यजनम् । न० व्याजे । तालवृन्ते ॥ चामरे ॥ व्याजन्त्यनेन । अज० । करणेल्युट् । वोयाविततिपक्षेवीन ॥

व्याञ्जक । पुं० अभिनये ॥ त्रि०व्यक्तिकारके । प्रकाशके ॥ वैखरीरूपेशब्दे ॥ घटप्रत्यक्षसमयेआलोको व्यञ्जकोयथा । व्यञ्जनयाप्रतिपादके ॥ इ०सा०द०प० ॥ व्यनक्ति । अञ्जू० । ण्वुल् ॥

व्याञ्जनम् । न० निष्ठाने । तेमने । दधिघृतादौ । सूपशाकादौ । तीवण इ०भा०प्र० ॥ चिह्ने ॥ श्मश्रुणि ॥ अवयवे । स्त्रीपुंसयोः गुह्यदेशे । स्त्र्यादिचिह्ने ॥ अहनि । दिने ॥ व्यज्यतेऽनेनवाल्युट् ॥ स्वरहीनवर्णे ॥ अञ्जितस्यास्योच्चारणं न भवति । सपुनरन्तरेणाच व्यञ्जनस्योच्चारणमपिभवतीतिभाष्योक्ते.॥

व्यञ्जना । स्त्री० शब्दस्यवृत्तिविशेषे ॥ तस्यालक्षणं यथा । विरतास्वभिधाद्यासुययार्थोबोध्यतेपरः । सावृत्तिर्व्यञ्जनानामशब्दस्यार्थादिकस्यच ॥ शब्दबुद्धिकर्मणांविरम्यव्यापाराभावइतिनयेनाभिधालक्षणातात्पर्याख्यासुतिसृषुवृत्तिषुस्वस्वमर्थंबोधयित्वोपक्षीणासु०ययान्योऽर्थोबोध्यते०साशब्दस्यार्थस्यप्रकृतिप्रत्ययादेश्चवृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषयाव्यञ्जनानाम ॥ विशेषः साहित्यदर्पणादौद्रष्टव्यः ॥

व्यञ्जित । त्रि० प्रकटीकृते ॥

व्यडम्बक । पुं० एरण्डे ॥ व्यडम लमम्बयति । अविस सने । णिच् । ण्वुल् ॥

व्याडम्बनम् । न० एरण्डे ॥ व्यडमलम म्बयति । अवि० । ल्युट्० युज्वा ॥ शुक्लैरण्डे ॥

व्यतिकर । पुं० व्यसने ॥ व्यतिष ङ्गे० ॥ मिश्रणे ॥ क्षोभे ॥ स म्बन्धे ॥

व्यतिकीर्ण । त्रि० सङ्कीर्णे ॥

व्यतिक्रम । पुं० व्यत्यये । अन्यथा त्वे । क्रमविपर्यये ॥ यथा । सर्वं अप्राङ्मुखोदातायदीताचउदङ्मु खः । एषएवविधिर्दानेविवाहेतु व्यतिक्रमः ॥ व्यतिक्रमणम् । क्र म्० । घञ् । नोदात्तोपदेशेतिन वृद्धिः ॥ अन्याये ॥

व्यतिभेद । पुं० समावेशे ॥

व्यतिरिक्त । त्रि० व्यतिरेकविशिष्टे । भिन्ने । अन्यस्मिन् ॥ व्यतिरि च्यतेस्म । रिचिर्विरेचने । क्त ॥

व्यतिरेकः । पुं० अभावे । विरहे ॥ कारणाभावात्कार्याभावव्याप्तौ । कार्यव्य तिरेकप्रयोजकव्यतिरेकप्रतियोगि त्वे ॥ अलङ्कारविशेषे । यथा । व्य तिरेकोविशेषस्तुपमानोपमेययोः । शैलाइवोन्नताः सन्तः किन्तुप्रकृ तिकोमलाः ॥ अथमुपमेयाधिक्य पर्यवसायीव्यतिरेकः ॥ यथावा । पल्लवतकल्पतरोरेषविशेषः क रस्यतेवीर । भूषयतिकर्णमेकः प रस्तुकर्णोतरस्कुरुते । तन्न्यून त्वपर्यवसायी । यथा । रक्तस्त्वंनव पल्लवैरहमपिश्लाघ्यैः प्रियायागुणै स्त्वामायान्तिशिलीमुखाः स्मरधनु र्मुक्ताः सखेमामपि । कान्तापाद तलाहतिस्तवमुदेतद्वन्ममाप्यावयोः स र्वंतुल्यमशोकवेवलमहंधात्रासशो कः कृतः ॥ अनुभयपर्यवसायीय था । दृढतरनिबद्धमुष्टेः कोषनि षण्णस्यसहजमलिनस्य । कृपणस्यकृ पाणस्यचकेवलमाकारतोभेदः ॥ वि शिष्टः अतिरेकः पृथग्भाव ॥ विपर्यये ॥

व्यतिरेकव्याप्ति । स्त्री० साध्यनिषे- धेसाधननिषेधरूपेण० प्रवृत्ताव्याप्ति ॥ यथा । यत्रवह्निर्नास्ति० तत्र धूमोनास्तीति० यथाह्रदे ॥

व्यतिरेकसञ्ज्ञा । स्त्री० वैराग्यविशेषे । परिपाचनेचानुष्ठीयमानेकेचित्क षायाः पक्वाः पच्यन्तेकेचित् तत्रैवपूर्वापरीभावेसतिपच्यमाने भ्य कषायेभ्य पक्वानांव्यतरेके णावधारणे । स्वचित्तेपूर्वविद्यमा नदोषाणांमध्येऽभ्यस्यमानैर्विवेकैने तेपक्वाः एतेऽवशिष्टाइतिचिकित्स कवद्विवेचनस्वरूपे ॥

व्यतिरेक्युदाहरणम् । न० उदाहरण

विशेषे अनुगीतम । तद्विपर्य्ययाद्वा विपरीतव्यतिरेक्युदाहरणमिति अस्यार्थः । तद्विपर्य्ययात् साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् । तथाच साध्यसाधनव्यतिरेकव्याप्त्युपदर्शको दाहरणं व्यतिरेक्युदाहरणम् । यथा जीवच्छरीरं सात्मकम् प्राणादिमत्वात् यन्नैवम् तन्नैवम् यथा घट इति । वाकारः प्रयोगमपेक्ष्य तथाचान्वय्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमित्यर्थः ॥ ३६ ॥

व्यतिषक्त । त्रि॰ सम्बन्धान्विते । सम्बद्धे । व्यतिषज्यते स्म । षञ्ज सङ्गे । क्त । उपसर्गात्सुनोतीत्यादिना षत्वम् ॥

व्यतिषङ्ग । पुं॰ विनिमये ॥ सङ्गे । परस्परमेलने ॥ व्यतिषञ्जनम् । षञ्ज॰ । घञ् ॥

व्यतिहार । पुं॰ विनिमये । परस्परकरणे ॥ यथा त्वमहमस्मि अहन्त्वमसीति व्यतिहारः । सचैक्यतात्पर्यावगमाद्भवतीति ॥ व्यत्यये । अन्यस्मिन्नन्यावभासे ॥ व्यतिहरणम् । हृञ्॰ । घञ् । व्यतिह्रियतेऽनेनान्यथा । घञ् । उपसर्गस्येतिपाक्षिको दीर्घाभावः ॥

व्यतीत । त्रि॰ विगते । विशेषेण अतीत ॥

व्यतीपात । पुं॰ महोत्पाते । उपद्रवे ॥ अपयाने । पलायने । योगविशेषे ॥ तत्रजातस्य फलं यथा । कठोरवाक्यः पिशुनस्वभावो गदातुरो मातृहितो मनुष्यः । परस्य कार्य्ये कृतपक्षपातो यस्य प्रसूतौ व्यतिपातयोगः । व्यतिक्रम्य पतनम् । पत्लृ गतौ । घञ् । उपसर्गस्येति दीर्घः ॥ अन्ययोगे ॥

व्यतीहार । पुं॰ परीवर्त्ते । व्यतिहरणम् व्यतिह्रियते वा । हृञ्॰ । घञ् । उपसर्गस्येतिपाक्षिको दीर्घः ॥ परस्परमेकजातीयक्रियाकरणे ॥

व्यत्यय ः । पुं॰ व्यतिक्रमे । व्यत्यासे । विपर्यासे । विपर्य्यये ॥ व्यत्ययनम् इण्॰ । एरच् ॥

व्यत्यस्त ः । त्रि॰ व्यतिक्रमसहिते ॥ यथा । व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणइति मनुः ॥ उत्तानाभ्यां हस्ताभ्यां दक्षिणोपरिभावेन व्यत्यास इति समाचारात् बोध्यः ॥

व्यत्यास । पुं॰ व्यतिक्रमे । व्यत्यये ॥ व्यत्यसनम् । असु क्षेपणे । घञ् ॥

व्यत्यासित । त्रि॰ वैसादृश्यप्रापिते ॥ तारकादित्वादितच् ॥

व्यथकः । त्रि॰ व्यथाकारिणि । दुःख जनके ॥ भयङ्करे । व्यथयतिव्यथभयचलनयोः । बहुलमन्यत्रापीति वुन् ॥

व्यथा । स्त्री॰ पीडायाम् । दुःखे ॥ व्यथ॰ । घटादयः षितइतिषित्त्वादङ् । टाप् ॥

व्यथित । त्रि॰ दुःखिते । पीडिते ॥ व्यथासञ्जाताऽस्य । तारकादित्वादितच् ॥

व्यधः । पुं॰ वेधे ॥ व्यधनम् । व्यधताडने । व्यधजपोरित्यप् ॥ ताडने ॥

व्यधनम् । न॰ वेधने ॥

व्यध्व । पु॰ प्रतिकार्वे । धनुर्गुणे ॥

व्यध्व । पु॰ दुरध्वे । विपथे । निन्दितवर्त्मनि ॥ विरुद्धोध्वा । प्रादयोगताद्यर्थे इतिसमासः । उपसर्गादध्वनइत्यच् ॥

व्यपगतः । त्रि॰ निरस्ते ॥

व्यपदेशः । पु॰ शब्दे । नामनि ॥ कपटे ॥ विशिष्टोऽपदेशः । वाक्यविशेषे यथा । व्याजेनात्माभिलाषिणिव्यपदेशइतीर्यतइत्युज्ज्वलनीलमणिः ॥

व्यपवर्गः । पुं॰ । व्यपवृक्तिभेदे ॥

व्यपाकृति । स्त्री॰ अपह्नवे । अस्वीकारे ॥

व्यपाश्रय । पुं॰ आश्रये ॥

व्यपेतः । त्रि॰ अपगते ॥

व्यपोढः । त्रि॰ विपरीते ॥

व्यपोहः । पुं॰ व्यपोहने ॥

व्यपोहनम् । न॰ अपाकरणे ॥

व्यभिचारः । पु॰ कदाचारे । भ्रष्टाचारे ॥ परिलिपि । सख्यान्तरे ॥ दोषविशेषे ॥ तल्लक्षणं यथा । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वंहिव्यभिचारइतिव्यधिकरणधर्मावच्छिन्नाभावचिन्तामणिः ॥ सचत्रिविधः । साधारणासाधारणानुपसंहारिभेदात् । तत्रविपक्षवृत्तित्वंसाधारणत्वम् । सर्वसपक्षव्यावृत्तत्वमसाधारणत्वम् । व्याप्तिग्रहानुकूलैकधर्म्युपसंहाराभावोयत्रसत्वनभिमतोऽनुपसंहारी । इतिसव्यभिचारचिन्तामणिः ॥ विशिष्टोभिचारः ॥ व्यभिचरणंवा । चर॰ । घञ् ॥

व्यभिचारिणी । स्त्री॰ परपुरुषगामिन्याम् । कुलटायाम् । यथा । इताधिकारांमलिनांपिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यांवासयेद्व्यभिचारिणीम् ॥ व्यभिचारीव्यतिक्रमोऽस्त्यस्याः । इनिः । ङीप् ॥

व्यभिचारी । पुं॰ चतुस्त्रिंशत्प्रकारशृङ्गारभावविशेषे ॥ तेयथा । निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः । आलस्यञ्चैवदैन्यञ्चचिन्तामोहः स्मृतिर्धृतिः ॥ व्रीडाचपलता

हर्षश्चावेगोजडतातथा गर्वोविषाद
औत्सुक्यनिद्रापस्मारएवच ॥ सुप्तो
विवोधोऽमर्षश्चावहित्थमोग्रतामति
। उपलम्भस्त्वाधिस्तउन्मादोमरणं त
था ॥ त्रासश्चैववितर्कश्चविज्ञेयाव्य
भिचारिणइतिहेमचन्द्रः ॥ साहित्यद
र्पणे त्रियस्त्रिंशदुक्ताः । यथा । वि
शेषादाभिमुख्येनचरन्तोव्यभिचारिणः
। स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च
तद्भिदाः ॥ स्थिरतयावर्त्तमानेहि
रत्यादौनिर्वेदादय प्रादुर्भावतिरो
भावाभ्यामाभिमुख्येनचरणाद्व्यभि
चारिणः कथ्यन्ते । केति॰ कुला
ह । निर्वेदावेगदैन्यश्रममदजडता
औग्र्यमोहौविबोध स्वप्नापस्मारग
र्वामरणमलसतामर्षनिद्रावहित्था -
। औत्सुक्योन्मादशङ्काः स्मृतिम
तिसहिताव्याधिसन्त्रासलज्जाहर्षासू
याविषादाः सधृतिचपलताग्ला
निचिन्तावितर्का इति ॥ त्रि॰व्य
भिचारविशिष्टे ॥

व्यय । पुं॰ अर्थापचये । वित्तस्था
पगमे । उठाव॰खरच॰इ॰भा॰ ॥
पूर्वगृहीतदेहेन्द्रियादिवियोगे ॥ ध
र्मादिपुत्रविनियोगे ॥ नाशे ॥ व
त्सरविशेषे ॥ तत्फलयथा । दुर्भि
क्षं जायतेघोरसर्वोपद्रवसंयुतम् ।
अनावृष्टि समाख्याताव्ययेसंवत्स
रेप्रिये ॥ २॰ ॥ न॰लग्नाद्द्वादशेभवे

भे व्ययनम् । व्ययवित्तसमुत्सर्गे
ऽदन्त । घञ्॰अच्वा ॥ विपूर्वा
दिणएरच्वा ॥

व्ययित । त्रि॰ कृतव्यये ॥

व्ययी । त्रि॰ व्यययुक्ते ॥ यथा। द्रविणं
परिमितमधिकव्ययिनजनमाकुली
कुरुते । क्षौमांशुकमिवपीनस्तनज
घनाया कुलीनायाः ॥

व्यर्थ । त्रि॰ निरर्थके । मोघे । वि
फले ॥ यथा । भर्त्तानिश्वसितेऽप्य
सूयतिमनोजिघ्र . सपत्नीगण श्व
श्रूरिङ्गितदैवतनयनयोरीहालिहो
यातरः । तद्दूरादयमञ्जलि किं
मधुनादृग्भङ्गिभागेनतेवैदग्धीमधु
रप्रबन्धरसिकव्यर्थोऽयमत्रश्रमइति
॥ विशेषणगत अर्थोयस्मात् ॥

व्यर्थभाषणम् । न॰ निरर्थकवाग्व्या
पारे ॥ यथा। देशराष्ट्रप्रसङ्गाश्चपरा
र्थपरिकल्पनात् । नर्महासप्रसङ्गा
च्चभाषणव्यर्थभाषणमितिदेवल. ॥

व्यलीक । पुं॰ नागरे । षिङ्गे ॥
न॰अप्रिये ॥ अकार्ये ॥ वैलक्ष्ये ॥
पीडने ॥ व्यङ्गे । विशेषणचलति ।
अलभूषणादौ । अलीकादयश्चेति
साधु ॥ विगतान्तते । विगतम
लीकम् ॥ विपर्ययेपीतिस्वामी ॥

व्यवकालनम् । न॰ वियोगे । क्षीणे ॥
अङ्कशास्त्रोक्तरकरणे । बाकिकाटा॰
इ॰गौ॰दे॰भा॰ ॥

व्यवकलित : त्रि० कृतव्यवकलने । वियोजिते । न० व्यवकलने ॥
व्यवच्छिन्न : । त्रि० भिन्ने ॥ विशेषिते
व्यवच्छेद : । पुं० पृथक्त्वे । बाणमुक्तौ ॥
व्यवच्छेदकम् । न० विशेषणे ॥
व्यवच्छेद्यम । त्रि० विशेष्ये ॥
व्यवधा । स्त्री० अन्तर्धायाम् । तिरोधाने । व्यवधानम् । डुधाञ् ० । आतश्चोपसर्गे इत्यङ् ॥
व्यवधानम् । न० अन्तर्धौ । तिरोधाने । वस्त्वन्तरकृतेऽवच्छेदे । खड्गादि कोषादिवदावरणे ॥ व्यवपूर्वाद्धाञो ल्युट् ॥
व्यवधायक । त्रि० व्यवधानकर्तरि ॥
व्यवधि । पुं० निधाने । व्यवधाने ॥ व्यवधानम् । डुधाञ् ० । उपसर्गे घोः किः ॥
व्यवसर्ग : । पुं० दाने ॥ व्यवसर्जन सृज० । घञ् ॥
व्यवसाय : । पुं० उपजीविकायाम् ॥ उद्यमे । फलाव्यभिचार्युद्यमे ॥ यथा । व्यवसायिनाव्यवसाय फलाव्यभिचार्युद्यमोभगवद्विभूतिरिति । निश्चये ॥
व्यवसायात्मिका । स्त्री० निश्चयात्मिकायांबुद्धौ ॥ व्यवसायोनिश्चयः आत्मायस्या ॥
व्यवसायी । त्रि० कृतनिश्चये ॥ सोद्यमे ॥ व्यवसायविशिष्टे ॥ वाणिज्यकारके ॥ अनुष्ठातरि ॥
व्यवसित । त्रि० निश्चये ॥ प्रतारिते ॥ अनुष्ठिते ॥ विशिष्टमवस्यतिस्म० अवसीयतेस्मवा । षोऽन्तकर्मणि । क्त । द्यतिस्यतीतीत्वम ॥
व्यवस्था । स्त्री० संस्थायाम् । सविषयकत्त्वनिर्धारणे ॥ विशिष्टावस्था ॥ शास्त्रनिरूपितविधौ । रचनानियमे ॥ व्यवतिष्ठतेऽनया । ष्ठा० । आतश्चोपसर्गे इत्यङ् । टाप् ॥ व्यवस्थानवा ॥
व्यवस्थान । पु० श्रीहरौ । यस्मिन् व्यवस्थिति सर्वस्य । जाति वर्णाश्रमतद्धर्मादिकान्विभज्यकरोतिवा । कृत्यल्युटोबहुलमिति० बहुलग्रहणात्कर्त्तरिल्युट् । व्यवतिष्ठतेसर्वंजगदस्माद्दुर्येणाव। अधिकरणेल्युटवा । न० व्यवस्थितौ ॥
व्यवस्थापक । पु० व्यवस्थादातरि ॥
व्यवस्थापित । त्रि० निश्चिते ॥
व्यवस्थित : । त्रि० अप्रचलिते । तत्तद्योगेनावस्थिते । प्रतिष्ठिते ॥ विशेषेणावस्थित : ॥ व्यवस्थांप्राप्ते ॥ इतच् ॥
व्यवस्थिति : । स्त्री० अवस्थाने । व्यवस्थाने ॥

व्यवसा । स्त्री० निश्चयार्थे ॥

व्यवहरणम् । न० व्यवहारे ॥

व्यवहर्त्ता । पुं० व्यवहारकर्त्तरि ॥ प्राड्विवाके ॥

व्यवहार । पुं० शास्त्रीयलौकिकादि व्यवहरणे । व्यौहार० इ० भा० ॥ यथाहुः । अहमिदमितिचमति ध्यासततव्यवहरतिसर्वलोकोपि । प्रथमाप्रतीचिपरमात्मिवसतिवपु- रिन्द्रियादिवाह्यार्थे ॥ इति ॥ द्रुम प्रभेदे ॥ व्यासे ॥ पणे ॥ स्थितौ व्युत्पत्तौ ॥ विवादे । ऋणदाना दिविषयचतुष्पाद्ये ॥ ऋणादाना ष्टादशविषयो० विरुद्धार्थिप्र- त्यर्थिवाक्यजनितसन्देहहारोवि- चारएवव्यवहारः । यथाहकात्या यन । विनानार्थेऽवसन्देहहरण हारउच्यते । नानासन्देहहरणा व्यवहारइतिस्मृतइति ॥

व्यवहारज्ञः । पुं० प्राप्तव्यवहारे ॥ सतुषोडशवर्षानन्तरंभवति । यथा । बालआषोडशाद्वर्षात्पौगण्डोपि निगद्यते । परतोव्यवहारज्ञः स्वतन्त्रः पितरावृतेइति ॥ त्रि० व्यवहार ज्ञातरि ॥

व्यवहारदर्शनम् । न० न्यायदर्शने । विचारकरणे ॥

व्यवहारपदम् । न० वादिनाराज्ञिनि वेदने ॥ यथाहयाज्ञवल्क्य । स्मृ

त्याचारव्यपेतेन० मार्गेणाधर्षित. परैः । आवेदयतिचेद्राज्ञेव्यवहा रपदंहितदिति ॥

व्यवहारपाद । पुं० व्यवहारांशे ॥ य था । पूर्वपक्षः स्मृत. पादोद्वि पादश्चोत्तरः स्मृत. । क्रियापा दस्तथाचान्यश्चतुर्थोनिर्णय. स्मृत इति ॥

व्यवहारमातृका । स्त्री० व्यवहारोप योगिक्रियायाम् । साचमिताक्ष रातोनुसन्धेया ॥

व्यवहारमार्ग । पुं० व्यवहारविषये । व्यवहारपदे ॥

व्यवहारविधिः । पुं० धर्मशास्त्रे । व्यवहारस्यविधाने ॥

व्यवहारविषय. । पुं० व्यवहार- पदे ॥

व्यवहारिका स्त्री० लोकयात्रायाम् ॥ बर्हन्याम् । सम्मार्जन्याम् ॥ इङ्गुदे ॥

व्यवहारी । त्रि० व्यवहारविशिष्टे ॥

व्यवहार्य्य. । त्रि० व्यवहरणीये । व्य वहर्त्तव्ये । व्यवहारयोग्ये ॥

व्यवहित । त्रि० दूरेस्थिते ॥ व्यवधान विशिष्टे । सान्तरे । भित्त्याद्यन्तरि ते ॥ तिरोहिते ॥

व्यवहृत । त्रि० कृतव्यवहारे ॥

व्यवहृतिः । स्त्री० व्यवहारे ॥

व्यवाय । पुं० सुरते । ग्राम्यधर्मे ।

मैथुने ॥ असक्तौ । वधबन्धाने ॥ शुद्धाविति धरणिः ॥ न० ते जसि ॥ व्यवायनम् । इत्यगतौ० व्ययगतौ वा । एरच्० घञ् वा ॥

व्यवायी । पु० स्त्री० कामुके ॥ त्रि० द्रव्य विशेषे ॥ व्यवायोऽस्मिन् वाऽस्ति । इनिः ॥

व्यश्नुवान : । त्रि० व्याप्नुवति ॥ अश्नोतेर्लट् . शानजादेश ॥

व्यष्टि । स्त्री० व्यस्तव्यापिनि ॥ विशेषे ॥ अध्यात्मादिविभागेन व्याप्तिर्व्यष्टिरितीरिता ॥

व्यसनम् । न० अशुभे ॥ सक्तौ ॥ दैवानिष्टफले । अस्ते ॥ पापे ॥ विपत्तौ । निष्फलोद्यमे ॥ स्त्रीपानमृगयादिष्वष्टादशविधेषु ॥ यथोक्तं मनुना । मृगयाक्षो दिवास्वप्न . परिवाद . स्त्रियो मद । तौर्यत्रिकं वृथाट्या च कामजो दशको गण : ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टक ' ॥ कामजेषु प्रसक्तो हि व्यसनेषु महीपति । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदु ' । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ पानमक्षा . स्त्रियश्चैव मृगया च यथाक्रमम् । एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा ॥ सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिण: । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ तथाहि द्यूतात् पानं कष्टतरम् ० मद्यपानेन मत्तस्य सत्त्वप्रणाशात् ० यथेष्टचेष्टया देहधनादिविरोध दुःखादयो दोषा ' ० द्यूते तु पाक्षिको धनाप्राप्तिरप्यस्ति । स्त्रीव्यसनात्० द्यूतं कष्टम् ० द्यूते हि वैरोद्भवादयो नित्यास्त्रीभ्यो दोषा ' ० मूत्रपुरीषवेगधारणा च व्याध्युत्पत्ति ० स्त्रीव्यसने पुनरपत्योत्पत्त्यादिगुणयोगोऽप्यस्ति । मृगयास्त्रीव्यसनयो स्त्रीव्यसनं दुष्टम् ० तत्रादर्शनं कार्याणां कालातिपातेन धर्मलोपादयो दोषा ० मृगयायां तु व्यायामेनारोग्यादिगुणयोगोऽप्यस्तीत्येव कामजचतुष्कस्य पूर्वं पूर्वं गुरुदोषम् ॥ क्रोधजेष्वपि त्रिषु० वाक्पारुष्यात् ० दण्डपारुष्यं दुष्टम् ० अङ्गच्छेदादेरशक्यसमाधानत्वात् ० वाक्पारुष्ये तु ० कोपाग्निर्दानमानपानीयसेकैः शक्य शमयितुम् । अर्थदूषणात् ० वाक्पारुष्यदोषवन्मर्मपीडाकारम् ० वाक्पारुष्यस्य दुश्चिकित्स्यत्वात् । एवं पूर्वं पूर्वं दुष्टतरं क्रोधजेष्वर्थ : । यतो व्यसनासक्तिरनर्थावहा । व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्य घोऽधो

व्रजतिस्वर्गोव्यसनीमृतः ॥ इ
ति ॥ अन्यत्रापि । एकैकव्यसनाः
सक्ताः सर्वेमृत्युवशंगताः । यः
पुनः सहतान्सेवेविषयान्विषयी
नरः । सपतेत्सहदैश्वर्याच्छिन्नमूल
इवद्रुमइति ॥ चौर्यंवव्यसनान्यद्य
काशजानिभवन्त्युत । मिथ्यावाक्य
परमंक्रतस्माद्दुरतरावुभौ ॥ परदा
राभिगमनंत्रिनावैरमरौद्रतैतिरामा
यणम् ॥ व्यस्यति । असुक्षेपणे । भा
वकर्मकरणादौल्युट् ॥ सर्वेथैतत्
सम्यादयिष्यामीत्याशङ्कोव्यसनम् ॥
व्यसनवारकः । पु० राजर्षिविशेषे
व्यसनार्त्तः । त्रि० उपरक्ते । दैवमा
नुषान्यतरपीडायुक्ते ॥ व्यस्यतिश्रे
योमार्गात् ० व्यसनम् ० तेनार्त्तः ॥
व्यसनी । त्रि० व्यसनयुक्ते । पानभ
द्रे ॥ व्यसनमस्यास्ति ० अस्मिनृवा ।
इनि ॥
व्यस्तः । त्रि० व्याकुले । व्याप्ते ॥
प्रत्येकम् । पृथक्पृथगर्थे ॥
विपरीते ॥ व्यस्यतिस्म । असुक्षेप
णे । क्तः ॥ विभक्ते ॥ विच्छि
न्ने ॥ *
व्यस्तपदम् । न० ऋणादौनाभियोगेप
दान्तरेणोत्तरे ॥ यथा ॥ सुवर्णंश
ताभियोगे ० अनेनाहताडितइति ॥
व्यस्तारम् । न० हस्तिनोमदप्रयोगे ॥
व्याकरणम् । न० वेदस्यानेशब्द
शास्त्रे ॥ विशिष्यव्याक्रियन्तेव्युत्पा
द्यन्तेशब्दाअनेन । डुकृञ् ०
ल्युट् । प्रादिसमासः ॥ अस्यार
म्भोमुख्यर्थः । नयेषुच्छन्दशास्त्राग
मारम्भकालकालीशिमुषीशीशनोवि
हितेषु । अलविप्रमेभोडुशेबाश्रिते
मुख्यतोधर्मशास्त्रादिकारम्भकालमि
ति ॥ अतोक्तंमहाभाष्ये । पुराक
ल्पएतदासीत् । संस्कारकालोत्त
रंब्राह्मणाव्याकरणमधीयते ० ते
भ्यस्तत्तत्स्थानकरणनादानुप्रदा
निज्ञेभ्योवैदिकाः शब्दाउपदिश्यन्ते ०
तदद्यत्वेनतथा ० वेदमधीत्यत्वरिता
वक्तारोभवन्तीति । त्वरिताविधी
ष्टादाश्रितिकेयट । संस्कारउपन
यनम् । करणमाभ्यन्तरप्रयत्नः ।
अनुप्रदाननादादिर्बाह्यः प्रयत्नः ।
। तेनअभीतव्याकरणशिक्षेभ्यइत्य
र्थइतिविवरणम् ॥
व्याकारः । पु० व्याकरणे ॥ कृञो
घञ् ॥
व्याकीर्णः । त्रि० विकीर्णे । विच्छि
न्ने ॥ *
व्याकुलः । त्रि० शोकादिभिरितिक
र्त्तव्यतापरिज्ञानशून्ये ॥ विह्वले ॥
व्याकीलति । कुलसंस्त्यानेबन्धुषु
च । इगुपधेतिकः ॥ उपद्रुते ॥
सम्भ्रान्ते ॥
व्याकुलात्मा । त्रि० शोकादिभिरितिक

व्याकृत । पुं॰ कार्यब्रह्मणि । सम्भूतौ । हिरण्यगर्भे ॥

व्याकृति । स्त्री॰ भङ्ग्या ॥ व्युत्पत्तौ ॥ व्याकरणम । डुकृञ्॰ । क्तिन् ॥ विशिष्टाकृतिर्वा ॥ व्यञ्जने ॥

व्याकोश । त्रि॰ व्याकोषे । विकसिते ॥ व्यावृत्त कोश सङ्कोचोऽस्मात् । प्रादिसमास ॥

व्याकोष । पु॰ प्रफुल्ले । उत्फुल्ले । विकसिते ॥ व्यावृत्त कोष सङ्कोचोऽस्मात् । प्रादिभ्यो धातुजस्येतिसमास ॥

व्याक्षेप । पु॰ अन्तरये ॥ अव्याक्षेपोभविष्यन्त्या कार्यसिद्धेर्हि लक्षणम् ॥

व्याख्या । स्त्री॰ विवरणे ॥ व्याख्यानम् । ख्या॰ । आतश्चोपसर्गे अङ् । टाप् ॥

व्याख्यागम्यम् । न॰ उत्तराभासभेदे ॥ यथा व्यस्तव्यस्तपदव्यापिनिगूढार्थं तथाकुलम् । व्याख्यागम्यम सारञ्चोत्तरमुक्तं बुधैः ॥ व्याख्ययागम्यते ज्ञायतेयत गमॢ॰ । पोरदुपधादितियत् ॥ *

व्याख्यात । त्रि॰ विवृते । कथिते । विस्पष्टमाख्याते ॥

व्याख्याता । त्रि॰ विवरणकर्त्तरि ॥

व्याख्यानम् । न॰ व्याख्यायाम् ॥ यथास्वलक्षणम् । पदच्छेद पदार्थोक्तिर्विग्रहोवाक्ययोजना । आक्षेपस्यसमाधानव्याख्यानं पञ्चलक्षणम् ॥ व्याख्यानसाधने ॥ व्याख्यायतेऽनेन । ख्या॰ । करणे ल्युट् ॥

व्याघात । पु॰ विष्कम्भादियोगान्तर्गतयोगभेदे ॥ अत्रजातस्य फल यथा । व्याघातजातश्चसतांनितान्तव्याघातजन्मामनुजः कठोरः । असत्यभाषीकृपयाविहीनोमन्दश्च योदीर्घतनुः कृशाङ्ग ॥ अन्तराये । विघ्ने ॥ घाते । प्रहारे ॥ विशिष्टआघात ॥ अलङ्कारविशेषे ॥ तस्यलक्षण यथा । तद्यथ साधितं केनाप्यपरेणातदन्यथा । तथैवयद्विधीयेतसव्याघातइतिस्मृतः ॥ येनोपायेनयदेकेनोपकल्पितं तस्यान्येनजिगीषुतयातदुपायकर्मकयदन्यथाकरणं स्वसाधितवस्तुव्याहतिहेतुत्वात् व्याघात ॥ उदाहरणम् । दृशादग्धमनसिजजीवयन्तिदृशैवया । विरूपाक्षस्यजयिनीस्ता स्तुवेवामलोचना ॥

व्याघ्र । पु॰ शार्दूले । द्वीपिनि । रक्तैरण्डे ॥ करञ्जे । नराद्युत्तरस्थ श्रेष्ठे ॥ यथानरव्याघ्र ।

व्याजिघ्रति । घ्रा॰ । व्याङ्घ्राति अजातावितिक । यद्वा आतश्चोपसर्गेइतिक । पाघ्राध्माधेटदृश

शङ्कुतिशीन । अ . सञ्ज्ञायामितिनि षेधात् ॥
व्याघ्रदल । पुं० एरण्डे ॥
व्याघ्रनख । पु० स्नुहीवृक्ष ॥ व्याघ्रनखे । व्यस्तफले ॥ वयाघ्रस्यनखे ॥ न० नखीनामनिगन्धद्रव्ये । व्याडायुधे । कारजे । चक्राकारकीकन्दविशेषे ॥ नखक्षतविशेषे ॥ व्याघ्रस्यनखमिव ॥
व्याघ्रनखकम् । न० नखक्षते ॥
व्याघ्रनायक: । पुं० शृगाले । इ० रा० घट ॥
व्याघ्रपात् । पुं० विकङ्कते । ग्रन्थिले ॥ व्याघ्रस्यपादाएवपादमूलान्यस्य ॥ मुनिविशेषे ॥ त्रि० वयाघ्रतुल्यचरणे ॥
व्याघ्रपाद: । पुं० विकङ्कतवृक्षे ॥ विकण्टकवृक्षे ॥ मुनिविशेषे ॥ रक्तैरण्डे ॥
व्याघ्रपुच्छ । पुं० एरण्डमात्रे । व्याघ्रपुच्छमिवपुच्छमस्य ॥
व्याघ्राट । पु० भरद्वाजपक्षिणि ॥ व्याघमटति । अट० । कर्मण्यण् । वयाघ्रइवअटतिवा । अच् ॥
व्याघ्रादनी । स्त्री० चित्रलायाम् ॥
व्याघ्रायुधम् । न० नखाख्यगन्धद्रव्ये ॥
वयाघ्रास्य: । पं० बिडाले ॥ न० व्याघ्रमुखे ॥

व्याघ्री । स्त्री० निदिग्धिकायाम् । कण्टकार्याम् ॥ व्याजिघ्रति । घ्रा० । व्याघ्रादिभिरितिलिङ्गादातश्चोपसर्गइतिक० नतुश । गौरादि ॥ धूम्रवर्णायाम् वराटिकायाम् ॥ व्याघ्रस्त्रियाम् ॥ यथा । व्याघ्रीवास्तेजराचायुर्यातिभिन्नघटाम्बुवत् । निघ्नन्तिरिपुवद्रोगास्तस्माच्छ्रेय समाचरेत् ॥ इ० कुलार्णव: ॥
व्याङ्घ्रि । पुं० व्यङ्गसुते ॥ अपत्यं इञ् । स्वागतादीनाञ्चेतिवृद्धिनिषेधऐजागमश्चन ॥
व्याचिख्यासित । त्रि० व्याख्यातुमिष्टे ॥
व्याचिख्यासु: । त्रि० व्याख्यातुमिच्छौ ॥
व्याज । पुं० शाठ्ये । कुहनौ ॥ स्वरूपाच्छादने । अपदेशे । मिषे ॥ व्यजन्ति० क्षिपन्त्यनेन । अज० । हलश्चेतिघञ् । निष्ठायासेट्त्वान्नकुत्वम् ॥
व्याजनिन्दा । स्त्री० अलङ्कारविशेषे ॥ यथा । निन्दायानिन्दयाव्यक्तिर्व्याजनिन्देतिगीयते । विधेसनिन्द्योयस्तेप्रागेकमेवाहरच्छिर: ॥ अत्रहरनिन्दया० विषमविपाकंसंसारप्रवर्त्तयतोविधेर्निन्दाव्यञ्ज्या० व्याजनिन्दा ॥ यथावा । वि

धिरेवविशेषगर्वं चोय कारटस्वरंटकस्तवापराध। सहकारतरोचकारयेसौसहवाससरसेनकोकिलेन॥ अन्यस्तुत्या॰ अन्यस्तुत्यभिव्यक्तिरितिपञ्चमप्रकारव्याजस्तुतिप्रतबन्दः

व्याजनिन्दा॥ कपटकुत्सायाम्॥

व्याजस्तुति। स्त्री॰ अलङ्कारविशेषे॥ यथा। उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यास्तुतिनिन्दयो.। क. स्वर्धुनिविवेकस्तेपापिनोनयसेदिवम्॥ साधुदूतिपुन॰ साधुकर्त्तव्यक्तिमत परम। यन्मदर्थे विलूनासिदन्तै रपिनखैरपि॥ निन्दया स्तुतेः॰ स्तुत्यानिन्दयावा॰ अवगमनव्याजस्तुतिः। क. स्वर्धुनीत्युदाहरणे॰ विवेकोनास्तीतिनिन्दाव्याजेन॰ गङ्गास्नुकृतिश्देव॰ महापातकिनोपि॰ स्वर्गंनयतीतिव्याजरूपयानिन्दयातत्प्रभावातिशयस्तुतिः। साधुदूतीत्युदाहरणे॰ मदर्थमियन्तक्लेशमनुभूतवत्यसीतिव्याजरूपयास्तुत्या॰ मदर्थंनगतासि॰ किन्तुरन्तुमेवगतासि॰ धिक्त्वादूतिकांधमंविरुद्धकारिणीमितिनिन्दावगम्यते॥ कपटप्रशंसायाम्॥

व्याजोक्ति.। स्त्री॰ छलवाक्ये॥ अलङ्कारविशेषे॥ यथा॥ व्याजोक्तिरन्यहेतूक्त्यायदाकारस्यगोपनम्। सखिपश्यगृहारामपरागैरस्मिधूसरा॥ अत्रचौर्यरसक्रान्तसङ्केतभूपुष्टशुष्ठनलमधूलिजालस्यगोपनम्॥ कस्यचानभवेद्रोष प्रियायाः. सव्रणेधरे। सभृङ्गपद्ममाघ्रामीर्वारितापिमयाधुना॥ उपपतिनाखण्डिताधरायानायिकायाः. सकाशमागच्छन्तंप्रियमपश्यन्त्येवसख्यानायिकाप्रतिक्षिप्तेपदेश्रवयाजेनतम्प्रति॰ नायिकापराधगोपन क्रिया। पङ्क्तिरस्याचायविशेष। यत्तस्यावचनस्यान्यथानयनेनापह्नव। अस्यामाकारस्यहेत्वन्तरवर्णनेन॰ गोपनमिति॰ लक्षणा॰ लक्ष्यनाम्निचोक्तिय हृद्याकारस्यगोपनार्थंहेत्वन्तरप्रत्याय कव्यापारस्यैवलक्षणम्।

व्याड। पु॰ हिंस्रपशौ॥ क्रांसादिपशौ॥ सर्पे॥ व्याडति। अडउद्यमे। व्याङपूर्वः। पचाद्यच॥ खलि। वञ्चके॥ इन्द्रे।

व्याडायुधम्। न॰ व्याघ्रनखाख्यगन्धद्रव्ये॥ व्याडस्यव्याघ्रस्यायुधमिव॥

व्याडिः। पुं॰ मुनिभेदे। विन्ध्यस्थेनन्दिनीसुते। मेधाविनि। व्यडस्यापत्यम्। इञ्। स्वागतादित्वाद्वृद्धिनिषेधऐजागमश्चन॥

व्यात्तः। त्रि॰ विवृते। वाया॰ कृ॰ भा॰प्र॰। यथाव्यात्ताननः॥

व्याल्पुची। स्त्री॰ रसिकजनानामन्योन्यजलक्रीडने। करपार्श्वे। क

लक्रीडायाम् । करपत्रिकायाम् । छींटाखेलना॰ हू॰ छींटाछींटीसेखेलना॰ हू॰ व॰ भा॰ ॥ व्यतिहारेणउक्षणम्॰ परस्पराभ्युक्षणम् । उक्षसेचने । कर्मव्यतिहारेणच् स्त्रियामिति णच् प्रत्ययः । णच. स्त्रियामञ् । टिड्ढाणञित्यादिना ङीप् ॥

व्यात्त : । त्रि॰ प्रसारिते ॥

व्यादिष्ट : । त्रि॰ सन्दर्शिते ॥ व्याङ्पूर्वाद्दिशेः क्त ॥

व्याध : । पुं॰ मृगवधाजीवे । मृगयौ । लुब्धके ॥ व्ययसर्वस्वभायायाश्चियाज्जात । यथोक्तं ब्रह्मवैवर्ते । मापितादृगोपकन्यायास वंशो॰ तज्ज्योषिति । व्याधबभूवव्याधस्यपत्नवान् मृगहिंसकइति ॥ दुष्टे ॥ ताराभयेखि ॥ भेदने ॥ विध्यति । व्यधताडने । श्याद्व्यधेति ण ॥

व्याधभीत : । पुं॰ मृगे ॥

व्याधाम : । पुं॰ वज्रे ॥ हू॰ इन्द्र : ॥

व्याधि : । स्त्री॰ कुष्ठौषधौ ॥ रोगे । धातुवैषम्यनिमित्ते॰ ज्वरातीसारादिरूपेविकारे ॥ चिकित्साशास्त्रे॰ प्रथमप्रभूतशरीरिसमवायः पुरुष इत्युच्यते । तस्मिन् क्रियासोऽधिष्ठानम॰ कस्माल्लोकस्यद्वैविध्यात् । लोकोहिद्विविध॰ स्थावरोजङ्गमश्च । द्विविधात्मकएवाग्नेयसौम्यश्च॰ तद्भूयस्त्वात् । पञ्चात्मकोवा । तत्रचतुर्विधोभूतग्रामः । स्वेदजाण्डजोद्भिज्जजरायुजसञ्ज्ञः । तत्रपुरुषप्रधानम् । तस्योपकरणमन्यत् । तस्मात्पुरुषोऽधिष्ठानम् । तद्दु:खसंयोगाव्याधयइत्युच्यन्ते । तेचतुर्विधा॰ आगन्तव॰ शारीरा॰ मानसा॰ स्वाभाविकाश्चेति । तेषामागन्तवोऽभिघातनिमित्ता । शारीरास्त्वन्नपानमूलावातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता । मानसास्तु॰ क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्यकामलोभप्रभृतयइच्छाद्वेषभेदैर्भवन्ति । स्वाभाविका . क्षुत्पिपासाजरामृत्यु-निद्राप्रभृतय । तएतेमन. शरीराधिष्ठाना : ॥ तेषांसंशोधनसंशमनाहाराचारा . सम्यक्प्रयुक्तानिग्रहहेतव . इत्यादिसुश्रुतेप्रथमाध्याय । विगतव्याधिरनेन ॥ विविधाव्याधयोस्माद्वा ॥ व्याधानवा । उपसर्गवो वि : ॥

व्याधिघात : । पुं॰ आरग्वधे ॥ व्याधीन्हन्ति । हन॰ कर्मण्यण् । हनस्तोचिण्णलो : ॥

व्याधित . । त्रि॰ व्याधियुक्ते । आमयाविनि । आतुरे ॥ व्याधिः सञ्जा

तोस्य । तद्स्यसञ्जातंतारकादिभ्य इतच् ॥

व्याधिहन्ता । पुं॰ वाराहीकन्दे ॥ चि॰ व्याधिघातकी ॥

व्याधूत : । चि॰ कम्पिते ॥ विशेषेण आसमन्ताद्धूत ॥

व्यान । पुं॰ शिष्वगमनवत्यखिल शरीरवर्त्तिनिदेहस्थपञ्चवाय्वन्तर्गतानिलविशेषे ॥ प्राणापानयोर्निग्रमनकर्माऽचरणाभन्युत्पादनादिवीर्यवत्कर्महेतुत्वादखिलशरीरवर्त्ती व्यानवूर्घ्वर्थं ॥ व्याणोषिनामय त्वक्ष्व्याने व्याधिप्रकोपण । प्रतिदानतथाकण्ठाद्व्यापनाद्व्यानउच्यते । व्याप्त्याअनित्यनेनइत्यस्तिघञ् ॥

व्यानतम् । न॰ रतिबन्धान्तरे ॥ यथा । स्वेच्छयाभ्रमतिमल्लमेपियायोषिदाचरतिवल्लभाचितम् । व्यानतरतमिदंयन्द्रिप्रियाख्यादधोमुखचतुष्पदाकृति ॥

व्यानद्द : । चि॰ विशेषेणवद्धे ॥

व्यापक । चि॰ अपरच्छिन्ने । अन्यूनदेशकालवृत्तौ ॥ विष्णौ ॥ स्वसत्ताप्रकाशेऽर्थानामरूपेऽव्याप्नोति । आप्लृव्याप्तौ । णवुल्तृचाविति ण्वुल् ॥ तद्भिन्नाधिकरणाभावाऽप्रतियोगिनि । यथा । साध्यमव्यापकोयस्तुहेतोरव्यापकस्तथा सउपाधिभवेत्तस्यनिष्कर्षोयंप्रदर्श्यते ॥ इ॰भा॰प॰ ॥ आच्छादके ॥ यथा । पद्मस्यव्यापकसारससन्द्गधमनाकुलम् । अव्याद्व्यागस्यमित्येवमुत्तरतद्विदोविदुः ॥ पद्मस्य॰ भाणार्थस्य॰ व्यापकमाच्छादकम्॰ अभियोगाप्रतिकूलमितियावत् । इतिव्यवहारतत्त्वम् ॥ लिङ्गिनि ॥ येनचप्रतिवद्धतद्व्यापकम ॥ मौर्ष्ठे ॥

व्यापकता । स्त्री॰ व्यापकत्वे ॥

व्यापत्ति । स्त्री॰ व्याधौ । मरणे ॥

व्यापद् । स्त्री॰ आपदि ॥ मृत्यौ ॥ व्याङ्पूर्वात्पदे क्विप् ॥ विशिष्टाआपद ॥

व्यापनम् । न॰ आच्छादने ॥ व्याप्तौ ॥

व्यापन्न । चि॰ मृते ॥

व्यापाद । पुं॰ द्रोहचिन्तने ॥ व्यापादनम । व्याङ्पूर्वकपदधातोर्व्यन्ताद्भावेघञ् ॥

व्यापादनम । न॰ मारणे ॥ व्याङ्पूर्वात्पदधातोर्ण्यन्तात्ल्युट् ॥

व्यापादित । चि॰ मारिते ।

व्यापार । पु॰ कर्मणि । क्रियायाम् ॥ इग्गमभवने ॥

व्यापारित । चि॰ नियुक्ते ॥

व्यापारी । चि॰ व्यापारविशिष्टे व्यवसायिनि ॥

व्यापिका । स्त्री॰ व्यापिन्याम॥व्या

प्नोति । आप्लृ० ल्युट् । टाप् । कृत्स्नम् ॥

व्यापी । त्रि० विभौ । व्यापके । आत्मनि । पूर्वी ॥ सकलव स्तुव्यापनशीले ॥ व्याप्नु शीलमस्य आप्लृ० । सुप्यजातावितिणिनि ॥

व्यापिनी स्त्री० व्यापिकायाम् ॥

व्यापृत्वान । त्रि० व्याप्रियमाणे ॥

व्यापृत : । पु० कर्मसचिवे । आयुक्ते ॥ त्रि० व्यापारयुक्ते ॥

व्यापृति : । स्त्री० व्यापारे ॥

व्याप्त : । त्रि० ख्याते ॥ समाक्रान्ते ॥ यथा । यद्यत्कार्यंकारणेनव्याप्त मस्तर्वंक्रियेति । कारणत्वेनसर्वं कार्याणाव्यापनाद्व्याप्त . परमात्मा । पूर्णे ॥ व्याप्यतेस्म ॥ आप्लृ० । गत्यर्थाकर्मकेतिक्त ॥ कार्त्स्न्येनस र्वत्र तते ॥ सर्वंकार्यमुपादान त्वेनव्याप्नोति । विपूर्वादाप्नोते . पूर्वेण्यकर्त्तरिक्त ॥

व्याप्ति . । स्त्री० व्यापने ॥ लभे । इतिमेदिनी ॥ लक्षणे । इतिहेम चन्द्र ॥ यत्रधूमस्तत्राग्निरितिसा हचर्य्यनियमे ॥ व्यापनम् । आप्लृ० । स्त्रियांक्तिन् ॥ प्राप्तौ ॥

व्याप्यम् । न० लिङ्गे । साधने ॥ अधिकदेशकालनियमव्याप्यम् ॥ व्याप्यसाधनं व्याप्याभावो व्याप्यः ॥

व्याप्यते । आप्लृ० । ऋहलोर्ण्यत् ॥ कुष्ठौषधौ । पालके । व्याधौ । उत्पले ॥ त्रि० व्याप्तिविशिष्टे । व्याप्तिकर्मणि ॥ आकरे ॥ शङ्कितसमारोपितोपाधिनिराकरणेन पक्षभावप्रतिबद्धव्याप्यमितिसाङ्ख्याः ॥ अस्यार्थ : समयमयुक्त : शङ्कित : विपर्ययुक्त समारोपित : उपाधिर्विशेषणम् स्वभावेति । भाव : सत्ता तयाप्रतिबद्धमित्यर्थ . । प्रत्यक्षेत म० तेनलिङ्गसत्ताभावेनानुमानं सिद्ध्यतिभाव ॥

व्याप्यत्वासिद्ध: । पु० सोपाधिके ॥ साध्यव्यापकत्वे सतिसाधनाव्यापकत्वमुपाधि : । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । पर्वतोधूमवान्वह्निमत्वादित्यत्राद्रेन्धनसंयोगउपाधि: । यत्रधूमस्तत्राद्रेन्धनसंयोगइति साध्यव्यापकता । यत्रवह्निस्तत्राद्रेन्धनसंयोगोनास्ति अयोगोलके आर्द्रेन्धनाभावादितिसाधनाव्यापकत्वम् । एवंसाध्यव्यापकत्वे सतिसाधनाव्यापकत्वादार्द्रेन्धनसंयोगउपाधि : । सोपाधिकत्वाद्वह्नित्वं व्याप्यत्वासिद्धहेत्वाभास : ॥

अव्यभिचारितसामानाधिकरण्या
भावे ॥

व्याम. । पुं॰ बाह्वोः सकरयोस्ततयो
स्तिर्यगन्तरे । स्वस्वपार्श्वप्रसारित
योर्बाह्वोर्मध्ये । व्यायामे । न्यग्रो
धे ॥ विशेषश्चास्याग्रेऽभेन । अमग
तौ । हलश्चेतिघञ् ॥

व्यामनम् । न॰ व्यामे ॥

व्यामिश्र । त्रि॰ सङ्कीर्णे ॥

व्यामृष्ट । त्रि॰प्रमृष्टे ॥

व्यामोह . । पु॰ मोहे । विपरीतज्ञा
ने ॥

व्यायच्छमान । त्रि॰ व्यायामंकुर्व
ति ॥

व्यायत । त्रि॰ व्यापृते ॥ दीर्घे ॥
दृढे ॥ अतिशये ॥ विशेषेणायत ॥

व्यायाम । पु॰ वियामे ॥ दुर्गसञ्च
रे ॥ शरीरायासजनकेपौरुषेश्रमे ।
मल्लक्रीडायाम् ॥ अस्यगुणायथा ।
व्यायामोहितसदापथ्योबलिनांस्निग्ध
भोजिनाम् । सचशीतेवसन्तेचतेषां
पथ्यतम स्मृत । सर्वेष्वृतुषुस
र्वैर्हितमुरैरात्महितार्थिभि । श
क्त्यर्द्धेनतुकर्त्तव्योव्यायामोहन्त्यतो
ऽन्यथाम् ॥ कुक्षौललाटेयोवायांय
दाघर्म प्रवर्त्तते । शक्त्यर्द्धंतदिजा
नीयाद्दायतोच्छ्वासमेवच ॥ लाघव
कर्मसामर्थ्यंस्थैर्यंक्लेशसहिष्णुता ।
दोषक्षयोग्निवृद्धिश्चव्यायामादुपजा
यते ॥ व्यायामकुर्वतोनित्यविरु
द्धमपिभोजनम् । विदग्धमविदग्ध
वानिर्दोषं परिपच्यते ॥ नचव्या
यामसदृशमन्यत्स्थौल्यापकर्षणम्
। नचव्यायामिनमर्त्त्यंमर्दयन्त्यर
योबलात् ॥ नचैनं सहसाक्रम्यज
रासमधिगच्छति । व्यायामक्षुण्ण
गात्रस्यपद्भ्यामुद्वर्त्तितस्यच ॥ व्या
धयोनोपसर्पन्तिवैनतेयमिवोरग
॥ रक्तपित्तीकृशःशोषीश्वासीकासी
क्षतातुर । भुक्तवान्स्त्रीषुचक्षीणो
व्यायामंपरिवर्ज्जयेत् ॥ वातपित्ता
मयीबालोवृद्धोजीर्णीचसन्त्यजेत्॥
अतिव्यायामत. कासोरक्तपित्त
प्रजायते । श्रम क्लम क्षयस्तृष्णा
ज्वरश्छर्दिश्चजायते ॥ इतिराजवल्ल
भ ॥ व्यामे ॥ इतिहेमचन्द्र ॥

व्यायामवान् । त्रि॰व्यायामनि
व्यायामोऽस्त्यस्य बलादित्वात्पक्षे
मतुप् तदभावे॰इनि ॥व्यायामी॥

व्यायास । पुं॰ परिश्रमे ॥ विशिष्ट
आयास ॥

व्यायोग । पुं॰ दशविधरूपकान्तर्गत
रूपकविशेषे ॥ यथा । नाटक
प्रकरणभाण प्रहसनंडिम । व्या
योग समवाकारोवीथ्यङ्केहामृगा
इति । अभिनेयप्रकारा . स्युर्भाषा.
षट्स्थता दश ॥ इतिहेमच
न्द्र ॥

व्याल । पुं० दुष्टगजे ॥ सर्पे ॥ श्वापदे ॥ सिंहे ॥ त्रि० खले ॥ शठे ॥ व्याडति । अडउद्यमेव्याङ्पूर्व । पचाद्यच् । डलयोरैक्यस्मरणाद्व्यालः यद्वा । विरुद्धमासमन्तादलति० अडतिवाचल० अड० । डलयोरैक्यत्वम् । पचाद्यच् ॥

व्यालक । पुं० दुष्टगजे । गम्भीरवेदिनि ॥ द्र० त्रि० शेष ॥

व्यालखड्गः । पुं० व्यालनखे ॥

व्यालगन्धा । स्त्री० नाकुल्याम् । रास्नायाम् ॥

व्यालग्रह । पुं० व्यालग्राहिणि ॥

व्यालग्राही । पुं० आहितुण्डिके ॥ व्यालंगृह्णाति । नन्द्यादीतिणिनिः ॥

व्यालजिह्वा । स्त्री० महासमङ्गायाम् ॥

व्यालदंष्ट्र । पुं० गोक्षुरे ॥

व्यालनख । पुं० गन्धद्रव्यविशेषे । व्याघ्रनखे ॥

व्यालपत्रा । स्त्री० एर्वारौ ॥

व्यालवल । पुं० व्यालनखे ॥

व्यालमाल । पुं० शिवे ॥ व्यालाः सर्पाएवमालायस्य ॥

व्यालमृग । पुं० चित्रव्याघ्रे ॥

व्यालम्ब । पुं० रक्तैरण्डे ॥

व्यालायुधम् । न० व्याघ्रायुधे ॥ व्यालसिंहस्यायुधमिव ॥

व्याली । त्रि० व्यालवति ॥

व्याली । स्त्री० दुष्टायाम् ॥

व्यालोडनम् । न० विमर्दने ॥

व्यालोलित । त्रि० विलुलिते ॥

व्यावक्रोशी । पुं० परस्पराक्रोशने

व्यावर्त्तः । पुं० रोगभेदे ॥ विशिष्टआवर्त्ते ॥

व्यावर्त्तकः । त्रि० भेदके ॥

व्यावर्त्तनम् । न० इतरेतरवियोगस्थाने ॥ वेष्टने । वेठन० इ० भा०

व्यावर्त्तयितुम् । अ० बाधितुमित्यर्थे

व्यावर्त्तिका । स्त्री० बाधिकायाम् प्रतिबन्धिकायाम् ॥ यथा । मोहमहाप्रतिभान्तिविच्छिन्नविभया किन्तुस्यादायुष्मतो० देहस्यापचयोमतोनिविश्वतेगाढोग्रहेषुग्रहः । ब्रह्मोपाश्रमितिस्फुरत्यपिहृदिव्यावर्त्तिकावासना० कानामेयमतर्क्यमोहगहनादेवोसतांयातना ॥

व्यावर्त्तित । त्रि० बाधिते । पराङ्मुखीकृते ॥

व्यावहारिक । त्रि० व्यवहारसिद्धे ॥ व्यवहारेणचरति । चरतीतिठक् । स्वागतादिः ॥ विनयादित्वात्स्वार्थेवाठक् ॥

व्यावृत्तः । त्रि॰ निवृत्ते ॥ वृते ॥

व्यावृत्ति. । स्त्री॰ व्यतिरेके । निरसने ॥ खण्डने ॥ आवृत्तौ ॥ यथा सर्वसपक्षव्यावृत्तिरेवदोषो॰ नविपक्षव्यावृत्तिरपितस्याननुगुणत्वात् ॥

व्याश्रय. । त्रि॰ विभिन्नाश्रये । नानापक्षसमाश्रये ॥ विभिन्नआश्रय. ॥

व्यास॰ । पुं॰ मुनिविशेषे । बादरायणे । पाराशर्य्ये । भगवति॰ कृष्णद्वैपायने । मुनीनामध्ये भगवतोविभूतौ ॥ येन॰ ऋग्वेदादिविभागेन॰ चतुर्धावेदाव्यस्ता । तत्रऋग्वेदएकविंशतिधाकृत यजुर्नवाधिकशतधाकृत । सामवेद सहस्रधाकृत अथर्वण पञ्चाशच्छाखाभेदेनकृत । एवंविभागेनचतुर्द्धावेदाव्यस्ताः । अन्यानिचपुराणानि॰ व्यस्तान्यनेनेतिव्यास ॥ तवेदशास्त्रपरिनिष्ठितशुद्धबुद्धि- चर्माम्बरसुरमुनीन्द्रनुतकवीन्द्रम्- । कृष्णत्विषकनकपिङ्गजटाकलापव्यासनमामिशिरसातिलकमुनीनाम् ॥ व्यस्यतिविभजतिविस्तारयतिवापूर्वोदस्यतेर्वाहुलकात्कर्त्तरिघञ ॥ वेदविस्ताकरणाद्व्यासनामाभवन्मुनिरितिभागवतम् ॥पाठकब्राह्मणे ॥ यथा । विस्पष्टमद्रुतमशान्तं स्पष्टाक्षरपदंन्तथा । कलस्वर

समायुक्तंरसभावसमन्वितम् ॥ बुद्ध्यमान' सदर्थंग्रन्थार्थंकृत्स्नशोनृप । ब्राह्मणादिषुसर्वेषुग्रन्थार्थंचार्पयेन्नृप । यएवंवाचयेद्ब्रह्मन्सविप्रोव्यासउच्यते ॥ विस्तृते । प्रपञ्चे । विस्तारे ॥ मानभेदे ॥ गोलस्यमध्यरेखायाम ॥ व्यसनम । असुचेपणे । घञ ॥

व्यासक्त ' । त्रि॰ व्यापृते । विशेषेणासक्ते । संलग्ने ॥ व्यासक्त कार्यान्तरविस्मरतीत्यसावधानोक्ति ॥

व्यासङ्ग. । पुं॰त्रिक्षेपे ॥ विशिष्टासङ्गे ॥ विशेषेणआसङ्ग. ॥ व्यासि ॥

व्यासमाता । स्त्री॰ सत्यवत्याम् । वासव्याम् ॥

व्यासिद्ध. । त्रि॰ निषिद्धे ॥

व्यासेध. । पुं॰ प्रतिषेधे । व्यासेधम । व्याङ्पूर्वात्सेधतेर्घञ् ॥

व्याहत. । त्रि॰ वाधिते ॥ विधूनिते ॥ चयनीते ॥ विशेषेणआहत. ॥ व्यर्थे ॥

व्याहतिः । स्त्री॰ व्याघाते ॥

व्याहन्यमान । त्रि॰ प्रतिषिद्ध्यमाने ॥

व्याहरणम् । न॰ व्याहारे । यथा । स्नातुस्तुवरुणस्तेजोजुह्वतोऽग्निश्रियहरेत् । भुञ्जानस्ययमस्त्वायुस्त

स्मान्नव्याहरेत्किञ्चिदितिभविष्योत्तरपुराणम् ॥

व्याहरत् । त्रि० शब्दयति ॥

व्योहार । पुं० उक्तौ । लपिते । वचसि ॥ व्यवहरणम् । व्याङ् पूर्वात् ० हृञोभावेघञ् ॥

व्याहृतम । त्रि० उक्ते ॥ सन्दिष्टे ।

व्याहृति । स्त्री० भूरादिषु ॥ व्याहरतिभूरादिसप्तलोकान् । हृञ् ० । व्याङ्पूर्वस्तत ० क्तिन् । व्याहारे ॥

व्युच्छिन्न । त्रि० विमुक्ते ॥ विशेषेणोच्छिन्ने ॥

व्युत । त्रि० स्यूते ॥ द्व० द्वि० कोष ॥

व्युति : । स्त्री० व्यूतौद्व० द्वि० कोष ॥

व्युत्क्रम । पुं० क्रमविपर्यये । व्यतिक्रमे । उत्क्रमे । अक्रमे । विशिष्टउत्क्रम ॥

व्युत्क्रमणम् । न० पृथगवस्थाने ॥ व्युत्पूर्वात्क्रमेर्ल्युट ॥

व्युत्थानम् । न० स्वातन्त्र्यकृत्ये ॥ चित्तमूढक्षिप्ताख्यभूमित्रये । समाधिपारणे ॥ विरुद्धमुत्थानम् । प्रादयोगतेतिसमास . ॥ वैपरीत्येनोत्थानवा ॥ विरोधाचरणे । न्याय्यां वृत्तिं समुल्लङ्घ्यतद्विरुद्धतयास्थिति . । व्युत्थानमुदितराज्ञ . सामन्तोव्युत्थितोयथा ॥ एषणानुगुणात यास्थितिमतिक्रम्यतत्प्रतिकूलत्वेन ०यास्थिति सा० व्युत्थानमित्युदितमहर्षिरितिशेष । तत्रप्रसिद्धिप्रमाणयति । राजइत ॥ प्रतिरोधने । नृत्यभेदे ॥ विशेषेणोत्थाने ॥

व्युत्थापनम् । न० बाधने ॥

व्युत्पत्ति । स्त्री० सम्यग्ज्ञाने ॥ संस्कारे ॥ विशेषेणोत्पत्ति ॥ विविधोत्पत्ति ॥ शक्तिज्ञाने ॥

व्युत्पन्न । त्रि० व्युत्पत्तियुक्ते ॥ सम्यग्ज्ञानवति ॥ संस्कृते ॥ विशेषेणात्यन्तम् ० उत्पन्न परिचित ॥

व्युत्पादक . । पुं० व्युत्पत्तिजनके ॥

व्युदसनम् । न० निरसने ॥

व्युदस्त . । त्रि० प्रतिषिद्धे ॥

व्युदास . । पुं० प्रतिषेधे ॥

व्युषित . । त्रि० पर्युषिते । वुसा० द्व० तिभाषाप्रसिद्धे ॥ व्युष्यतेस्म । उष० । क्त ॥ देशान्तरगते ॥

व्युष्टम् । न० कल्पे । प्रभाते । काल० द्व० भा० ॥ फले ॥ दिने ॥ त्रि० उषिते । पर्युषिते ॥

व्युष्टि : । स्त्री० फले ॥ समृद्धौ ॥ स्तुतौ ॥ व्युच्छनम् ० व्युच्छातेवा । उच्छीविवासे ॥ स्त्रियांक्तिन् ॥ स्वकरणसवेद्यविस्मृतत्त्वे । अपरोक्षख्यातौ ॥

व्यूढ । त्रि॰ विन्यस्ते । व्यूहरचनया स्थिते ॥ संहते ॥ पृथुले ॥ विशिष्टोह्यतेस्म । वहप्रापणे । क्तः ॥

व्यूढकङ्कट त्रि॰ सन्नद्धे । वर्म्मिते । सज्जे . दंशिते । धृतसन्नाहे ॥ गूढोधृत । ॰ कङ्कट सन्नाहोयेन ॥

व्यूढि । स्त्री॰ व्यूहे ॥ विन्यासे ॥ संहतौ ॥ पृथुलतायाम् ॥

व्यूत । त्रि॰ ऊते । तन्तुसन्तते ॥

व्यूति । स्त्री॰ वस्त्रादिवानेवाये ॥ विशिष्टाऊतिः । वेञ् ॰ ऊतिपूतीत्यादिनाक्तिनिनिपातित ॥

व्यूह . । पुं॰ निर्माणे ॥ वृन्दे । समूहे । विभागे ॥ तर्के ॥ देहे ॥ विस्तारे ॥ बलविन्यासे । युद्धार्थसेनारचनायाम् । युद्धार्थसैन्यस्यदेशविशेषविभज्यदुर्लङ्घ्यत्वनिमित्तस्थापने ॥ व्यूहते । ऊह॰ तर्के । घञुपधेतिक : ॥ व्यूह्यतेवा । घञ् ॥ विशिष्टऊहोवा ॥

व्यूहनम् । न॰ सैन्यसस्थाने ॥

व्यूहपार्ष्णि : । पुं॰ व्यूहपृष्ठे । प्रत्यासारे । सैन्यस्य पृष्ठेधनु . शतद्वयान्तरेस्थितसैन्ये ॥ व्यूहस्य पार्ष्णि : पृष्ठभाग ॥

व्यूहभेद : । पु॰ बलविन्यासस्यप्रभेदे । व्यूहस्यभेदोविशेष । यथाहु । समग्रस्तुसैन्यस्यविन्यासस्थानभेदत : । सव्यू हइतिविख्यातोयुद्धेषुपृथिवीभुजाम् ॥ व्यूहभेदास्तुचत्वारोदण्डोभोगोऽथमण्डलम् । असंहतश्चनिर्णीतानीतिसारादिसम्मता . ॥ अन्येपिप्रकृतिव्यूहा . क्रौञ्चचक्रादय . क्वचित् । तत्र । तिर्यग्वृत्तिस्तुदण्ड स्याद्भोगोन्वावृत्तिरेवच । मण्डल सर्वतोवृत्ति : पृथग्वृत्तिरसंहत ॥ इति ॥ दण्डवदवस्थान दण्ड । अन्योन्यानुगताहत्तिर्भोग । सर्पशरीरवदवस्थान मण्डलम् । गजादीनाविजातीयैरमिश्रितानांस्थानमसंहत । शकटमकरपताकासर्वतोभद्रदुर्जयादयोऽन्येपिव्यूहसन्तितेषाक्रमश्चभारतादिषुद्रष्टव्यः ॥

व्यो । अ॰ लोहे ॥

व्योकार । पुं॰ लोहकारके ॥ व्योलोहंव्ययतीत्याकिप्प्रकृत्वनशालोहान्ता? लोहकारः ॥ ... व्योकरोति । डुकृञ् । कर्मण्यण् ॥

व्योम : । पु॰ मयमु पुञ्चे ॥

व्योमकेश . । पुं॰ शिवे ॥ व्योमकेशो प्राय ... रणाय व्योमव्यापिन केशायस्येतिवा ॥

व्योमचारी । पु॰ देवतायाम् ॥ विहङ्गमे । ग्रहे ॥ चिरजीविनि । त्रि॰ व्योमचरे ॥

व्योमचारिपुरम् । न॰ देवानापुरे ॥ व्योमचारिणापुरम् । शोभे ॥

व्योमधूम । पु॰ मेघे ॥

ति। व्रज्‌। क्विप्‌। तुक्‌॥ त्रि० चलकारके॥

व्रणकेतुघ्नी। स्त्री० दुग्धफेन्याम्‌। गोजापयाम्‌॥

व्रणारिट्‌। पुं० ब्राह्मणयष्टिकायाम्‌॥ त्रि० व्रणद्वेषके॥

व्रणशोधनम्‌। न० व्रणपरिष्कारणे यथा। व्रणास्यत्वविशुद्धस्याथ शुद्धिकार परं। पटोलनिम्बपत्रस्य सर्वत्र वप्रयुज्यते। वातिकेदृश्यमूलानां चोरणापेत्तिकेव्रणे। चारस्थशादे कफजेकषाय शोधनमिष्टम॥

व्रणहा। पु० एरण्डवृक्षे॥ त्रि० व्रणघातके॥

व्रणहा। स्त्री० गुडूच्याम्‌॥

व्रणाद्वत्। पु० कालकारीवृक्षे॥

व्रणारि। पु० बोले॥ अगस्त्यवृक्षे॥

व्रतम्‌। न० पु० अशने। भक्षणे॥ वृञ्‌ यादिकोऽप.॥ पुण्यजनको पवासादौ। नियमे। शास्त्रविहिते नियमानुष्ठाने। मधुमांसवर्जनादि नियमे॥ तथाचवेदे० पयोव्रतोब्राह्मणोयवागूव्रतोराजन्य' आमिक्षाव्रतोवैश्यइत्युच्यते। व्रतस्ननामत्र भ्यवहारार्थमुपादीयते। अत्यस्ता नेनशालिमांसादीन्यपिव्रतयितुम्‌। तत्रनियम. क्रियते० इतिभाष्यम्‌। सत्यामर्थितायांपयएवव्रतय तीति'नयमे यनतुरिभिरितिकैयट॥ उपनयने॥ व्रियते। वृञ्‌०हडवा। पृषिरञ्जिभ्यांकिदित्यतच्‌। बाहुलकाद्वृञोपि। क्रित्वाद्गुणा॥ यण्‌। व्रजत्यनेनस्वर्गम्‌। गौत्व रसञ्चरेतिव। पृषोदरादि। व्रज्यां सर्वं द्व्यादौ श्रौतावृतनिषेध य तकालिद्‌सी यथा। वर्षिणीनां व्रतोपासनमाहितकुम्भतीर्थोदयेव र्षिणीस्थेहरौ। देवतासुप्तकालेऽथ मासेधिकेप्रवृद्धेदैवेज्यदेवेज्ययोरस्तके॥ कुम्भतीर्थोदये०कुम्भोघटे०तीर्थयो निरतमपत्तिर्यस्य स कुम्भतीर्थ०अगस्ति तस्योदये॥ रुयेदकर्त्तव्य मिदनकर्त्तव्यमित्येवविधेसङ्कल्पविशेषे॥

व्रतति। स्त्री० विस्तारे॥ वलव्याम्‌॥ व्रजन्तीततिर्विस्तृतिरस्याः। पृषोदरादि॥ यद्वा। प्रतनोति। तनु'विस्तारे। क्तिच्क्तौच्संज्ञायाम्‌। पृषोदरादित्वात्पृथस्य-व:॥ व्रतमिणकरोति। व्रतश ब्दात्० तत्करोतीतिण्यन्ताद्बाहुलकाडतिर्वा॥

व्रतती। स्त्री० वल्ल्याम्‌॥ विस्तारे। कृ० विकल्पकोप.॥

व्रतबन्ध। पुं० उपनयने॥ व्रतानामाचार्यायानियमानाबन्धोबन्धनं-यस्मिन्‌स॥

व्रतयज्ञ । पु० संश्रितव्रते ॥
व्रतसङ्ग्रह । पु० दीक्षायाम् ॥
व्रतस्थ. । पु० ब्रह्मचारिणि ॥
व्रतादेश । पु० उपनयने ॥
व्रती । पु० यजमाने ॥ साधके ॥ ब्रह्मचारिणि ॥ चान्द्रायणादिव्रतकारिणि ॥ व्रतमेषाजिनादिधारणंभोजनादिनियमोवास्यास्ति । व्रीनि । यद्वा। व्रतयति । व्रताज्जोजनतन्निवृत्त्योरितिणिच् । व्रतेर्णिनि. ॥
व्रतोपनयन । न० व्रतस्योद्यापने ॥
व्रतोपायनम् । न० वायने ॥
व्रश्चन. । पु० स्वर्णादिच्छेदनद्रव्ये । पत्रपरशौ । छिनो० ब्र० भा० व्रश्चतेऽनेन । ओव्रश्चू० । करणेतिल्युट् । न० छेदने ॥
व्राजि. । स्त्री० वात्यो ॥ वाताली ॥ व्रजति । व्रजगतौ । वसिवपीत्यादिना० इञ् ॥
व्रात. । पु० सङ्घे । नानाजातीयानामनियतवृत्तीनामुत्सेधजीविनांसङ्घे ॥ न० तेषांकर्मणि ॥ व्रयति० नियच्छति० मुख्यमिश्रेतिवृश्चन्तात्व्रतशब्दात्० घञ् । व्रातच्फञोरितिलिङ्गाद्वृत्तिः ॥ पु० समूहमात्रे ॥ व्याधाटो ॥
व्रातीन । त्रि० सङ्घजीविनी ॥ शरीरायासजीविनि ॥ व्रातेनशरीरायासेनजीवति० नतुवृत्तिवैभवेन । व्रातेनजीवतीतिखञ् ॥
व्रात्य । पु० षोडशादिवर्षपर्यन्तमप्यसंस्कृतेभ्रष्टगायत्रीकेविप्रादौ । संस्काररहिते ॥ यथाहमनुः । आषोडशाद्ब्राह्मणस्यसावित्रीनातिवर्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः. अतऊर्ध्वंत्रयोप्येतेयथाकालमसंस्कृताः सावित्रीपतिताव्रात्याभवन्त्यार्यविगर्हिताः ॥ नैतैरपूतैर्विधिवदापद्यपिहिकर्हिचित् । ब्राह्मान्यौनांश्चसम्बन्धा-नाचरेद्ब्राह्मणः सहेति ॥ शरीरायासजीवेव्याधादिव्रतः० सङ्घेशाखादिभ्योय.॥ यद्वा । व्रातमर्हति । दण्डादिभ्ययइतियत् ॥ उपनयनादिसंस्काररहिते ॥
व्रात्यस्तोम । पु० यज्ञविशेषे ॥
व्रीड । पु० लज्जायाम ॥ भावे घञ् ॥
व्रीडनम् । न० लज्जायाम् ॥
व्रीडा । स्त्री० लज्जायाम् । त्रपायाम् ॥ गुरोश्चहलः । टाप् ॥
व्रीडाकरवात । पु० गुदरवे । पर्दे ॥
व्रीडित. । त्रि० लज्जिते ॥ भावेक्त. ॥
व्रीहि: । पु० धान्यमात्रे ॥ आशुधान्ये ॥ वर्हति० उपचयगच्छति । बृहवृद्धौ । बृगुपधात्कि

व्रीहिमय :

द्वितीन् । पृषोदरादि · ॥ व्रीयते ।
व्रीङ् गत्याम् । बाहुलकाद्धिक्वा ॥
व्रीहि फलथा॰व्रीहि । बिल्वादि
भ्योऽख् । फलपाकशुषामिति॰लु
पि॰युक्तवद्भाव : ॥
व्रीहिक · । पुं॰ धान्यविशिष्टे ॥
ठन् ॥
व्रीहिकाञ्चन : । पु॰ मसूरे
व्रीही । त्रि॰ व्रीहियुक्तक्षेत्रादौ ॥
व्रीह्यादिभ्यश्चेतिइनि ।
व्रीहिपर्णी । स्त्री॰ शालपर्ण्याम् ॥
व्रीहिमय । पुं॰ पुरोडाशे ; व्रीहेवि
कृत्यादि गौडकुलोत्पन्ना डोचवास्

व्रैहेयम्

कार : पुरोडाश . । व्रीहेः पुरोडा
शहूतिमयट् ॥
व्रीहिराजक । पुं॰ कामलिकाया
म् । कङ्गधान्ये ॥ चीनकधान्ये ॥
व्रीहिश्रेष्ठ · । पु॰ शालिधान्ये ॥
व्रीह्यागारम् । न॰ कुसूले । धान्य
गृहे ॥
व्रैह । त्रि॰ व्रीहिनिर्मिते ॥
व्रैहेयम् । न॰ व्रीहिभूस्थले । धान्यसा
मान्यशकलमादिक्षेत्योत्पत्तियोग्ये चे
त्रे ॥ व्रीहीणाभवनक्षेत्रम् । व्री
हिशालोर्ढक्
प्रधानो पनाम तुलाराम मिश्रात्मज

श्रीधनपति मिश्रापरनाम्ना श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राज

काचार्य श्री महाविहरानन्द नाथ भारती शिष्येण ब्रह्मावधूत श्री

सुखानन्दनाथ परनामधेयेन विरचिते शब्दार्थचिन्तामणौ वगर्ग .

समाप्तिकृत

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्रह्मावधूत

श्री जगदानन्दनाथ प्रीतिकामी ., श्रीमन्महा राजाधिराज रविकुलाव

तंस महीमहेन्द्र यावदार्यकुलकमल दिवाकरे मेदपाटदेशाधीशे. चाखल

भूपाल मौलिमणिभि · श्री १०८ श्रीयुत सज्जनसिंहै : सस्थापिते

उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास

प्रेरणया पण्डितवाजपेयि वंशीधरेण पक्तिखनाजितदेव शर्मणाच शोधित:

हैडजीवनराम शम्भूनाथ गुलाबर 'म लक्ष्मीनाथ प्राणनाथ लालसिंह

प्रभृतिभिर्हिजै · वर्णक्रमेणद्भिंत सर्दारवेग यवनेन गौरीशङ्करेणच

मार्गशीर्षशुक्ला चतुर्दश्या सोमवासरे शब्दार्थ-

चिन्तामणिकोशस्य वगर्गोमुद्रित

एकोनविंशत्येकाधिकचत्वारिंशत्तमे १९४१ वैक्रमाब्दे राजधा
न्युदयपुरे सज्जनयन्त्रालये श्रीमेदपाटेश्वर
कोशधनव्ययात् वाजपेयिवंशीधरस्य
प्रबन्धतोमुद्रित .

शंसा

शं। पुं॰ शिवे ॥ शस्ते ॥ शकारे ॥

शयु। त्रि॰ शुभान्विते ॥ शमस्य स। क शंभ्यावभयुस्तितुतयसः इतियुस्। सकार पदत्त्वार्थ ॥ पक्षे ऽनुस्वारस्य परसवर्णो ऽनुनासि कीय. शय्युँ ॥

शंव। पुं॰ मुषलाग्रस्थलौहमण्डल के ॥ वज्रे ॥ त्रि॰ शुभान्विते। शाम्यत्यरीन्। अन्तर्भावितण्यर्था च्छमेर्वन् ॥ शशुभमस्यास्यसाभिद्य त्वादितिवा। क शमभ्यामितिव। पक्षद्वये ऽपिदन्त्योष्ठ्य। अनुस्वा रस्य वैकल्पिके परसवर्णो ऽनुनासि- कीव। शव्वँ ॥

शंसट्॰ चन्त कथने ॥ आभिमुख्ये ॥

शंसन्। त्रि॰ कथयति ॥

शंसनम्। न॰ शंसायाम्॥ सूचने॥ कथने॥ शंसुस्तुतौ। ल्युट्॥

शंसा। स्त्री॰ वचसि। वचने॥ वा ञ्छायाम्॥ प्रशंसायाम्॥

शंसित.। त्रि॰ निश्चिते॥ हिंसि ते॥ स्तुते॥ चनुष्ठिते। शंसिक्त॥

शंसितव्रत.। त्रि॰ अनुष्ठितव्रते॥

शंस्ता। पुं॰ स्तोतरि॥ होतरि॥ शंसति। शंसु॰। तृन्तृचौशंसि चदादिभ्य संज्ञायांचानिटाबि- तितृन्। नपत्रादिग्रहणस्यनियमा र्थत्वान्नदीर्घः। शंस्तौ॰शंस्तर

इत्यादि॥

शंस्य.। त्रि॰ स्तुत्ये॥

शक। पुं॰ म्लेच्छजातिप्रभेदे। श कदेशेऽवपुरस्तात्क्षत्रिये॰पश्चाद्वि च्छिन्नक्रियालोपादिनाशूद्रत्वमापन्ने ॥ यथाहमनु। शनकैस्तुक्रिया लोपादिमाःक्षत्रियजातय। वृष लत्वंगतालोकेब्राह्मणादर्शनेनच॥ पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः। पारदाः पह्ल वाश्चीनाः किराताःदरदाः खशाः। इति॥ चत्रसत्ययुगेसगरेणाम स्तकार्धमुण्डयित्वाविशान्यस्त वेद वाह्यत्वस्त्राऽकारि। चर्य्येनंच शकानान्तुमुण्डयामासभूपतिरिति पाद्मेस्वर्गखण्डेनिरूपितम्॥ क मद्रुतिप्रसिद्धेदेशे। तत्रत्याः. स र्वे शकपदवाच्याः॥ शालिवाहन नाम्नाप्रसिद्धेनृपतिलके॥ तस्यम रणदिनावधिवत्सरगणनाद्ध श काब्द॰इतिमत्रयातिथिपत्रेव्यवह्रि यते॥

शककारक। पुं॰ शकप्रकृतिकर्त्त- रिनृपतिवरे॥ यथाहकालिदास.। निहन्तियोभूतलमण्डलेशकान्स पञ्चकोव्यब्दलप्रमान् ५५०००- ०००० कलौ। सराजपुत्रः श काकारकोभवेत्प्राधिराजोच्युत- शाकवाटरा॥ चत्र शतकोटिस

स्याईपशस्तात्केऽटि ॥ कलौषट्श कालारकानाह । युधिष्ठिरोविक्रम शालिवाहनोनराधिनाथोविजयाभिनन्दन । स्तसेनुनागार्जुनमेदिनीविभुर्बलि क्रमात्षटशककारका कलौ ॥ एषामन्तरालवर्षाण्याह । युधिष्ठिराद्दयुगाब्दराजय ३०४४ ॥ तावत्कस्विद्व १३५ ऽभवन्खाष्टभूमय १८००० हुशायुत १०००० लक्षचतुष्टय४०००० क्रमात्क्रमशहाइनागा ८२१ क्षुति शाकवत्सरा ॥ एषाजन्मभूमिमाह ॥ युधिष्ठिरोभूत्विह्नास्तिनापुरे० तथोज्जयिन्यापरिविक्रमाह्वय । शालेयधाराप्रतिशालिवाहन सुचित्रकूटेविजयाभिनन्दन ॥ नागार्जुनोरोहितकेक्षितौबलिर्भविष्यतीन्द्रोभ्रगुकच्छपत्तने । क्रतप्रशस्तिकादलन्तरभवेत्तदाभविष्यन्त्यवनीभृतोऽर्कत ॥

शकट । पुं० न० अनसि । कक्कडा० कु० भा० ॥ गन्त्याम् । गाडी० कु० भा० ॥ शक्नोतिभारवोढुं शोभयितुंवा । शक्नुशक्तौ । शकादिभ्योऽटन् ॥ तिनिशवृक्षे ॥

शकटव्यूहः । पुं० शकटाकारेबलविन्यासे । सूच्याकाराग्र पश्चात्पृथुलः शकटव्यूहोभवति । तेन पृष्ठतोभयेसतियातव्यमार्गगच्छेत् ॥

शकटहा । पु० श्रीकृष्णे ॥ शि० शकटनाशके ॥

शकटाह्वा । स्त्री० रोहिणीनक्षत्रे ॥

शकटिका । स्त्री० गन्त्याम ॥

शकटी । स्त्री० गुणैनावाहनविशेषे ॥ बह्वादित्वान् ङीष् ॥

शकट्या । स्त्री० शकटसङ्घे ॥ शकटानांसमूहः । पाशादिभ्ययः ॥

शकल । पुं० न० खण्डे एकदेशे ॥ न० रोहितादिमत्स्यानात्वचि ॥ रागवस्तुनि ॥ वल्कले ॥ पुं० कश्यपरे ॥ शकयते० शक्नोतिवा । शक्नुशक्तौ । शकिशम्योर्निदिंतकल ॥

शकली । पु० मत्स्ये ॥ शकल०मस्त्यस्यास्ति । अतइनि ॥

शकलीकृत । त्रि० खण्डीकृते ॥

शका । स्त्री० भाषान्तरे ॥ शक्नोतीत्यर्थेपचाद्यच्

शकान्तक । पु० विक्रमादित्ये ॥

शकार । पुं० राज्ञोऽनूढायाः स्त्रियाभ्रातरि ॥ यथा । मदमूर्खताभिमानोदुष्कुलतैश्वर्यसयुक्तः । सोयमनूढाभ्राताराज्ञःश्यालःशकार इत्युक्तः ।

शकारि । पु० विक्रमादित्ये । माहसाङ्के ॥

शकुन । पुं॰ पक्षिमात्रे ॥ पक्षिवि
शेषे । गृध्रे ॥ विप्रप्रभेदे ॥ उत्स
वादिषु मङ्गलार्थं गेयगीतविशेषे ॥ न॰
शुभाशुभशंसिनिमित्ते । शुभा
शुभज्ञाननिर्णयहेतौ ॥ यथा । श
कुनकथ्यते तत्तु यच्छुभाशुभसूचक
म् । तथाहि । विप्राश्वेभफलान्नदु
ग्धदधिगोसिद्धार्थपद्माम्बरवेश्यावा
द्यमयूरचाषनकुलाः बद्धैकपश्वामि
षम् । सद्वाक्यकुसुमेक्षुपूर्णकलशच्छ
त्राणि मृत्कन्यकारत्नोष्णीषसितोक्ष
मद्यससुतास्त्रीदीप्तवैश्वानराः ॥
आदर्शाञ्जनधौतवस्त्ररजकामीनाज्य
सिंहासनशावरोदनवर्जितध्वजम
धुच्छागास्त्रगोरोचनम् । भारद्वाज
नृयानवेदनिनदा माङ्गल्यगीताङ्कुशा
दृष्टाः सत्फलदाः प्रयाणसमये
रिक्तो घटः स्वानुगः ॥ नरो निरू
प . सितवाससाश्चौवाचप्रशस्तां म
धुरां सुजल्पन् । एवंविधा योषिद
पि प्रयाणे प्रवेशकाले कुरुतेऽर्थसिद्धि
म् ॥ पृथ्वीपतिर्ब्राह्मणहर्षयुक्तो वे
श्याकुमारी सुहृदः सुवेशाः । ना
र्यो नराः श्वेतवृषाधिरूढाः शु
भाय दृष्टाः सकलोद्यमेषु । श्वेता
म्बराः श्वेतविलेपनाढ्याः श्वेतास्रज
मूर्द्ध्नि धारयन्तो । हृष्टा प्रहृष्टा यदि
गौरवर्णा नारी नरैः स्यात्तदभीष्ट
सिद्धि ॥ घृतातपत्र . शुचिशुक्लवा
सा पुष्पाऽर्चितसन्दनचर्चिता
ङ्ग . । निःश्वासयुक्त कृतभोज
नो वा विप्र पठन्यच्छति सर्वसिद्धि
म् अभ्युपगच्छति यस्य यियासो
स्तो पुरुषोऽप्यथवा फलहस्त । सर्वं
समीहितसिद्धिरवश्यतस्तु नरस्य भव
त्यचिरेण ॥ आदाय रिक्तकलशं ज
लार्थी यदि व्रजेत्कोऽपि सहध्वगेन ।
पूर्णं समादाय निवर्त्तते सौ यथा कृ
तार्थं पथिकस्तथैव ॥ गोधाजाह
कसूकराहिशशकानां कीर्त्तनं शोभ
नं नो शब्दो न विलोकनं च कपिऋ
क्षाणामशुभो व्यत्यय । नद्युत्तारभ
यप्रवेशसमरे नष्टार्थसंवीक्षणे व्यत्य
स्ता . शकुनान्तपेक्षया विधौयाश्चो द
त . शोभनाः ॥ वामाङ्गे कोकिला
पल्ली पोतकी शूकरी बला । पिङ्गला
छुच्छुका श्रेष्ठा शिवा पुरुषसंज्ञिता
छिक्कर . पिप्यको भास श्रीकण्ठो
वानरो रुरु . । स्त्रीसंज्ञका . काक
ऋक्षश्वान स्युर्दक्षिण शुभा ॥
प्रदक्षिणगता श्रेष्ठा ' यात्रायां
गपक्षिण . । ओजा मृगा व्रजन्तोऽति
धन्या वामे स्वरस्तु न . ॥ श्यामाशि
वा पिङ्गलिकान्यपुष्टा पल्ली बला शूक
रिका तथैव । छुच्छुन्दरी चापि शु
भाय वामे पुंनामधेया . शकुनाश्च
सर्वे । श्रीकण्ठछिक्कारकरुरुबष्का
श्रीकण्ठभासी भरुको मयूर । श्ये

न समः पिप्पकयाप्रशस्ता : श्री नामधेयाश्वपिट्‌श्रियेण ॥ दुष्टेश कुनेजातियत्कर्त्तव्यं तदाह । प्रा णायामांस्त्वपञ्चस्मरन्नारायणादाप्नि शाकुनेवैविरुद्धे । तिग्मानूक्तत्वे वह्नितीयेह्नतीयेचञ्चप्रख्यान्नेचतुर्थे- गम . स्यात् ॥ चञ्चप्रख्यान्द्विस्र तुल्यान्तिग्मानूतोच्चान्प्राप्येत्य र्थः । शक्नोति । शक् • शकिरुनोन्तो न्युनयक्कुन्युनप्रत्यय ॥

शकुनज्ञः । त्रि • शकुनज्ञातरि ॥

शकुनज्ञा । स्त्री • ज्येष्ठ्याम् । प ल्ल्याम् ॥

शकुनाहृत : । पुं • शालिविशेषे ॥

शकुनि : । पुं • विहगे । पक्षिणि ॥ सौबले । दुर्योधनस्यमातुले ॥ क रणान्तरे ॥ तत्रजातस्यफलं यथा । परजनधनहर्त्ताविञ्चकः क्रूरचेष्टः करधृतकरवालोव्याहृतः स्वामिप क्ष . । अतिशयपरदारासक्तचित्त सरोषोभवतिशकुनिजन्मामानव । शौप्रकर्मा । शक्नोतीत्यर्थे । शकेरु नोन्तोन्युनयक्कुन्युनि ॥

शकुनिक : । त्रि • शकुनीकुशले ॥ आकर्षादित्वात्कन् ॥

शकुनिप्रपा । स्त्री • पक्षिपानीय शालायाम् । शौचे ॥

शकुनी । स्त्री • श्यामाख्यविहगे ॥

शकुनीश्वर । पुं • गरुडे ॥

शकुन्त : । पुं • कीटविशेषे । भा सपक्षिणि ॥ विहङ्गमात्रे ॥ श क्नोति । शकेरुनोन्तोन्युनयक्कुतिः उन्त ॥

शकुन्तला । स्त्री • दुष्यन्तपत्न्याम् भरतमातरि ॥ निर्जनेतुवनेयस्मा त् • शकुन्तैः परिरक्षिता । शकु न्तलेतिनामाऽस्याः कृतञ्चापिततो मया ॥ कालिदासविरचितेना- टके ॥

शकुन्तलात्मज : । पुं • भरते ॥ य न्नाम्नाभारतीवर्षं सुप्रसिद्धेधरा तले ॥

शकुन्ति : । पुं • पक्षिमात्रे ॥ शक्नो ति । शकेरुनोन्तोन्युनयक्कुतिशके रुन्ति . ॥

शकुन्द : । पुं • करवीरे ॥

शकुल : । पुं • मत्स्यविशेषे । कल के । शउल् • कू • गौ • दे • भा • प्र • ॥ शक्नोतिगन्तुं वेगेन । बाहु लकात्शकेरुलच् ॥

शकुलगण्ड : । पुं • शालमत्स्ये ॥

शकुलादक : । पुं • श्वेतदूर्वायाम् । गोलोम्याम् ॥ शकुलस्यमत्स्यस्येवा क्षियस्याः । पश्चाऽदर्शनादित्यच् । स्वार्थेकन् ॥

शकुलाक्षी । स्त्री • गण्डदूर्वायाम् ॥

शकुलादनी । स्त्री • कृष्णभेद्याम् । क टुक्याम् ॥ काष्ठपाक्षी । जलपिप्प

स्याम् । काचड़ादाम० इति० गौ० भा० प्र० ॥ माशाम् ॥ किन्तु लिकायाम् ॥ शकुलैरदति । अद० । कर्मणिल्युट् ॥ ङीप् । गजीषधायाम् । कट्फले ॥

शकुलार्भका । पु० गडकमत्स्ये ॥ शकुलस्य मत्स्यविशेषस्य अर्भक ॥

शकुली । स्त्री० मत्स्यविशेषे । सौरी० इ० दे० भा० प्र० । सृगाल् इ० गौड० दे० भा० ॥ शकुलीयास्तिथी ष्णामधुरातुवरास्मृतेतिभावप्रकाश : ॥ शकुलीरोहिताकाराभूमौ शायस्वरसौ । गुर्वीपाकेचमधुराभेदिकादेचकोपवर्तिराजवल्लभ ॥

शकृत् । न० विष्ठायाम ॥ शक्नोति० शक्यतेवानिःसर्तुं वानिःसारयितुंवा । शकेर्ऋतिन् ॥

शकृत्करि । पु० वत्से ॥ शकृत्करोति । स्तम्बशकृतोरिन् ॥

शकृद्द्वारम् । न० गुदे । पायौ ॥ शकृतोद्वारम् ॥

शक्कर । पु० वृषे ॥ इ० हे० चन्द्र ॥

शक्करि । पुं० इ० चि० शेष ॥

शक्करी । स्त्री० चतुर्दशाक्षरायांछन्दसि । शर्कर्याम् ॥ नदीप्रभेदे ॥ मेखलायाम् ॥

शक्त । त्रि० शक्तिविशिष्टे । समर्थे ॥ शक् । कर्मणिक्त ॥ शक्तानां भूषणक्षमा ॥

शक्ति । स्त्री० अस्त्रविशेषे । सेल इ० भा० प्र० ॥ गौर्याम् । दुर्गायाम ॥ यादेवीसर्वभूतेषुशक्तिरूपेणसंस्थिता । चैतन्यरूपायाम । चिच्छक्तौ । निर्विषयकसंविदि ॥ साचसर्वैकरूपा ॥ यथा । एकैव शक्ति परमेश्वरस्यभिन्नाचतुर्धा व्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु कोपेषुकालीसमरेषुदुर्गा ॥ अपिच । एकमूर्त्तिरपिभिन्नरूपिणीयाजगज्जननपालनक्षये । काच्युतेश्वरतयाविवर्त्ततेब्रह्मशक्तिमहमानतोस्मितामिति ॥ तथाहिदेवीभागवते । निर्गुणायासदानित्याव्यापिकाऽविकृताशिवा । योगगम्याखिलाधारातुरीयायाचसंस्थिता ॥ तस्यास्तुसात्त्विकीशक्तीराजसीतामसीतथा । महालक्ष्मी सरस्वतीमहाकालीतितास्त्रिय ॥ तासांतिसृणांशक्तीनान्देहाङ्गीकारलक्षण । सृष्ट्यर्थंसमाख्यात सर्गः शास्त्रविशारदैरिति ॥ साचसच्चिदानन्दब्रह्मरूपिणी । तस्यायासात्त्विकीशक्तिस्तथाराजसी-तयातामसीचयाशक्ति तत्तच्छक्तिविशिष्टंयत्परब्रह्मेत्यर्थः । तन्महालक्ष्म्याद्योया प्रसिद्धा स्त्रियस्ता स्त्रियोभवन्ति । साम्यावस्था

त्मकब्रह्मरूपिणीमूलदेवता तदुदे
वैकगुणविशिष्टब्रह्मरूपिण्योमहाल
क्ष्म्यादयोदेवताविभूतिभाव अतए
वश्रुत्यागमपुराणादिष्व्यासासच्चिदा
नन्दरूपत्वमुक्तं नतुकेवलजडशक्ति-
रूपत्व सृष्ट्यर्थंजगत्सर्वं मायया-
सातिष्ठणाशक्तीनादिशाक्तीकारैादे
रूधारणातत्सम्यगेव . सर्गे सोऽ
यशास्त्रविशारदै · परिकृते सर्गे
शब्देनसमाख्यातइत्यर्थं . ॥ अपि
च । चौथ्ये वहिप्रमाणानिपठितानि
निस परिकृते । प्रत्यक्षानुमा
नस्तशाब्दस्तै वटतीयकम् ॥ चत्वा
र्येवेतरेप्राहुरूपमानयुतानिच ॥ इ
तरेनैयायिकैकदेशिन.। अर्थाप-
त्तियुतान्यन्येपञ्चप्राहुर्मनीषिय
॥ सप्तपौराणिकाश्चैवप्रवदन्तिमनी
षिण । पूर्वोक्तानिपञ्चसाचिरूप
षष्ठम् · ऐतिह्य सप्तममितिसप्तप्रमा
णानि · । एते : प्रमाणैर्दुर्ज्ञेयं य
द्ब्रह्मपरमस्वतत् । एतैरनेकधा
भेदभिन्ने. प्रमाणैर्दुर्ज्ञेयंयत्परब्रह्म
तदेवपरमसुख्य जगत्कारणमस्ती-
तिवेदान्ताचाहुरितिशेष ॥ एव
मेतानिसर्वमतानिवेदे · एवसन्ति।
तच्चकिमतसुख्यमितिविमर्शो दुर्घट
एव । तथापियचश्रुतिवाक्यानापर
स्परविरोधस्तत्रोपक्रमोपसंहारादि
लिङ्गैः श्रुततात्पर्यं निर्णीततात्पर्य

वतोश्रुति प्रवलेतिसिद्धान्तउत्तर
मीमांसायामुक्त . । ननुतेनसिद्धा
न्तेनब्रह्मैवजगत्कारणमितिसिद्धतो
तिचेत्तथानुमानेनागमेनश्रुतिवा
क्येनच · यद्ब्रह्मकिं सशक्तिकं जगत्का
रणमुतशक्तिरहितमितिविचार .
कार्यव्युत्पत्त्याद्विवितर्कैरूति । वित
र्कैःस्वाचकार्यव्युत्पत्त्याचै वागमेनच।
निश्चयात्मिकयायुक्त्याविचार्यैवपु
न पुन ॥ वितर्कोऽनुमानमित्य
र्थ । बुद्ध्येश्वस्वार्थोनिश्चयात्मि
कयायुक्त्येति । प्रत्यक्षतस्तुविज्ञान
चिन्त्यमतिमतासदा । दृष्टान्तेना
पिसततं शिष्टमार्गानुसारिणा ॥
किञ्चमतिमताप्रत्यक्षतोयद्विज्ञानं ·
तदपिचिन्त्य यावम् · प्रमाणत्वेने
त्यर्थ . । शिष्टमार्ग . शिष्टाचारस्त
दनुसारिणादृष्टान्तेन · व्याप्तियाप्तवे
णापिसततमनुमेयमितिशेष ॥ तमे
वदृष्टान्तमाह । विद्यासोपीति । वि
द्यांसोपिवदन्त्येव पुराणे परिगीयते।
दुर्घटे सृष्टिशक्तिश्चहरौपालनशक्ति
ता ॥ हरेसंहारशक्तिश्चसूर्ये शक्ति
प्रकाशिका । धराधरणशक्तिश्शेषे
कूर्मे तथैवच । साद्याशक्ति . परि
णता सर्वस्मिन्याप्रतिष्ठिता । दाह
शक्तिस्तथावह्नौसमीरेप्रेरणात्मिका ॥
साद्येति । यासर्वस्मिन् · आद्याश
क्तिरस्तिसाशक्ति. परिणता · तत्र च

क्तिरूपेणेत्यर्थः ॥ शिवोपिशवतां
यातिकुण्डलिन्याविवर्जित । श
क्तिहीनस्तुयः कश्चिदसमर्थः स्मृ
तोबुधैः ॥ एवं सर्वप्रभूतिषुस्थाव
रेषुचरेषुच । ब्रह्मादिस्तम्बपर्यन्त
ब्रह्माण्डेऽस्मिन् महातपा ॥ शक्ति
हीनन्तुनिन्द्यास्याद्वस्तुमात्रचराचर-
म् । अशक्त ' शत्रु विजयेगमनेभो
जनेतथा ॥ तथाशिवासोपदृश्योत्य
न्वय ॥ एवं सर्वगताशक्ति सा
ब्रह्मेतिविविच्यते । सोपास्याबि-
बुधैः सम्यक् विचार्यसुधियासदा
॥ एवमिति । यथासर्वपदार्थ
स्यावच्छेदेनशक्तिमत्त्वव्याप्तिर्गृहीता ।
तथाब्रह्मणोपिपदार्थत्वावच्छिन्नत्वे
नशक्तिरस्ति । साचशक्ति साम
र्थ्यरूपा । नचाश्रयाद्भिन्नत्वेनभा
सते । अग्निशक्त्यादावदृष्टत्वात् ।
। किन्त्वभिन्नेव । तदेवदर्शयितुमे
वसर्वगताशक्ति ' साब्रह्मेतिविवि
च्यते । इत्यनेनसाश्रयाद्दर्शिता ।
तथाचश्रुतिप्रतिपाद्यं ब्रह्म । मा-
यापधानारसिद्धीतिमतस्यकार्यक
रणसुविद्यते । परास्यशक्तिर्विविधै
वश्रूयते । इत्यादिश्रुतिभिरनुमाना
दिभिश्चसशक्तिकमेवजगत्कारणमि
तितदेवोपास्यमितिभाव । एतेन
काशक्तिरित्यस्योत्तरं ब्रह्मसामर्थ्यरू
पाशक्तिरस्तीतिबोधितम् । सोपास्ये



ति । यतोब्रह्मभिन्नामशक्तिस्ततस्त
स्याःकर्म । अग्निशक्त्यादौमोऽग्नौ
हीमस्यार्थसिद्धत्ववद् ब्रह्मणउपासन
जातमेवेतिसर्वेशाकारणभूतासैव
शक्ति स स्यावश्या तत्कोपास्येत्य
र्थः । त्रिष्णोवसात्त्विकीशक्तिस्तया
होपाप्यकर्मकृत् । दुर्विणीराजसी
शक्तिर्यायाहोमोपास्य इष्कृत । शि
वेचतामसीशक्तिस्तयास हारकारक
। इत्यूहमनसामवविचार्य च पुन
पुन ॥ ब्रह्मविष्णुरुद्रादिषुप्रसिद्धेषु
अन्वयव्यतिरेकदर्शय स्तेषामेकैक
गुणवत्तयाब्रह्मत्वं न । नोपासत्वं
श्रीभगवद्रूपेणयेतिदर्शयति वि
ष्णौचेति ॥ शाक्त करोतिब्रह्मात्व
सावैपालयतेऽखिलम् । इच्छयास
हरत्येषाजदेगतच्चराचरम् ॥ नविष्णु
र्नहर शक्तोनब्रह्मानचपावक । न
सूर्योवरुण शक्या स्वेस्वेकार्येक
थञ्चन ॥ तयायुक्ताहिकुर्वन्तिसानि
कार्याणिवैसुरा । सैवकारणकार्ये
षुप्रत्यक्षेणावगम्यते ॥ सगुणानिर्गु
णासातुद्विधाप्रोक्तामनीषिभि ' ।
सगुणारागिभि सेव्यानिर्गुणातु
विरागिभि : ॥ सगुणा । एकैकगुण
विशिष्टा । निर्गुणासाम्यावस्थोपाधि
कब्रह्मरूपेत्यर्थ ॥ धर्मार्थकाममो
क्षाणास्वामिनीसानिराकुला । ददा
तिवाञ्छितान् कामान् पूजितावाध

। व्याघ्रोऽत्रनया अस्यैवास्य शब्दस्य
व्युत्पत्तिः ॥ ईश्वरसङ्केत . शक्नस्य
याऽर्थ बोधकपदत्वाच्छक्यम् । शक्यो
त्वादिशक्तिविशिष्टे। धन्वन्तयादिपद • त
द्बोध्ये। योगवात्ववाच्य सएवमुख्या
र्थ इत्युच्यते । समर्थे ॥ शक्ॢ • । श
क्तिसर्वार्शं तियत् स।ध्ये । शकानीये॥
अवयतावच्छेदकम् । न • शक्या
भिधासमानार्थे ।

शक्र ।पु •इन्द्रे। देवराजे ॥ कुटजवृक्षे
॥ अर्जुनपादपे ॥ शक्रोतिदैत्यान्
नाशितुम् । शक्ॢ • । स्फायितञ्ची
तिरक् ॥ ज्येष्ठानक्षत्रे ॥

शक्रक्रीडाचल । पु • सुमेरुपर्वते ॥

शक्रगोप . । पुं • इन्द्रगोपकीटे ॥

शक्रज । पुं • काके । श्यवके । गूढ
मैथुने ॥ इन्द्रपुत्रे ॥ शक्राज्जात
। जनी • । ड . ॥

शक्राजित् । पु • इन्द्रजिति । रावणपु
त्रे । शक्रमजैषीत् । जि • । सत्सू
द्विषेत्यादिनाक्विप् ॥

शक्रधनु.। न • शक्रायुधे।शक्रस्यधनु ॥

शक्रध्वज । पु • इन्द्रध्वजे ।उत्सवबि
शेषे ॥ चतुरस्रध्वजाकारराजद्वारेप्र
तिष्ठितम् । आहु, शक्रध्वजनाम
पौरलोकसुखावहम् ॥ विशेषोदेवी
पुराणे •वाराहीसंहितादिषुद्रष्ट
व्य . ॥ शक्रस्यध्वजइव ॥

शक्रनन्दन : । पु • जयन्ते ॥ अर्जुने
वालिनि ॥ काके ॥ शक्रस्यनन्दन

शक्रपर्याय । पु • कुटजवृक्षे ॥ शक्र.
पर्यायोऽस्य

शक्रपादप । पु • देवदारुवृक्षे शक्र
स्यपादप ॥ कुटजे ॥

शक्रपुष्पिका । स्त्री • शक्रपुष्प्याम ॥

शक्रपुष्पी । स्त्री • अग्निशिखावृक्षे ॥
शक्रोऽर्जुनतरु पुष्पमस्या । शक्र
शब्दस्तत्पुष्पेलाक्षणिक : । पाक
कर्णेतिङीष् ॥

शक्रभवनम् । न • स्वर्गे ॥

शक्रभित •द् । पु • इन्द्रजिति । रा
वणौ ॥ शक्रमभैत्सीत् । भिदिर •
। क्विप् ॥

शक्रभुवनम । न • नाके । सुरलोके ॥
शक्रस्यभुवनम् ॥

शक्रभूभवा । स्त्री • इन्द्रवारुण्याम् ॥

शक्रमाता । स्त्री • भार्ग्याम ॥ इन्द्र
जनन्याम ॥

शक्रमातृका।स्त्री • इन्द्रध्वजाङ्गयष्टिवि
शेषे ॥

शक्रमूर्द्धा । पु • वल्मीके ॥ इ • चि •
शेष ॥

शक्रवल्ली । स्त्री • इन्द्रवारुण्याम् ॥

शक्रवारुणी । स्त्री • इन्द्रवारुण्याम् ॥

शक्रवाहन . । पु • मेघे ॥

शक्रबीजम् । न • इन्द्रयवे ॥ शक्रस्
यकबीजम् ॥

शक्रशरासनम् । न • इन्द्रधनुषि ॥

शक्रशाखी । पुं॰ कुटजवृक्षे ॥ शक्रस्य शाखी ॥

शक्रशाला । ) शक्रशालिका । ) स्त्री॰ प्रतिश्रये । सभायाम् ॥

शक्रशिर । न॰ वल्मीके ॥ इन्द्रमस्तके ॥

शक्रसारथिः । पुं॰ मातलौ ॥

शक्रसुत । पुं॰ जयन्ते ॥ वालिवानरे ॥ अर्जुने ॥ काके ॥ शक्रस्य सुत ॥

शक्रसुधा । स्त्री॰ कुन्दुरौ ॥

शक्रसृष्टा । स्त्री॰ हरीतक्याम् ॥

शक्राख्य । पुं॰ पेचके ॥ त्रि॰ इन्द्रनामके ॥

शक्राणी । स्त्री॰ इन्द्राण्याम् ॥ शक्रमपातिक्रोशयति । अयशब्दे । कर्मण्यण । टिड्ढेति ङीप् ॥

शक्रायुधम् । न॰ इन्द्रायुधे ॥ अस्य सम्भवादिकं यथा वाराह्याम् । सूर्यस्य विविधवर्णाः । पवनेन विघट्टिताः कराः । साभ्रे । वियति धनुः संस्थानाः ये दृश्यन्ते तदिन्द्रधनुः ॥ केचिदनन्तकुलोरगनिःश्वासोद्भूतमाहुराचार्याः । तद्यायिनां नृपाणामभिमुखमजयावहं भवति ॥ अच्छिन्नमवनिगाढद्युतिमत् स्निग्धं घनं विविधवर्णम् । द्विरुदितमनुलोमं च प्रशस्तमम्भः प्रयच्छति च ॥ विदिगुद्भूतं दिक्पतिनाशं च व्यभ्रजं मरकं करोति । पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः ॥ जलमध्येऽनावृष्टिर्भुवि सस्यवधस्तरौ स्थितं व्याधिः । वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम् ॥ वृष्टिं करोत्यवृष्ट्यां वृष्टिं निवारयत्यैन्द्र्याम् । पश्चात् सदा वृष्टिं कुलिशभृतश्चापमाचष्टे ॥ चापमवौनं कुरुते निशायामाखण्डलायां दिशि भूपपीडाम् । याम्यापरोदक्प्रभवं निहन्यात् सेनापतिं नायकमन्त्रिणौ च ॥ निशि सुरचापं सितवर्णाद्यं जनयति पीडां द्विजपूर्वाणाम् । भवति च यस्यां दिशि तद्दृश्यं नरपतिमुख्यं नचिराद्धन्यात् ॥ इति ॥

शक्राशन । पुं॰ कुटजवृक्षे ॥ न॰ भङ्गायाम् । विजयायाम् । संविदि ॥ अस्य गुणो यथा । शक्राशनस्तु तीक्ष्णोष्णो मोहकृत् कुष्ठनाशनम् । बलमेधाग्निकृत् श्लेष्मदोषहारि रसायनम् ॥

शक्राह्वः । पुं॰ इन्द्रयवे ॥

शक्रोत्थानम् । न॰ शक्रध्वजोत्सवे ॥

शक्रोत्सवः । पुं॰ ध्वजोत्थाने । इन्द्रस्योत्सवे ॥

शक्र॰ । त्रि॰ प्रियवदे ॥ शक्नोति । शक्॰ । मूलक्यब्भ्य कः ॥

शक्वा । पुं॰ हस्तिनि ॥ शक्तौ ॥ शक्नोति । शक्॰ । आमदिपद्यर्त्तिपृशकिभ्यो वनिप् ॥

शक्करः । पु॰ वृषे ।

शक्करी । स्त्री॰ चतुर्द्दशाक्षरायाश्छन्दो जातौ ॥ नदीविशेषे ॥ मेखलायाम् ॥ सामविशेषे॰ नित्यबहुवचनान्तोयम्॰ शक्कर्य्य इति॰ महानाम्नीषु ऋक्षु शक्कर्य्योगीयन्ते ॥ शक्करी॰ अङ्गुलिरितिमन्त्रव्याख्यानम् ॥ वमीरचेतिकौशी ॥

शङ्क । पुं॰ शकटवाहकवृषे । स्कन्धवाहे । अवधूर्त्तिले ॥ हृ॰ हा॰ वी ॥

शङ्कनक । पुं॰ क्षुद्रशङ्खे ॥ शङ्कते । अभिशङ्कायाम् । कर्त्तरि॰ अनुदात्तेतश्चहलादेरितियुच् । सञ्ज्ञायांकन् ॥

शङ्कर । पु॰ सदाशिवे ॥ एकादशरुद्राणांमध्ये भगवद्विभूतौ ॥ शङ्कल्याणंकरोति । अभिधाने॰ सञ्ज्ञायामिति॰ अच् ॥ यथा । शङ्करोमिसदाध्यानात् परमञ्चिरामवम् । भूतानामसक्रद्यस्मात् तेनाहंशङ्करः स्मृतः ॥ इतिस्कान्दे ॥ त्रि॰ कल्याणकरे ॥

शङ्कराचार्य्य । पुं॰ स्वनामप्रसिद्धे॰ अद्वैतवादिनि॰ वेदान्तभाष्यकर्त्तरि॰ नरावतारेविश्वेश्वरे ॥ यथाहुः । सत् सम्प्रदायप्रथनायतिष्येशिष्यैश्चतुर्भिः सहयोवतीर्णः । कलौहरत् सङ्गमतन्तराजैश्रीशङ्कराचार्य्यगुरुस्तमीडे ॥

शङ्करावास । पुं॰ कर्पूरप्रभेदे ॥ कैलाशे ॥

शङ्करावासस्त्रः । पु॰ कर्पूरे ॥

शङ्करी । स्त्री॰ मञ्जिष्ठायाम् ॥ पार्व्वत्याम् ॥ श्रीगिरीशङ्करीसन्तेतिदेवीगीता ॥ जप्येश्वराधिवासिन्याम्बायाम् ॥ शम्याम् ॥

शङ्कव्यम् । न॰ शङ्कूपयोगिदारुणि ॥ शङ्कवेहितम् । उगवादिभ्योयत् ॥

शङ्का । स्त्री॰ त्रासे ॥ वितर्के ॥ इतिशब्दार्णवः ॥

शङ्कित । त्रि॰ भीते ॥ वितर्किते । संशययुक्ते ॥ अविश्वस्ते ॥ शङ्कासञ्जाताऽस्य । तारकादित्वादितच् ॥ पुं॰ चोरकनामगन्धद्रव्ये । दुष्यवे ॥

शङ्कितवर्णः । ) पुं॰ चौरे ॥
शङ्कितवर्णकः । )

शङ्कु । पुं॰ सङ्ख्याविशेषे ॥ यथा । १०००००००००००००० ॥ अस्त्रप्रभेदे । दीर्घायुधे । कुन्ते । शल्ये ॥ यादोभेदे । शङ्कोचमत्स्ये ॥ कीले ॥ दीपसूर्य्यच्छायापरिमाणार्थकाष्ठादिनिर्मितेक्रमेणसूक्ष्माग्रे द्वादशाङ्गुलपरिमितेकीलके । ईशे । शम्भौ ॥ मेढ्रे ॥ कलुषे ॥ राक्षसे ॥ नखीनामगन्धद्रव्ये ॥ द्वादशाङ्गुलपरिमाणे ॥ स्थाणौ । शा

खापचरितरी ॥ पर्णनाले ॥ पत्रशिरानाले ॥ शङ्कतेऽस्मात् । शकि० । खरुशङ्कुपीयुनिलङ्कुलि ख्वितिकुप्रत्ययान्त साधु. ॥

शङ्कुकर्ण. । पुं० गर्दभे ॥ सिद्धस्थानविशेषे ॥ शङ्कुकर्णध्वनि: प्रोक्तं तिदेवीगीता ॥

शङ्कुकर्णी । स्त्री० औषधिप्रभेदे । पाकाकर्ण्यादिवाङ्गीष ॥

शङ्कुचि: पु० शङ्कुमत्स्ये ॥

शङ्कुतरु । पुं० शालवृक्षे ॥

शङ्कुर: त्रि० भयदे ॥ त्रासदायिनि ।

शङ्कुला । स्त्री० उत्पलपत्रिकायाम्। पूगकर्त्तन्याम् । सरौता०इ०भा०प्र०॥ शङ्कतेऽस्या. । शकि० । बाहुलकादुलच् । टाप् ॥

शङ्कुवृक्ष । पु० शालवृक्षे ॥

शङ्कुशिरा । पुं० दानवविशेषे ।

शङ्कुश्रुति । पुं० पातालाधिपतिदैत्यविशेषे ॥

शङ्कोच । पुं० शङ्कुमत्स्ये । शंकोच० इ०गौ०दे०भा०प्र० ॥

शङ्कोचि. । पु० शङ्कोचमत्स्ये ॥

शङ्ख. । पुं० कलिकासन्धि । भालाऽस्थनि ॥ कुबेरस्यनिधिप्रभेदे ॥ नखीनामनिगन्धद्रव्ये । शुक्तौ । कोशदले ॥ कर्णसमीपास्थनि ॥ अष्टनागनायकान्तर्गतनागविशेषे ॥



हस्तिदन्तमध्ये ॥ दशनिखर्वसङ्ख्यायाम् । शतकोटी ॥ धर्मशास्त्रप्रयोजकमुनिविशेषे ॥ रणवाद्यविशेषे । मात्रामात्रे० । ०॥ पुं०न०कम्बौ ॥ अर्णोभवे । पावनध्वनौ । अन्त:कुटिले । महानादे ॥ अस्योत्पत्त्यादिरुक्ताश्रीदेवीभागवतेब्रह्मवैवर्तेचयथा । अस्थिभि शङ्खचूडस्यशङ्खजातिर्बभूवह । नानाप्रकाररूपेणशश्वत्पूतासुरार्चने ॥ प्रशस्तशङ्खतोयञ्चदेवानांप्रीतिदम्परम् । तीर्थतोयस्वरूपञ्चपवित्रं शम्भुनाविना ॥ शङ्खशब्दोभवेद्यत्रतत्रलक्ष्मी. सुसुस्थिरा । सस्नात. सर्वतीर्थेषु य:स्नात शङ्खवारिणा ॥ शङ्खो हरेरधिष्ठानं यत्र शङ्खस्ततोहरि: । तत्रैववसतेलक्ष्मीर्दूरीभूतममङ्गलम् ॥ स्त्रीणाञ्चशङ्खध्वनिभि:शूद्राणाञ्चविशेषत । भीतारुष्टाया तिलक्ष्मी: स्थलमन्यत्स्थलान्तरम्॥ति ॥ मूलाग्रङ्कारात्मकपाञ्चजन्ये । यथा। ॥ भूतादिमिन्द्रियादिद्विधाहङ्कारमीश्वर. । बिभर्त्तिशङ्खरूपेणशार्ङ्गरूपेणचस्थितम् इतिविष्णुपुराणम् ॥ शङ्खनति०जनयति । खनुअवदारणे । अन्येभ्योपीतिड: ॥ शङ्खमस्येतिवा ॥ शास्त्यतिबलक्षीवा । शमु० । अन्तर्भावितण्यर्थ: । शमे: ख: ॥

शाल्यन्नेनवा ॥ असुरविशेषे ॥

शङ्खकः । पुं॰ शिरोरोगविशेषे । तल्लक्षणादि यथा । पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः । तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥ स शिरो विषवद्वेगान्निरुध्याशु गलं तथा । त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः । त्र्यहाज्जीवति भैषज्यं प्रत्याख्येयस्य कारयेत् । पित्तरक्तानिलाः अत्र कफोऽपि योज्यः । कृतानुतापकफपित्तरक्तैरिति सुश्रुतवचनात् । विमूर्च्छिताः प्रवृद्धाः । त्रिरात्रात् त्रिरात्रमध्ये मारयति । अस्य चिकित्सा शिरोरोगे भावप्रकाशे द्रष्टव्या । न॰ वलये । पुं॰ न॰ कम्बौ ॥

शङ्खकारः । पुं॰ शूद्रागर्भे विश्वकर्मौरसजाते वर्णसङ्करजातौ । शाङ्खिके । शाखारी॰ इति भा॰ । शङ्खं करोति । डुकृञ्॰ कर्म्मण्यण् ॥

शङ्खचरी । स्त्री॰ ललाटिकायाम् ॥ शङ्खे चरति । चर॰ । पचाद्यच् टित्वान्ङीप् ॥

शङ्खचर्ची । स्त्री॰ ललाटिकायाम् ॥

शङ्खचिलः । पुं॰ कम्बातायिनि ॥

शङ्खचूडः । पुं॰ दैत्यविशेषे ॥

शङ्खचूर्णम् । न॰ शङ्खजातचूर्णे ॥ शङ्खचूर्णं कटुक्षारमुष्णं क्रिमिहरं परम् ॥

शङ्खजः । पुं॰ कपोतडिम्बवद्वृत्तमुक्तायाम् ॥ त्रि॰ शङ्खजातवस्तुनि ॥

शङ्खद्रावी । पुं॰ अम्लवेतसे ॥

शङ्खधरा । स्त्री॰ हिलमोचिकायाम् ॥

शङ्खधारी । पुं॰ छन्दोविशेषे ॥ ध्वजानन्दकर्णा षडेवाक्षवर्णाः । बुधानन्दकारी भवेच्छङ्खधारी ॥ यथा । स्फुरद्रङ्गोपनारीपरीरम्भकारी । हरिः पातु वृन्दावनाभ्यर्णचारी ॥

शङ्खध्मः । पुं॰ शङ्खवादके । शाङ्खिके ॥

शङ्खध्मा । पुं॰ शाङ्खिके ॥

शङ्खनखः । पुं॰ क्षुद्रशङ्खे ॥ शङ्खस्य नख इव ॥ शङ्खनति वा । बहुलमन्यत्रापीति युच् ल्युड्वा । स्वार्थे क॰ । पृषोदरादि॰ । नखी नाम गन्धद्रव्ये । शङ्खनख्याम् ॥

शङ्खनखा । स्त्री॰ शङ्खनख्याम् ॥ द्विधा शङ्खनखाख्याऽन्या शुक्त्याख्या बदरीच्छद ॥ इति रत्नमाला ॥

शङ्खपुष्पी । स्त्री॰ मङ्गल्यकुसुमायाम् ॥ शङ्खपुष्पी तु शङ्खाह्वा मङ्गल्यकुसुमापि च । शङ्खपुष्पी सरा मेध्या वृष्या मानसरोगहृत् । रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा ॥ दोषापस्मारभूतास्त्रक्कुष्ठक्रिमिविषप्रणुत् । इति भावप्रकाशः ॥ पाककर्णेति ङीष् ॥

शङ्खप्रस्थ । पुं० चन्द्रस्यचिह्ने ॥

शङ्खभृत् । पु० विष्णौ ॥ भूताहङ्कारात्मकपाञ्चजन्याख्य शङ्खबिभर्त्ति । डुभृञ्० ॥ क्विप् । तुक् ।

शङ्खमुख: । पुं० कुम्भीरे ॥

शङ्खमूलम् । न० मूलके ॥

शङ्खसञ्ज्ञा । स्त्री० याचायोगान्तरे । यथा । स्वाशस्थे बुधेलग्ने शुक्रेवादेवपूजिते । शङ्खसञ्ज्ञस्त्वयेयोगेयातु कीर्त्तिप्रद. सदा ॥

शङ्खसेन । पु० चिचगुप्तात्मजेकायस्थविशेषे ॥

शङ्खाख्य । पुं० शङ्खनख्याम् ॥

शङ्खालुकम् । न० श्वेतताम्रकन्दविशेषे

शङ्खाह्वा । स्त्री० शङ्खपुष्प्याम् ॥

शङ्खिका । स्त्री० तृणविशेषे । चोरायाम् । चोरकहुली० हू०गौ० भा० ॥

शङ्खी । पुं० हरौ ॥ समुद्रे ॥ चि० शङ्खवति ॥

शङ्खिनी । स्त्री० चोरपुष्प्याम् । क्षिणिन्याम् । शाखाहुली० हू० भाषा । श्वेतबुकोयाम् । वधूभेदे । चवलाप्रभेदे ॥ तीर्थविशेषे ॥ बुद्धशक्तिविशेषे ॥ श्वेतपुन्नागे ॥ यवतिक्तायाम् ॥ श्वेतचन्दायाम् ॥ शङ्खवत्याम ॥ चतुर्विधस्त्रीमध्ये स्त्रीविशेषे । तल्लक्षण यथा । दीर्घासुदीर्घनयनावरसुन्दरीयाकामोपभोगरसिकागुणशीलयुक्ता । रेखाचयेणचविभूषितकण्ठदेशासम्भोगकेलिरसिकाकिलशङ्खिनीसा ॥ अपरञ्च पद्मिनीतुष्टाचिचिनीरमतेसुरगम् । हषभ शङ्खिनीतुष्टाहस्तिनीरमतेहयम् ॥ पद्मिनीपद्मगन्धाचमीनगन्धाचिचिणी । शङ्खिनीक्षारगन्धास्यान्मदगन्धाचहस्तिनी ॥ नाडीविशेषे ॥ गान्धार्यास्सरस्वत्या स्थितामध्येचशङ्खिनी ॥ शङ्खा. सन्त्यस्या शङ्खाकारपुष्पत्वात् । चतङ्गनि. ॥

शङ्खिनीफल । पुं० शिरीषवृक्षे ॥

शङ्खिनीवास. । पुं० शाखोटवृक्षे ॥

शचि । स्त्री० शच्याम् । इन्द्राण्याम् ॥ शचति । शचव्यक्तायांवाचि । सर्वधातुभ्यइन् ॥ स्त्रीकरणान्तरे ॥

शची । स्त्री० पुलोमजायाम् । पौलोम्याम् । इन्द्राण्याम् । शचति० व्यक्तंवदति । शच० । इन्नन्तात्० कृदिकारादितिङीष् ॥ शतावर्याम् ॥

शचीपति. । पुं० इन्द्रे ॥ शच्या: पति: ॥

शचीश. । पुं० इन्द्रे ॥

शट पुं॰ देशान्तरे ॥ शटेरच् । अ॰ च्चर्णे ॥

शटा । स्त्री॰ जटायाम् ॥ शटति । श टरुजाविशरणगत्यवसादनेषु । अच् । टाप ॥

शटि । पुं॰ शट्याम् । गन्धपला श्याम् । शट॰ । इन् ॥

शटिका । स्त्री॰ शटीप्रभेदे । गन्ध पलाशयाम् ॥

शटी । स्त्री॰ गन्धशट्याम् । गन्धमूल्याम् । षड्ग्रन्थिकायाम् । कर्चूरे । पलाशे । गन्धपलाश्याम् । कचूर॰हु॰दे॰भा॰ । वनआदा॰हु॰गौ॰दे॰भा॰ ॥ गन्धपलाशीसुगन्ध द्रव्य काश्मीरप्रसिद्धम् । शटति । शट॰ । अच् । गौरादि . ॥

शट्ट । पुं॰ शट्टके ॥

शट्टकम् । न॰ शट्टे । साटा॰हु॰भा॰ प्र॰ ॥ शालिचूर्णघृततोयमिश्रित शट्टकवदेत् ॥

शठ । पुं॰ मध्यस्थपुरुषे ॥ धूस्तूरे ॥ धूर्त्ते । परवञ्चनार्थं॰मन्यथाजा नन्नप्यन्यथावादिनि । गूढविप्रियकृति ॥ यथोक्तं विप्रापराधे । प्रियव क्तापुरोऽन्यवविप्रियकृत्तेभृशम् । युक्तापराधचेष्टश्च शठोऽयकथितोबु धैरिति ॥ अपिच । परकार्यविमुखे । यथा ॥ मनसावचसायस्तूश्यते कार्यतत्पर . । कर्मणाविपरीतश्च सशठ . सद्भिरुच्यते ॥ चतुर्विधप त्यन्तर्गतपतिविशेषे ॥ तल्लक्षणं यथा । कामिनीविषयकपटपटुरिति ॥ शठति॰वञ्चयति । शठकैतवे । प चाद्यच् ॥ न॰ तगरे । कुङ्कुमे ॥ तीक्ष्णायसे ।

शठता । स्त्री॰ कुसृतौ । निकृतौ । मायायाम् । शाठ्य ॥ भावकर्म णोस्तल् ॥

शठाम्बा । स्त्री॰ अम्बष्ठायाम् । छिन्न पल्याम् ॥

शण । पु॰ स्वनामख्यातप्रसिद्धेक्षुपे । माल्यपुष्पे । काटुतिक्तके । त्वकसा रे । दीर्घपल्लवे ॥ न॰ भङ्गायाम् । मातुलान्याम् ॥

शणघण्टिका । स्त्री॰ शणपुष्प्याम्॥

शणपत्रम् । न॰ शणवल्कलनिर्मितेप र्ण्णे । कागद॰हु॰प्र॰ ॥

शणपर्णी स्त्री॰ अशनपर्ण्याम् ॥ श ण पर्णमस्या । शणशब्द शण पर्णसदृशेलाक्षणिक । पाककर्णा तिङीष् ॥

शणपुष्पम् । न॰ शणके ॥

शणपुष्पिका । स्त्री॰ घण्टारवायामो षधौ ॥ शणा. पुष्प यस्या . । स्वा र्थेकन ॥

शणपुष्पो । स्त्री॰ घण्टारवायाम् । घण्टे तिख्यातौषधौ ॥ शणा : पुष्प यस्या । शणशब्दस्तत्पुष्पसदृ शेलक्षा

चणिका ‘। पाककर्षितदोष ॥
शणगुणी ‘। शणपुष्पीकटुस्तिक्ता
वामिनीकफपित्तजित् ॥ आढक्या
म् ।
शणसूत्रम् । न॰ शणकृतमांशुसूत्रे ।
पवित्रकी ॥ शणोति । शणगती ।
पचाद्यच् । शणस्यसूत्रम् ।
शणालु । शणालुकः । } पु॰ आरेवते । आरग्व
धे ॥ द्र॰श॰र॰मी॰ ॥
शणिका । स्त्री॰ शणपुष्प्याम ॥
शणीरम । न॰ शोणमध्यस्थपुलिने
॥ ददंरीतटे ॥ द्र॰मेदिनिकर ‘।
शण्डम् । न॰ षण्डे । अब्जादिसमूहे
॥ पु॰असुरपुरोहिते ॥ शण्डते ।
शण्डिजायांसङ्घातेच । अस्मात्
पचाद्यच् ॥
शण्डिक । पुं॰ देशविशेषे ॥
शण्डिल । पु॰ मुनिविशेषे ॥ शण्ड
ते ‘ शण्डि॰ । सलिकल्यनिमहिभ
ण्डिभण्डिशण्डिपिण्डितुण्डिकुकिभू
भ्यइलच् ॥
शण्ढ । पुं॰ गोपतौ । सांड॰इ॰
भा॰ ॥ चाक्रष्टाण्डे ॥ वर्षवरे ।
अन्तर्मंपालिकी । अभ्यन्तरस्त्रीरत्न
की ॥ तृतीयप्रकृतौ । क्लीवे ॥
शाम्यतिशिष्णाभावात् । शमउप
शमे । शमेढं : ॥ वन्ध्यापुरुषे ।
उन्मत्ते

शतम । न॰ दशगुणितदशसङ्ख्या
याम। दशतौ । १०० दशदशत
परिमाणमस्य । पङ्क्तिविंशतीतिनि
पातनात्॰ प्रकृतेः शभाव॰ त
प्रत्ययः ॥ सङ्ख्येये ॥
शतक । त्रि॰ शतसङ्ख्याविशि
ष्टे सङ्घे ॥ शतपरिमाणमस्य । स
ङ्ख्यायाअतिशदन्तायाः कन् ॥
शतेनक्रीतोवा ॥
शतकीर्त्तिं . । पु॰ भाव्यर्हद्विशेषे ॥
शतकुन्द ‘ । पु॰ करवीरे ॥
शतकुम्भ . । पु॰ पर्वतविशेषे ॥ श्वेत
करवीरे ॥
शतकोटि । पुं॰ वज्रे ॥ शतको
टयोधाराः ‘कोणलक्षणा’ यस्य स
॥ दशार्बुदे । चले । पद्म ॥-
शतक्रतु ‘ । पुं॰ इन्द्रे ॥ शतक्रत
वोयस्यसः ॥
शतखण्डम् । न॰ सुवर्णे ॥ त्रि॰श
तभागे ॥
शतग्रन्थि . । स्त्री॰ दूर्वायाम् ॥
शतघ्नी । स्त्री॰ शिल्पविद्याप्रसिद्धे
शस्त्रविशेषे ॥ प्राकाररक्षार्थंनि-
र्मितयन्त्रविशेषे ॥ शतहन्ति ।
हन॰ । अमनुष्यकर्तृकेचेतिटक् ॥
ङीप् ॥ लोहकण्टकसञ्छन्नाशतघ्नी
महतीशिलेति॰ विजयरक्षित ॥
वृश्चिकाल्याम् ॥ करञ्जके ॥ गल
रोगविशेषे ॥

शतच्छन्दः । पुं॰ काष्ठकुट्टखगे । दार्वाघाटे ॥ शतछदाऽस्य ॥

शततम । त्रि॰ शतस्यपूरणे । नित्यशतादिमासार्द्धमाससम्वत्सराच्चेतिडटस्तमडागमः ॥

शततारा । स्त्री॰ शतभिषायाम् ॥

शतदन्तिका स्त्री॰ नागदन्त्याम् ॥

शतद्रु । स्त्री॰ सरिद्विशेषे । शतुद्री ॥ अस्याजलगुणायथा । शतद्रोर्विंपाशायुतः सिन्धुनद्याः सुशीतलघुस्वादुसर्वामयघ्नम् । अलंनिर्मलदीपनपाचनञ्चप्रदत्तेबलबुद्धिमेधायुषञ्च । शतधाद्रवति । द्रुगतौ । हरिमितयोर्द्रुव इति चेतिकुः । मितद्र्वादित्वाड्डुर्वा ॥

शतधा । )
शतधा । ) स्त्री॰ शतप्रकारे ॥ दूर्वायाम् ॥

शतधामा । पुं॰ विष्णौ ॥ शतमनन्तानिधामान्यस्य ॥

शतधारम् । न॰ पवौ । वज्रे ॥ शतधारा कोटयश्चास्य ॥ त्रि॰ शतधाराविशिष्टे ॥

शतधृति । पुं॰ इन्द्रे । ब्रह्मणि ॥ परमेष्ठिनि । स्वर्भर ॥ दिवि । स्वर्गे ॥

शतपत्र । पुं॰ मयूरे ॥ दार्वाघाटे ॥ सारसे ॥ राजकीरे ॥ नू॰ तीतीता॰ इ॰ भा॰ न॰ कमले शतपत्राण्यस्य ॥

शतपत्रक । पु॰ दार्वाघाटे । काष्ठकुट्टखगे ॥ शतंपत्राण्यस्य ॥

शतपत्रनिवास । पुं॰ ब्रह्मणि ॥ त्रि॰ पद्मस्थे ॥

शतपत्रिका । स्त्री॰ शतपत्र्याम् । सेवन्त्याम् ॥

शतपत्री । स्त्री॰ सेवन्त्याम् । सेवती॰ इ॰ भा॰ ॥ पाटलवर्णासो॰ गुलाब इ॰ प्रसिद्धास्त्री॰ उभयोः पर्याया यथा । शतपत्रीतरुण्युक्ताकर्णिकाचारुकेशरा । सहाकुमारीगन्धाढ्यालाक्षापुष्पातिमञ्जुला ॥ शतपत्रीहिमाहृद्याग्राहिणीशुक्रलालघुः । दोषत्रयास्रजिद्वर्ण्यातिक्ताकट्वीचपाचनी ॥

शतपथ । पु वेदैकदेशे ।

शतपथिक । त्रि॰ शतपथाध्येतरि ॥ शतपथमधीतेवेदवा । इकन्पदोत्तरपदात्॰ शतषष्टेः . षिकन्पथ इतिषिकन् ॥ षित्वात्॰ स्त्री॰ शतपथिकी ॥

शतपदचक्रम । न॰ नाम्नानक्षत्राद्यानार्थेचक्रे ॥ तद्यथा । चक्रं शतपदचक्रे॰ चतुर्णामक्षरसम्भवम् । नामादिवर्णतोज्ञेयाश्चत्वारोऽर्थशकास्तथा ॥ तिर्यगूर्द्ध्वगतारेखाः रुद्रसङ्ख्यालिखेद्बुधः ॥ जायते कोष्ठकानाञ्चशतैकत्रोक्षसम्पद . ॥ च॰ व॰ क॰ इ॰ जोतिर्ग्रान्थ॰

म० ट० प० र० ता० इरिति०
चाग्नेय्याम् । न० य० भ० ज०
खा० नैऋत्या० ग० स० द० च०
ला० वायव्याम् ॥ पञ्चपञ्चक्रमेणैव वि
शवर्णान्प्रयोजयेत् । पञ्चस्वरसमा-
योगेएकैकपञ्चधाकुरु ॥ अवर्णाद्या
स्त्रयोप्येवा. सन्ध्यक्षरयुतास्तथा ।
सजातीयैक्यमासाद्यपञ्चस्वरविनिर्मि
त ॥ कट्टस्वतीरप्यकारेण शेष
सप्तपरिग्रह । कुर्यात्कुपु० भु०
दु० स्याग्नेय्यांचिन्तीयपञ्चराशिष ॥
कु० घ० ङ० छा० भवेत्स्तम्भो रौ
द्रे स्त्रीधामगोचरे । पु० ष० णा०
ठा० भवेत्स्तम्भ स्तम्भ चाग्नेयसञ्ज-
के ॥ भु० ध० फ० ढाभवेत्स्तम्भ पू
र्वाषाढे चनैऋते । दु० थ० झ०
ञ० भवेत्स्तम्भेवायव्ये भाद्रउत्तरे
एवस्तम्भचतुष्कञ्चज्ञातव्य स्वरवेदि
भि.। धिष्ण्यानिकृत्तिकादीनिप्रत्ये
कचतुरक्षरे .। साभिजित्य श्रवा
स्तस्यतेषांदाद्याधिकम् । यद्वर्णा
शक्षीष्ठस्थ क्रूर सौम्योपिवा
ग्रह : ॥ तत्रस्थोवेधयेत्सम्यक् पु
सांनामादिमाक्षरम् । सौम्यै विद्ध
शुभर्क्षं यमशुभपापखेचरे . ॥ मि
श्रै र्मिश्रफलतत्र निर्वेधेनशुभाशुभम
। सर्वाण्य सर्वतोभद्रे यत्रोपयद्भेद
त : ॥ शुभाशुभफलसर्वंतद्दृष्टापि
विचिन्तयेत् ॥ पञ्चस्वरा.० अ०



इ० उ० ए० ओकारास्तेयेनैधि-
ष्ण्यानिनक्षत्राणि । अवचतुर्भि-
र्वर्णैरेकनक्षत्र यथा । अ० इ० उ०
ए० कृत्तिका । ओ० व० वि०
वु० रोहिणी । वे० वो० का०
कि० मृगशिर .। कु० घ० ङ०
छ० आर्द्रा । के० को० ह० हि०
पुनर्वसू । हु० हे० हो० ड० पु
ष्य । डि० डु० डे० डो० आश्लेषा
। म० मि० मु० मे० मघा । मो०
टा० टि० टु० पूर्वाफाल्गुनी ।
टे० टो० प० पि० उत्तराफाल्गु
नी । पु० ष० ण० ठ० हस्त । पे०
पो० र० रि० चित्रा । रु० रे०
रो० त० स्वाति । ति० तु० ते०
तो० विशाखा । न० नि० नु० ने०
अनुराधा । नो० य० यि० यु० ज्ये
ष्ठा । ये० यो० भ० भि० मूलम ।
भु० ध० फ० ढ० पूर्वाषाढा । भे०
भो० ज० जि० उत्तराषाढा । जु०
जे० जो० ख अभिजित् । खि०
खू० खे० खो० श्रवण । ग० गि०
गु० गे० धनिष्ठा । गो० स० सि०
सु० शतभिषा । से० सो० द० दि०
पूर्वभाद्रपदा । दु० थ० झ० ञ०
उत्तरभाद्रपदा । दे० दो० च०
चि० रेवती । चु० चे० चो० ल०
अश्विनी। लि० लु० ले० लो० भर
णी । कटयुत अकारयुक्तनक्ष

य । क्लीनदीर्घोप्त्ये य । ताल ॰ शकारेणदन्त्यसकारोप्त्ये य ॥ इतिशतपदचक्रम् ॥

शतपदी । स्त्री॰ कर्णजलौकायाम् ॥ शतपादायस्या । कुम्भपदीषुचेतिसाधु ॥ शतावर्याम् ॥

शतपद्मम् । न॰ श्वेतकमले । पुण्डरीके ॥

शतपर्वा । पुं॰ वंशे । त्वक्सारे । शतपर्वाख्यस्य ॥ इक्षुविशेषे । शतपोरके ॥ यथा । शतपर्वाभवेत् किञ्चित्कोषकारगुणान्वित । विशेषात्किञ्चिदुष्णश्चसक्षार पवनापह ॥

शतपर्व्वी । स्त्री॰ दूर्वायाम् ॥ वचायाम् ॥ भार्गवभार्यायाम् ॥ कोजागरपूर्णिमायाम् ॥ कटुकायाम् ॥ शतपर्वाण्यस्याः । पाक्षिक, काव भावः ॥

शतपर्विका । स्त्री॰ दूर्वायाम् ॥ वचायाम् ॥ शतपर्वाण्यस्याः । शेषादितिकप् ॥ यद्वा । शतपर्वति । पर्वंपूरणे । ण्वुल् । यवे ॥

शतपर्वेश । पुं॰ शुक्रग्रहे ॥ शतपर्वायाईश : ॥

शतपात्॰द् । स्त्री॰ शतपद्याम् ॥ शतपादायस्याः । सङ्ख्यासुपूर्वस्येतिसाधु : ॥

शतपादिका । स्त्री॰ शतपद्याम् ॥ काकोल्याम् ॥

शतपादी । स्त्री॰ शतपादिकायाम् ॥

शतपुष्पा । स्त्री॰ सितच्छत्रायाम् । अतिच्छत्रायाम् । मधुरायाम् । सौंफ । धानसोया॰इ॰भा॰प्र॰ ॥ अस्यागुणायथा। शतपुष्पालघुस्तीक्ष्णा पित्तकृद्दीपनीकटु । उष्णाज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत् ॥ मिश्रेयातद्गुणाप्रोक्ताविशेषाद्योनिशूलनुत्। अग्निमान्द्यहरीहृद्याबद्धविट्कृमिशुक्रहृत् ॥ रूक्षोष्णापाचनीकासवमिश्लेष्मानिलान्हरेत् ॥ अपिच । एकैवाह बहुरसाखवासिनैव वासिता।शतपुष्पावदत्येव छत्र दत्त्वा जिगीषया ॥ शत पुष्पाण्यस्याः । सहच काण्डे तटाप् ॥

शतपुष्पिका । स्त्री॰ शतपुष्पायाम् ॥

शतपोरक । पुं॰ शतपर्वाख्येक्षुविशेषे ॥

शतप्रसूना । स्त्री॰ शतपुष्पायाम् ॥

शतप्रास । पुं॰ करवीरवृक्षे ॥ शत प्रासाइवपत्राण्यस्य ॥ शत पुष्पाणिप्राश्नातिवा। अशुचिपचो । कर्म्मण्यण् ॥

शतबलि : । पु॰ कपोनायूथपतिविशेषे ॥

शतभिषक् । स्त्री॰ शतभिषानक्षत्रे ॥ चि॰ शतभिषजिजाते। शततारा कैतिजातार्थस्यवालुक् । पक्षेशा

तभिषज:। शतभिषेधि ॥

शतभिषा । स्त्री॰ अश्विन्यादिषुचतुर्विंशभे ॥ तत्रजातस्यफलं यथा । शीतभीतिरतिसाहसीसदानिष्ठुरो ह्चतुरोनरोभवेत् । वैरिणामतिशयोहिदारुणोवारुणोडुयदियस्य सम्भवे ॥

शतभीरु । स्त्री॰ मल्लिकायाम् । वेला॰वेली॰रायवेल॰ इ॰ च॰ भा॰ प्र॰ पुष्पे ॥ शत बहवोवियोगिनो भीरवोऽस्याः ।

शतमख । पुं॰ इन्द्रे । शचीपतौ ॥ शत मखाश्चस्य ॥

शतमन्यु । पु दिवस्पतौ ॥ इन्द्रे ॥ शत मन्यवोयागाश्चस्य । शतेषुदैत्येषुमन्युः क्रोधोऽस्येतिवा ॥ शत मन्यवोदैन्यान्यस्यवा । दैत्यैः प राजितत्वात् ॥

शतमान पु॰ दशरूप्यधरणेषु । वि शत्यधिकरक्तिकाशतत्रयपरिमाणेरूप्ये॰ ॥ धरणानिदशज्ञेय श तमानस्तुराजतइतिमनु ॥

शतमाख्यै । पु॰ अलङ्कारके ॥ इ॰ कमित् ।

शतमूला । स्त्री॰ दूर्वायाम् ॥ वचायाम् ॥

शतमूलिका स्त्री॰ द्रवन्त्याम् । मूषिकपर्ण्याम् ॥

शतमूली । स्त्री॰ बहुसुतायाम् । शतावर्याम् ॥ शत मूलान्यस्या । पाकर्णोतडीष् ॥

शतयष्टिक । पु॰ शतलतिकाहारे । देवच्छन्दे ॥

शतरुद्रियम् । न॰ हविरादौ ॥ शत रुद्रादेवताश्चस्य । शतरुद्राद्घ श्चेतिघ ॥

शतरुद्रीयम् । न॰ शतरुद्रिये ॥ शतरुद्राद्घश्चेतिचकाराच्छः शत शब्दोऽनन्तवचन ॥

शतरूपा । स्त्री॰ स्वायम्भुवमनोपत्न्याम् ॥ ब्रह्मणः कन्यायाम्॰ पत्न्याश्चेतिमात्स्ये तृतीयोध्याय ॥

शतलुम्प । )
शतलुम्पक । ) पु॰ किरातार्जुनीय काव्यकर्त्तरिभारविकवौ ॥

शतवीर्या । स्त्री॰श्वेतदूर्वायाम् ॥ शत वीर्याण्यस्याः ॥ कपिलद्राक्षायाम् ॥ शतावर्याम् ॥

शतवेधी । पु॰ अम्लवेतसे ॥ शत वेद्धितुशीलमस्य । विधविधाने । सुपीतिणिनि ॥

शतवेधिनी । स्त्री॰ चुक्रिकायाम् । चूकाख्यशाके ॥

शतव्रज । पुं॰ अनन्तगतौ । अपरिमितगतौ ॥

शतसहस्रम् । न॰ शतगुणितसहस्रे । लक्षे ॥

शतसहस्रकम् । न॰ तीर्थविशेषे ॥

शतङ्कटा । स्त्री॰ वज्रे ॥ विद्युति । सौदामिन्याम् ॥ शतङ्कटा॰ त्रि॰ अगाधजलाशयावासम्प्रसा । अच् ॥ शतङ्कटाशयस्याकृतिशा । पृषोदरादित्वात् सः ॥

शताग्र । त्रि॰ शततमेभागे ॥ स ङ्ख्याशब्दस्यवृत्तिविषयेपूरणार्थत्व म । यथा । तस्याःशिरोऽग्राशिनया गङ्गासुरपूजिता । शताग्रेणवतुल सीतेनविष्णो प्रियासदेतिमृत्युञ्ज यतन्त्रम् । तस्या सुरायाश्चतस स्त्रम् ॥

शताक्षी स्त्री॰ पार्वत्याम् ॥ शत पुष्यायाम् ॥ रात्र्याम् ॥ शतम क्षीण्यस्याः । बहुव्रीहौ॰ अच् । ङीष ॥

शताङ्गः । पुं॰ युद्धार्थरथे । स्यन्दने ॥ शतमङ्गान्यवयवायस्य । तिं निशद्रुमे ॥

शतानकम् । न॰ रुद्राक्रीडे । श्म शाने ॥

शतानन्द । पुं॰ मुनिविशेषे । गौतमस्यसुतेदेवकीनन्दने ॥ गौत मसुनौ ॥ जनकपुरोहिते ॥ ब्र ह्मणि ॥ विष्णुरथे । शतमानन्दा अस्य एकएवपरानन्दउपाधिभेदा च्छतधाभिद्यते ॥ शतमनेकै॰ अन्त करणवृत्तिविशेषैरुपाधिव्यभिव्यज्य मानाआनन्दाअस्यपरमानन्दसिन्धो

श्चाकृतिशा ॥

शतानीक । पुं॰ व्यासशिष्ये॰ मुनि विशेषे ॥ वृद्धे ॥ नृपविशेषे । जन मेजयपुत्रे ॥

शतायु । त्रि॰ शतवर्षवयसि ॥ श तवर्षाणामायुर्यस्य ॥

शतारम् । न॰ वज्रे ॥

शतारुषी । स्त्री॰
शतारु । न॰ } कुष्ठभेदे ॥ रक्तश्यावं सदाहार्त्तिशतारु स्याद्बहुव्रणम् ॥

शतावरी । स्त्री॰ शतमूल्याम् । इन्दी वर्याम् ॥ अस्यागुणा । शतावरी गुरुः शीतातिक्तास्वाद्वीरसायनी । मेधाग्निपुष्टिदास्निग्धानेत्र्यागुल्मा तिसारजित् । शुक्रस्तन्यकरीबल्या वातपित्तास्रशोथजिदिति ॥ अस्या घार्तोयथा । शतावरीमूलकल्ककस्या त्क्षीरचतुर्गुणम् । क्षीरतुर्यघृतग व्यं सितयाकल्कतुल्यया ॥ घृतशे षंपचेत्तन्नुपलार्द्धं लेहयेत्सदा । र क्तपित्तकासपित्तक्षयश्वासहनाशये तद्धृतिलघुशतावरीपाक ॥ शय्या म् । इन्द्राण्याम् ॥ शतेनावृणोति । वृञ् । पचाद्यच् । गौरादिः ॥

शतावर्त्त । पुं॰ विष्णौ ॥ शतमाव र्त्ता प्रादुर्भावाअस्य ॥

शतावर्त्ती । पुं॰ विष्णौ ॥

शताह्वि । पुं॰ शतकोटौ ॥ वज्रे ॥

शताह्वा । स्त्री॰ शतपुष्पायाम् ।

अत्वरी । स्त्री० निशायाम् ॥

अद । पु० फलमूलादौ ॥ अदेरच्॥

अद्रि । पु० पर्वते । मेघे ॥ किपर्णौ ॥ हस्तिनि ॥ खड्गे ॥ स्त्री० तडिति ॥ शीयतेऽत्यतेवा। अदृत्० । अदिशदीतिक्रिन् ॥

अनक्षार्थि । स्त्री० गजपिप्पल्याम्॥

अनके । अ० अत्वरायाम् ॥ अनेरेव । अव्ययसर्वनाम्नामकच्प्राक्टेरिति कच् ॥ सम्भमेपीत्यर्थे ॥

अनपर्णी । स्त्री० वसनपर्ण्याम् ॥ कट्वाम् ॥

अनि । पु० सप्तमपदे । सौरी । शनैश्चरे । नीलवास्तसि । मन्दे। छायात्मजी ॥ कुक्कुरे ॥

अनिगृहम् । न० मकरराशौ ॥ कुम्भ राशौ ॥ शनेर्गृहम् ॥

अनिप्रसू । स्त्री० छायायाम् । सूर्य पत्न्याम् ॥

अनिप्रियम् । न० नीलमणौ ॥

अनिवार । पु० शनिभोग्यसाकलदि ने ॥ तत्पु० उदयकालादोदयका लः ॥

अनैश्चर । पु० शनियहे ॥ शनैश्च रति० पञ्चत्वात् । चर० । अच् ॥ वि० मन्दगामिनि ॥

अनैः । अ० क्रियामान्द्ये । स्वैरे ॥ अत्वरायाम् । अद्रुते । शनैश्चरे । अयति । शामयतिवा । अमद

नि० शामतेजमेवा। ऐसुप्रत्यय । पृ षोदरादित्वात्० यस्यन रुखोवा

अन्तनुः । पु० प्रतीपभूपतनये । भ हाभिषि ॥

अप । पु० अपथे । निर्भर्त्सने ॥

अपथ । पुं० कारे ॥ आक्रोशे ॥ दिव्ये । समये। सुतादिभि. अपने ॥ अपन्ति अपथाक्रोशे । शीङ्श मिकगमीत्यादिनाऽथप्रत्ययः ॥

अपनम । न० अपथे ॥ अप० । ल्युट् ॥

अपमान । वि० क्रोशति ॥ स्वरि तेत्वादात्मनेपदम् ॥

अप्त । वि० शापयस्ते ॥ अप्यतेस्म । अप० । क्त: । पुं० उल० दू० गौ० भा० प्र० दर्पविशेषि ॥

अफ । पुं० सुगन्धिद्रव्यविशेषे । न खे । क्षेत्रदर्शे ॥ न० तरूणां सूफे ॥ गवादीनांखुरे ॥ अफत ति । फलगती । अन्योऽपीति डः । पृषोदरादिः ॥

अफर । पुं० मत्स्यविशेषे । प्रोष्ठ्या म् । सूठी० इ० गौ० दे० भा० प्र० अफरोति । रा० । आतोऽनु पेतिकः ॥

अफराधिप । पुं० इल्लिशे० मत्स्ये । वाडिकपूरे ॥ अफरीयामधिपः॥

अफरी स्त्री० अफरे । प्रोष्ठ्याम ॥ जातेरितिङीष् ॥

शबल । पु॰ एते । कर्बुरे । चित्रे । किर्मीरे । शपति॰ अक्रोशति वर्णान् । शप॰ शपेर्वलेतिकलप्रत्ययो बत्वञ्च । चित्रव्यामिश्र॰ । त्रि॰ तद्वति ।

शब्द । पु॰ अक्षरे । यशसि ॥ गीतौ । वाक्ये । खे । श्रवणे । ध्वनौ । इति हेमचन्द्र । श्रोत्रग्राह्ये गुणपदार्थविशेषे । अस्य पर्यायाः यथा । शब्दः॰ निनादः निनदध्वनिध्वानरवस्वना । स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः । आरवारावसंरावविरावाः । इत्यमर । प्रयोगैराभिज्ञवलितया काशदेश शब्द । सद्विविधः ध्वन्यात्मको॰ वर्णात्मकश्चेति भेदात् । तथाहि । शब्दोध्वनिश्च वर्णश्च मृदङ्गादिभवोध्वनि । कण्ठसंयोगादिजन्या वर्णास्ते कादयो मता । सर्वः शब्दोनभोवृत्ति श्रोत्रोत्पन्नस्तुगृह्यते । वीचीतरङ्गन्यायेनतदुत्पत्तिस्तुकीर्त्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते । उत्पन्न कोविनष्ट क इतिबुद्धेरनित्यता ॥ सोयमित्यादि बुद्धिस्तु साजात्यमवलम्बते । तदेवौषधमित्यादौ सजातीयेऽपिदर्शना-त् । इ॰ भा॰ प॰ शब्द निरूपणे । शब्दइति । नभोवृत्तिरा

काशसमवेत । दूरस्थशब्दस्या ग्रहणादाह । श्रोत्रोत्पन्नइति । ननुमृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे॰ श्रोत्रे कथमुत्पत्तिरतआह । वीचीतरङ्गन्यायेनेति । आद्यशब्दस्य बहिर्दिग्दशकछिन्नोऽन्य शब्दस्तेनैव शब्देनजन्यते॰ तेनचापरस्तद्व्यापक एव क्रमेणश्रोत्रोत्पन्नोगृह्यतइति कदम्बगोलकन्यायादिति । आद्यशब्दाद्दशदिक्षु॰ दशशब्दा उत्पद्यन्ते । ततश्चान्येदशशब्दा उत्पद्यन्ते॰ इतिभाव । यस्मिन्कल्पे गौरवादुक्त कस्यचिन्मतइति । ननु शब्दस्यानित्यत्वादुत्पत्ति कथम त आह । उत्पन्न कइति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः । ननुसएवा यं ककारइत्यादिप्रत्यभिज्ञानाच्छब्दानामित्यत्वम् । इत्य चोत्पादविनाशबुद्धिश्च सरूपा चेत्यतआह । सोयमिति बुद्धिस्तु साजात्यमवलम्बतेइत्यादि । तत्रप्रत्यभिज्ञान॰ तत्सजातीयत्वविषय । ननुतद्व्यक्तिभेदोविषय॰ उक्तप्रतीतिविरोधात् । इत्यञ्चद्वयोरपिबुद्ध्योर्नभ्रमत्वमिति । ननुसजातीयत्वसोयमिति प्रत्यभिज्ञायांभासते॰ इतिकुत्रदृष्टमित्यतआह । तदेवेति । यदौषधमयाकृततदेवान्येनापिकृतमित्या

दिदर्शनादितिभाव इतिमुक्ता
वली ॥ अ प्तवाक्यं । आप्तस्तु तथा
प्तवचनन्त्विति साङ्ख्या । अथाप्त
वचनमिति लक्ष्यनिर्देश । इति लक्
षणम् । आप्ताप्राप्ता युक्तेति यावत् ।
आप्ताचासौ श्रुतिश्च आप्तश्रुतिः ।
श्रुतिः वाक्यजनितं वाक्यार्थविज्ञान
म् । तच्च स्वतः प्रमाणम् । अपौरुषेय
वेदजनितत्वेन च सकलदोषाशङ्काविनि
र्मुक्तं युक्तं भवति । एवं वेदमूल
स्मृतीतिहासपुराणवाक्यजनितम
पि ज्ञानं युक्तम् । आदिविदुषः कपिला
देः कल्पान्तराधीतश्रुतिस्मरणसम्भ
वः । सुप्तप्रतिबुद्धस्येव पूर्वेद्युरव
गतानामर्थानामन्येद्युः । तथा चा
वट्यजैगीषव्यसंवादे भगवा
न् जैगीषव्यो दशमहाकल्पवर्त्ति ज
न्मस्मरणमात्मन उवाच । दशसु
महाकल्पेषु परिवर्त्तमानेन मयेत्या
दिना ग्रन्थसन्दर्भेण । आप्तग्रह
णेन च अयुक्ताः शाक्यभिक्षुक
निर्ग्रन्थकसंसारमोचकादीनामा
गमाभासाः परास्ता भवन्ति । अयुक्त
त्वञ्चैतेषां विगानाद्विच्छिन्नमूलत्वात्
प्रमाणविरुद्धार्थाभिधानात् कैश्चि
देव म्लेच्छादिभिः पुरुषापसदैः
पशुप्रायैः परिग्रहाद्बोद्धव्यम् । तु
शब्देनानुमानाद्व्यवच्छिनत्ति । वा
क्यार्थो ह्यप्रमेयः न तु तद्धर्मो वा

क्ययेन तल्लिङ्गं भवेत् । न च वाक्य
वाक्यार्थं बोधयत् सम्बन्धग्रहणम
पेक्षते । अभिनवकविरचितस्य वा
क्यस्यादृष्टपूर्वस्याननुभूतचरवाक्या
र्थबोधकत्वादिति । अध्ययनकार्यं
शब्दः । शब्द इति शब्दजनितमर्थ
स्वरूपज्ञानमुपलक्षयति कार्यकारणो
पचारात् । सा द्वितीया सिद्धिः सु
तारमुच्यते । तदिदं द्विधा श्रवणम् ।
अन्येनाचष्टे । यस्य साङ्ख्यशास्त्र
पाठमन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्
पद्यते सा सिद्धिः शब्दः । शब्दपाठा
नन्तरभावात् । इति साङ्ख्याः ॥
आप्तोपदेशः शब्दः इति गौतमसू
त्रम् । अस्यार्थः । शब्द इति लक्ष्य
कथनं तदर्थं प्रमाणशब्द इति ।
आप्तोपदेश इति लक्षणम् । आप्त
प्रकृतवाक्यार्थयथार्थज्ञानवान् ।
तस्योपदेश इत्यर्थः । प्रकृतवाक्या
र्थयथार्थज्ञानप्रयुक्तः शब्द इति
फलितार्थः । अथवा । आप्तो य
थार्थ उपदेशः शाब्दबोधो यस्मात् त
त् । शाब्दत्वञ्च जातिविशेषः । त
था च यथार्थशाब्दज्ञानकरणत्वम
र्थः । अत्र च विशेष्यावच्छिन्नप्रकारक
त्वं तद्वति तत्प्रकारकत्वादि प्रमाल
क्षणानामेकम् । लक्षणपरस्य लक्ष्य
तावच्छेदकीनिवेशनीयमतो नाभेदः
॥ ७ ॥ विभजते । स द्विविधो दृष्टा

दृष्टार्थत्वात् । सप्रमाणशब्द श
ब्दतदुपजीविप्रमाणातिरिक्तप्रमाण
गम्यार्थोदृष्टार्थः । शब्दतदुपजी
विप्रमाणमात्रगम्यार्थोऽदृष्टार्थः
• तथाचदृष्टार्थत्वादृष्टार्थत्व
भेदात् प्रमाणशब्दस्यद्वैविध्यमित्य
र्थः ॥ ८ ॥ शप्यते । शपआक्रोशे
। शाशपिभ्यांददनाविति दन ॥ शा
स्त्रेशब्दस्तुवाचकइति । शास्त्रे•
व्याकरणादिशास्त्रे • योवाचक '
साधुशब्द • सएवनिरूपपदेनशब्दश
ब्देनव्यवह्रियतेनध्वनिर्नचापभ्रंश'
। सद्विविधोलौकिकवैदिकभेदात्
। तत्रगौरश्वः पुरुषोहस्तीशकुनि
र्मृगोब्राह्मणइतिलौकिकाः । शन्नो
देवीरभीष्टये• इषेत्वोर्जेत्वा । अग्नि
मीळेपुरोहितम्• अग्नआयाहिवीत
यइतिवैदिकाइत्यर्थः ॥ वाक्यसन्द
र्भे ॥ अस्यप्रयोगविषयोयथा । म
हान्हिशब्दस्यप्रयोगविषय । सप्त
द्वीपावसुमतीत्रयोलोकाश्चत्वारोवे
दाःसाङ्गाःसरहस्याबहुधाभिन्ना ।
एकशतमध्वर्युशाखाः । सहस्रवर्त्मा
सामवेदः । एकविंशतिधावाह्वृच्य
म् । नवधाथर्वणोवेदः । वाकोवा
क्यम् । इतिहासः । पुराणम् । वै
द्यकमित्येतावाञ्छब्दस्यप्रयोगविषयः
। एतावन्तंशब्दस्यप्रयोगविषयमन
नुनिशम्यसन्त्यप्रयुक्ताइतिवचनकेव
लंसाहसमेव। एतस्मिन्नतिमहति
शब्दस्यप्रयोगविषयेतेतेशब्दास्तत्र
तत्रनियतविषयादृश्यन्ते । तद्यथा ।
शवतिर्गतिकर्माकम्बोजेष्वेवभाषि
तोभवति । विकारएवैनमार्याभाष
न्ते शवइति । हम्मति . सुराष्ट्रेषु
रंहति । प्राच्यमध्येषु । गमिमेव
त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे
प्राच्येषु• दात्रमुदीच्येषु। इतिमहा
भाष्यम् । जीवतोमृतावस्थाविका
रस्तर्थ इत्यर्थः . ॥ इतिकेयट ॥ श
ब्दश्चतुर्विधः । जातिगुणक्रियायदृ
च्छाशब्दभेदात् । तत्रजातिशब्दोय
थागौरश्वः पुरुषोहस्तीशकुनिर्ब्राह्म
णइत्यादि । गुणशब्दोनीलोहरित
इत्यादि । क्रियाशब्द ' पचतिप
ठतिगच्छतीत्यादि । यदृच्छाशब्दो
डित्थोडवित्थआखण्डलोपाललम्बु
ख इत्यादिः ॥

शब्दकोषः । पुं• शब्दसमूहे ॥ शब्दा
नांकोषोऽर्थसमूह शब्दकोषः ॥

शब्दग्रह । पुं• कर्णे ॥ शब्दोगृह्यते
ऽनेन । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥

शब्दनः । त्रि• शब्दकारके । रवणे ॥
शब्दयतितच्छीलः । शब्दशब्दक्रि
यायाम् । चलनशब्दार्थादितियुच् ॥

शब्दब्रह्म । न• वेदे ॥

शब्दभावना । स्त्री• शाब्दीभावनायाम् ॥ शब्दस्यभावना ॥ प्रेरणाधर्मक

शशब्दव्यापार' खज्ञानकरणक' स्तु त्यादिज्ञानेतिकर्तव्यताक . पुरुषप्रयत्नभाव्यमिष्ट शब्दभावनोच्यते ॥

शब्दभेदी । पु॰ अर्जुने । तृतीयेपाण्डवे ॥ भेदनभेद् । सोस्त्यऽस्य॰ भेदी । शब्दस्य भेदी ॥ बाणविशेषे । इ॰ रामायणम् ॥

शब्दयन् । त्रि॰ व्याहरति ॥ शब्दशब्दोत्॰ तत्करोतीतिण्यन्ताल्लट शतृ प्रत्यय । स्त्री॰ ङीप् ।

शब्दयोनि । पु॰ भृवेधसृदादिधातुषु ॥ शब्दस्यनाम्नोयोनि ॥

शब्दवृत्ति । स्त्री॰ शब्दप्रवृत्तौ ॥ साचचतुर्विधा यथा । तत्स्थतद्धर्मता भ्यांचतत्समीपतयापिच । तत्साहचर्याच्छब्दानावृत्तिरुक्ताचतुर्विधा ॥ साच॰ मुख्यलक्षणागुणभेदेन॰ त्रिधा । मुख्यापि रूढियोगभेदेनद्विधारूढिश्चस्वरूपेणजात्यागुणेनवा- निर्देशार्हेषुवस्तुनि॰ सज्ञासम्बन्धसङ्केतेन॰प्रवर्तते । यथा॰डित्थ डवित्थ '॰गौ शुक्लइति । लक्षणाच तेनेवसङ्केतेनाभिहितार्थसम्बन्धिनि । यथागङ्गायांघोषइति । गौणीच॰ अभिहितार्थलक्षितगुणयुक्ते तत्सदृशे । यथा॰ सिंहोदेवदत्तइति । योगवृत्तिस्तु॰ एतत्त्रिविधवृत्ति प्रतिपादितपदार्थयो प्रकृतिप्रत्यायार्थयोर्योगेन । यथा॰ पङ्कजम्॰ औपगव :॰पाचकइत्यादि ॰ ॥

शब्दवेधी । पुं॰ अर्जुने ॥ दशरथे ॥

शब्दस्मृति ' । स्त्री॰ व्याकरणे ॥

शब्दहेतु ' । पु॰ षष्ठ्यादिषु ॥ यथा । षष्ठोगुणक्रियाजातिरूढय शब्दहेतव । गौर्माञ्जलोत्पलशुक्लपाच कोघटएवच ॥ आकाशङ्कतिशब्दाना तत्तदर्थप्रवर्तका ' ॥

शब्दाधिष्ठानम् । न॰ कर्णे ॥

शब्दानुशासनम् । न॰ प्रकृत्यादिविभागेनशब्दव्युत्पादने ॥ उक्तञ्च यथा । विविक्ता ' साधव ' शब्दा : प्रकृत्यादिविभागत । यान्यन्तेयेनतच्छास्त्र मत्रशब्दानुशासनमिति ॥ व्याकरणस्येदमन्वर्थनामशब्दानुशासनमिति ॥

शब्दार्थ । पु॰ शब्दजन्यज्ञानविषये । वस्त्वाकृतौ ॥ शब्दस्यअर्थ ॥ यत्पर . शब्द सशब्दार्थ इतिमीमासका ॥ सयोगोविप्रयोगश्चसाहचर्यंविरोधिता । अर्थ प्रकरणलिङ्ग शब्दस्यान्यस्यसन्निधि : ॥ सामर्थ्यमौचितीदेश : कालोव्यक्ति ' स्वरादय : । शब्दार्थस्यानवच्छेदेविशेषस्मृतिहेतव ॥

शब्दितम् । त्रि॰ भाषिते ॥ गीते ॥ प्रतिपादिते ॥ शब्दसशब्दनेघोरादिक । कर्मणिक्त ॥

शम् । अ॰ कल्याणे ॥ सुखे ॥ शास्त्रे

शम' । पुं॰ शान्तौ । विषयेभ्यइन्द्रियोपरतौ ॥ मोक्षे ॥ अन्तरिन्द्रियनिग्र

द्दे । अन्त . करणोपरमे ॥ मनोने
खर्थे ॥ मन : प्रसादे । अन्त क
रणस्य विषयेभ्यो निवृत्तौ ॥ अवणा
दिव्यतिरिक्तविषयेभ्यो मनसो निव
र्तने ॥ उपशान्तौ ॥ सर्वकर्मसन्या
से ॥ सदैववासनात्याग शमोयमि
तिशब्दित ॥ शमनम् । शम
उपशमे । भावे घञ् ॥ नोदात्तोप
देशेतिवृद्ध्यभाव ॥ शान्तिरसे ॥
शाम्यतेऽनेनेतिव्याख्यानात् ॥ पा
णौ । शये । हस्ते ॥ शाम्यतिकण्ड्
मनेनानेन । हलश्चेतिघञ् ॥ उप
चारे । चिकित्सायाम् ॥

शमक । त्रि० शान्तिकारके ॥

शमथ । पु० शान्तौ । मन्त्रिणि ॥
शमनम् । शम० । शमादिभ्योऽथच्
॥ शाम्यतिवा । बाहुलकादथप्रत्य
य ॥

शमन । पु० यमराजे । यमे । श्रा
द्धदेवे । अन्तके । पितृपतौ । मृग
विशेषे ॥ कालापि ॥ न० शान्तौ ॥
वधे । हिंसायाम् ॥ परम्पराके ।
प्रोक्षणे । यज्ञार्थपशुहनने ॥ चर्व
णे ॥ शमयति । शम० । णिजन्ता
ल्ल्यु । भावेल्युड्वा ॥

शमनस्वसा । स्त्री० कालिन्द्याम् । य
मुनायाम् ॥ शमनस्वसा ॥

शमनी । स्त्री० उन्मूलिन्याम् ॥

शमनीषद् । पु० निशाचरे । राक्ष
से ॥

शमपरा । स्त्री० सौधप्रभेदे ॥

शमयिता । त्रि० विनाशके ॥

शमल । पु० अपराधे ॥ न० विष्टा
याम् ॥ शम्यते । शाम्यतिवा ।
शम० । शकिशम्योर्नित्यिति कल ॥

शमसुखम् । न० शान्त्यानन्दे ॥

शमादिषट्कम् । न० शमदमोपरति
तितिक्षासमाधानश्रद्धासु ॥ शमा
दीनांषट्कम् ॥

शमान्तक । पु० कामदेवे ॥ कृ०
त्रि० शेष ॥

शमि । स्त्री० शिम्बायाम् ॥ शाम्य
ति । शम० । सर्वधातुभ्यइन् ॥

शमित । त्रि० शान्ते । शीतोष्णस
हने ॥ शम्यतेस्म । शम० । क्त ।
वादान्तशान्तेत्यत्र साधु ॥ वि
नाशिते ॥ निर्वापिते ॥

शमी । त्रि० शान्ते ॥

शमिर । पु० शमीवृक्षे ॥

शमी । स्त्री० सक्तुफलायाम् । शिम्बा
याम् । छौंकरा० जाटी० हू० भा० प्र०
वर्ग ॥ अस्या गुणायथा । शमी
तिक्ताकटु शीताकषायारेचनीलघु
घु । कम्पकासज्वरश्वासकुष्ठार्श
कृमिजित्स्मृता ॥ शिम्बिकाया
म् ॥ वल्गुल्याम् ॥ शाम्यति ।
शम० । अच् । गौरादि ॥ यद्वा
। शमयतिरोगान् । शमेरजन्तान्ङी

ष् ॥

अमीक । पुं॰ मुनिविशेषे ॥ आम्यति । अम॰ । अलीकादित्वादीकन ॥

अमीगर्भ । पुं॰ ब्राह्मणे ॥ अग्नौ ॥

अमीज । पुं॰ अमीधान्ये ॥

अमीधान्यम् । न॰ वैदले । माषादौ । यथा । मुद्गामाषाराजमाष . कुलत्थ श्चणकास्तिल : । काकाण्डाचीवरद्ध तिशमीधान्यगण . स्मृत . ॥ अम्या धान्यम् ॥

अमीपत्रा । स्त्री॰ खदिरिकायाम् । लज्जालौ । अमीपत्रसदृशानिपत्राण्यस्या सा ॥

अमीफलम् । न॰ अम्या : फले । सांगर॰सेगर॰दू॰भा॰प्र॰ । यथा । अमीफलकोमलबीजसस्मिततमेव्दिकेखेदितमिवकेवलम् । प्रलिह्यैगेविधिनाविपाचितसराजिकवाददधिसे श्ववान्वितम् ॥ अमीफलञ्चस्वादु कुष्ठार्श : कफहृत्सरम् । सुरुच्यभि लरूक्षमेध्यपापविनाशनम् ॥

अमीर । पुं॰ अल्पार्थाअम्याम् ॥ रु खा अमीत्यर्थे॰कुटीअमीशुण्डाभ्यो र . ॥

अम्या । स्त्री॰ शतद्रुदायाम् । विद्युति ॥ भयङ्करत्वात्॰असुखमिवति । पा॰ । आतोनुपेतिक । टाप् ॥

अम्याक : । पु॰ आरग्वधे । चतुरङ्गुले ॥ अङ्कस्याण पाकोऽस्य ॥ विपाके

॥ पाचके ॥

अम्याल : । पुं॰ आरग्वधे ॥

अम्ब । पु॰ अवे । मुसलाग्रस्थलोह मण्डलके ॥ लोहकाञ्च्याम् । पवौ ॥ अम्बसम्बन्धने॰चुरादि । अम्ब्यतेसम्बध्यतेअनेन इतिविग्रहे पवर्गतृतीय . । अच् ॥ प्रतिलोमे । द्वितीयकर्मणि ॥ यथा । अम्बाकरोति॰अनुलोमंकृष्टवा॰प्रतिलोमंकर्षतीत्यर्थ ॥ कृञोद्वितीयेतिडाच् ॥ त्रि॰ शुभान्विते ॥ अमस्यास्ति । कशकृभ्यामितिव ॥ यद्वा । आम्यति । अम॰ । अमेर्वन् ॥ टन्क्वाःष्टुय । ओष्ठ्यवानपि ॥

अम्बर : । पुं॰ अवयात्मकृतिमृगविशेषे । साबर॰दू॰भा॰प्र॰ ॥ अस्यमांसगुणा । अम्बरस्यपलंखगधपीतलघुकषस्मृतम् । रसेपाकेचमधुरकफहरंसमपन्दलं दैत्यविशेषे ॥ मत्स्यप्रभेदे ॥ गिरिविशेषे ॥ अवयोति । तुञ॰ । पचाद्यच् ॥ अवसवरणरातिवा । क : ॥ अवयति । बाहुलकादरन्नितिवा । अमिधातोः सञ्ज्ञायामिलज्वा ॥ न॰ सलिले । जले ॥ चित्रे ॥ बौद्धनलविशेषे ॥

अम्बरकन्द । पुं॰ वाराहीकन्दे ॥

अम्बरचन्दनम् । न॰ चन्दनविशेषे । औरातिबहुलगन्धे ॥

अम्बरविद्या । स्त्री॰ मायायाम् । अ

स्वरस्यदैत्यविशेषस्यविद्या ॥

शम्बरसूदन . । पुं॰ मदने । कामदेवे ॥ शम्बरदैत्यविशेष॰सूदितवान्॰ सूदयतिवा । सूद॰ । नन्द्यादित्वाल्ल्युः ॥

शम्बरारि । पु॰ मनसिजे । कामे ॥ शम्बरस्यदैत्यविशेषस्य॰व्रतविशेषस्यवा॰अरि . अच् ॥

शम्बरी । स्त्री॰ आखुपर्ण्याम् ॥ मायायाम् ॥ शब्दयोति ।क्त्र॰ । शमिधातोरित्यच् । गौरादि . ॥

शम्बल । पुं॰ न॰ कूले । तटे ॥ पाथेये ॥ मत्सरे ॥ शम्बयति । शम्ब॰ । बाहुलकात कल . ॥

शम्बली । स्त्री॰ कुट्टन्याम् ॥ शसुख॰ वलते॰ वलतिवा ! वलसंवरणे॰ वलप्राणनेवा । पचाद्यच् । गौरादि

शम्बाकृतम् । त्रि॰ द्विवारकृष्टक्षेत्रे । द्वितीयाकृते ॥ शमस्यास्ति । वा शम्भार्मितिव । शब्दोद्वितीयकर्षणेवर्त्तते । शङ्वकृतम । कृओद्वितीयतृतीयशबवीजात कृषाविति डाच् ॥ यद्वा । शंव शब्दः प्रतिलोमे । अनुलोमेनकृष्टं च पुन . प्रतिलोमेनकृष्टमित्यर्थं ॥

शम्बु पु॰ शम्बूके ॥ यथा । शम्बूकः शम्बुकोऽप्यथ . पूर्वं का

लस्तुसर्वदा । ककारेणविनाशेषेो दृश्यतेग्रन्थविस्तरे ॥ इतिहट्टचन्द्र ।

शम्बुक . पु॰ शम्बूके ॥ शमेर्बाहुलकादुकप्रत्ययेोवुगागमश्च ॥ शम्बूकमपिशम्बुकमितिद्विरूपकोश ॥

शम्बुक पु॰ जलशुक्तौ ॥

शम्बूक ।पु॰ गजकुम्भान्ते । जलशुक्तिकायाम् ॥ शूद्रतापसे ॥ जलजन्तुविशेषे ॥ दैत्यविशेषे ॥ शङ्खे ॥ शाम्यति । शम॰ । उलूकादयश्चेत्यूकेोवुकाच ॥ क्षुद्रशङ्खे ॥

शम्बूकपुष्पी । स्त्री॰ शङ्खपुष्प्याम् ॥

शम्बूका । स्त्री॰ जलशुक्तौ ॥

शम्भल । पु॰ ग्रामविशेषे ॥ तत्रप्रष्टितीर्थानिसन्ति॰कल्कीचाविर्भूयसहस्रसमाः स्थास्यति ॥

शम्भली । स्त्री॰ कुट्टन्याम् ॥ शसुख भलते । भलपरिभाषणे । पचाद्यच् । गौरादि ॥

शम्भु . । पुं॰ महादेवे । ईशे । शिवे ॥ परमेष्ठिन । ब्रह्मणि ॥ विष्णौ ॥ सिद्धे ॥ अर्हति ॥ वृत्ताकंपादपे ॥ शसुखभवति॰ भावयति भू॰ । मितद्र्वादित्वाड्डु ॥ यद्वा । शभवत्यस्मात् । भूसत्तायाम् । भूप्राप्तौवा । बाहुलकादपादानेपि॰ मितद्र्वादि ,

त्वाङ्ग, । शय्याङ्गस्तविशेषे ॥ यथा । कुरुपाणिकङ्कणयुग्मालङ्कृतमये रत्नशार त्वम् । चरण सन्नूपुरस युक्तकुरुकर्णं राजत्ताटङ्कम् । रसनामाशीजयमञ्जीरद्वयमेव शम्भुसङ्गतम् । भुविकान्त गौरिचिरं सम्भावयतन्नागाधीशेनोक्तम् ॥ यथा । जयमायामानवमूर्त्तेदानवध शम्भ सव्यापारी । बलमायोद्गावथाङ्गत्याकारबलङ्कालक्ष्मीसंहारी । कृतवासध्व सनधर्मांश सनगोगोपीगोपानन्दी । बलिलक्ष्मीशासनलीलावामनदेतृयश्रेयोनिष्कान्दी ॥

शम्भुतनयः । पु० कार्त्तिकेये ॥ गणेशे ॥

शम्भुतिथि: । स्त्री० चतुर्द्दश्याम् ॥

शम्भुनन्दनः । पुं० कार्त्तिकेये ॥ गणेशे ॥ शम्भोर्नन्दन ॥

शम्भुप्रिया । स्त्री० गौर्य्याम् ॥ आमलक्याम् ॥ शम्भोः प्रिया ॥

शम्भुवल्लभम् । न० श्वेतकमले ॥ त्रि० शिवप्रिये ॥

शम्या । स्त्री० युगकीलके ॥ शम्यतेऽनया । शम० । अघ्न्यादि ॥ यज्ञाङ्गभूतेशूलाकारेकाष्ठविशेषे ॥ दक्षिणहस्तगृहीततालविशेषे ॥ यष्ठ्याम् ॥ यथा । धनुः शतपरीहारोयामसृष्टात्समन्ततः । शम्यापाताश्वयोवापि० त्रिगुणोनगरस्यतु ॥ अत्रशम्यायष्टिरितिकल्लूकभट्टः ॥

शम्याक्षेपः । पुं० भ्रमितक्षिप्तयष्टिप्राप्तयावत्भूप्रदेशे । शम्यापाते ॥

शम्यापातः । पु० शम्याक्षेपे ॥ यथा । भ्रामयित्वावहुगुणयष्टिं क्षिप्तासम्प्राप्नुयात् । भूप्रदेशयावन्तशम्यापातः सउच्यते ॥

शम्याप्राश । पु० व्यासाश्रमे ॥ यथा । ब्रह्मनद्यांसरस्वत्यामाश्रमः पश्चिमेतटे । शम्याप्राशइतिप्रोक्त ऋषीणासत्रवर्द्धनइति ॥

शय । पुं० शय्यायाम् ॥ पन्नगाख्ये । पाणौ । शेतेऽस्मिन्सर्वम् । शीङ्स्वप्ने । पुंसीतिघ ॥ अचि ॥ निद्रायाम् ॥ पचि ॥

शयण्डः । पुं० निद्रालौ । शयालौ ॥

शयथः । पुं० अजगरे ॥ निद्रालौ ॥ मरणे ॥ शेते । शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः । म-त्स्ये ॥ वराहे ॥

शयनम् । न० शय्यायाम् ॥ निद्रायाम् ॥ करणानाम्पञ्चमे ॥ सुरते । मैथुने ॥ शीङोभावेल्युट् ॥ शय्यतेऽत्र । अधिकरणेल्युट् ॥ शयनेविशेषोयथा । प्रश्वासान् षोडशम्यानस्तानृद्धि ' १६ पार्श्वेदक्षिणे । ततस्तुद्विगुणान् ३२ वामे०पश्चात्स्वप्याद्यथासुखम्वो "

मर्द्दिशायामनलीनोभेरुर्ध्वास्तिजन्तू नाम् । तस्मात्तु वामपार्श्वे शयी तभ् प्रापाकाथम् ॥

शयनासनम् । न० शयनगृहे । आस्यते ऽस्मिन् । आस० । करणाधिकरणयोरितिल्युट् । शयनस्यआसनम ॥

शयनीयम् । न० शय्यायाम् ॥ शेते० शय्यते ऽनया । कृत्यल्युटइत्यधिकरणे शीङोऽनीयर् ॥ त्रि० शयनयोग्ये ॥

शयनीयकम् । न० शय्यायाम् ॥

शयान । त्रि० शय्यानिहिताङ्गे । शय्यायांसुप्ते ॥ शयाना भुञ्जतेयवना । भुजिक्रियाया शयनलक्षणम । लक्षणहेत्वो क्रियायाइति लट : शानच ॥निद्राकृते ॥ शयाननप्रबोधयेत् ॥ विश्रान्ते ॥

शयानक । पुं० अजगरे ॥ कृकलासे ॥ शेते । आनक शीङ्भिय ॥

शयोलु । पुं० वाहसे । अजगरे ॥ कुक्कुरे । शुनि ॥ मृतकान्तके । शृगाले । सियाल० सयाल० ङ्० भा० प्र० त्रि० निद्राली । सप्नजि । निद्रालु० ङ्० भा० प्र० ॥ शयनशील. । शीङोवाच्यङ्गत्यालुच् ॥

शयित : । पुं० शेलौ । श्लेष्मान्तके । वसन्तकुसुमे ॥ त्रि० निद्रिते । निद्राणे ॥ शेतेस्म । शीङ० । अकर्मकत्वात्कर्त्तरिक्त । निष्ठाशीङ्सिनक्त्वम् । स्थिते ॥

शयितवान । त्रि० निद्रिते ॥ शेतेस्म । शीङोऽकर्मकत्त्वेकर्त्तरिक्तवतु । निष्ठाशीङ स्विदिमिदिक्ष्विदिधृषइतिनक्त्वम् ॥

शयिता । त्रि० शयनकर्त्तरि ॥

शयु । पुं० वाहसे । अजगरे ॥ शेते । भृ० मृ० शी० तॄ० चरि० तनि० धनि० मि० मस्जिभ्यउ ॥

शयुन । पुं० अजगरे ॥ शेतेऽत्यर्थम् । अजि० यमि० शीङ्भ्यश्चेतिशीङउनम् ॥

शय्या । स्त्री० शयनीये । तूलिकाद्यास्तरणविशेषे ॥ शय्यते ऽच० शेतेऽस्यांवा । सञ्ज्ञायांसमजेतिशीङ : क्यप् ।अयङ्यिक्ङितीतिशीङोऽयङादेश । खट्वादौ । गुम्फने। शब्दगुम्फे ।

शय्याजन्तु । पुं० मत्कुणे ॥

शर । पुं० तेजनके । गुन्द्रे ॥ बाणे । काण्डे ॥ दध्यग्रे । दधिसारे ॥ न० सलिले । नीरे । जले ॥ शृणाति० अनेनवा । शृस्हिंसायाम् । अच्० ऋदोरपवा ॥

शरजम् । न० हैयङ्गवीने ॥

शरजन्मा । पु० षडानने । स्कन्दे ॥ शरेषुजन्मास्य ॥

शरट : । पुं० सरटे ॥ शृणाति । शकादित्वादटन् ॥ कुसुम्भशाके ॥

शरणम् । न० गृहे । रक्षितरि । वधे ॥ रक्षणे ॥ शीर्यतेदुःखमस्मिन्निति व्युत्पत्त्या प्रपन्नानामार्त्तिहृति । यथा । शरणनहिममजननीनपितानसुतानसोदरानान्ये । परमशरणमिदमेवचरणममम्मूर्द्धिदेशिकन्यस्तमिति ॥ आश्रये ॥ घातके ॥ शृणाति । शृ हिंसायाम् । ल्युट्० भावेवा ॥

शरणद । पुं० सन्तानदातरि० ईश्वरे ॥ त्रि० शरणदातरि ॥

शरणा । स्त्री० प्रसारण्याम् ॥

शरणागत । त्रि० आश्रिते ॥ शरणापन्ने । शरणार्थिनि ॥ शरणेआगत ॥ शास्त्रेषुनिष्कृतिर्दृष्टा महापातकिनामपि । शरणागतहातुस्तुनदृष्टानिष्कृतिः क्वचित् ॥ शरणागतमार्त्तञ्चयोजहातिनराधम । सएवनरकयातियावदाभूतसम्प्लवम् ॥

शरणागति । स्त्री० शरणागमने ॥ साषड्विधायथा । आनुकूल्यस्यसङ्कल्पः प्रातिकूल्यस्यवर्ज्जनम् । रक्षिष्यतीतिविश्वासोगोप्तृत्ववरणंतथा ॥ आत्मनिक्षेपकार्पण्येषड्विधाशरणागतिः ॥

शरणार्थी । त्रि० शरणागते । अनुगते ॥

शरणार्पणक । पुं० शरणापन्ने । सङ्कारकीविनि ॥

शरणि । स्त्री० पथि ॥ शृ० । बाहुलकादनि ॥ आवली ॥ शरणिहिंसामितिवेदभाष्यम् ॥ पृथ्व्याम् ॥

शरणी । स्त्री० पथि ॥ प्रसारण्याम् ॥ जयन्त्याम् । जयावृक्षे ॥

शरण्ड । पुं० धूर्त्ते ॥ शरटे ॥ भूषणान्तरे ॥ पक्षिणि ॥ कामुके ॥ चतुष्पदे ॥

शरण्य । त्रि० आर्त्तस्यरक्षितरि । त्रातरि ॥ शरणेरक्षणेसाधुः । तत्रसाधुरितियत् ॥ शृणातिभयंवा । शृ० । शृरम्योन्नेत्यन्यः ॥ शरणमिववा । शाखादिभ्योयः ॥

शरण्या । स्त्री० शरणार्हायाम् । दुर्गायाम् ॥ यथा । विषाग्निभयघोरेषुशरण्यास्मरणाद्यतः । शरण्यातेनसादेवीमुनिभिः परिकीर्त्तिता ॥

शरण्यु । पुं० वारिदे ॥ वाते ॥

शरत्कम् । न० वृत्तप्रभेदे ॥

शरत्कामी । पुं० कुक्कुरे ॥

शरत्पद्मम् । न० सितान्बुजे ॥

शरत्पर्व । न० दुर्गोत्सवे । कौजागरे ॥

शरत्पुष्पम् । न० आढुल्यैः क्षुपे । हलराख्ये । तगरे । मिस्त्रीफले । सुपुष्पे । पीतपुष्पे । काश्मीरेतरव टनाम्नाप्रसिद्धे ॥ शारदपुष्पमात्रे ॥

शरत्०द् स्त्री० हायने । सम्वत्सरे । वर्षे ॥ शृणातिभावान् । शृ हिंसायाम् । शृदृभसोऽदि ॥ ऋतुविशेषे । आश्विनकार्त्तिकयोः । वर्षावसाने ॥ शीर्यन्तेऽस्यापाकेनौषधयः । पूर्ववद्दि ॥ तत्रजातस्यफलंयथा । नरः शरत्सन्धकालस्यजन्मा भवेत्सुकर्माभनुजस्सरस्त्री । शुचिः सुशीलोगुणवान सुमानीधनान्वितो राजकुलप्रपन्नः ॥

शरद . । त्रि० शरवर्षिणि ॥ शरं ददाति । डुदाञ० । आतद्धतिकः ॥

शरदन्त । पुं० हेमन्ते ॥ शरदोन्तोऽस्मिन् ॥

शरदा । स्त्री० सम्वत्सरे ॥ शरद्रतौ ॥ शरदोभागुरिमतेटाप् ॥

शरदिज . । त्रि० शरत्कालजाते ॥

शरदुदाशयम् । न० शरत्कालिकेमरोवरे ॥

शरधि । पुं० तूणे । तूणीरे ॥ शराधीयन्तेऽस्मिन् । डुधाञ्० । उपसर्गेघोः किः । कित्वादाकारलोपः ॥

शरपर्णी । स्त्री० ओषधिविशेषे ॥

शरपुङ्ख । पुं० क्षोद्रशमी । सरफोका० इ०भा०प्र०ओषधौ । अस्यगुणायथा । शरपुङ्खोयकृत्प्लीहगुल्मव्रणविषापहः । तिक्तः कषायः कासास्रज्वरश्वासहरोलघुः ॥

शरभ । पुं० मृगेन्द्रविशेषे । महामृगे । अष्टापदे । महासिंहे । पर्वताश्रये ॥ अस्यलक्षणं यथामहाभारते । अष्टपादूर्द्धनयनऊर्द्धपादचतुष्टयः । सिंहहन्तु समायातिशरभोवनगोचरइति ॥ शृणाति । शृ० । कृशृशलिकलिगर्दिभ्योऽभच् ॥ करभे । उष्ट्रे । वानरविशेषे ॥ हरौ । विष्णौ ॥ शीर्यन्तइति । शराः शरीराणि० शीर्यमाणत्वात् ० तेषुप्रत्यगात्मतया भाति । भादीप्तौ । आतद्धतिकः ॥ पतङ्गे ॥ वर्णवृत्तविशेषे ॥ यथा । द्विजवरतिलककलितमिहसगणकलयशरभमिदमतिसुखकरणम् । कविवरसकलहृदयकृतहरणं फणिवरनरपतिवदनविहरणम् ॥ अत्रहि अवरशब्देनतुष्कलगणपञ्चकरूपश्चकस्तद्रूपम्चतुर्लघुतेषा तत्केन चितयेनकलित द्वादशलघुभिरिति यावत् ॥ यथा । सकलकमलदलरुचिधरनयन अखिलजलनिधिफणिपतिफणशयन । दनुजविजयसुरपतिनतिमुदितोहरिरपहरतुदुरिततिमुदित । ॥

शरभङ्ग । पुं० गौतमवंशजे । रामायणप्रसिद्धे । मुनिविशेषे ॥

शरभङ्गाश्रम । पुं० तीर्थविशेषे ॥

शरभू । पुं० पार्वतीनन्दने । स्कन्दे ॥

शरभूमिज । पुं० गन्धके ॥

शरमय । त्रि॰ शरनिर्मिते ॥

शरमल्ल । पु॰ खगविशेषे । गूथलक्षे ॥

शरलकम् । न॰ जले ॥

शरवणोद्भव । पुं॰ स्कन्दे ॥

शरवाणि । पु॰ शरमुखे । शरक्षेपिणि ॥ पदातौ ॥

शरवीजम् । न॰ धातुके । कौतुकाख्ये ॥

शरव्यम् । न॰ लक्ष्ये । शरविद्धिस्थाप्रहितम् । उगवादिभ्योयत् ॥ यद्वा । शरान्व्ययति । व्येञ् सवरणे । सम्प्रसारणिविभ्योड ॥

शराघात । पुं॰ प्रचलाके । बाणाघाते ॥

शराटि । ) स्त्री॰ शरारिविहगे ॥
शराडि । )

शराति । स्त्री॰ शरारौ । आडिविहगे ॥ शरमीरमतीति । अत॰ सातत्यगमने ।

शराभ्यास । पुं॰ उपासने । शरक्षेपाभ्यासे ॥ शरस्यशरमोक्षणस्य अभ्यासः ॥

शरारि । स्त्री॰ सुरगाद्रे॰ बु॰ भा॰ प्र॰ ॥ पक्षिविशेषे । आटी ॥ शरमीरमृच्छति । ऋगतौ अच् ॥

शराक । त्रि॰ हिंस्रे ॥ शॄ॰ हिंसायाम् । शॄवन्द्योराक ॥

शरालि । स्त्री॰ शरारिपक्षिणि ॥

शरमीरमृच्छति । ऋ॰ । अच् । कपिलकादित्वाल्लत्वम् ॥

शरालिका । ) स्त्री॰ शरालिविहगे ॥
शराली )

शराव । पुं॰ कुडवद्वयपरिमाणे चतुःषष्टितोलके । सेर॰ इ॰ भा॰ प्र॰ । माणिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके । सरावा॰ इ॰ भा॰ प्र॰ शरावम् । शॄ॰ । अदोरप् ॥ शृणातिवा । अच् ॥ शरशराद्रुवा॰ भवति । भवरणस्थादौ । यण॰ अव्वा ॥

शरावती । स्त्री॰ रामात्मजलवस्य राजधान्याम् ॥ नदीविशेषे ॥ इयञ्चोत्तरपूर्वाभिमुखी॰ अस्मादक्षिणपूर्वस्थाव्यवस्थितोदेश . प्राग्देश उत्तरापरस्यांव्यवस्थितउदग्देश । तथाचोक्तम् । प्रागुदञ्चौ विभजतेहंस . क्षीरोदकंयथा । विदुषांशब्दसिद्धार्थसान · पातुशरावतीति ॥ शरा · सन्त्यस्याम् । मतुप् । शरादीनाञ्चेतिदीर्घ ॥

शरावर । पुं॰ कवचे ॥ तूणीरे ॥ यथा । शरावरौशरे · पूर्णौ विध्वस्तौपश्यलक्ष्मणेतिरामायणम् ।

शरावाप . । पु॰ धनुषि ॥

शरावार्द्धम् । न॰ कुडवपरिमाणे । द्वात्रिंशत्तोलके । आधसेरइ॰ भा॰ प्र॰ परिमाणे ॥

शराश्रय । पुं० तूणे ॥

शरासनम् । न० कोदण्डे । चापे धनुषि ॥ शरा अस्यन्तेऽनेन । अ सुक्षेपणे । करणे ल्युट् ॥

शरास्त्रम् । न० धनुषि ॥

शरि । पुं० हिंस्रे ॥ शूलि ॥ शृणाति । शॄ० । इन् ॥

शरिमा । पुं० प्रसवे ॥ शृणाति यौवनम् । शॄ० । भृमृधृसृशॄभ्य इमनिच् ॥

शरी । स्त्री० शुन्द्रायाम् । एरकाख्ये । गौरादित्वान्ङीष् ॥

शरीरम् । न० कलेवरे । गात्रे । वपुषि । संहनने । वर्ष्मणि । विग्रहे । समग्रेन्द्रियकलापे० देवपितृमनुष्यादीनां देहे । जरायुजाण्डजोद्भिज्जाख्यभेदभिन्ने० पादादिशिरोऽन्ते शीर्य्यते० तत्तत्कालाद्विनश्यतीति शरीरम् ॥ शरीरलक्षणं यथा । चेष्टेन्द्रियार्थाश्रयः शरीरमिति गौतमः ॥ अत्र चेष्टादिमिलिताश्रयत्वं न लक्षणम्० वैयर्थ्यात् । अपितु० आश्रयपदस्य प्रत्येकमन्वयेन चेष्टाश्रयत्वादिलक्षणत्रये तात्पर्य्यम् । चेष्टात्वञ्च० प्रयत्नजन्यतावच्छेदको जातिविशेषः । नच शरीरावयवेऽतिव्याप्तिः अन्त्यावयवित्वेन विशेषणात् । नच निष्क्रियशरीरेऽव्याप्तिः० तादृशेमानाभावात् । अतएवाह० इन्द्रियाश्रयइति । इन्द्रियाश्रयत्वञ्च० अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण० चक्षुषानुदेवदणीयमित्यादिप्रतीतेः । अर्थाश्रयत्वमित्यत्रार्थशब्देन रूपादिपरं । तदाश्रयत्वञ्च घटादावतिव्याप्तं० । किन्तु सुखदुःखान्यतरपरं । अतएव भाष्ये० यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते० सएषामाश्रयस्तच्छरीरमिति । वस्तुतस्त्वन्यतराश्रयत्वमपि तल्लक्षणम् । किन्तु० सुखाश्रयत्वं दुःखाश्रयत्वञ्चेति लक्षणद्वये तात्पर्य्यम् । शरीरस्य तदाश्रयत्वमवच्छेदकतासम्बन्धेन हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयम्० स्वर्गिशरीरे नारकिशरीरे च पाषाणादौ सुखदुःखस्वीकारान्नाव्याप्तिः । नच तच्छून्यखण्डशरीरेऽव्याप्तिः० सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्० तादृशजातिश्च मनुष्यत्वचैत्रत्वादि० कार्य्यभेदेन नरसिंहशरीरारम्भेद्वा नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वयइति ॥ १ ॥ शृणाति० शीर्य्यते रोगादिना वा । शॄ० । कॄशॄपॄकटीतीरन् ॥ चर्म्मादि ॥

शरीरज । पुं० रोगे ॥ कामे ॥ पुत्रे ॥ त्रि० देहजाते ॥ शरीरा

न्तारौ । क्ली० । पञ्चम्यामिति ड ॥

शरीरभाक् । त्रि० देहभाजि । भजी ण्वि ।

शरीरभृत् पुं० प्राणिनि ॥ शरीरबिभर्त्ति । भृञ क्विप् ॥ विष्णौ । श्रीहरौ ॥ शरीरिणांशरीराणिअन्नरूपेणपोषयन् । प्राणरूपेणधारयन्० शरीरभृत् । स्वमाययाशरीराणिबिभर्त्ति वा । डुभृञ्० । क्विपचेतिक्विपतुक् ॥

शरीरयात्रा । स्त्री० वपुषःस्थितौ ॥

शरीरावरणम् । न० त्वचि । चर्म्मणि ॥ कायवेष्टने ॥

शरीरी । पु० जीवे । प्राणिनि ॥ शरीरमस्यास्ति । अतइनिठनाविति नि ॥ चेतने ।

शरु । पु० कोपे । क्रोधे ॥ वज्रे ॥ शरे । वाणे ॥ आयुधे ॥ शृणाति । शॄ० । शॄस्वृस्निही त्यु ॥

शरेष्ट । पु० आम्रे ॥

शर्करक । पु० मधुजम्बीरे ॥

शर्करजा । स्त्री० सिताखण्डे ॥

शर्करा । स्त्री० खण्डविकृतौ । सितायाम् । शुक्लायाम् । वूरा० इ० भा० प्र० ॥ मीनाण्डायाम् । सितोपलायाम् । चीनी० इ० भा० प्र० ॥ उपलायाम् । अश्मरुपायामृदि ॥ मृत्तिकामिश्रेक्षुद्रपाषाणेषु ॥ कर्पराशे ॥ मृत्कपालखण्डे ॥ शर्करान्वितदेशे । शकले ॥ रोगप्रभेदे ॥ यथा । पच्यमानाश्मरीपित्तात्शोष्यमाणाच वायुना । विमुक्तकफसम्बन्धाक्षरन्ती शर्करामता ॥ शृणाति० शीर्यतेवा शॄ० । शॄ० करन् । शर्कराऽस्त्यस्य च । देशेलुविलचौचेतिमत्वर्थीयस्याणोलुप ॥

शर्कराचल । पु० दानार्थकल्पिते शर्करामयेगिरिविशेषे ॥

शर्कराधेनु । स्त्री० दानार्थशर्करा-निर्मितायांधेनौ ॥

शर्करापुष्प । पु० घर्कद्रुमे ॥

शर्कराप्रभा । स्त्री० जिनानांनरकविशेषे ॥ यथा । रत्नशर्करावालुकापङ्कधूमतमप्रभा । महातमप्रभावित्यधोधोनरकभूमयइतिहेम० ॥

शर्करावान् । त्रि० सशर्करेदेशे ॥ शर्करायाम् । शर्करिले । शार्करे शर्करास्त्यत्र । देशेलुविलचौचेतिचान्मतुप ॥

शर्करावती । स्त्री० नदीविशेषे ॥

शर्करासप्तमी । स्त्री० वैशाखशुक्लसप्तम्याम् ॥

शर्करासव । पु० शर्करयाकृतेआसवविशेषे ॥

शर्करिल । त्रि० शर्करावतिदेशे ॥

शर्करायाम् । आकरे । शर्कराऽस्त्य
स्य । देशेलुविलचौचेतीलच् ॥

शर्करी । स्त्री॰ मेखलायाम् ॥

शर्करोदकम् । न॰ शर्करान्वितपानी
ये । रस॰ रसवत॰ इ॰ भा॰ प्र॰ । यथा
। जलेनशीतलेनैवद्राविताशुभ्रशर्क
रा । एलालवङ्गकर्पूरमरिचैश्चसमन्वि
ता ॥ शर्करोदकनाम्नैतत्प्रसिद्धं वि
दुषांमुखे । शर्करोदकमाख्यातंशुक्र
लंशिशिरंसरम् ॥ बल्यंरुच्यंलघुस्वा
दुवातपित्तप्रणाशनम् । मूर्च्छाच्छर्दि
तृषादाहज्वरशान्तिकरंपरम् ॥

शर्द्ध । पुं॰ अपानशब्दे ॥ शर्द्धनम्
। गुदशब्दकुत्सायाम् । घञ् ॥

शर्द्धञ्जह । पुं॰ माषे ॥ शर्द्धमपान
शब्दंजहाति । खोहाक॰ । बाहु
लकात्तस्मात्खश् । बहु
लमन्यत्रापीतिमुम् । जहातिरत्रान्त
र्भावितण्यर्थः ।

शर्द्धनम् । न॰ गुदशब्दे । पर्द्दे ॥

शर्म्मा । पुं॰ ब्राह्मणस्योपपदे ॥ न॰
सुखे । त्रि॰ तद्वति ॥ शृणात्यशुभ
म् । मृ॰ । सर्व्वधातुभ्योमनिन् ॥

शर्म्मरः । पुं॰ वस्त्रविशेषे ॥

शर्म्मरा । स्त्री॰ दारुहरिद्रायाम् ॥

शर्म्मिष्ठा । स्त्री॰ दानवेन्द्रवृषपर्व्व
णोदुहितरि ॥

शर्य्या । स्त्री॰ रात्रौ ॥ इ॰ वाचस्पति
कोष॰ ॥

शर्य्याति । पुं॰ वैवस्वतमनोः पुत्रे ॥

शर्व्व । पुं॰ ईश्वरे । ईशाने । शि
वे ॥ शृणाति॰सर्वाः प्रजाः संह
रतिप्रलयेसंहारयतिवा । शृणात्य
सुरान्॰भक्तानांपापंवा । मृ॰ ।
कॄगॄशॄदृभ्योवः ॥

शर्व्वरी । स्त्री॰ निशायाम् । यामि
न्याम् ॥ स्त्रियाम् ॥ शृणातिचेष्टा
। मृ॰ । कृगॄशॄवृञ्चतिभ्यः ष्व
रच् । षित्त्वान्ङीष् । वनिप्रत्यये तु
॰ वनोरचेतिङीपौ ॥ हरिद्रायाम्
॥ वत्सरविशेषे ॥ तत्फलंयथा । क्व
चिद्वर्षतिपर्ज्जन्योदेशेसंछिन्नमण्ड
लं । दुर्भिक्षंशर्व्वरीवर्षे व्यवहारो
विपर्य्ययः ॥ ३४ ॥

शर्व्वरीश । पुं॰ निशापतौ । चन्द्रे ॥

शर्व्वला । स्त्री॰ तोमराख्ये । गंड़ासा
॰ सब्बली॰ इ॰ भा॰ प्र॰ ॥ हस्तक्षेप्ये
सशल्यदण्डे । रायवास॰ इ॰ गौ॰
भा॰ ॥

शर्व्वाणी । स्त्री॰ उमायाम् । कात्याय
न्याम् । गौर्य्याम् ॥ शर्व्वस्यस्त्री ।
इन्द्रवरुणभवशर्वेत्यादिना॰ ङीषा
नुकौ ॥ शर्व्वाणीमध्यमाभिधे । म
ध्यमेश्वरस्थानदृश्यः ॥

शर्शरीक । पुं॰ हिंस्रे ॥ खले ॥ शृ
णाति । मृ॰ । शृवृदृभ्योऽहक्चा
भ्यासस्येति॰ईकन्॰द्वित्वमभ्यास
स्यचरुक् ॥

शल पुं० भृङ्गिणि॥ ब्रह्मभेदे॥ विधौ। ब्रह्मणि॥ दीर्घायुधे। कुन्ते। विषाङ्कुरे॥ उष्ट्रे॥ शल्यो ष्ट्रपे॥ न० श्वाविल्लोम्नि। शल श्याम्। शलति॥ शलति। शल चलने। पचाद्यच्॥

शलक। पुं० मर्कटे लूतायाम्। मकड़ी०मकड़ा०इ०भा०प्र०॥

शलङ्गः। पु० लोकपाले॥ लवणविशेषे॥

शलभः। पुं० कीटविशेषे॥ पतङ्गे। कृमिविशेषे। टिड्डी० टीड्डी० इ० दे० भा०॥ शलति। शल०। कृशृशलिकलिगर्दिभ्योऽभच्॥

शललम्। न० शले। श्वाविल्लोम्नि॥ शलति। शलचलनसंवरणयो:॥ वृषादित्वात्कलच्॥

शलली। पु० श्वाविधि॥ शलल मस्यास्ति। इनि.॥

शलली। स्त्री० शलले॥ गौरादित्वात्जातित्वाद्वाङीष॥

शलाका। स्त्री० शल्ये॥ मदनद्रुमे॥ शारिकायाम् ॥शलाकायाम् छत्रपञ्जरादिकाष्ठयाम्॥ तिलि इ० भाषा० शरे॥ चालेख्यकूर्चिकायाम्॥ शलति। शल०। व लाकादयश्चेतिसाधु.॥ धातुमय्यामञ्जनशलिकायाम्। सला इ० भा०॥

शलाकापुरुष। पुं० जैनानाद्देव पुरुषेषु॥ तेचत्रिषष्टिसङ्ख्यापरिमिता॥ तत्रद्वादशचक्रवर्त्तिनः। चतुर्विंशतिर्जिना। नववासुदेवा:। नववलदेवा.। नवप्रतिवासुदेवा:। इति॥

शलाट:। पुं० शकटपरिमाणे॥

शलाटु:। पु० बिल्वे॥ मूलविशेषे॥ त्रि० आमेफले॥ शलति। शलचलनसंवरणयो:। पचाद्यच्। घटति। घटगतौ। मृगय्वादित्वात्कु। शलश्चासावटुश्च॥

शलाभोलि। पु०उष्ट्रे॥ इ० ह्रि० न्द्र॥

शलालु। न० सुगन्धिद्रव्यविशेषे॥

शली। स्त्री० श्वाविधि॥

शल्कम्। न० त्वचि। वल्कले॥ शकले। खण्डे॥ मत्स्यत्वचि॥ शलति। शलचलने। कृञ्भीकेलिकन्॥ शल्कः:काश्यपखण्डेरितिविद्भाष्यम्॥

शल्कली। पु० मत्स्ये। मीने॥

शल्की। पुं० मीने॥

शल्मलि.। स्त्री० शाल्मलितरौ॥ शलति। शल०। क्विप्। मलति। मलधारणे। सर्वधातुभ्यइन्। शल्चासौमलिश्च॥ इ० द्वि० च:॥

शल्मली। स्त्री० शाल्मलिद्रुमे॥

शल्य । पुं॰ मदनद्रुमे ॥ श्वाविधि ॥ नृपविशेषे । युधिष्ठिरमातुले ॥ सीम्नि ॥ शलाकायाम् ॥ बिल्ववृक्षे ॥ मत्स्यविशेषे ॥ न॰ चूडे ॥ कूर्चे । शरे । तोमरे । कुन्ते ॥ वंशकम्बिकायाम् ॥ पापे ॥ दुःसहे ॥ दुर्वाक्ये ॥ अस्थ्नि ॥ आयुर्वेदस्याङ्गविशेषे ॥ यथा । सुश्रुत. । तत्र शल्य नाम विविधतृणकाष्ठपाषाणपांशुलोहलोष्टास्थिवालनखपूयास्रावाभ्रगर्भशल्योद्धरणार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थश्चेति ॥ पुं॰न॰ शङ्कौ । तोमरे । सेल इ॰ भा॰ ॥ शलति । चलगतौ । अघ्न्यादित्वाद्यत् ॥ यद्वा । शानांसवर्षसौख्यादिनाशलेर्य. ॥

शल्यक । पुं॰ मदनद्रुमे । राढे ॥ श्वाविल्लढ शेल्यूलसीमवतिप्राणिविशेषे ॥ तन्मांसगुणास्तु । शल्यकः श्वासकासास्रशोषदोषत्रयापहः । इति ॥

शल्यकण्टक । पुं॰ शल्यके ॥

शल्यलोम । न॰ शलल्याम् ॥

शल्यहृत् । त्रि॰ व्रणचिकित्सके । शल्यहर्त्तरि ॥

शल्यारि । पुं॰ धर्मपुत्रे । युधिष्ठिरे ॥

शल्ल: । पुं॰ भेके ॥ न॰ त्वचि ॥

शल्लक । पुं॰ शोणकवृक्षे ॥ न॰ त्वचि ॥

शल्लकी । स्त्री॰ श्वाविधि ॥ शल्यमृगे । अस्या मांसगुणा यथा । शल्यमांस गुरुस्निग्धशीतलं कफपित्तजिदिति ॥ द्रुमविशेषे । गजभक्ष्यायाम् । सुवहायाम् । अस्या गुणास्तु । शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्तव्रणहरी पुष्टिकृत्समुदीरितेति ॥ सलति । चलगतौ । क्वन् । पृषोदरादि । गौरादि ॥ शल्कं लक्यते । लक आस्वादने । क्वुन् ।

शल्लकीद्रव । पुं॰ सिह्लके ॥

शल्व । पुं॰ शाल्वदेशे ॥

शव । पुं॰ कुणपे । मृतशरीरे ॥ न॰ तोये जले ॥ शवगतौ । पचाद्यच् ॥

शवकाम्य । पुं॰ कुक्कुरे ॥

शवयानम् । न॰ काष्ठमञ्चे । शववहनार्थखट्वायाम् ॥

शबर । पुं॰ अरण्यचरम्लेच्छविशेषे ॥ अप्सु । पानीये ॥ शङ्करे । शास्त्रविशेषे ॥ हस्ते ॥ न॰ जले ॥ चित्रे ॥ बौद्धानां व्रतविशेषे ॥ शवति । शव॰ बाहुलकादर ॥ शव रातिवा रा॰ । क ॥

शवरथ । पुं॰ शवयाने । अरथी॰ इ॰ भा॰ ॥

शवपादप: । पुं॰ लोध्रे ॥

पिच्छः ॥ शशस्यधरोधारकः क
र्पूरे ॥
शशपानतीर्थम् । न॰ तीर्थविशेषे ॥
शशप्लुतकम् । न॰ स्तनादिस्थनखा
घाते ॥
शशभृत् । पुं॰ विधौ । चन्द्रे ॥ शश
बिभर्त्ति, डुभृञ॰ । क्विप् ॥
शशलोम । न॰ शशीर्षे ॥ शशस्यलो
म ॥
शशबिन्दुः । पुं॰ वासुदेवे ॥ राजा
न्तरे । चित्ररथपुत्रे ॥ चन्द्रे ॥ श
शस्य बिन्दुस्त्वम्लक्षणमस्य ॥
शशशिम्बिका । स्त्री॰ जीवन्त्याम् ॥
शशस्थली । स्त्री॰ गङ्गायमुनयोर्मध्य
देशे । अन्तर्वेद्याम् ॥ इ॰ मुद्रित
चि॰ शेष ॥
शशाङ्कः । पुं॰ चन्द्रमसि । कर्पूरे ॥
शशाङ्कमूर्त्तिः । पुं॰ चन्द्रे ॥ शशा
ङ्कामूर्त्तिर्यस्य ॥
शशाण्डुली । स्त्री॰ कर्कटीप्रभेदे ।
वकुफलायाम् । तण्डुल्याम् । अ
स्याः पर्यायायथा । शशाण्डुलीच
कुफलातण्डुलीचचसम्भवा । क्षु
द्राम्लाशीमशफलाध्मातफलात
था ॥ अस्या गुणाः । शशाण्डुली
तिक्तकटुः शीतमलावष्टम्भयुक्तामधु
राकफापहा । पाकेतुसाम्लामधु
राविदाहकृत्कफतुष्णारुचिकृ
द्दीपनी ॥

शशादः । पुं॰ विकुक्षिसञ्ज्ञके॰ राज
र्षिविशेषे ॥ श्येने ॥
शशादन । पुं॰ श्येनपक्षिणि ॥ श
शमत्ति । अद॰ ॥ ल्यु॰ । ल्यु
ट्॰ युज्वा ॥
शशिकला । स्त्री॰ अतिशक्वरी १५ छ
न्दोविशेषे ॥ तल्लक्षणन्तु गुरुनिध
नमनुलघुरिहशशिकला । यथा ।
मलयजतिलकसमुदितशशिकला॰
व्रजयुवतिलसदलिकगगनगता स
रसिजनयनहृदयसलिलनिधिं व्यत
नुतविततरभसपरितरलम् ॥ शशि
न षोडशांशे ॥
शशिकान्तः । पुं॰ चन्द्रकान्तमणौ ॥
न॰ कुमुदे । कह्लारे । कैरवे ॥ त्रि॰
चन्द्रसमे ॥
शशिदेव । पुं॰ रन्तिदेवे ॥
शशिध्वज । पुं॰ भल्लाटपुरनृपे ॥ क
ल्किपुराणस्य २५ ऽध्यायप्रसिद्धे ॥
शशी । पुं॰ हिमांशौ । चन्द्रे । नक्ष
त्रेशे ॥ नक्षत्राणामध्येशशीविभो
र्विभूतिः ॥ सचजलमयः । यथा
। सलिलमयेशशिनिरवेर्दीधितयो
मूर्च्छितास्तमोनैशम् । क्षपयन्ति द
र्पणोदरनिहिताइवमन्दिरस्यान्तः
ति ॥ वर्णवृत्तप्रभेदे । यदिन्द्रोयदि
स्यात् । शशीकथ्यतेतत् ॥ यथा ।
जनानन्दकन्द प्रियस्तान्मुकुन्द ।
॥ षण्मात्रस्यद्वितीयप्रभेदे॰ ॥ ऽऽ॰

॥ अर्हद्दुजविशेषे ॥

शशिप्रभम् । न० मुक्तायाम् ॥ कुमुदे ॥ त्रि० चन्द्रसमदीप्तियुक्ते ॥

शशिप्रभा । स्त्री० ज्योत्स्नायाम् ॥

शशिभूषण । पु० चन्द्रशेखरे । शिवे ॥

शशिलेखा । स्त्री० चन्द्रमस कलायाम् । इन्दुलेखायाम् ॥ गुडूच्याम् ॥ बाकुच्याम् । सोमराज्याम् ॥ चन्द्रलेखाभिधेवृत्ते ॥ रसालाया प्रभेदे ॥ यथा । शर्कराशुभ्रयुक्तेन घृतदुग्धघृतेनच पटपूताशिखरिणीशशिलेखेतिकीर्त्तिता ॥ शशिलेखाहिमाबल्याकृच्च्यापुष्टिप्रदालघु । वातपित्तहराश्रेष्ठ'महादोषविनाशिनी ॥

शशिलेखिका । स्त्री० शशिलेखायाम् ॥

शशिवदना । स्त्री० गायत्रीछन्द ई प्रभेदे ॥ शशिवदनाख्यौ ॥ यथा । शशिवदनानांब्रजतरुणीनाम् । अधरसुधोर्मिंमधुरिपुरैच्छत् ॥ चन्द्रसममुखायांशेषिति ॥

शशिवाटिका । स्त्री० पुनर्नवायाम् ॥

शशिशेखरः । पुं० ईश्वरे । चन्द्रमौलौसदाशिवे ॥ बुद्धभेदे । चक्रसवरे । वज्रकपालिनि । वज्रटीके ॥

शशोर्णम् । न० शशलोमनि ॥ शशस्यऊर्णा० शशोर्णम् । शशोर्णकारयंकरणमितिचन्द्रगोमिलिङ्गानुशा

सनात् ० क्लीबत्वम् ॥

शश्वत् । अ० आत्मप्रश्ने ॥ मङ्गले ॥ पुराकल्पे ॥ सदार्थे । नित्ये । निरन्तरे ॥ आभीक्ष्ण्ये ॥ पुनरर्थे ॥ शशतिगच्छन वा । शश० । बाहुलकात् ० वत् ॥ सहार्थे ॥

शष्कुल । पुं० छित्री । करञ्जे ॥

शष्कुली । स्त्री० पिष्टविशेषे । सोहालीतिख्याते ॥ यथा । समितायाघृतायायांलिप्त्वाकृत्वाचबेलयेत् । आज्यताभर्जयेत्सद्वाशष्कुलीफेनिकागुणा ॥ कर्णरन्ध्रे ॥ यथाकर्णशष्कुल्यवष्टब्धं नभएवश्रोत्रमिति ॥ सौरी० सू० भा० प्र० मत्स्ये ॥ तद्गुणायथा । शष्कुलीयाहियोष्ट्यामधुरातुवरामृता ॥ गौरादित्वान्ङीष् ॥

शष्पम् । न० नवीनतृणे । बालतृणे ॥ पु० प्रतिभाहानौ ॥ शष्यते० शुष्यतिवा । शसुहिंसायाम् ० शुषशोषणे वा । खष्पशिल्पशष्पे तिपीनिपातनात् ० षत्वञ्च ॥

शसनम् । न० परम्परके । यज्ञार्थपशुहनने ॥ शसु० । भावेल्युट् ॥

शस्तम् । न० श्व: श्रेयसि । शिवे । क्षेमे ॥ त्रि० कल्याणयुक्ते ॥ स्तुते ॥ प्रशस्ते ॥ शस्यतेस्म । शंसुस्तुतौ । कर्मणिक्त: ॥

शस्तकम् । न० अङ्गुलित्राणे ॥

शस्तकोशकः । त्रि० प्रशस्तकोशवात

शस्ताङ्ग. । त्रि० रम्यतनौ ॥ शस्तान्य
ङ्गान्यस्य ॥ पुं० अतीतकल्पीयेन्द्रे
दे ॥

शस्त्रम् । न० लौहे ॥ तीक्ष्णायसे । ख
ड्गे । आयुधे ॥ शस्त्रास्त्र बंहुधासु
क्तौ रित्यादौ शस्त्रास्त्रयोर्भेदस्तथा ।
तथाहि । येनकरधृतेनहन्यतेतच्छ
स्त्र अस्यादि । येनप्रक्षिप्तेनहन्यते
तदस्त्र काण्डादिकृत्यनयोर्भेदः ।
अपिच । अस्त्र मन्त्राभिमन्त्रितम् ०
शस्त्र तद्रितरदिति ॥ शस्यतेऽनेन ।
शसुहिंसायाम् । दाम्नीतिष्ट्रन् ।
सर्वधातुभ्यष्ट्रनिवा ॥ अभिचिमि
दिशसिभ्य क्त्रोवा ॥ अप्रणीतस्य
ग्जाते ॥ होमादिनाशस्त्रमानकृ
त्यर्थं ॥ अप्रणीतमन्त्रसाध्यायास्तु
तौ ॥ अप्रणीतमन्त्रसाध्यगुणनिष्ठगु
णाभिधान शस्त्रमितियाज्ञिकाभाव्य
शस्त्रार : ॥ पुं० खड्गे । तरवारी ।

शस्त्रकम् । न० अयसि । लौहे ॥ श
स्त्रतेनेन । शसी . ष्ट्रन् । स्वार्थे
कः ॥

शस्त्रकर्म । न० वैद्यानांप्रधानेकर्म
विशेषे ॥ तदष्टविधभवति । यथा
। छेद्य०भेद्य०लेख्य०वेध्य०सेव्यमा
हार्यं० विस्राव्यं० सीव्यमितिभेदे
दात् ॥

शस्त्रकोशतरु : । पुं० महापिण्डीत
रौ ॥

शस्त्रजीवी । पुं० शस्त्राजीवे ॥

शस्त्रधारणजीवक । पु० शस्त्राजीवे ॥

शस्त्रपाणि । पु० असादिशस्त्रहस्ते
॥ आततायिविशेषे ॥

शस्त्रभृत् । पु० शस्त्रधारिणि ॥

शस्त्रमार्ज : । पुं० असिधावके ।
शाणाजीवे ॥ शस्त्रमार्ष्टि । मृज्शु
द्धौ । कर्मण्यण् ॥

शस्त्रशास्त्रम् । न० अथर्ववेदस्योपवे
दे ॥

शस्त्रहत . । त्रि० शस्त्राघातेनमृते ॥

शस्त्रहस्त . । त्रि० शस्त्रपाणौ ॥

शस्त्राजीव । त्रि० काण्डपृष्ठे । आ
युधीये । ० आयुधिके ॥ शस्त्रमाजी
वति०उपजीवति । जीव० । कर्म
ण्यण् ॥

शस्त्राभ्यास : । पुं० शस्त्रशिक्षायाम् ॥

शस्त्रायसम् । न० पिण्डायसे । कृष्
णात्कृ०भा० ॥

शस्त्री । त्रि० शस्त्रविशिष्टे ॥

शस्त्री । स्त्री० क्षुरिकायाम् ॥ ष्ट्रन .
षित्वान्ङीष् ॥

शस्यम् । न० वृक्षादिफले ॥ शस्यते ।
शसु० । तकिशसिचतीतियत् ॥
तालव्याअपिदन्त्याश्चशष्पशूकरपा
शव : ॥ चंचधान्ये ॥ यथा । शस्य
क्षेत्रगत प्राहु सतुषधान्यमुच्यते
। आमवितुषमित्युक्ता स्विन्नमन्नमु
दाहृतमितिस्मृति : ॥

अश्वध्वसी । पुं॰ तुन्नवृक्षे । नन्दीवृक्षे ॥ त्रि॰ अश्वनाशके ॥

अश्वमञ्जरी । स्त्री॰ कार्पासे । अभिनवनिर्गतधान्यादिशीर्षके ॥ अश्वस्य मञ्जरी ॥

अश्वशूकम् । न॰ यवाद्यग्रे । किंशारौ । अश्वस्य शूकम् ॥

अश्वसंवर । पुं॰ अश्वकर्णे । सालवृक्षे ॥ अश्वे सन्त्रियते । वृञ् । अप् ॥

अश्वसंवरण । पुं॰ दीर्घपर्णे । अश्वकर्णे । अरण्यद्रुमे ॥

अश्वात । त्रि॰ अश्वभवने ॥

अश्वारु । पुं॰ शमीरे । अल्पशमीवृक्षे ॥

शांशप । पुं॰ चमसे । शिंशपायाविकार । अञ् । देविकाशिंशपेत्यात्वम् ॥

शांशपायन । पुं॰ मुनिविशेषे ॥

शाक । पुं॰ द्वीपविशेषे । शाकेशाकद्रुमस्तुङ्ग शाकसञ्ज्ञानिबन्धनमित्युक्तं ॥ ककर्शपर्णे मह्तितद्रुमे । क्रकचपत्रे । खरपत्रे । श्रेष्ठकाष्ठे । स्थिरसारे ॥ शक्तौ ॥ नृपविशेषे ॥ युधिष्ठिरविक्रमादित्यशालिवाहनादिकनरपतीनामतीताब्दे ॥ वत्सरे । गोयाभाख्ये ॥ पुं॰ न॰ हरितके । शाकभाजि ॥ मण्डूकपर्णी पालङ्क्याचिञ्चिकाचाप्यपोदका । चाङ्गेरीकिलमेथाचकालशी शाकजातय ॥ वास्तुके । पत्रपुष्पादिषु ॥ तत्रपत्रनिम्बादे ॥ पुष्प कोविदारादे ॥ आदिपदात् फलवार्ताकादे ॥ मूलमूलकादे ॥ कन्दशूरणादे ॥ अङ्कुरोवंशादे । आहुच । मूलपत्रकरीराग्रफलकन्दाधिरूढकम् । त्वक्पुष्पकवकञ्चैवशाकंदशविधस्मृतम अधिरूढकतालबीजाङ्कुरास्थिमज्जादीनितगौडा । अन्येतुजवोद्भूतस्यफलमूलादे स्वेदान्नवीजिन्नाङ्कुरान्मन्यन्ते ॥ शक्यते॰शक्नोत्यनेनवाभोक्तुम् । शक्लृ॰ । घञ् ॥ यद्वा । श्यति । शीतलक्रियते ॥ बाहुलकात् कन् ॥ भावप्रकाशेतु॰षड्विधशाकमुक्तम् । यथा । पत्र पुष्प फलनालकन्दसंस्वेदजतथा । शाक षड्विधमुद्दिष्ट गुरुविद्याद्यथोत्तरम् ॥ अथैतेषांगुणा । प्राय शाकानिसर्वाणिविष्टम्भीनिगुरूणिच । रूक्षाणिबहुवर्चासिसृष्टविण्मारुतानिच ॥ शाक भिनत्तिवपुरस्थिनिहन्तिनेत्रं वर्णविनाशयतिरक्तमथापिशुक्रम् । प्रज्ञाक्षयंप्रकुरुतेपलितञ्चनूनम् हन्तिस्मृति गतिमितिप्रवदन्तितज्ज्ञा ॥ शाकेषुसर्वेषुवसन्तिरोगास्तेहेतवोदेहविनाशनाय । तस्माद्बुध शाकविवर्जनन्तुकुर्यात्तथाम्लेषुसएवदोष ॥ अपिच । सामा

न्यान्येवबोध्यानिशाकानिच्छावर्चा सिद्ध । विशेषस्तचतेषान्तुतत्तत्र निरूपित. ॥ शाकपाकविधिर्यथा । हिङ्गुजीरयुतेतैलेक्षिपेच्छाकसुखण्डितम् । लवणञ्चार्द्रचूर्णादिसिद्धे हिङ्गूदकं क्षिपेत् ॥ इत्थेवसर्वशाकानांसाधनेभिहितोविधि ॥ वास्तूकाकाकमाचीचतण्डुलीय पुनर्नवा । केचुकनालिकापाठालक्ष्म्योऽनेनतद्गुणे । ‹ कासमर्दोयमेथीचपुन्नाटचणकाङ्कुरम् । रसार्द्रत्वक्क्षरहितपक्वसम्यग्विचक्षणैः । एवंवार्त्ताककूष्माण्डपटोलादिफलेष्वपि । तलनेविधिरुद्दिष्टोविशेषाय. सकथ्यते ॥ तप्ततैलेक्षिपेच्छाकवास्तूकादिसुखण्डितम् । लवणतोयमल्पञ्चविप्रसिद्धेऽर्द्धमात्रकम ॥ सधान्यवेशनेतक्रेगालितक्वथितक्षिपेत् ॥ तत शुण्ठीजीरकञ्चक्षिपेद्धिङ्गूदकं क्षिपेत् ॥ इत्थमेवापरस्यापिचर्वस्कारर्यादि । तत्सर्वलेच्छयादेयं वर्णाकृतप्रथमस्मृतम् । एवं यत्कथितशाककषायकटुतिक्तकम् । तदुष्णेनाम्बुनापूर्वंतक्रेणतदनन्तरम् । तप्ततैलेविनिक्षिप्य रन्धयेच्चयथेच्छया । वर्णस्करणादेयं कुङ्कुमं रक्तचन्दनम् । ताम्बूलथचथयुक्तारञ्चतत्प्रयोजयेत् ॥

शाकचुक्रिका । स्त्री॰ चिञ्चायाम् ।

शाकट । पुं॰ शकटबोढरि ॥ क्षेत्रातके । बहुवारके ॥ त्रि॰ शकटस्येदमित्यर्थे । शकटोपकरणे ॥ शकटं वहति । शकटादण् ॥ शकटवाह्यभारे ॥ शकटेनउह्यते । शेषद्वयण् ॥

शाकटाख्यः । पु॰ धवद्रुमे ॥

शाकटायन. । पु॰ मुनिविशेषे ॥

शाकटिक । त्रि॰ शकटेनगमनकर्त्तरि ॥ शकटेनचरति॰ गच्छति । चरतीति ठक्

शाकटीन. । पु॰ विंशतितुलापरिमाणे । भारे । आचिते । शलाटे ॥

शाकतरु. । पुं॰ शाकवृक्षे । सागौ न॰ वृ॰ भा॰ ॥ शाकाख्यस्तरुः ॥

शाकपवक. । पुं॰ त्रिवौ ॥

शाकम्भरी । स्त्री॰ । चण्डाम् । दुर्गायाम् । शाकैर्भरणात् पोषणात् । तस्याः स्थानं हिमाद्रेः प्रत्यन्तपर्वतेप्रसिद्धम् ॥ तीर्थविशेषे ॥

शाकम्भरीयम् । न॰ सांभर॰ दु॰ भा॰ प्र॰ लवणविशेषे । अस्यपर्यायकुणाश्चयः । शाकम्भरीयकथितगडाख्यरोमकतथा । गडाख्यलघुवातघ्नमत्युष्णभेदिपित्तलम् ।

तीक्ष्णा व्यवायिसूक्ष्माभिष्यन्दिक टुपाकिच ॥

शाकयोग्यम् । न॰धान्याके ॥

शाकराट् । पुं॰ वास्तूके ॥

शाकराज । पु॰ वास्तूके

शाकरुण्ड । पु॰ ग्रन्थिफले ॥

शाकल । पुं॰ उदीच्यग्रामे ॥ वाहीकग्रामे ॥

शाकल्य । पु॰ ऋषिविशेषे ॥ शकलस्यगोत्रापत्यम् । गर्गादित्वाद्यञ ॥

शाकलेय । पु॰ ब्रह्मयष्ट्याम् ॥

शाकबिल्व । ) पु॰ वार्त्ताकौ ।
शाकबिल्वक । )

शाकवीर । पुं॰ जीवशाके ॥ पुनर्नवाया ॥

शाकवृक्षः । पु॰ शाके । खरपत्रे । अर्जुनोपमे । क्रकचपत्रे ॥

शाकशाकटम् । न॰ शाकक्षेत्रे ॥ शाकानाभवनक्षेत्रम् । भवने क्षेत्रेशाकटशाकिनाविति शाकट ॥

शाकशाकिनम् । न॰ शाकशाकटे ॥ शाकानामभवनक्षेत्रम् । भवने क्षेत्रे शाकटशाकिनाविति शाकिनः ॥

शाकश्रेष्ठ । पुं॰ न॰ वास्तूकशाके ॥

शाकश्रेष्ठा । स्त्री॰ जीवन्त्याम् । वार्त्ताकौ ॥ डोडीक्षुपे ॥

शाकाख्यम् । न॰ पत्रपुष्पादौ । यथा मूलपत्रकरीराग्रफलकाण्डाधिरूढकम । त्वक्पुष्पकवकञ्चेतिशाकन्दशविधस्मृतम् ॥ पुं॰ शाकवृक्षे । अतिपत्रे । श्रेष्ठकाष्ठे । स्थिरसारे । गृहद्रुमे । सागोनवृ॰ गौ॰ भा॰ ।

शाकाङ्गम् । न॰ मरिचे ॥

शाकाम्लम् । न॰ वृक्षाम्ले ॥

शाकाम्लभेदनम् । न॰ चुक्रे । काञ्जिकप्रभेदे ॥

शाकालाबू । स्त्री॰ राजतुम्बाम् ॥

शाकिनम् । न॰ महच्छाकवति । महच्छाकशाकी॰ तद्वति ॥ मत्वर्थेपामादित्वान्नः । शाकोपलालोदद्रूणांक्षत्वञ्च ॥

शाकिनी । स्त्री॰ दुर्गायाअनुचरीविशेषे ॥ शाकयुक्तायाभूमौ ॥ यथा । मर्कट शाकिनीगावोआलमस्यन्दनश्नम् । अनूपपर्वतोराजादुर्भिक्षेनवश्यत ॥ मर्कटोधान्यादिहरणद्वारेणोपजीव्य । पत्रपुष्पफलादिषड्विधशाकयोगात्॰ शाकिनी॰ गृहवाटिका॰ शाकाद्याहरणेन । गावो । दुग्धादिना । आलं । मत्स्याद्याहरणेनश्यन्दनस्वत्थानाऽस्याग ॰ऋणादिलम्भेन॰ व्ययाधिक्यनिवृत्याच । वनफलपुष्पाद्याहरणेन । अनूपंवहूदकदे

श • सम्प्रदायशालूकाद्याहरणे न । पर्वतोगैरिकाद्युदाहरणेन । राजाभैषज्यादिमैत्यर्थे ॥

शाकी । पु० मत्स्यके

शाकुन . । पुं० न० पशुपक्ष्यादिरूप शकुनद्वारामनुष्यशुभाशुभनिश्चाय कग्रन्थे । वसन्तराजादौ ॥

शाकुनि । त्रि० पक्षिजीविनि ॥

शाकुनिक । पुं० जीवान्तके । पक्षि हन्तरि । शकुनान् हन्ति । पक्षिम त्स्ये । त्यजपर्यायश्चापिमइत्यादिक ॥

शाकुनेय : । पु० हुण्डुले । पिङ्गले । क्षुद्रपेचके । शकुनेरपत्यम् । शुभ्रा दित्वाड्ढक् ॥

शाकुन्तलेय । पु० भरते । शकुन्तला या अपत्यम् । स्त्रीभ्य ढक् ॥

शाकुलिक . । पुं० मात्स्यिकविशेषे शकुलान्हन्ति । पक्षिमत्स्येति ठक् ॥

शाकर । पुं० अनडुहि ॥

शाक्त : । त्रि० सर्वदेवमय्याः शक्तेरु पासके ॥ शक्तिर्देवतास्य । सास्यदे वतेत्यण् ॥ यथा । शाक्ता एवद्विजा सर्वेनशैवानचवैष्णवा : । उपासते यतोदेवीं गायत्रींपरमाक्षरीम् ॥ श क्त्युपासनानन्तर मन्योपासननिषे धोयथा । अस्थाचाराधनङ्कृत्वानान्य स्याराधनंचरेत् । अन्यस्यस्मरणा द् वियोगिनीशापमाप्नुयादितिदिलिग

वैस्यतन्त्रम् ॥ देवीभक्तापराधस्तु दुःख दातृत्वमुक्त मुण्डमालातन्त्रे । शाक्तान्दृष्ट्वास्मितगर्जन्तिनिन्दन्ति बहुजल्पका । छिनत्तितेषादेवी शीर्षाण्यसिद्वरवस्तुभेति ॥ गर्ज- न्ति• कुप्यन्तियुध्यन्तीत्यर्थ ॥

शाक्तिक । त्रि० शक्त्युपजीविनि ॥ शक्त्याजीवति । वेतनादित्वाटठ ञ ॥

शाक्तीक . । त्रि० शक्तिहेतिके । श क्तियोधिनि ॥ शक्ति प्रहरणम स्य । शक्तियष्टयोरीकक् ॥

शाक्य . । पु० बुद्धे ॥ शकोऽभिजन मोस्य । शण्डिकादिभ्योञ्य ॥ शाक्यमुनौ । भीमवत् ॥

शाक्यमुनि । पु० शौद्धोदनौ । मायादेवीसुते ॥ शकोऽभिजनो ऽस्य । शण्डिकाभ्योञ्य ॥ य था । शाकवृक्षप्रतिच्छन्नंवासयस्मा च्चक्रिरे । तस्मादिक्ष्वाकुवंशास्ते शाक्याइतिभुविस्मृता इतिसुन्द रानन्दचरितागमे ॥ अयमर्थ . । कोचनेक्ष्वाकुवंश्याराजपुत्रा . पि त्राबनवासायदत्ताज्ञा . गौतमवंश स्यकपिलस्याश्रमे• शाकच्छन्नेवस तिकृतवन्तइतितेतास्ते शाक्या । शाकेभवा : । दिगादित्वाद्यत् । त त्र शाकतोयोमुनि । शाक्यस्या सौमुनिश्चेति• शाक्यमुनि . ॥

शाक्यसिंह । पुं॰ सर्वार्थसिद्धे । शाक्यमुनौ ॥ शाक्य सिंहइव । उपमितव्याघ्रेतिसमासः ॥

शाक्री । स्त्री॰ दुर्गायाम् ॥

शाख । पुं॰ स्कन्दे । कार्त्तिके ॥

शाखा । स्त्री॰ पक्षान्तरे ॥ बाहौ ॥ ग्रन्थभेदे ॥ अन्तिके ॥ द्रुमाङ्गे । लतायाम् ॥ वेदभागे ऋग्वेदादिक्रमेण वेदाश्चत्वारः । तत्र ऋचि शाति शाखाः स्युः । नवाधिकशतशाखा यजुषः । सहस्रशाखाः साम्नः । पञ्चाशच्छाखा अथर्वणः । अतोक्तं छन्दोगपरिशिष्टे । स्वशाखाश्रयमुत्सृज्य परशाखाश्रयस्तु यः । कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य यत्कृतम् ॥ यन्नाम्नात स्वशाखायां पारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवदिति ॥ बह्वृच्यं वा स्वगृह्योक्तं यस्य यत्कर्मकीर्त्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेदिति तत्रापि विशेषः ॥ शाखति । शाखृ व्याप्तौ । पचाद्यच् । टाप् । यद्वा । शेतेऽस्यां पक्षी । शीङो कृत्स्वशेत्वक्रः । हखावयवश्चेति दशपाद्यनुसारिणः ॥

शाखाकण्ट । पुं॰ स्नुहीवृक्षे ॥

शाखानगरम् । न॰ यन्मूलनगरादन्यत्पुरं तस्मिन् । मुख्यपुराश्रयपुरे । अभिष्यन्दिरमणे । यथा । आरभ्यमूलनगरादपरनगरं हि यत् । तदभिष्यन्दिरमणं शाखानगरमित्यपीति शब्दरत्नावली ॥ तदस्यार्थोऽस्य मूलनगरस्य शाखिवनगरम् ॥

शाखापित्तम् । न॰ पाणिपादासमूलदाहे ॥

शाखापुरम् । न॰ शाखानगरे ॥ शाखिपुर ॥

शाखामृग । पुं॰ कपौ । वलीमुखे । वानरे ॥ शाखाचरोमृगः पशुः । शाकपार्थिवादिः ॥

शाखामृगाधिप । पुं॰ सुग्रीवे । शाखामृगाणामधिपः ॥

शाखाम्ला । स्त्री॰ वृक्षाम्लायाम् ॥

शाखारण्ड । पुं॰ स्वशाखांपरित्यज्य शाखान्तराध्ययनकर्त्तरि । अन्यशाखके । स्ववेदशाखामुत्सृज्य परशाखाश्रयकर्मकर्त्तरि ॥

शाखारथ्या । स्त्री॰ पीडमहस्तप्रस्थे पथि । यथा । धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्मिताः । त्रिकाराश्चोपरथ्यास्तु द्विकराप्युपरथ्यका ॥ इति देवीपुराणम् ॥

शाखाल । पुं॰ वानीरवृक्षे ॥

शाखाशिखा । स्त्री॰ मूलादारभ्याग्र यावद् गतायां लतायाम् । अमरः ॥

शाखि । पुं॰ तुरुष्के । तुरकस्थान् इ॰ भा॰ प्र॰ देशे ॥ शा

खृ० । इन् ॥

शाखी । पु० पादपे ॥ वेदे ॥ तुरुष्काख्यजने ॥ राजभेदे ॥ शाखाऽस्यास्ति । व्रीह्यादित्वादिनि ॥ यद्वा । अवश्यं शाखति । शाखृ० । आवश्यकेतिणिनि . ॥

शाखोट* । पुं० सहोडः इ० भा० प्र० वर्गे । पीतफले ॥ यथास्यपर्यायगुणा । शाखोट पीतफलको भूतावास खरच्छद । शाखोटोरक्तपित्ताशौवातश्लेष्मातिसारजिदिति ॥

शाखोटक । पुं० शाखोटे ॥

शाङ्कर* । पु० बलीवर्दे ॥ न० छन्दोभेदे ॥ त्रि० शङ्करसम्बन्धिनि । माहेश्वरे ॥ शङ्करप्रोक्ते ॥ यथा । आगमोक्तविधिंहित्वाय शाङ्करुते नरः । आचतद्विफलसोपिपित्वभिर्नरकव्रजेत् ॥ तत्तोयशोणितसमपिण्डोमलमयोभवेत् । तस्मान्मर्त्यंप्रयत्नेनशाङ्करमतमाश्रयेत् ॥ शङ्करस्यायम् शङ्करेणप्रोक्त वा । अण् ॥

शाङ्करि । पु० स्कन्दे ॥ गणेशे ॥

शाङ्करी । स्त्री० देवीविशेषे ॥ श्रीगिरीशाङ्करीस्मृतेतिदेवीशाङ्करीतुमहाकाली० इतिचदेवीगीता । अत्र शङ्करीशाङ्कर्योर्व्यत्ययेनपाठोगीतायांबोध्यः ॥

शाङ्कुची । स्त्री० शङ्कुयादसि ॥

शाङ्खिक । पु० काम्बविके । शङ्खवलयादिकर्त्तरिजातविशेषे ॥ शङ्खशिल्पमस्य । शिल्पमितिठक् ॥

शाङ्गुष्ठा । स्त्री० गुञ्जायाम् ॥ इ० र० माला ॥

शाट* । पुं० वस्त्रविशेषे । शाटके ॥ शटैकर्म्मणिघञ् ॥

शाटक । पुं० न० पटप्रभेदे ॥ यथा आजानुलम्बितमलीमसशाटकानां भिक्षार्थिप्रथमयाचितभाटकानाम् । पुत्रार्थिप्रियतमैकवराटकानामश्चदिव पततुमूर्ध्निकराटकानाम् ॥ स्वार्थेकः ॥

शाटिका । स्त्री० शाट्याम् ॥

शाटी । स्त्री० शाटके । स्त्रीपरिधेयवस्त्रे । साडी० इ० भा० प्र० ॥ शाट्यते । शटश्लाघायाम् चुरादि । सर्वधातुभ्यइन् । कृदिकारादितिङीष् ॥

शाट्यायन* । पुं० मुनिविशेषे ॥ न० प्रकृतकर्मवैगुण्यप्रशमनार्थेहोमे ॥ नायहोमः सर्वसम्मतः निर्मूलत्वात् । समूलत्वेशाखान्तरीयत्वमितिगौडा. ॥

शाठ्यम् । न० कुसृतौ । कपटे । व्याजे । निकृतौ । शठतायाम् ॥ शठति । शठकैतवे । पचाद्यच् । शठस्यकर्म । ब्राह्मणादित्वात्ष्यञ् ॥

यद्वा । शठनम् । ऋहलोर्ण्यत् ॥

शाण । पु० माषचतुष्टये । निष्के । टङ्के ॥ खड्गादितीक्ष्णीकरणयन्त्रे निकषे । कषे । कसौटी० इ० भा० प्र० पाषाणे ॥ शाणयते । शणु दाने । कर्म्मणि घञ् ॥ अयःशिखा । शीतनकारणे । चाकुलकास ॥ न० शणनिर्मितवस्त्रे ॥

शाणकम् । न० शणपुष्पे ॥ तच्छाकप्रकारो यथा । सुस्विन्नं शाणकपुष्पं तक्रे तैले विपाचितम् । हिङ्गुना वासितं सम्यक् चूर्णेनावचूर्णितम् । शणपुष्पं सरं रुच्यं मस्तकप्रदरनाशनम् । मधुरं रुचिरं पाके किञ्चिद्विष्टम्भकारकम् ॥

शाणाजीव । पु० असिधावके । शस्त्रमार्जे ॥

शाणि: । पुं० पट्टवर्च्चे ॥

शाणित । त्रि० तेजिते । निशिते ॥

शाणी । स्त्री० प्रावरणान्तरे । शणसूत्रमय्यां पट्टिकायाम् ॥ यथा । शाणीप्रायाधिवस्त्राधिशमीप्रायाम कौलहा । शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥ इ० वि० पु० शाणी० शणसूत्रमयी पट्टिका० तत्तुल्यानि वस्त्राणीति तट्टीका ॥ छिद्रवस्त्रे ॥ हस्तकटाक्षादिसूचनायाम् । सैन० इ० भा० ॥ शणस्य विकार: । तस्य विकार इत्यण् । टिड्ढेति ङीप् ॥

शाण्डकी । स्त्री० मण्डलेशस्थानस्थायां देवतायाम् ॥

शाण्डिल्य । पु० गौणभक्तिसूत्रयोः कर्त्तरि मुनिविशेषे ॥ शाण्डिल्यो मुनिवर्य्येषु मान्यो गीतः प्रकीर्त्तितः ॥ पावकविशेषे ॥ मालूरे । बिल्ववृक्षे ॥ शण्डते । शडि रुजायां सङ्घाते च । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् । शाण्डिलस्य मुनेर्गोत्रापत्यम् । गर्गादिभ्यो यञ् ॥ शाण्डिल्यस्तुवमान्यस्वाशा ॥

शाण्डिल्यविद्या । स्त्री० मनोमयात्मन उपासनायाम् ॥ शाण्डिल्येन मुनिना दृष्टा विद्या ॥

शातम । न० सुखे ॥ त्रि० दुर्ब्बले । निशिते ॥ सुखान्विते ॥ शायते स्म । शो० । क्त: । शाच्छोरन्यतरस्यामिति पक्षे इत्वाभावः ॥ अयति दुःखशा । शावति वा ।। इति कातृतन् ॥

शातकर्णि: । पुं० मुनिविशेषे ॥

शातकुम्भ । पुं० अश्वमारके । करवीरे ॥ न० काञ्चने ॥ शतकुम्भपर्वते भवम् । अण् ॥

शातकौम्भम् । न० काञ्चने । स्वर्णे ॥ शतकुम्भपर्वते भवम् । तत्र भव इत्यण् । अनुशतिकादीनाञ्चेत्युभय

पदङ्घविरितिस्वामी ॥

शातकौम्भाम्बरभ् । न० सुवर्णरसाक्त वस्त्रे ॥

शातनम । न० कार्श्ये ॥ विशीर्णे ॥ यथा । बभक्त सर्वसङ्घानानाथ ते पचशातनम् । मोदमानाश्चतिष्ठन्ति यथा ' कश्चिमशालिन ' ॥ शदृस्वशातने । णिच् । शदेरगतावितितत्वे ल्युट् ॥

शातपत्र । पु० शातपत्त्रकि ॥ शतपत्रमिव । शर्करादिभ्योऽण् ॥

शातपत्रकः । पु० चन्द्रिकायाम । ज्योत्स्नायाम् । प्रकाशे ॥ स्वार्थे स्वार्यांश० कनौ ॥ इ० श० च० का ॥

शातभीरु । पुं० मल्लिकाप्रभेदे ॥

शातामनम् । त्रि० शतमानेनक्रीते ॥

शातयिता । त्रि० हन्तरि ॥

शातला । स्त्री० चर्मकषायाम् । सोहुण्डप्रभेदे ॥ शातसुखलाति । ला० । क ' ॥ शातलाकटुकापाकेवातलाशीतलालघु ' । तिक्ताशोथकफानाहपित्तोदावर्त्तरक्तजित् ॥

शातक्रदम् । न० विद्युत्सम्बन्धिनि ज्योतिषि ॥

शातित । त्रि० छिन्ने ॥

शाक्य: । पुं० क्षिपि । शठो ॥ स्वार्थेऽण् ॥ न० शत्रुसंहतौ ॥ शत्रुत्वे ॥ यथा ॥

शाद । पु० कर्दमे । शष्पाणि ॥ शष्पे ॥ शीयन्तेऽस्मिन्ननेनवा । शदू० । घञ् ॥ यथा । शीयते०नश्यति । ज्वलितिकसन्तेभ्योण ' ॥ यथा । श्यति । शो० । शाशपिभ्यादद्नावितिद ॥ शद्यतेऽनेनवा । शदृ० । हलश्च तिभावेशघञ् ॥

शादहरित । त्रि० नवतृणप्रायदेशे । शाद्वले । शादैर्वालतृणैर्हरित ॥

शाद्वर ' । त्रि० शाद्वले ॥ रलयोरभेद । ॥

शाद्वल : । त्रि० शादहरिते ॥ शादावालतृणमस्मिन् । नडशादाड्ड्वलच । शष्पवाचिनएवशादाड्ड्वलच् ०नतुपङ्कवाचिनोऽनभिधानात् ।

शानपाद । पुं० पारिपात्रशैले ॥ चन्दनघर्षणपाषाणे ॥

शान्त । पु० अभियुक्ते । शमिनि ॥ रसविशेषे ॥ नयनदु ' खनसुखमचिन्तानद्वेषरागौनचकाचिदिच्छा । रस ' सशान्त कथितोमुनीन्द्रे सर्वेषुभावेषुसमप्रमाण ॥ त्रि० शमान्विते । शमिते । सयतान्तकरणे । अन्तरिन्द्रियनिग्रहकर्त्तरि । प्रशान्तचित्ते । दान्ते ॥ ०उपशमरहिते० सर्वानर्थोपशमरूपे० ज्ञानाद्विरहिते०अविकृते०निरस्त

समस्तोपाधित्वाहित्वे पाद्विविकार शून्ये • आत्मनि ॥ रागादिदोषरहिते । निवृत्तिकतयानिरुद्धेन्द्रियव्यापारे • संस्कारमात्रशेषे • चित्तविशेषे परहितैषतौ च तृष्णारहिते ॥ सर्वविशेषप्रत्यस्तमितरूपे • अविक्रिये • सर्वान्तरे • सर्वबुद्धिप्रत्ययसाक्षिणि • मुख्यआत्मनि ॥ आकाशादि सृष्टेषुसत्त्वप्रधानतया • कैश्चिद्दशा शान्ता . सुखा . प्रकाशका . लघवश्च शान्ता कथ्यन्ते ॥ शाम्यतेस्म । शम० । शान्त । क । वादान्तशान्तेतिसाधु . ॥ निवृत्ते ॥ यथा • शान्तोरोग : ॥

शान्तनव .। पु० भीष्मे ॥ शन्तनोरपत्यम् । अण् ॥

शान्तनु । पु० कुरुवंशजनृपविशेषे । प्रातीपे । प्रतीपभूपतनये ॥ यो यगङ्गायाभीष्मजनयामास ॥ यय कराभ्यास्पृशतिजीर्णयौवनमेष्यति । शान्तिमाप्नोतिचैवाग्र्यांकर्मणा तेनशान्तनु ॥ ललितिकातीर्थे ॥

शान्तम् । अ० वारणे ॥

शान्तमाना : । त्रि० नियतचित्ते । वशीकृतमनसि ॥

शान्ता । स्त्री० दुर्गायाम् ॥ सात्त्विक्यांमनसोवृत्तौ । आमलक्याम् ॥ शमीप्रभेदे । शुभायाम् । भद्रायाम् । अपराजितायाम् ॥ शमीवदस्याशुषा : ॥

शान्तावह : पु० जयायाम् ॥

शान्ति . । पु० वृत्ताईद्विशेषे ॥ जिनचक्रवर्त्तिविशेषे ॥ दशमम न्वन्तरीयेइन्द्रे ॥

शान्ति .। स्त्री० मङ्गले । भद्रे ॥ सम्पूजकानांकुलपालकानांयती-न्द्रयोगीन्द्रतपोधनानाम् । देशस्य राष्ट्रस्यकुलस्यराज्ञ : करोतुशान्ति भगवान्कुलेश ॥ विषयेभ्यइन्द्रियोपरतौ । शमथे । शमे । तृष्णाक्षये ॥ तल्लक्षणं यथा । यत्किञ्चिद्वस्तुसम्प्राप्यस्वल्पं वायदि वा बहु । यातुष्टिर्जायतेचित्ते शान्ति : साग द्यतेबुधैरिति ॥ सुशीलस्यभार्यायाम् । यथा । शान्तिलक्ष्मीश्चभार्येद्वेसुशीलस्यचपूजिते । याभ्यांविनाजगत्सर्वमुन्मत्तमिवनारदेति ॥ कामक्रोधाद्यभावे ॥ सर्वसंसारोपरतौ । मुक्तौ । सहेतुकस्वसंसारस्योपशमे । सर्वद्वन्द्वपरतौ ॥ विषयभोगस्पृहानिवृत्तौ । अन्त . करणस्योपशमे ॥ सकार्याविद्यानिवृत्तिरूपायांवेदान्तवाक्यजन्याया • ब्रह्मात्मैक्यसाक्षात्-कृतौ ॥ सर्वलौकिकालौकिककर्मविक्षेपनिवृत्तौ ॥ बाधितानुवृत्याऽविद्याकार्यनिवृत्तौ । अविद्यातत्कार्यनिवृत्तिरूपायांमुक्तौ ॥

दुर्गायाम् ॥ यथा । उत्पत्तिस्थिति नाशेषुरजआदिगुणात्मता । सर्वज्ञा सर्वेशत्वाच्छान्तित्वाच्छान्तिरुच्यते ॥ गोपीविशेषे ॥ अनर्थनिवृत्तौ ॥ धर्मद्वारायहदीश्यादुःस्वप्नादिसूचितेष्विष्टानिष्टहेतुदुरितनिवृत्तौ ॥ यथायस्त्रप्रहारार्णांकवचंविनिवारकम् । तथाद्दैवोपघातानांशान्तिर्भवतिवारणम् ॥ अपिच । रोगक्षुत्त्रायहादीनांनिरासः शान्तिरीरितेति ॥ शमनम् । शम० । स्त्रियांक्तिन् । अनुनासिकेतिदीर्घः ॥

शान्तिकाम : । त्रि० शान्त्यभिलाषिणि ॥ श्रीकाम . शान्तिकामोवायुष्यश्च समाचरेत् । दृश्यायुः पुष्टिकामोवातथैवाभिचरन्नपि ॥

शान्तिगृहम् । न० यज्ञान्तेशान्त्यालये । शान्तिकुम्भजलैनस्नानस्थले ॥ आथर्वणे । इ०हे०मद्र० : ॥

शान्तिमार्गः । पुं० दुस्तर्कादिरहितेवर्त्मनि ॥

शाप : । पुं० आक्रोशे । इदमनिष्टमेवास्त्विवत्येवरूपे०अभिशापे ॥ शापदानात्तप : क्षय : ॥ दिव्ये । शपथे ॥ शपनम् । शप० । घञ् ॥ निन्दायाम् ॥ मिथ्याभिशंसने ॥ अनिष्टाचरणे ॥

शापाक्षः । पुं० मुनौ ॥

शापारिकः । त्रि० मात्स्विकविशेषे ॥

अपकरान् इति । पश्चिमत्वेति ठक् ॥

शाब्द : । त्रि० शब्दजन्ये ॥ शब्दसम्बन्धिनि ॥ शब्दे जात : ० शब्देभवः ० शब्दस्यायथा । अण् ॥

शाब्दबोध : । पुं० शब्दार्थज्ञाने ॥ न्यायमते० पदार्थज्ञानजन्यज्ञाने ॥ तस्यकरणं पदज्ञान । तस्यकारणपदशक्तिज्ञानम् । कदाचिल्लक्षणाज्ञानम् । एवमाकाङ्क्षायोग्यतासत्तितात्पर्यज्ञानस्य ॥ यथा । पदज्ञानन्तुकरणद्वारंतत्रपदार्थधी : । शाब्दबोध : फलंतत्रशक्ति : धी : सहकारिणीति० भा० प० ॥ संसारमोहनाशायशाब्दबोधोनहिक्षम । ननिवर्त्ततितिमिरकदाचिद्दीपवार्त्तयेतिकुलार्णवे १ उल्लासः ॥

शाब्दिक : । पुं० वैयाकरणे ॥ शब्दकरोति० प्रकृतिप्रत्ययविभागेनोत्पादयति० सर्वेषार्थे ०शब्ददुर्रकरोतीतिठक् ०अभिधानस्वाभाव्यात् । तेनेहन । शब्दंकरोतिवर्वर : ॥ आदिशाब्दिकायथाकविकल्पद्रुमे । इन्द्रश्चन्द्र : काशकृत्स्नापिशलीशाकटायन : । पाणिन्यमरजैनेन्द्राजयन्त्यष्टादिशाब्दिका : ॥ इति ॥

शाब्दीभावना । स्त्री० पुरुषप्रवृत्त्यनुकूलव्यापारविशेषे ॥ यथा । यजेत० इत्यत्रास्यंशद्वयम् ० यजिधातु प्र

त्ययस्य । तत्प्रत्ययेप्यस्त्यंशद्वयम् ॰ आख्यातत्व ॰लिङ्त्वञ्च । तत्राख्यातत्व दशलकारेषुविद्यते॰लिङ्त्वञ्चकेवलेलिङ्येव । तत्राख्यातत्वलिङ्त्वाभ्याभावनैवोच्यते । साहि द्विधा॰ शाब्दीभावना॰ आर्थीभावनाचेति । तत्रशाब्दीभावनालिङ्त्वांशेनोच्यते॰लिङ्श्रवणे॰अयमांप्रवर्त्तयति॰मत्प्रवृत्त्यनुकूलव्यापारवानयमितिनियमेनप्रतीयमानत्वात् । यच्चयस्मात्प्रतीयते॰तत्॰ तस्यवाच्यम् । यथागोत्वम् । सचप्रवृत्त्यनुकूलोव्यापारविशेषो लोकेपुरुषनिष्ठोभिप्रायविशेषः । वेदेतुपुरुषाभावाल्लिङादिशब्दनिष्ठ एवशाब्दीभावनेत्युपदिश्यते । साचशाब्दीभावना॰अंशत्रयमपेक्षते॰ साध्य ॰साधन॰मितिकर्त्तव्यताञ्च । साध्यंस्वर्गादि॰साधनलिङादिज्ञानञ्चकरणत्वेनान्वयत्वम्॰इतिकर्त्तव्यताप्राशस्त्यज्ञानमितिकर्त्तव्यतात्वेनान्वीयते । यथोक्तमेवाएतत्॰ यत्तस्यक्रियतेयत्प्रयाजानुयाजाद्धतिप्रयाजादिस्तुतिज्ञानम् । तथाहि॰ भाव्याकाङ्क्षायां॰ किंभावयेत ॰स्वर्गंभावयेत् । कारणाकाङ्क्षायांकेनभावयेत्॰ यागेनभावयेत् । कथम्भावाकाङ्क्षायांयत् सन्निधौपठितमश्रूयमाणफलमन्नियाजातंतदेवोपकार्याकाङ्क्षामामितिकर्त्तव्यतात्वेनान्वयमनुभवितुं योग्यम् । तथाच॰ प्रयाजानुयाज सहकृतेनदर्शपौर्णमासेनस्वर्गंभाव्यः ॰इति ॥

शामनी । स्त्री॰ अवाच्यादिशि ॥

शामिता । त्रि॰ वधकर्त्तरि ॥

शामित्रम् । न॰ वधरूपेशमितुःकर्म्मणि ॥

शामित्रकर्म्म । न॰ पशुहिंसने ॥ शमितुरिदंशामित्रम्॰तच्चतत्कर्म्मचेति ॥

शामीलम् । न॰ भस्मनि । शमीभस्मनि ॥ शम्याविकारः । शम्या, ष्लञ् । षित्वान्ङीष् । शामीली स्रुक् ॥

शाम्बरी । स्त्री॰ मायायाम् । इन्द्रजालादौ ॥ शम्बरस्दैत्यविशेषस्येयम् । तस्येदमित्यण् । ङीप् ॥

शाम्भवः । पुं॰ गुग्गुलौ ॥ कर्पूरे ॥ शिवसख्याम् । विषप्रभेदे ॥ शम्भुपुत्रे ॥ न॰ देवदारुणि ॥ त्रि॰ शम्भुसम्बन्धिनि ॥ कौलिके । माहेश्वरे ॥ पुं॰ शम्भुप्रोक्तआचारे । कुलाचारे ॥ यथा । शाम्भवेनमार्गेणदेवतास्थापनञ्चरेत् । नसाक्षित्वंभवेत्तत्रदेवतायाः कथञ्चन ॥ कृत्वामुलफलनाङ्गिकायक्लेशोधनञ्च यः ॥ आगमोक्तविधिंहित्वायः श्राद्धंकुरुतेनरः । श्राद्धंतद्विफलं

सोऽपि पित्रभिर्नरकं व्रजेत् ॥ तत्तो
यशोणितसंकपिण्डो मलमयो भवेत्
। तस्मान्मर्त्य प्रयत्नेन शाङ्करमत
माश्रयेत् ॥ बहुनात्रकिमुक्तेन सत्य
सत्यं मयोच्यते । अथाभक्तकर्म
सर्वदेवि निरर्थकम् ॥ अश्रुताव
तुपरोधर्मं . पूर्वधर्मोपिनश्यति
। शाम्भवाचारहीनस्तु नरकान्नैवनि
ष्कृति : ॥ शम्भोरयम् • शम्भो
रागत ' शम्भुनाप्रोक्तवा ॥ अण् ॥
शाम्भवी । स्त्री• पार्वत्याम् ॥ कुली
मायाम् ॥ नीलदूर्वायाम् ॥
शायिका । स्त्री• शयने ॥ शीङोधा
त्वर्थनिर्देशेण्वुल् । इत्वम् ॥
शार ' । पुं० समीरणे । वाते ॥ अ
क्षोपकरणे ॥ त्रि• शवले । कर्बु
रे ॥ पीते ॥ शीर्यतेऽनेन शृणातिवा
। शृहिंसायाम् । शृवायुवर्णनिवृ
तेष्वितिघञ् ॥ शृणन्त्यनेनद्यूत
काराः परस्परम् । बाहुलकाद्घञ्
॥ शारीवर्णे । चित्रीकरणमिह
धात्वर्थ : ॥
शारङ्ग । पुं• सारङ्गविहगे ॥ शारय
ति• शीर्यते वातपादिना । शृ• ।
तरत्यादिभ्यश्चेत्यङ्गच् ॥ शवले ॥
हरिणे ॥
शारङ्गी । स्त्री• वाद्ययन्त्रविशेषे ॥
शारद : । पुं• अब्दे । वत्सरे ॥ का
शे ॥ बकुले ॥ पीतमुद्गे ॥ हरिन्मु
द्गे ॥ रोगे ॥ न• सस्ये ॥ श्वेतप
द्मे ॥ त्रि• शरज्जाते ॥ नवे । नू
तने ॥ अप्रतिभे ॥ शालीने ॥ शृणा
ति । शृ• । शृदृभसोऽदिरिति• अ
दि ' । प्रज्ञाद्यण् ॥ शरदिभव : ।
सन्धिवेलादीत्यण् ॥ शरदिपुष्प्यति
कालात्साधुपुष्प्यत्पच्यमानेष्विति
अण् ॥ शरदिपच्यन्ते शारदा : शाल
य . ॥
शारदका : । पुं• भू•दर्भविशेषे ॥
मुद्गविशेषे । शरदिजाता : । सञ्ज्ञा
यां शरदोवुञ् ॥
शारदा । स्त्री• सरस्वत्याम् ॥ दुर्गाया
म् ॥ शरत्कालेपुरायस्मान्नवम्यांबो
धितासुरै ' । शारदासासमाख्याता
पीठेलोकेचनामतः ॥ ब्राह्म्याम् ॥
शारिवायाम् ॥ शृणातिजाड्यम् ।
शृ• अदि । अण् । टाप् ॥
शारदिक : । पुं• रोगे । शारदे ॥ वि
भाषारोगातपयोरितिठञ् ' पक्षे
• शारदोरोगआतपोवा ॥ न• श
रदिभवे• श्राद्धे ॥ श्राद्धे शरदइति
ठञ् ॥
शारदी । स्त्री० तोयपिप्पल्याम् ॥ को
जागरपूर्णिमायाम् ॥ शरदिभवा
। सन्धिवेलेत्यण् । ङीप् ॥ सप्तप
र्णे ॥ शरदिपुष्प्यति । कालात्सा
धुपुष्प्यदित्यण् । ङीप् ॥
शारदीय : । पुं• दुर्गोत्सवे ॥ यथा ।

अटूरे जगदम्बायाः शारदीयमहोत्स
व ॥
शारदीयमहापूजा । स्त्री॰ शरत्कालि
कदुर्गामहापूजायाम् ॥
शारद्वतः । पुं॰ कृपे ॥
शारि । पु॰ अक्षोपकरणे । द्यूत
साधने । खेलन्याम् । शारे । गु
टिका॰ गोट॰ सारि॰ इ॰ भा॰
प्र॰ ॥ स्त्री॰ शकुनिकाप्रभेदे ॥ यु
द्धार्थगजपर्याणे ॥ व्यवहारान्तरे ॥
शृणाति । शॄ॰ । अ. शकुनादिति
॰इञ् ॥ कपटे ॥ वह्वादित्वात्प
क्षे ङीषि॰ शारी ॥
शारिका । स्त्री॰ खगान्तरे । पीतपा
दायाम् । गोराख्याम् । मैना॰इ॰
भा॰ ॥ शृणाति दु ' खमिरहिणीना
म् । शॄ॰ । ण्वुल् । प्रत्ययस्थादि
तीत्वम् ॥ वीणावादनदण्डे ॥ इ॰
हे॰न्द्रः ॥
शारीफलम् । न॰ अष्टापदे । शारिखे
लनाधारे । शारीणांखेलनाधारपट्टे
। चौपड॰ इ॰ भा॰ शारीफल
म्॰ पट्टः ॥
शारिफलक । पुं॰ न॰ शारिफले ।
अक्षपीठिकायाम् ॥
शारिवा । स्त्री॰ गोप्याम् । श्यामा
याम् । अनन्तायाम् । उत्पलशा
रिवायाम् ॥ अस्या गुणाः । श्वेत
कृष्णप्रभेदेनशारिवाद्विविधास्मृता

॥ शारिवायुगलखादुस्निग्धशुक्रकरं
गुरु । अग्निमान्द्यारुचिश्वासकासा
मविषनाशनम् ॥ दोषत्रयास्रप्रदर
ज्वरातीसारनाशनम् ॥ अपिच ।
एकं वा शारिवामूलसर्वज्वरविशोध
नमिति ॥ शरणम् । शॄ॰ । कृमॄ
त्यादिना॰ इण् । शारिरस्त्यस्याः.
। अन्येभ्योपीतिवः ॥
शारिशृङ्खला । स्त्री॰ पाशकविशे
षे । पशकस्याम् ॥ यथा । चुम्बरी
तिस्त्रिशोद्यूत॰ पशकोशारिशृङ्
खला । नयपीठोपाष्टकाङ्गो॰नवः
स्याज्जयपुत्रकः ॥ एतेपाशकभेदाः
स्यु॰ जयकोलाङ्कलोपिच । इति
शब्दरत्नावली ॥
शारी । स्त्री॰ शारिपदार्थे ॥ कुशाया
म् ॥
शारीरः । पुं॰ जीवे ॥ न॰वृषे ॥ त्रि॰
देहजे ॥ शरीरेभवः शरीरेजातो
वा । अण् ॥ कर्मविशेषे । शरीर
स्थितिमात्रप्रयोजने॰ कौपीनाच्छा
दनादिग्रहणभिक्षाटनादिरूपेयति
सम्बिधाम्नाच्यनुज्ञाते ॥ शारीरके
वलकर्मकुर्वन्नाप्नोतिकिल्बिषमिति
भगवदुक्ते ॥ शरीरप्रधानेः कर्मा
दिभिः साध्ये चकर्मणिनतुकेवले
नशरीरेण॰ पक्षेतेनसहैतवक्तव्यु
क्ते ॥ शरीरमात्रसाध्येचकर्मणि
॥ तयोविशेषे ॥ यथा । देवद्विजगु

प्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तपउच्यते॥

शारीरकः। पुं० जीवे॥ शरीरमेव शरीरकम्। तत्र भवः। अण्॥ शारीरकभाष्यमिति त्वभेदोपचारात्॥

शारीरकसूत्रम्। न० उत्तरमीमांसायाम्। अथातो ब्रह्मजिज्ञासेत्यादि व्यासप्रणीतेषु० जीवयाथात्म्यवादिषु वेदान्तार्थसूचकवाक्येषु॥ शारीरको जीवस्तस्य याथात्म्यमनिरूप्यतेऽत्रेति व्याख्यानात्॥

शारीरकीयः। पुं० ग्रन्थविशेषे॥ शारीरकमधिकृत्य कृतो ग्रन्थः। अधिकृत्य कृते ग्रन्थे इत्यर्थे० छः॥

शारुकः। त्रि० हिंसके॥

शार्कः। पुं० शर्करायाम्॥

शार्ककः। पुं० दुग्धफेने। शर्करापिण्डे॥

शार्करः। पुं० दुग्धफेने। शर्करेव। शर्करादिभ्योऽण्। शर्करान्वितदेशे। शर्करायाम्। शर्करिले॥ शर्करास्त्यत्र। देशे लुबिलचौ चेति चादण्॥ त्रि० शर्करासम्बन्धिनि॥

शार्कराक्ष्यः। पुं० [illegible]॥ शर्कराक्षस्यापत्यम्। गोत्रापत्ये० गर्गादित्वाद्यञ्॥

शार्ङ्गः। पुं० न० विष्णोर्धनुषि॥ कामुकमात्रे॥ शृङ्गस्य विकारः। अनुदात्तादेश्चाञ्॥ पुं० पक्षिणि॥ शृणाति। शॄ०। गणश्च कुनाविति गण० तस्य नुट्। पक्षी। अपितोतिधातोर्वि.। त्रि० शृङ्गसम्बन्धिनि॥ न० आर्द्रके॥

शार्ङ्गधन्वा। पुं० विष्णौ॥ इन्द्रियाद्यहङ्कारात्मकं० शार्ङ्गनामधनुर्यस्य। धनुषश्च त्यनङ्॥ यथा। भूतादिमिन्द्रियादिञ्च द्विधाहङ्कारमीश्वरः। बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितमिति वि० पु०॥

शार्ङ्गपाणिः। पुं० विष्णौ॥ शार्ङ्गं पाणौ यस्य। प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति पाणेः परनिपातः॥

शार्ङ्गी। पुं० विष्णौ॥ शार्ङ्गमस्यास्ति। अतइनिठनाविति० इनिः॥ धन्विमात्रे॥

शार्दूलः। पुं० व्याघ्रे॥ पशुविशेषे॥ राक्षसे। उत्तरस्थितः सत्तमे॥ यथा० राजशार्दूलः॥ अस्त्री। चित्रकी॥ शारयति। शॄ० स्वार्थे णिच्। क्विप्। दूयते। दूङ् परितापे। अन्तर्भावितण्यर्थः। बाहुलकाल्लक्। शाश्चासौ दूलश्च। यद्वा। शृणाति। पिञ्जादित्वादूलच्। बाहुलकाद्दुक्। इति॥

शार्दूलललितम्। न० धृति १८

छन्दःप्रभेदे ॥ तल्लक्षणं यथा ।
"मःसौजःमतसाद्रिनैश्चतुर्भिः
शार्दूललसितम्" ॥ यथा ॥ "कृत्वा कंस-
मृगे पराक्रमविधिं शार्दूललसितं यश्च-
क्रे क्षितिभारकारिषु सुरारातिष्वति-
द्रुतम् । सन्तोषपरमन्तु देवनिवहै-
र्भक्त्यैकशरणं श्रियेन सततोत्सवप-
रमन्दिमा लक्ष्मीप्रियतम" ॥
शार्दूलवाहन । पुं॰ पञ्चविंशति-
पूर्वजिनान्तर्गतजिने ॥
शार्दूलविक्रीडितम् । न॰ अतिधृति
१९ वृत्तप्रभेदे ॥ तल्लक्षणं यथा ।
"सूर्य्याश्वैर्मसजस्तताः सगुरवः शा-
र्दूलविक्रीडितम्" ॥ यथा । "गो-
विन्दं प्रणमोत्तमाङ्गरसनैत्वं घोषया
हर्निशम् पाणीपूजयतमनः स्मर
पदेतस्यालयगच्छतम् । एवं चे-
त्कुरुताखिलममङ्गितशीर्षाद्दयस्तद्
भुवमन्तप्रेक्ष्य भवताक्रतैभयमहाशा-
र्दूलविक्रीडितम्" ॥
शार्व्वरम् । न॰ अन्धतमसे । ध्वा-
न्ते ॥ त्रि॰ घातुके । शर्व्वर्य्यांभवम् ।
तत्रभवइत्यण् । "कालाट्ठञ् चि-
त" ॥ शर्व्वरीसम्बन्धिनि ॥
शार्व्वरी । स्त्री॰ शर्व्वर्य्याम् । रा-
त्रौ ॥
शार्वी । स्त्री॰ ऐशान्यां दिशि ॥
शाल । पुं॰ मत्स्यविशेषे । गज-
रे । गजाड॰ कृ॰ प्र॰ ॥ शालि-
वाहननृपे ॥ नदविशेषे ॥ साल-
वृक्षे ॥ शाडाते । शाडृश्लाघाया-
म् । कर्म्मणि॰ घञ् । डलयो-
रैक्यम् ॥ ध्वनि । शीतन्कार-
णे । वाहुलकात्कालन् वा ॥
शालग्राम: । पुं॰ हरिक्षेत्रे । ग-
ण्डकीशिलायाम् । विष्णवादि-
देवानां प्रतिबिम्बरूपेपाषाणविशेषे ।
गण्डक्याश्चैकदेशेच शालग्रामस्थलं
स्मृतम् । पाषाणंतद्भवंयत्तच्छा-
लग्राममितिस्मृतम् ॥ शालवृक्षो-
पलक्षितोग्रामः शालग्रामः शाल-
ग्रामेभवः । अण् ॥ अपिपापसमा-
चारोब्रह्महत्यायुतोपिवा । शाल-
ग्रामशिलातोयपीत्वायातिपरांग-
तिम् ॥ तुलसीचन्दनचक्रशङ्खो-
घण्टाचचक्रकम् । शिलाताम्रस्य
पात्रन्तुविष्णोर्नामपदामृतम् ॥ प-
दामृतन्तुनवभिः पापराशिप्रदाहक-
म् । वदन्तिमुनयः शान्ताः स-
सर्वशास्त्रार्थकोविदाः ॥ सर्वती-
र्थपरिस्नानात्सर्वक्रतुसमर्पणात्
पुण्यंभवतियद्राजन्बिन्दौबिन्दौतद्
दृतम् ॥ शालग्रामशिलायत्र पू-
ज्यतेपुरुषोत्तमे । तत्रयोजनमा-
त्रन्तुतीर्थकोटिसमन्वितम् ॥ शा-
लग्रामाः समाः पूज्याः समेषु
द्वितयन्नहि । विषमाएवपूज्यावै
विषमेषुत्रयंनहि ॥ द्वारावतीभ-

वचक्रतथावैगरुडकोभवम । शुभ
दैः सङ्गमोयचतचगङ्गासमुद्रगा ॥
शालग्रामोऽहरेमूर्त्तिर्जगन्नाथसभा
रतम् । कलिदूषहन्तान्त यद्युक्त
न्नाहरे: पदम् ॥ विप्रक्षत्रियवै
श्यानांशालग्रामशिलाचर्ने च
धिकारोनशूद्राणांहरेरर्चनमेत-
था ॥

शालग्रामगिरि । पुं॰ शालग्रामोत्
पादकपर्वते ॥

शालङ्कटङ्कट । पुं॰ मुनिभिनिराख
से ॥

शालङ्कायन: । पुं॰ मुनिविशेषे ॥ न
न्दिनि । शिवद्वारपाले ॥

शालङ्कायनक । पुं॰ शालङ्कायनान
विषयेदेशे । राजन्यादिभ्योवुञ् ॥

शालङ्कायनजीवसू । स्त्री॰ व्यासमा
तरि ॥

शालङ्कि: । पुं॰ मुनिविशेषे । पाणि
नौ ।

शालज: । पुं॰ गजकर्णे । शाले ॥

शालनिर्यास: । पुं॰ धूनके । सर्जर
से ॥

शालपर्णिका । स्त्री॰ शालपर्ण्याम् ॥

शालपर्णी । स्त्री॰ ओषधिविशेषे । वि
दारिगन्धायाम् । अंशुमत्याम् ।
स्थिरायाम् । शालपाणी॰ हृ॰ गौ॰
भा॰ ॥ अस्यागुणायथा । शालपर्णी
गरच्छर्दिज्वरश्वासातिसारजित् ।
शोषदोषत्रयहरीबृंहण्युक्तारसायनी
॥ तिक्ताविषहरीस्वादु: क्षतकास
कृमिप्रणुत् ॥ पाककर्त्तिरकोष ॥

शालभञ्जिका । स्त्री॰ शालभञ्ज्या
म् ॥

शालभञ्जी । स्त्री॰ पञ्चालिकायाम ।
दन्तकाष्ठादिनिर्मितपुत्रिकायाम् ॥
वेश्यायां ॥

शालव । पुं॰ लोध्रे ॥

शालवेष्ट । पुं॰ धूनके । शालस्यवे
ष्टोनिर्यास: ॥

शालसार । पुं॰ तरौ । द्रुमे ॥ हिङ्गु
नि ॥

शाला । स्त्री॰ गृहे ॥ गेहैकप्रदेशे ।
द्रुमस्कन्धशाखायाम् । स्कन्धात्प्र
भवोत्पन्नप्रधानशाखायाम् ॥ शल
श्चय । शलगतौ । हलश्चेति॰ घ
ञ् ॥ यद्वा । शलति । शलचलने
। ज्वलितीतिण ॥ श्यति । शो॰
। बाहुलकात्॰ कालनुवा ॥

शालाकटङ्कटम् । न॰ चाणक्यमूलके ॥

शालाकी । पुं॰ शस्त्रवैद्ये ॥ नापिते
॥ शिलधारिणि ॥ वृत्तिकधिप ॥

शालाक्यम । न॰ आयुर्वेदस्याङ्गविशे
षे ॥ यथाहसुश्रुत: । तत्र॰ शाला
क्यंनाम॰ ऊर्द्ध्वजत्रुगतानांरोगा
णां॰ श्रवणनयनवदनघ्राणादिसं
श्रितानांव्याधीनामुपशमनार्थमि
ति ॥

शालाग्नि : । पुं॰ आवसथ्याग्नौ ॥

शालाङ्की । स्त्री॰ पुत्तलिकायाम् । पञ्चालिकायाम् ॥ छ॰ श॰ र॰ लौ ॥

शालाजिर : । पुं॰ न॰ शरावे ॥

शालाञ्जि : । स्त्री॰ शाकविशेषे । शालिञ्चे ॥

शालातुरीय : । पुं॰ पाणिनीयमुनौ ॥ शलातुरोऽभिजनोऽस्य । तूदीशलातुरेतिछण् ॥

शोलानी । विदार्याम् ॥

शालामृग : । शृगाले ॥

शालारम् । न॰ हस्तिनखे । पुरद्वारसम्बन्धे ॥ सोपाने ॥ पक्षिपञ्जरे ॥

शालावृक : । पुं॰ शृगाले ॥ सारमेये ॥ वलीमुखे । मर्कटे । वानरे ॥ शालां वृणोति । वृञ् ॰ । सत्वभूशुभ्य : कक् ॥ बिडाले ॥

शालि : । पुं॰ गन्धोतौ । गन्धमार्जारे ॥ कलमादिधान्ये ॥ आदिशब्दात्राजशाल्याद्यावोद्ध्या : । तेयथा । राजान्नषष्टिकसितेतररक्तमुण्डस्थूलाशुगन्धतिलियादिकशालिसञ्ज्ञा । । व्रीहिस्तथेतिदशधाभुविशालयश्च स्तेषांक्रमेणगुणनामगणंब्रवीमि ॥ कृतिराजनिर्घण्ट : ॥ शाडते । शाङ्श्लाघ्ये । ङलयोरैक्यम् ॥ कृन् ॥ शाल्यतेवा । शलचलने । शल ' । अचइ : ॥ यद्वा । शृणाति । शॄ॰ । बाहुलकादिञ्शारि : । कपिलकादित्वाल्लत्वम् ॥ शालयोत्रिविधा प्रोक्ता अलजा : स्थलजास्तथा । तत्र । कण्डनेनविनाशुक्ला हैमना शालय : स्मृता : ॥ शालीनानामान्याह । रक्तशालि . सकलम : पाण्डुक . शकुनाहृत . । सुगन्धक : कर्दमकोमहाशालिश्चदूषक . ॥ पुष्पाण्डक . पुण्डरीकस्तथामहिषमस्तक : । दीर्घशूक . काञ्चनकोहायनोलोध्रपुष्पक : ॥ तथाद्याशालय सन्तिबहवोबहुदेशजा . । ग्रन्थविस्तरभीतेस्तेसमस्तानात्रभाषिता: ॥ अथगुणा. । शालयोमधुरा. स्निग्धाबल्यावबाल्पवर्चस : । कषायालघवोरुच्या : स्वर्यावृष्याश्चबृंहणा. ॥ अल्पानिलकफा. शीताः पित्तघ्नामूत्रलास्तथा । शालयोदग्धमृज्जाता . कषायालघुपाकिन. ॥ सृष्टमूत्रपुरीषारूक्षा : श्लेष्मापकर्षणा : ॥ केदारावातपित्तघ्नागुरव : कफशुक्रला . । कषायाअल्पवर्चस्कामधुराश्चबलावहा : ॥ केदारा : कृष्णवर्णजाजला : ॥ स्थलजा : स्वादव : पित्तकफघ्नावातवह्निदा : । किञ्चित्तिक्ता : कषायाविपाकेकटुकाअपि ॥ स्थलजा :

कन्दे । पद्मशूरणे ॥ शाल्कांशी तलवर्थपित्तदाहास्रनुद्गुरु । दुर्जरस्वादुपाकश्चरस्यानिलकफप्रदम् ॥ सङ्ग्राहिमधुरस्तु भिस्वाग्डम-पितद्गुणम् ॥ जातीफले ॥ शल्य ते॰ शलतिवा । शलचलनसंवरणयो । शलिमणिभ्यामूकण्॰ हृद्धिश्च ॥

शालूकिनी । स्त्री॰ ग्रामविशेषे ॥ शालूकानिसन्त्यस्या देशे । पुष्करादिभ्योदेशइ'ति॰ इनि ॥ तीर्थविशेषे ॥

शालूर । पु॰ अवे । दर्दुरे ॥ शालते । शाडगतौ । खर्जपिञ्जादिभ्यऊरोलचाविल्लूर' । डलयोरैक्यम् ॥ शालतेवा । शालश्लाघने ॥ पूर्ववदूर ॥

शालेय । पु॰ मिसौ । मधुरायाम् ॥ त्रि॰ शाल्युद्भवेचेत्रे । धान्यसामान्यस्यकलमादेश्चोत्पत्तियोग्येचेत्रे ॥ शालीनांभवनक्षेत्रम् । ब्रीहिशाल्योढंक् । तदस्यास्ति । चर्मवाद्यच् ॥

शालेयधाराधृत् । पुं॰ गिरिविशेषे । शालिरमी॰ ङ॰ भा॰ प्र॰ । शालिवाहनजन्मस्थाने ॥

शालेया । स्त्री॰ मिश्रेयायाम् ॥

शाल्मल : । पुं॰ शाल्मलिद्रुमे ॥ शाल्मलिद्वीपे ॥

शाल्मलि । पुं॰ स्त्री॰ पिच्छिलायाम् । पूरण्याम् । मोचायाम् । स्थिरायुषि । सेमल॰ सेंमर॰ इ॰ भा॰ । षष्टिवर्षसहस्राणिवनेतिष्ठतिशाल्मलि ॥ अस्यागुणायथा । शाल्मलि . शीतलास्वादीरसेपाकेरसायनी । श्लेष्मलास्निग्धशीजावह हणी रक्तपित्तजित् ॥ इति ॥ शालयति । शलचलनेणिजन्त । क्विप् । मलते । मलधारणे । सर्वधातुभ्यइन् । शाल्चासौमलिश्च ॥ द्वीपविशेषे । सप्तसूर्योजनोन्नत सूर्यद्युति शाल्मलिश्च . शाल्मलिद्वीपेस्ति । यथा । शाल्मलेशाल्मलीवर्णोद्वैम : साहस्रिकोक्षभा : । प्रियोमरार्णा तस्कैंतु' सततद्याथानिवस्थनइति ॥

शाल्मलिक . । पुं॰ रोहितकवृक्षे । कूटशाल्मली ॥

शाल्मली । पुं॰ गरुडे ॥ इ॰ श॰ लो ॥

शाल्मलिनिर्यास ' । पुं॰ मोचरसे ॥

शाल्मलिनी । स्त्री॰ शाल्मलीवृक्षे ॥

शाल्मलिपत्रक । पु॰ सप्तच्छदवृक्षे ॥

शाल्मलिस्थ । पु॰ गरुडे । शाल्मलिद्वीपस्थशाल्मलिवृक्षे तिष्ठति । स्था॰ । क ' ॥

शाल्मली । स्त्री॰ शाल्मलिवृक्षे ॥ कृदिकारादिति ङीष् ॥

शाल्मलीकन्द : । पुं॰ शाल्मलिवृक्षमूले । विजुले । मसके ॥

शाल्मलीपुष्पम्। न॰ पिच्छिलाकुसुमे ॥ तस्याकगुणा । शाल्मलीपुष्पशाकन्तुघृतसैन्धवसाधितम् । प्रदरन्नाशयत्येव दु साध्यञ्चनसंशय ॥ रसेपाकेचमधुरकषायशीतलगुरु । कफपित्तास्रजिद्ग्राहिशातलञ्चप्रकीर्त्तितम् ॥

शाल्मलीफल । पु॰ तेजःफलवृक्षे ।

शाल्मलीवेष्ट । पुं॰ पिच्छायाम् । मोचरसे । मोचस्रावे सैमरगोंद इतिख्याते ॥ शाल्मल्यावेष्टः ॥

शाव । पु॰ अर्भके । शिशौ । त्रि॰ शवसम्बन्धिनि । शव्यते । शवगतौ । घञ् । शवस्यायम् । अण् ॥

शावक । पुं॰ शिशौ । बाले । शव्यते । शव॰ । घञ् । स्वार्थेकन् ॥

शावर । पुं॰ पापि ॥ अपराधे ॥ श्वेतलोध्रे । गालवे ॥ शवराणामयम् । तस्येदमित्यण् । शवरस्वामिकृतभाष्ये ॥ न॰ तन्त्रविशेषे ॥ मन्त्रविशेषे ॥ त्रि॰ शवरसम्बन्धिनि ॥

शावरभेदाख्यम् । न॰ ताम्रे ॥

शावरी । स्त्री॰ शूकरशिम्ब्याम् ॥ ङीप् ॥

शावरोत्सव । पुं॰ म्लेच्छकृतोत्सवे ॥ यथा । पूजयित्वामहाष्टम्यां नवम्यांबलिभिस्तथा । विसर्जयेद्दशम्यान्तुश्रवणे शावरोत्सवैरित्यादिकालिकापुराणम् ॥

शाश्वत: । पु॰ वेदव्यासे । त्रि॰ नित्ये॰ अनाद्यनन्ते॰ सदैकरूपे॰ परमात्मनि ॥ शश्वत् सर्वदाभवति॰ नापक्षीयतेनापचीयतेचयेोह्यशाश्वता सोऽपक्षीयतेऽपचीयतेच॰ अयन्तुनतथा ॥ सतते । अनारते । सापेच नित्ये ॥ शश्वद्भव: । तत्रभवइत्यण् । अनित्योऽव्ययानांटिलोपोवक्तव्य इतिलोपः । इधानाज्ज्ञापकात् ॥ पारिभाषिकशाश्वत यथागारुडे । शाश्वत देवपूजादि॰ विप्रदानञ्चशाश्वतम् । शाश्वतीसगुणाविद्या॰सुहृन्मित्रञ्चशाश्वतमिति ॥

शाश्वतिक: । त्रि॰ नित्ये ॥ शश्वद्भव: । अध्यात्मादित्वाट्ठञ् । शाश्वतिकइतिनिर्देशान्नकादेश ॥

शाष्कुल: । त्रि॰ आमिषाशिनि ॥ शष्कुलीमांसोपलक्षणम् । तामत्ति । शिषइत्यण् । पृषोदरादि ॥

शाष्कुलि । त्रि॰ मांसाशिनि ॥ शष्कुलीमांसोपलक्षणम् तामत्ति । शिषइत्यण् ॥

शाष्कुलिकम् । न॰ शष्कुलीवृन्दे । शष्कुलीनांसमूह । अचित्तहस्तिधेनोष्ठक । त्रि॰ शष्कुलिप्रिये ॥ शष्कुल्योभक्षिरस्य अचित्तादेशका

स्तादृक् ॥ शष्कुलीसदृशे ॥ श
ष्कुलीव । चक्रुल्यादिभक्षक ।
शासक. । त्रि० शासनकर्त्तरि । उ
पदेष्टरि । शास्तरि ॥ शासिते ।
शासु० ण्वुल् ॥
शासनम् । न० राजदत्तोर्व्याम् ॥
लेखे । लिपौ । लेखायाम् ॥
आज्ञायाम् । प्रवर्त्तनायाम् ॥
शास्त्रे ॥ शास्तौ ॥ पत्रे ॥ श्रुति
रूपेश्वराज्ञावले ॥ शासु अनुशिष्टौ
। ल्युट् ॥ त्रि० । शासयि
तरि ॥ त्रिजन्मान्धासिन्ध्यादि
त्वाज्ञा ॥
शासनहर. । पुं० राजदूते ॥ आज्ञा
वाहके ॥
शासित. । त्रि० कृतशासने ॥
शासिता । त्रि० शासनकर्त्तरि । उ
पदेष्टरि । शास्तरि ॥ ब्रह्मादिस्त
म्बपर्यन्तस्य० चेतनाचेतनस्य० ज
गतोनियन्तर्यन्तर्यामिणिपरमात्मनि
॥ सोयमग्न्यादीनामौष्ण्यादिनिय
मोयश्चादित्यादीनांभ्रमणादिनिय
मोयश्चकर्मणांफलंप्रतिनियतमेतत्
सर्वंपरमात्माधीनमस्ति ॥
शास्ति. । स्त्री० आज्ञायाम् ॥ रा
जदण्डे । शासु० । बाहुलकात्
तिप्रत्यय : इत्वाभावश्च ।
शास्ता । पुं० उपाध्याये ॥ पितरि ॥
राजनि ॥ बुद्धे ॥ समन्तभद्रे ।
जिने ॥ त्रि० शासके । देशके ।
शासितरि ॥ शास्तिरिमेयान्०
इति० शास्ता । इत्युक्तौशासिश
दादिभ्य सञ्ज्ञायांच्चानिटाविति
तन्० तृच्वा । नप्त्रादिग्रहणव्यु
त्पत्तिपक्षे नियमार्थत्वान्नदीर्घ : ।
पितृवत् शास्तृशब्द. । धाता
चावधाताचपौराणोजगत . पतो
यौगासारोतिलेकेस्मिन्धर्माधर्मौ
प्रकीर्त्तिताविति वाक्पुराणेतु शब्
दत्वाविति तज्ज्ञोध्य ॥ प्रशासि
तरि । ईश्वरे ॥ सर्वेषांवर्णाश्रमा
णांतत्तत्कर्मण्यधिकृतानांश्रुति
स्मृत्यादिभिरनुशिष्टिकरोतीतितथा
। शासियंत्रपिसिटकस्तथापिवकुत
रप्रयोगानुरोधादनित्यमागमशासन
मितिन्यायात्० शसितस्कभितेत्या
दिवच्छन्दसिनिपातनादिड्भाव . ॥
शास्त्रम् । न० । आज्ञायाम् । नि
देशे । आगमे । वेदे । शिष्यते०
अनुशिष्यतेऽपूर्वोर्थोवोध्यतेऽनेनेति
शास्त्रंवेदएव ॥ वेदोपजीविषु० स्मृ
तिपुराणागमादिषु ॥ एकप्रयोज
नोपनिबद्धेऽशेषार्थप्रतिपादके ॥
छन्दोव्याकरणाभिधानकोषकाव्य
तुरंगगजतुरगखड्गादिलक्षणग्रन्थो
शास्त्राण्यभवन्ति ॥ प्रवृत्तिर्वानिवृ
त्तिर्वानित्येनकृतकेनवा । पुंसायै
नोपदिश्येततच्छास्त्रमभिधीयते ॥

तच्छास्त्रं त्रिविधं प्रोक्तं सात्त्विकादिविभेदतः । यथोक्तं देवीभागवते । सात्त्विकं तत्र वेदान्तमीमांसादिसम्मतम् । तामसं न्यायशास्त्रञ्च हेतुवादाभियन्त्रितमिति ॥ तत्राध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दा यथा कुलार्णवे । षड्दर्शनमहाकूपे पतिताः पशवः प्रिये । परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ वेदशास्त्रार्णवे घोरे उह्यमाना इतस्ततः । षडूर्मिनिग्रहग्रस्तास्तिष्ठन्ति हि कुतार्किकाः ॥ वेदागमपुराणज्ञः परमार्थं न वेत्ति यः । विडम्बकस्य तस्यैतत् सर्वं काकभाषितम् ॥ इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः । पठन्त्यहर्निशं देवि परतत्त्वपराङ्मुखाः ॥ वाक्यच्छन्दोनिबन्धेन काव्यालङ्कारशोभिताः । चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ अन्यथा परमं तत्त्वं जनाः क्लिश्यन्ति चान्यथा । अन्यथा शास्त्रसद्भावो व्याख्यां कुर्वन्ति चान्यथा ॥ कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति च । अहङ्कारहताः केचिदुपदेशादिवर्जिताः ॥ पठन्ति वेदशास्त्राणि बोधयन्ति परस्परम् । न जानन्ति परं तत्त्वं दर्वी पाकरसं यथा ॥ शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।



पठन्ति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति । गोपः कक्षगते छागे कूपे पश्यति दुर्मतिः ॥ संसारमोहनाशाय शाब्दबोधो न हि क्षमः । न निवर्त्तते तिमिरं कदाचिद्दीपवार्त्तया ॥ प्रज्ञाहीनस्य पठनं यथान्धस्य दर्पणम् । देवी प्रज्ञावतः शास्त्रं तत्त्वज्ञानस्य साधनम् ॥ अग्रतः पृष्ठतः केचित् पार्श्वयोरिति केचन । तत्त्वमीदृक्तादृगिति विवदन्ति परस्परम् ॥ सद्विद्यादानशौर्यादिगुणैर्विख्यातमानवः । ईदृशस्तादृशश्चेति दूरस्थः कथ्यते जनैः ॥ प्रत्यक्षग्रहणं नास्ति वार्त्तया ग्रहणं प्रिये । एवं ये शास्त्रसम्मूढास्ते दूरस्था न संशयः ॥ इदं ज्ञानमिदं ज्ञेयं सर्वं तच्छ्रोतुमिच्छति । दिव्यवर्षसहस्रायुः शास्त्रान्तं नैव गच्छति ॥ वेदाद्यनेकशास्त्राणि चाल्पायुर्विघ्नकोटयः । तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसः ॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं ज्ञात्वाथ बुद्धिमान् । पलालमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ॥ यथाऽमृतेन तृप्तस्य नाहारेण प्रयोजनम् । तत्त्वज्ञस्य तथा देवि न शास्त्रेण प्रयोजनम् । न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि । ज्ञानादेव

हिमुक्तिः स्यान्नान्यथा वीरवन्दिते
॥ आगमा कारणमुक्तिं दर्शना
निमकारणम् । तथैव सर्वकर्मा
णि ज्ञानमेव हि कारणम् ॥ मुक्ति
दा गुरुवागेका विद्याः सर्वा वि
डम्बनाः । काष्ठभारसहस्रेषु
एकसञ्जीवनपरम ॥ अद्वैतं हि शि
वप्रोक्तं क्रियायासविवर्जितम् ।
गुरुवक्त्राल्लभ्यते तन्नाधीतागमकोटि
भिः ॥ आगमोत्थं विवेकोत्थं द्वि
धा ज्ञानं प्रचक्षते । शब्दब्रह्मागम
मयं परब्रह्म विवेकजम् ॥ अद्वैतं के
चिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
मम तत्त्वं न जानन्ति द्वैताद्वैतविव-
र्जितम् ॥ द्वे पदे बन्धमोक्षाय
निर्ममेति ममेति च । ममेति बध्य
ते जन्तुर्निर्ममेति विमुच्यते ॥ तत्
कर्म यन्न बन्धाय सा विद्या या विमुक्ति
दा । आयासायापरं कर्म विद्यान्या शि
ल्पनैपुणम् ॥ यावत्कर्माणि दी
प्यन्ते यावत्संसारवासना । यावदि
न्द्रियचापल्यं तावत्तत्त्वकथा कुतः
॥ यावत् प्रयत्नवेगोऽस्ति यावत्-
सङ्कल्पकल्पना । यावन्न मनस
स्थैर्यं तावत् तत्त्वकथा कुतः ॥
यावद्देहाभिमानश्च ममता यावदेव
हि । यावन्न गुरुकारुण्यं तावत्
तत्त्वकथा कुतः ॥ तावत् तपो
व्रतं तीर्थं जपहोमार्चनादिकम् ।



वेदशास्त्रागमकथा यावत् तत्त्वं न वि
न्दति ॥ तस्मात् सर्वप्रयत्नेन सर्वा
वस्थासु सर्वदा । तत्त्वनिष्ठो भवेद्दे
वि यदीच्छेन्मोक्षमात्मनः ॥ धर्म
ज्ञानसुपुष्पस्य स्वर्गभोगफलस्य च ।
तापत्रयार्त्तिसन्तप्तः छायां मोक्षतरोः
श्रयेत् ॥ इति ॥ वह्निपुराणेऽपि ।
पुराणं भारतं वेदा धर्मशास्त्राणि या
नि च । आयुषः क्षपणायैव धर्मं त
त्सेवनाच्चरेत् ॥ पुत्रदारादिसंसा
रः पुंसां सम्मूढचेतसाम् । विदु
षां शास्त्रसंसारः सद्योगाभ्यासवि
घ्नकृत् ॥ इदं ज्ञेयमिदं ज्ञेयं यः
सर्वं ज्ञातुमिच्छति । अपि वर्षशते
नापि शास्त्रान्तं नाधिगच्छति ॥ वि
ज्ञायाक्षरतन्मात्रं जीवितञ्चापि चञ्च
लम् । विहाय शास्त्रजालानि पारलौ
किकमाचरेत् । पण्डितोऽपि हि मू
र्खोऽसौ शक्तियुक्तोऽप्यशक्तिकः ॥ यः
स संसारान्न चात्मानं समुत्तारयितुं क्ष
मः ॥ इति ॥ शैवपाशुपतादिशा
स्त्रोत्पत्तिर्यथा गन्धर्वतन्त्रे ॥ प्रथमं
हि मया प्रोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्ता
नि ततः परम् ॥ कणादेन च सम्प्रो
क्तं शास्त्रं वैशेषिकं महत् । गौतमेन
तथा न्यायं साङ्ख्यन्तु कपिलेन हि ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हि
तम् । दैत्यानां नाशनार्थाय विष्णु